# विषयानुक्रमणिका ।







श्रीरस्तु ।

श्रियः कान्ताय नमः ।

श्रीमते हयग्रीवाय नमः ।

श्रीपाञ्चरात्रे–

# ॥ ईश्वरसंहिता ॥

---

नम स्सकलकल्याणदायिने चक्रपाणये ।
विपयार्णवमग्नानां समुद्धरणहेतवे ॥ १ ॥
नारायणपदाम्भोजसमाराधनलालसाः ।
वेदवेदाङ्गनिपुणा स्तपोनिष्ठा महर्षयः ॥ २ ॥
इतिहासपुराणज्ञा धर्मशास्त्रविशारदाः ।
भगवद्भक्तिनिरता श्शमादिगुणसागराः ॥ ३ ॥
नारायणं तपस्यन्तं नरनारायणाश्रमे ।
संसेवन्त स्सदा भक्त्या मोक्षोपायविवित्सवः ॥ ४ ॥
संस्थिता मुनय स्सर्वे नारायणपरायणाः ।
कालेन केनचित्स्वर्गात् नारायणदिदृक्षया ॥ ५ ॥
तत्राऽवतीर्य देवर्षि र्नारद स्सकुतूहलः ।
दृष्ट्वा नारायणं देवं नमस्कृत्य कृताञ्जलिः ॥ ६ ॥
पुलकाञ्चितसर्वाङ्गः प्रहृष्टवदनो मुनिः ।
स्तुत्वा नानाविधैः स्तोत्रैः प्रणम्य च मुहुर्मुहुः [illegible] ॥
पूजयामास तं देवं नारायणमनामयम् ।
अथ नारायणो देव स्तमाह मुनिपुङ्गवम् ॥ ८ ॥

मुनयो ह्यत्र तिष्ठन्ति प्रार्थयाना हरेः पदम् ।
एतेषां सात्वतं शास्त्र मुपदेष्टुं त्वमर्हसि ॥ ९ ॥
इत्युक्त्वाऽन्तर्दधे श्रीमन्नारायणमुनिस्तदा ।
तच्छ्रुत्वा भगवद्वाक्यं मुनि र्हृष्टतनूरुहः ॥ १० ॥
तदाज्ञां कर्तुकामोऽथ निर्जगाम मुनीश्वरः ।
अपश्यदाश्रमवरमृषीणामूर्ध्वरेतसाम् ॥ ११ ॥
नानापक्षिगणाकीर्णं नानामृगनिषेवितम् ।
तरुपुष्पलताद्याढ्यं वापीकूपह्रदान्वितम् ॥ १२ ॥
तत्र गत्वा मुनिवर स्तत्रत्यै र्द्विजसत्तमैः ।
पूजितश्चाऽर्घ्यपाद्याद्यैः विष्टरेऽभिनिवेशितः ॥ १३ ॥
मुनीनां प्रीतिजनकं वाक्यमेवमुवाच सः ।
नारायणोऽत्र सततं भवद्भि स्सेव्यते यतः ॥ १४ ॥
भवत्सु करुणा तस्य परिपूर्णा हि वर्तते ।
भवद्भि स्सह सम्बन्धात् कृतार्थोऽद्य भवाम्यहम् ॥१५॥
आदिष्टोऽहं भगवता भवदर्थे मुनीश्वराः ! ।
अधीत्य साम्प्रतं सर्वे रहस्याम्नायमुत्तमम् ॥ १६ ॥
अद्य प्रभृति देवेशमाराधयत योगिनः ! ।

मुनयः ।

मुने ! चिरप्रपन्नानामस्माकं त्वं परा गतिः ॥ १७ ॥
नारायणपदप्राप्ते रुपायं सम्प्रकाशय ।

नारदः ।

शृणुध्वं मुनयस्सर्वे ! वेदमेकायनाभिधम् ॥ १८ ॥
मोक्षायनाय वै पन्था एतदन्यो न विद्यते ।
तस्मादेकायनं नाम प्रवदन्ति मनीषिणः ॥ १९ ॥

मूलभूतस्तु महतो वेदवृक्षस्य यो महान् ।
सद्ब्रह्मवासुदेवाख्यपरतत्त्वैकसंश्रयम् ॥ २० ॥
दिव्यैर्बलादिकैर्मन्त्रैः साक्षात्तत्प्रतिपादकैः ।
अलङ्कृतमसन्दिग्धमविद्यातिमिरापहम् ॥ २१ ॥
इत्युक्त्वाऽध्याप्य योगीन्द्रान् सञ्जगादाऽस्य वैभवम् ।
एष प्रकृतिधर्माख्यो वासुदेवैकगोचरः ॥ २२ ॥
प्रवर्त्यते कृतयुगे ततस्त्रेतायुगादिषु ।
विकारवेदा स्सर्वत्र देवतान्तरगोचराः ॥ २३ ॥
महतो वेदवृक्षस्य मूलभूतो महानयम् ।
स्कन्धभूता ऋगाद्यास्ते शाखाभूताश्च योगिनः ! ॥ २४ ॥
जगन्मूलस्य वेदस्य वासुदेवस्य मुख्यतः ।
प्रतिपादकता सिद्धा मूलवेदाख्यता द्विजाः ! ॥ २५ ॥
आद्यं भागवतं धर्ममादिभूते कृते युगे ।
मानवा योग्यभूतास्ते अनुतिष्ठन्ति नित्यशः ॥ २६ ॥
ततस्त्रेतायुगे सर्वे नानाकामसमन्विताः ।
व्यामिश्रयाजिनो भूत्वा त्यजन्त्याद्यं सनातनम् ॥ २७ ॥
अन्तर्दधाति सर्वोऽयं वासुदेवसमाहृतः ।
ततो योग्याय भगवान् प्रादुर्भावयति स्वयम् ॥ २८ ॥
एवं मया पुराऽधीतश्श्वेतद्वीपे मुनीश्वराः ! ।
सनस्सनत्सुजातश्च सनकश्च सनन्दनः ! ॥ २९ ॥
सनत्कुमारः कपिल स्ससमश्च सनातनः ।
एते एकान्तिधर्मस्य आचार्याश्च प्रवर्तकाः ॥ ३० ॥
मरीचिरत्र्यङ्गिरसौ पुलस्त्यः पुलहः क्रतुः ।
वसिष्ठश्च महातेजा एते चित्रशिखण्डिनः ॥ ३१ ॥

मनुस्स्वायम्भुवश्चापि समाराध्य जगत्पतिम् ।
महता तपसा चैव देवं नारायणं प्रभुम् ॥ ३२ ॥
दिव्यं वर्षसहस्रन्तु तदन्ते समधीत्य च ।
मूलश्रुतिं यथावच्च ऋपयोऽध्यापितास्तु ते ॥ ३३ ॥
ततस्ते ऋपयस्त्वष्टौ लोकानां हितकाम्यया ।
श्लोकानां शतसाहस्रै मूलवेदं निरीक्ष्य च ॥ ३४ ॥
तथा दिव्यानि शास्त्राणि सात्वतादीनि चाऽऽदरात् ।
निरीक्ष्याऽन्यत्तु तन्त्राख्यं शास्त्रं विदधिरे द्विजाः ! ॥३५॥
एवं मूलश्रुतेरर्थान् ज्ञात्वा मन्वादयोपि च ।
धर्मशास्त्राण्यनेकानि करिष्यन्ति यथातथम् ॥ ३६ ॥
अन्येपामपि शास्त्राणां योनिरेतद्भविष्यति ।
अस्मिन् धर्मश्च कामश्च अर्थश्चोक्त स्सविस्तरम् ॥३७॥
मोक्षश्च सूचितः पश्चात् तस्मात्सारतमो ह्ययम् ।
पुरा * तोदाद्रिशिखरे शाण्डिल्योऽपि महामुनिः ॥३८॥
समाहितमना भूत्वा तपस्तप्त्वा महत्तरम् ।
अनेकानि सहस्राणि वर्षाणां तपसोऽन्ततः ॥ ३९ ॥
द्वापरस्य युगस्याऽन्ते आदौ कलियुगस्य च ।
साक्षात्सङ्कर्षणाल्लब्ध्वा वेदमेकायनाभिधम् ॥ ४० ॥
सुमन्तुं जैमिनिं चैव भृगुं चैवौपगायनम् ।
मौञ्ज्यायनं च तं वेदं सम्यगध्यापयत्पुरा ॥ ४१ ॥
नरनारायणाभ्यां च जगतो हितकाम्यया ।
तथाऽनुष्ठीयते मूलधर्मोऽत्र मुनिपुङ्गवाः ! ॥ ४२ ॥
एप एकायनो वेदः प्रख्यात स्सर्वतो भुवि ।
दुर्विज्ञेयो दुष्करश्च प्रतिबुद्धै र्निषेव्यते ॥ ४३ ॥

---

* "तोदनात्सर्वपापानां तोदाद्रिरिति कथ्यते" ।

मुनयः ।

भगवन् ! सर्वशास्त्रज्ञ ! शरणागतवत्सल ! ।
त्वत्प्रसादेन सम्प्राप्तो मूलवेदो महानयम् ॥ ४४ ॥
तत्प्रभावश्च विदित स्सर्वलोकेषु पूजितः ।
प्रतिबुद्धै र्निषेव्योऽयं मूलवेद स्सनातनः ॥ ४५ ॥
कथमप्रतिबुद्धैस्तै र्मग्नै र्भवमहाम्बुधौ ।
प्राप्यते भगवन् ! धर्म एकान्तिभि रनुष्ठितः ॥ ४६ ॥

नारदः ।

श्रूयतामभिधास्यामि सर्वलोकहितैषिणः ! ।
पुरैवं भगवानेव समालोच्य हरि स्स्वयम् ॥ ४७ ॥
परित्यज्य परं धर्मं मिश्रधर्म मुपेयुषाम् ।
भूयस्तत्पदकाङ्क्षाणां श्रद्धाभक्ती उपेयुषाम् ॥ ४८ ॥
अनुग्रहार्थं वर्णानां योग्यताऽऽपादनाय च ।
तथा जनानां सर्वेषा मभीष्टफलसिद्धये ॥ ४९ ॥
मूलवेदानुसारेण छन्दसाऽऽनुष्टुभेन च ।
सात्वतं पौष्करं चैव जयाख्येत्येवमादिकम् ॥ ५० ॥
दिव्यं सच्छास्त्रजालं तदुक्त्वा सङ्कर्षणादिभिः ।
प्रवर्तयामास भुवि सर्वलोकहितैषिभिः ॥ ५१ ॥
एवं दिव्यानि शास्त्राणि शांण्डिल्योऽपि महामुनिः ।
सङ्कर्षणाद्भगवतः श्रुत्वा अध्यापयन् मुनीन् ॥ ५२ ॥
मलयाचलनिष्ठाश्च पुरा रामस्य चाऽऽज्ञया ।
प्रथमं सात्वतं शास्त्रं सम्यगध्यापिता मया ॥ ५३ ॥
वासुदेवेन यत्प्रोक्तं शास्त्रं भगवता स्वयम् ।
अनुष्टुप्छन्दोबन्धेन समासव्यासभेदतः ॥ ५४ ॥

तथैव ब्रह्मरुद्रेन्द्रप्रमुखैश्च प्रवर्तितम् ।
लोकेष्वपि च दिव्येषु तद्दिव्यं मुनिसत्तमाः ! ॥ ५५ ॥
ब्रह्मरुद्रमुखैर्देवैः ऋषिभिश्च तपोधनैः ।
स्वयं प्रणीतं यच्छास्त्रं तत् ज्ञेयं मुनिभाषितम् ॥ ५६ ॥
एतत्तु त्रिविधं विद्धि सात्विकादिविभेदतः ।
विज्ञाय पुण्डरीकाक्षः अर्थजालं यथास्थितम् ॥ ५७ ॥
तद्बोधकं प्रणीतं यत् शास्त्रं तत्सात्विकं स्मृतम् ।
तस्मात् ज्ञातेऽर्थजाते तु किञ्चित्तदवलम्ब्य च ॥ ५८ ॥
स्वबुद्ध्युन्मेषितस्यैव ह्यर्थजातस्य बोधकम् ।
यत्प्रणीतं द्विजश्रेष्ठ ! तथा विज्ञानतत्त्वतः ॥ ५९ ॥
ग्रन्थविस्तरसंयुक्तं शास्त्रं सर्वेश्वरेश्वरात् ।
तत्संक्षेपप्रसादेन स्वविकल्पविजृम्भणैः ॥ ६० ॥
ब्रह्मादिभिः प्रणीतं यत् तथा तदृषिभिर्द्विजाः ! ।
ब्रह्मादिभिः परिश्रुत्य तत्संक्षेपात्मना पुनः ॥ ६१ ॥
स्वविकल्पात्प्रणीतं यत् तत्सर्वं राजसं स्मृतम् ।
तत्स्याद् द्वेधा पञ्चरात्रवैखानसविभेदतः ॥ ६२ ॥
केवलंस्वविकल्पोक्तैः कृतं यत्तामसं स्मृतम् ।
केवलं मनुजैर्यत्तु कृतं तत्पौरुषं स्मृतम् ॥ ६३ ॥
अतो दिव्यात्परतरं नास्ति शास्त्रं मुनीश्वराः !
सात्वतं पौष्करं चैव जयाख्यं च तथैव च ॥६४ ॥
एवमादीनि दिव्यानि शास्त्राणि हरिणा स्वयम् ।
मूलवेदानुसारेण प्रोक्तानि हितकाम्यया ॥ ६५ ॥
सात्वताद्यं त्रिकं चैतत् व्यापकं मुनिसत्तमाः ! ।
यथा चाऽष्टाक्षरादीनां मन्त्राणां त्रितयं बुधाः ! ॥ ६६ ॥

एतत्तन्त्रत्रयोक्तेन विधिना यादवाचले ।
श्रीरङ्गे हस्तिशैले च क्रमात्सम्पूज्यते हरिः ॥ ६७ ॥
एतेषु दिव्यशास्त्रेषु सात्वतन्तूत्तमोत्तमम् ।
वक्ता साक्षादीश्वरोऽस्य श्रोता सङ्कर्षणः प्रभुः ॥ ६८ ॥
किं वर्ण्यतेऽस्य माहात्म्यं सात्वतस्य मुनीश्वराः ! ।
अत स्साक्षादीश्वरोक्तशास्त्राणां द्विजपुङ्गवाः ! ॥ ६९ ॥
सारभूतं विशेषेण सात्वतार्थोपपादकम् ।
ईश्वराख्यमिदं तन्त्रं साक्षात्सङ्कर्षणाच्छ्रुतम् ॥ ७० ॥
सम्प्रवक्ष्यामि मुनयः ! शृणुध्वमवधानतः ।
इत्युक्त्वा नारदो योगी नत्वा नारायणं प्रभुम् ॥७१॥
सङ्कर्षणं नमस्कृत्य वक्तुं समुपचक्रमे ।

इति श्रीपाञ्चरात्रे ईश्वरसंहितायाम्
शास्त्रावतारो नाम प्रथमोऽध्यायः ॥

---

## अथ द्वितीयोऽध्यायः ।

---

नारदः ।

आराधनविधिं वक्ष्ये शृणुध्वं मुनिपुङ्गवाः ! ।
ब्राह्मे मुहूर्ते सम्प्राप्ते मन्त्रज्ञः प्रयत श्शुचिः ॥ १ ॥
नाम्नां सङ्कीर्तनं कुर्यात् उत्थाय शयने स्थितः ।
परिच्युतमल स्स्नात श्शुद्धवासा जितेन्द्रियः ॥ २ ॥
धृतोर्ध्वपुण्ड्रः काल्योक्तकर्माणि विनिवर्त्य च ।
गन्धैः स्रग्भि रलङ्कारैः कटकाद्यैरलङ्कृतः ॥ ३ ॥

सपवित्रकरो मौनी आसाद्य भगवद्गृहम् ।
द्वाराद्बाह्ये यथाशास्त्रं शुद्धेन सलिलेन च ॥ ४ ॥
आजानु पादौ प्रक्षाल्य हस्तौ चाऽऽमणिबन्धनात् ।
आचम्य च प्रविश्याऽन्तः प्रणम्य मनु मुच्चरन् ॥ ५ ॥
धाम प्रदक्षिणीकृत्य बोधयेत्पुरुषोत्तमम् ।
शङ्खध्वनिसमोपेतं दुन्दुभीपटहस्वनैः ॥ ६ ॥
वन्दिवृन्दोत्थितोद्भाभि र्नानावाग्भि र्महामते ! ।
महाजयजयारावैः पुनःपुनरुदीरितैः ॥ ७ ॥
प्रबोधलक्षणैः स्तोत्रैरुत्थाप्य शयनात्ततः ।
द्वारमासाद्य तत्रस्थो दशदिग्बन्धपूर्वकम् ॥ ८ ॥
अवकुण्ठ्याऽथ तर्जन्या मन्त्रं कवचमुच्चरन् ।
स्थिते वा कल्पिते तत्र पूजयेद्बलिमण्डले ॥ ९ ॥
सर्वं खगेशपूर्वन्तु परिवारं हि साच्युतम् ।
मनसा प्रणवाद्येन विष्णुमादाय कीर्तयेत् ॥ १० ॥
समस्तपरिवाराय अच्युताय नमो नमः ।
वास्तुपूरुषमन्यांश्च समभ्यर्च्य यथाक्रमम् ॥ ११ ॥
मूलमन्त्रेण साङ्गेन निरङ्गेनाऽथ वा पुनः ।
न्यासं कृत्वा त्रिराचार्यो हस्ततालं हृदा ततः ॥ १२ ॥
मूलमन्त्रेण चोद्घाट्य कवाटं नेत्रमन्त्रतः ।
नित्यंदीपांस्ततो ज्वाल्य हस्तौ प्रक्षाल्य वारिणा ॥१३॥
प्रासादान्तःप्रवेशार्थं ततो द्वारन्तु चेतसा ।
त्रिभागीकृत्य तन्मध्यभागमेकं द्विधा पुनः ॥ १४ ॥
विभज्य वामदेशेन दक्षिणेनांघ्रिणा ततः ।
शनैश्शनैः प्रविश्यान्तस्साखमन्त्रेण तेन वै ॥ १५ ॥

धरणीहननं कृत्वा भगवन्तं प्रणम्य च ।
मनसा गुरुवंशं च तदाज्ञां मानसीमथ ॥ १६ ॥
शिरसा धारयेत्स्वेष्टं फलं सङ्कल्प्य चेतसा ।
देवाय तं निवेद्याऽथ यागाऽऽगारस्य मध्यतः ॥ १७ ॥
प्रासादं विग्रहं कृत्वा वर्ममन्त्रं सविग्रहम् ।
तज्जीवं भगवन्तं च ध्यात्वा यागगृहं ततः ॥ १८ ॥
सशलाकै स्ततो दर्भै स्सह देवीविमिश्रितैः ।
सम्मार्ज्य बहुतोयेन प्रक्षाल्याऽऽलिप्य गोमयैः ॥१९॥
उपलिप्तमथाऽस्त्रेण संविध्य शकलं त्यजेत् ।
पञ्चगव्येन सास्त्रेण वारिणा प्रोक्ष्य चन्दनैः ॥ २० ॥
कुङ्कुमागरुकर्पूरै स्समालिप्य समन्ततः ।
कुशदूर्वाऽक्षतांश्चैव विकिरेत् स्थानशुद्धये ॥ २१ ॥
प्रासादं शोधयेदेवं स्वयमेव तु देशिकः ।
प्रासादोद्देशमखिलं मार्जयेत्प्रोक्षयेत्ततः ॥ २२ ॥
परिचारैस्तु कर्तव्यं बलिपीठान्तमेव हि ।
यागोपस्कारसम्भूतौ भगवन्त मनुस्मरन् ॥ २३ ॥
विनीतान् शिष्यपुत्रादीन् स्नातानाज्ञापयेत्ततः ।
पात्रशुद्धिं च तैरेव कारयेत् द्विजसत्तमः ॥ २४ ॥
आम्रकल्केन तोयेन हैमं ताम्रं च शोधयेत् ।
राजतं गृहधूमेन शान्ताङ्गारेण वा पुनः ॥ २५ ॥
भस्ममिश्रेण तोयेन लोहयुक्तं विशोधयेत् ।
शङ्खशुक्तिमयानां च लवणेन विशोधयेत् ॥ २६ ॥
फलपत्रमयानां च मृद्भिरद्भिश्च शोधयेत् ।
लेपगन्धापनोदेन शुद्धिर्भवति कारयेत् ॥ २७ ॥

द्रव्यशुद्धिर्भवत्येवं यथावद्विधिचोदिता ।
पात्राणि शोधयित्वैवं ततो मौनपरो द्विजः ॥ २८ ॥
देवेशस्याऽग्रतो वाऽपि दक्षिणं भागमाश्रयेत् ।
ईश्वरभाग्वशादेव ह्युत्तराभिमुखो द्विजः ॥ २९ ॥
अथोपविश्य वै दार्भे काष्ठजे वा ऽजिनासने ।
आगमार्थं च देवानां गमनार्थं च रक्षसाम् ॥ ३० ॥
कुर्याद्घण्टारवं तत्र देवतास्थानलाञ्छनम् ।
शङ्खादिघोषसंयुक्तं गेयवाद्यसमन्वितम् ॥ ३१ ॥
करशुद्धिं ततः कुर्याद्यथावन्मुनिपुङ्गवाः ! ।
द्वे तले हस्तपृष्ठे द्वे सर्वाश्चाऽङ्गुलयस्तथा ॥ ३२ ॥
अस्त्रमन्त्रेण संशोध्य ध्यानमुद्रान्वितेन तु ।
कृत्वैवं करशुद्धिं च स्थानशुद्धिं समाचरेत् ॥ ३३ ॥
ध्यात्वा देवं ज्वलद्रूपं सहस्रार्कसमप्रभम् ।
ज्वालाकोटिसमाकीर्णं वमन्तं ज्वलनं मुखात् ॥ ३४ ॥
तेन सम्पूरयेत्सर्वमाब्रह्मभवनान्तिमम् ।
दिगोघं प्रज्वलन्तं च भावयेन्मन्त्रतेजसा ॥ ३५ ॥
क्ष्मामण्डलमिदं सर्वं स्मरेत्पक्वं च वह्निना ।
मन्त्रजेन द्विजश्रेष्ठाः ! मृन्मयं भाजनं यथा ॥ ३६ ॥
स्थानशुद्धिर्भवत्येवं सुधाकल्लोलसेचनात् ।
सम्भाव्यैवं ततः कुर्याद्दिग्बन्धं हृदयादिकैः ॥ ३७ ॥
अस्त्रेणैव विदिग्बन्धं नेत्रेण त्वतऊर्ध्वतः ।
आदित्यायुतदीप्तेन ज्वलत्कञ्चुकरूपिणा ॥ ३८ ॥
कवचेन तु तर्जन्या रक्षार्थमवकुण्ठयेत् ।
सायामां भूतसंशुद्धिं धारणाभ्यां समाचरेत् ३९ ॥

केवलेन तु मन्त्रेण भावनासहितेन तु ।
नाभिदेशस्थितं ध्यात्वा देवं सङ्गृह्य कल्मषम् ॥४०॥
निस्सृतं वायुमार्गेण द्वादशान्तावधौ क्षिपेत् ।
निरस्तपापमाकृष्य वातचक्रसमन्वितम् ॥ ४१ ॥
नासाग्रेण तु मन्त्रेऽमुं देहसम्पूरणाय च ।
तं ध्यायेद्धृदयस्थं च गतिरुद्धेन वायुना ॥ ४२ ॥
चित्तोपशमनार्थं तु नूनं वायुजयाय च ।
शनैश्शनैरथ बहिः केवलं मारुतं क्षिपेत् ॥ ४३ ॥
विनाऽन्त्यरेचकेनैवमन्येषामुत्तरोत्तरम् ।
कालाभ्यासं यथाशक्ति नित्यमेवं समाचरेत् ॥ ४४ ॥
द्वादशान्तेऽथ मन्त्रेशं तप्तहाटकसन्निभम् ।
सहस्रविसरद्धाशवृत्तमण्डलमध्यगम् ॥ ४५ ॥
स्मृत्वाऽथ मुक्तं तन्मन्त्रैर्निर्दहेद्विग्रहं स्वकम् ।
दक्षिणाङ्घ्रेरथाऽङ्गुष्ठप्रान्ते देशे शिखाक्षरम् ॥ ४६ ॥
ध्यात्वा युगान्तहुतभुग्रूपज्वालासमावृतम् ।
तेन स्वविग्रहं ध्यायेत्प्रज्वलन्तं समन्ततः ॥ ४७ ॥
देहजां भावयेज्ज्वालां मन्त्रनाथे लयं गताम् ।
दिव्यप्रशान्ताऽऽगारं तु तमधिष्ठाय चेतसा ॥ ४८ ॥
स्वमन्त्रादमृतौघेन सेचयेद्विग्रहं स्वकम् ।
ततस्स्वमन्त्रं तद्बिम्बमाकृष्य हृदि विन्यसेत् ॥ ४९ ॥
एवं स शुद्धदेहोऽथ मन्त्रन्यासं समाचरेत् ।
येन विन्यस्तमात्रेण देवदेवसमो भवेत् ॥ ५० ॥
पूजादिसर्वकार्याणामधिकारश्च जायते ।
हस्तद्वयेऽपि विन्यस्येद्दीप्तमष्टाक्षरं परम् ॥ ५१ ॥

मणिबन्धान्नखाग्रान्तमादित्यातपवच्चतः ।
सृष्टिसंस्थितिसंहारन्यासं कुर्याद्यथाविधि ॥ ५२ ॥
पर्वदक्षिणतर्जन्याः प्रारभ्याऽङ्गुलिपर्वसु ।
पर्वान्तं वामतर्जन्या न्यासस्सृष्टिरुदाहृतः ॥ ५३ ॥
व्यत्यासेन तु संहार * स्थिती तु करयोर्द्वयोः ।
प्रारभ्य तर्जनीपर्वकनिष्ठापर्वविश्रमः ॥ ५४ ॥
अङ्गुष्ठाभ्यामङ्गुलीनां मध्यपर्वसु विन्यसेत् ।
मन्त्राक्षराणि त्वाद्यन्तपर्वसु प्राणवन्न्यसेत् ॥ ५५ ॥
अङ्गुष्ठद्वितयं यावत्कनिष्ठाद्वितयावधि ।
ज्ञानाद्यं वीर्यपर्यन्तं विन्यसेदङ्गपञ्चकम् ॥ ५६ ॥
मूलवद्व्यापकत्वेन नेत्रमूर्ध्वाङ्गुलीषु च ।
किरीटं दक्षिणे हस्ते श्रीवत्सं वाममध्यतः ॥ ५७ ॥
कौस्तुभं दक्षिणतले वनमालां तथाऽपरे ।
दक्षिणे मध्यतः पद्मं प्रस्फुरत्किरणोज्ज्वलम् ॥ ५८ ॥
गदां वामतले न्यस्येज्ज्वलन्तीं स्वेन तेजसा ।
दक्षे म (प्र) हाप्रभं चक्रं शङ्खं वामतले न्यसेत् ॥ ५९ ॥
श्रियं दक्षिणहस्ते तु पुष्टिं वामतले न्यसेत् ।
अङ्गुष्ठाद्दक्षिणादादौ वामान्तं मूलदेशतः ॥ ६० ॥
गारुडं विन्यसेन्मन्त्रं दशस्वङ्गुलिषु क्रमात् ।
अनेन विधिना पूर्वं हस्तन्यासं समाचरेत् ॥ ६१ ॥
आब्रह्मरन्ध्रात्पादान्तं मूलमन्त्रं तु विग्रहे ।
व्यापकत्वेन विन्यस्य पादाद्यशिरोऽन्तिमम् ॥ ६२ ॥
सृष्टिस्थितिलयन्यासेष्वेवं देहे समाचरेत् ।
मूर्धादिपादपर्यन्तं सृष्टिन्यासः प्रकीर्तितः ॥ ६३ ॥

---

* स्थितौ तु—इति पाठान्तरम् ।

पादादिमूर्धपर्यन्तं संहारन्यास इष्यते ।
नाभ्यादिहृदयान्तस्तु स्थितिन्यास उदाहृतः ॥ ६४ ॥
मूर्न्धि मध्यमयाऽङ्गुल्या तर्जन्या च तदा दृशोः ।
साङ्गुष्ठ्याऽनामिकया मुखमध्ये तु विन्यसेत् ॥ ६५ ॥
साङ्गुष्ठतर्जन्यग्रेण हृदये विन्यसेत्ततः ।
तथाऽङ्गुष्ठकनिष्ठाभ्यां नाभौ न्यासं समाचरेत् ॥ ६६ ॥
व्यङ्गुष्ठाभिश्चतसृभिरुपस्थे जानुनोरपि ।
सर्वाभिरङ्गुलीभिस्तु पादयोर्न्यासमाचरेत् ॥ ६७ ॥
मन्त्राक्षरं तु सर्वत्र तारसम्पुटितं न्यसेत् ।
एवमष्टाक्षरन्यासं कृत्वा ऽङ्गन्यासमाचरेत् ॥ ६८ ॥
ततस्तु हृदये ज्ञानं यतो व्यज्येत तत्र तत् ।
ऐश्वर्यं शिरसो देशे यस्मादुपरि तिष्ठति ॥ ६९ ॥
प्राकृतं तात्त्विकं वाऽपि सर्वत्र कमलेक्षणम् ।
हार्दाभिरूर्ध्वगायान्तु शिखायां शक्तिमन्त्रराट् ॥ ७० ॥
बलं चाऽखिलगात्राणां त्वग्गतं वायुना सह ।
मूर्च्छितं सर्वगात्रैर्यत् तद्वीर्यं हस्तयोर्न्यसेत् ॥ ७१ ॥
अन्तर्बोधस्वरूपं यत् प्राकृतध्वान्तशान्तिकृत् ।
तेजस्तत्तैजसे स्थाने न्यासकाले समस्यते ॥ ७२ ॥
किरीटं मूर्न्धिं विन्यस्येत् वन्यर्कायुतदीधितिम् ।
श्रीवत्सं वक्षसो वामे पूर्णेन्दुसदृशद्युति ॥ ७३ ॥
कौस्तुभं हृदये न्यस्य चण्डदीधितिलक्षणम् ।
नानाऽब्जवनपुष्पोत्थां वनमालां च कण्ठतः ॥ ७४ ॥
ततः पद्मगदाचक्रशङ्खान् प्राग्वत्तु विन्यसेत् ।
आ चांसाद्दक्षिणे भागे न्यस्याच्छ्रीरुत्तरे तथा ॥ ७५ ॥

पुष्टिं गुल्फावसाने च गरुडं चोरुमध्यतः ।
मन्त्रन्यासं तु कृत्वैवं ततः पाणिद्वयेन तु ॥ ७६ ॥
मुद्रां बध्वा स्मरेद्ध्यानं देवोहमिति भावयेत् ।
कृत्वैवं तु ततः पश्चान्मानसं यागमारभेत् ॥ ७७ ॥
पद्मासनादिकं बध्या नाभौ ब्रह्माऽञ्जलिं दृढम् ।
मनस्युपरतं कुर्यादक्षग्रामं बहिःस्थितम् ॥ ७८ ॥
चित्तं बुद्धौ विनिक्षिप्य तां बुद्धिं ज्ञानगोचरे ।
ज्ञानभावनया कर्म कुर्याद्वै पारमार्थिकम् ॥७९ ॥
अथ प्रणवपूर्वेण स्वनाम्ना ऽऽनतिना सह ।
शेषपूर्वन्तु वह्न्यन्तमासनं परिकल्पयेत् ॥ ८० ॥
तथाऽऽक्रम्याय तस्यैव कार्या स्वहृदि कल्पना ।
चतुश्चक्रे नवद्वारे देहे देवगृहे पुरा ॥ ८१ ॥
कण्ठकूपधरारूढं हृत्पद्मं यदधोमुखम् ।
तत्कर्णिकावनेर्मध्ये रूढमूर्ध्वमुखं तु यत् ॥ ८२ ॥
शब्दव्यक्तिस्तदूर्ध्वे तु स्थितार्केन्द्वग्निलक्षणा ।
श्रीदीप्तिभास्वरा नाडी त्वव्यक्तध्वनिविग्रहा ॥ ८३ ॥
व्यक्तचक्रद्वयस्योर्ध्वे वर्तते या महामते ! ।
निस्सृता ब्रह्मरन्ध्रेण गता सूर्यपथात्परम् ॥ ८४ ॥
वायुद्वारेण पातालं भित्वा याता स्वर्गोचरम् ।
सङ्कल्पविपयस्सर्वस्तद्वन्धः प्रतितिष्ठति ॥ ८५ ॥
सूत्रे मणिगणो यद्वन्मध्यनाडी ह्यतः स्मृता ।
लक्ष्यस्थाने तु पूर्वोक्ते तस्यामभ्यन्तरे तु वै ॥ ८६ ॥
सम्पुटे शशिसूर्याख्ये निमेषोन्मेषलक्षणे ।
तत्राऽब्जं चाऽर्कमालम्ब्य परावाक्भ्रमरी स्थिता ॥ ८७ ॥

या सर्वमन्त्रजननी शक्तिस्सर्वात्मनो विभोः ।
नदन्ती वर्णजं नादं शब्दब्रह्मेति यत् स्मृतम् ॥८८॥

अकारपूर्वो ह्यान्तश्च धारासन्तानरूपधृक् ।
नादावसानगगने देवोऽनन्तसमन्वितः ॥ ८९ ॥

वरदाऽभयदेनैव शङ्खचक्राङ्कितेन तु ।
त्रैलोक्योद्धतिदक्षेण युक्तः पाणिद्वयेन तु ॥ ९० ॥

शान्तस्संवित्स्वरूपस्तु भक्तानुग्रहकाम्यया ।
अनौपम्येन वपुषा ह्यमूर्तो मूर्तितां गतः ॥ ९१ ॥

विश्वमाप्याययत्कान्त्या पूर्णेन्द्वयुततुल्यया ।
रश्मिभिर्भास्करो यद्वत्समुद्र इव वीचिभिः ॥ ९२ ॥

स्वमूर्तिभिरमूर्ताभिरच्युतादिभिरन्वितः ।
दीप्तिमद्भिरमूर्तैस्तु सुधाकल्लोलसङ्कुलः ॥ ९३ ॥

पूर्ण आभरणैस्सर्वैर्निर्विकाराङ्घ्रिविग्रहः ।
तस्माद्देवं समावाह्य हृदये कल्पितासने ॥९४ ॥

मन्त्रन्यासं ततः कुर्यात् हस्तन्यासं विना विभोः ।
ततः स्वाब्जकमध्यात्तु ह्यर्घ्यस्थात्संस्मरेत् च्युताम् ॥ ९५ ॥

गङ्गां भगवतो मूर्ध्नि तेनाऽमृतजलेन तु ।
अर्घ्यादखिलभोगानां कार्या वै शुभकल्पना ॥ ९६ ॥

यं यं सङ्कल्पयेद्भोगं तं तं भाव्य सुधामयम् ।
पतन्तमम्बराद्वेगादमृतांशुपरिप्लुतम् ॥ ९७ ॥

साक्षादमृतरूपैस्तु तैस्तैरमृतसम्प्लवैः ।
बृंहितं मुदितं मग्नं स पुनर्मन्त्रराट् स्मरेत् ॥ ९८ ॥

ततस्तु देवदेवस्य अर्घ्यं दत्वा यथाविधि ।
सन्निधिं सन्निरोधं च साम्मुख्यं च समाचरेत् ॥ ९९ ॥

हृदयादीनि ( १ ) साङ्गानि किरीटाद्यं तु भूषणम् ।
गदाद्यं लाञ्छनं यत्तु लक्ष्म्याद्याश्शक्तयस्तथा ॥ १०० ॥
गरुडो मूर्तयो वाऽन्या देहे देवस्य याः स्थिताः ।
व्यापकस्य तथात्वेन स्वे स्वे स्थाने प्रभात्मकाः ॥१०१॥
तद्देहसंस्थितास्सर्वे पूजनीयाः क्रमेण तु ।
परिवारं विना मन्त्रैस्स्वैःस्वैरर्घ्यादिभिर्द्विजाः ! ॥ १०२ ॥
लययागो ह्ययं विप्राः ! हृदादिष्वनुकीर्तितः ।
मन्त्रराट् कर्णिकामध्ये हृदाद्याः प्राग्दलादिषु ॥१०३॥
साकाराः केवलास्सर्वे पूज्या भोगाभिधो ह्ययम् ।
केवलेन च यागेन पृथग्भूतेन वै द्विजाः ! ॥ १०४ ॥
तेषामभ्यर्चनविधिराधिकाराभिधः स्मृतः ।
एवं कृत्वा लयाख्यं तु यागं भोगाभिधं तथा ॥१०५॥
ध्यात्वाऽथ भावनाजातैर्भोगैः परमपावनैः : ।
अभ्यर्चयेत्स्वहृदये देवं विज्ञापयेदिदम् ॥ १०६ ॥
स्वागतं देवदेवेश ! सन्निधिं भज मेऽच्युत ! ।
गृहाण मानसीं पूजां यथार्थपरिभाविताम् ॥ १०७ ॥
ज्ञात्वा तु सुप्रसन्नं तं प्रसादाभिमुखं प्रभुम् ।
विस्तरेण ( २ ) द्विजश्रेष्ठो मानसं यागमारभेत् ॥ १०८ ॥
सङ्कल्पजनितैर्दिव्यैः पवित्रैरक्षयैश्शुभैः ।
सर्वकामप्रदं देवं मन्त्रमूर्तिधरं यजेत् ॥ १०९ ॥
अभ्यङ्गोद्वर्तने पूर्वं स्नानं चाऽथ विलेपनम् ।
वस्त्रपूर्वाणि माल्यानि सुगन्धानि निवेद्य च ॥ ११० ॥

---

( १ ) चाङ्गानि—इति च पाठः ।
( २ ) द्विजश्रेष्ठाः ! इत्यपि पाठः ।

हारकेयूरकटकैर्मकुटैर्भूषितं स्मरेत् ।
चित्रेण कटिसूत्रेण हेमरत्नमयेन च ॥ १११ ॥
माणिक्यरचितैश्शुद्धैर्मुक्ताहारैश्च भूषयेत् ।
सम्पूर्णेन्दुसमानं च हेमदण्डसमन्वितम् ॥ ११२ ॥
छत्रं निवेदयेद्विष्णोर्मायूरव्यजनं शुभम् ।
कर्पूरचूर्णसम्मिश्रं सुगन्धि मधुरं बहु ॥ ११३ ॥
धूपं भगवतो दत्वा दीपमालां घृतेन च ।
मधुसर्पिःप्लुतं चाऽथ मधुपर्कं निवेदयेत् ॥ ११४॥
पशुं च विविधं मूर्तं पावनं शकुनिं तथा ।
ओपधीश्शालिदूर्वाश्च सत्फलाढ्यं वनस्पतिम् ॥ ११५ ॥
मूर्तं निवेदयेत्पूर्वमिदमन्नं चतुर्विधम् ।
निवेद्य विविधं शुद्धं भक्ष्यभोज्यान्यनेकशः ॥ ११६ ॥
हृद्यानि फलमूलानि षड्रसप्रभवानि च ।
षड्रसानि विचित्राणि पानान्यथ निवेद्यं च ॥ ११७ ॥
सर्वाण्यात्मोपभोग्यानि भक्तिश्रद्धावशात् द्विजाः ! ।
प्रदिश्वप्यविरुद्धानि देवाय विनिवेदयेत् ॥ ११८ ॥
तन्त्रीवाद्यान्यनेकानि नृत्तगेयान्वितानि च ।
भेरीपटहघोषादिस्तुतिपाठान्वितानि च ॥ ११९ ॥
चिन्तयेद्देवदेवस्य लोकत्रयगतानि च ।
किङ्किणीजालयुक्तेन चामरेणोपवीज्य च ॥ १२० ॥
वितानकं पताकांश्च ध्वजानि विविधानि च ।
विनिवेद्य विभोर्भक्त्या प्रसन्नेनाऽन्तरात्मना ॥ १२१ ॥
गजाश्वधेनुयानानि सुवस्त्रालङ्कृतानि च ।
निवेद्य चाऽन्तरा तानि ग्राहयन्तं स्मरेत्ततः ॥ १२२ ॥

आत्मानं ससुतं दारान् सर्वस्वेन समायुतान् ।
निवेद्य प्रणतो मूर्ध्ना आनन्दाश्रुसमन्वितः ॥ १२३ ॥
कामधेनुमयीं मुद्रां मनसा मन्त्रसंयुताम् ।
बद्धां सञ्चिन्तयेद्विष्णोस्सर्वकामप्रपूरिणीम् ॥ १२४ ॥
ततो विशेषयजनं कल्पयेदच्युतस्य तु ।
सौवर्णपुष्पसम्पूर्णमञ्जलिं सम्प्रसार्य तु ॥ १२५ ॥
मूलमन्त्रं समुच्चार्य प्रयत्नैः पूरकादिभिः ।
दीर्घघण्टारवप्रख्यं यावत्तत्सम्भवावधि ॥ १२६ ॥
स्फुरद्रश्मिद्वयाकीर्णं वह्न्यर्केन्दुसमप्रभम् ।
ध्यात्वा नारायणं देवमञ्जतां सन्निरोधयेत् ॥ १२७ ॥
तमञ्जलिं क्षिपेन्मूर्ध्नि तस्मिन् वै मन्त्रविग्रहे ।
अर्घ्यं निवेदयेद्भूयः पुनः पुष्पाञ्जलिं शुभम् ॥१२८॥
मुद्रां सन्दर्श्य मूलाख्यां मानसं जपमारभेत् ।
सङ्ख्याहीनं यथाशक्ति घण्टाख्याकरणेन च ॥ १२९ ॥
भोगस्थानगतानां च हृदादीनां क्रमेण तु ।
मनसा दर्शयेन्मुद्रां जपं कुर्यात्सकृत्सकृत् ॥ १३० ॥
स्तोत्रमन्त्रैः पवित्रैश्च स्तुत्वा सम्यक् प्रसादयेत् ।
जपान्तं चैवमभ्यर्च्याऽप्यवतार्य बहिर्यजेत् ॥ १३१ ॥

इति श्रीपाञ्चरात्रे ईश्वरसंहितायाम्
मानसयागविधिर्नाम
द्वितीयोऽध्यायः ॥

———

## अथ तृतीयोऽध्यायः ।

पुराऽनेन विधानेन कृत्वा यागं तु मानसम् ।
कर्मणा भक्तियुक्तेन बहिर्बिम्बे यजेत्ततः ॥ १ ॥
बाह्ययागविधिं सम्यक् शृणुध्वं मुनिपुङ्गवाः ! ।
देवं हृत्कमलाकाशे तेजोरूपतया स्थितम् ॥ २ ॥
तस्मात् स्थानात्समानीय तं कुर्यान्नेत्रमध्यगम् ।
वासुदेवाभिधानं तु प्रागुक्तं च समाश्रयेत् ॥ ३ ॥
ततो लोचनयुग्मेन स्तब्धेन मुनिपुङ्गवाः ! ।
जपन् लोचनमन्त्रं तु पश्येद्यागोपयोगिनम् ॥ ४ ॥
सम्भारमखिलं तेन द्रव्यसङ्घो विशुध्यति ।
उपार्जितं पुरा यद्वै यागोपकरणं महत् ॥ ५ ॥
तत्सर्वं तत्क्षणे कृत्वा वामे तु करकं न्यसेत् ।
गालितेनाऽम्भसा पूर्णं मध्ये भद्रासनं न्यसेत् ॥ ६ ॥
यत्किञ्चित्पत्रपुष्पाद्यं परिदृश्येत पिङ्गलम् ।
पाणिना तत्समाहृत्य शुचिस्थाने निधाय वै ॥ ७ ॥
गव्यैर्वा चामरैर्वालैश्शिखिपक्षैः कुशैरथ ।
सम्मार्ज्य भद्रपीठं तु वाससा सुसितेन वा ॥ ८ ॥
बहुना वस्त्रपूतेन वारिणा तदनन्तरम् ।
प्रक्षाल्य द्वादशार्णेन प्रणवाद्यन्तकेन तु ॥ ९ ॥
एवमाराधनाधारं क्षालयित्वा च वारिणा ।
तत्तावदस्त्रपुष्पेण कुर्याद्विघ्नगणोज्झितम् ॥ १० ॥
आराध्यांयामथाऽऽरोप्य तत्र मन्त्रमयीं शुभाम् ।
सर्वोपकरणोपेतां सर्वलक्षणसंयुताम् ॥ ११ ॥

प्रतिमां धातुपाषाणनिर्मितामात्मसिद्धये ।
दिव्यार्घ्यपाद्याचमनैर्देवमभ्यर्च्य वै ततः ॥ १२ ॥
भुक्तमर्घ्यादिकं तस्मादपनीयाऽभिवाद्य च ।
समर्प्य विष्वक्सेनस्य संशोध्य मृदुना द्विजाः ! ॥ १३ ॥
उशीरवंशकूर्चेन क्षालयेदम्भसा ततः ।
उच्चरन् मूलमन्त्रं वा कुर्यान्मार्गत्रयं विभोः ॥ १४ ॥
सुधौते देवदेवस्य वाससी परिधापयेत् ।
चित्रस्थाद्भगवद्बिम्बाद्भुक्तपुष्पादिकं हि यत् ॥ १५ ॥
अपनीय तु तत्कुर्याद्वाससा रेणुमार्जनम् ।
यद्वा प्राग्यागभवनप्रवेशानन्तरं द्विजाः ! ॥ १६ ॥
न्यस्य भद्रासनाद्यन्तमन्यदन्यत्समाचरेत् ।
यद्वा तदातने काले न्यस्य भद्रासनादिकम् ॥ १७ ॥
आद्यं मार्गत्रयं कृत्वा यथोक्तविधिना ततः ।
योगपीठार्चनारम्भे बिम्बोक्तं सर्वमारभेत् ॥ १८ ॥
अथाऽर्घ्यादीनि पात्राणि प्रक्षाल्याऽस्त्रेण वारिणा
गालितेनाऽम्भसाऽऽपूर्य पात्राणि मुनिसत्तमाः ! ॥ १९ ॥
मुख्यामुख्याऽर्घ्यपात्रादिक्रमाद्द्रव्याणि निक्षिपेत् ।
एकस्मिन् चन्दनादीनि दूर्वासिद्धार्थकानि च ॥ २० ॥
साक्षतानि कुशाग्राणि तण्डुलानि तिलांस्तु वै ।
सरत्नानुत्तमान् धातून् सफलान् विनिवेशयेत् ॥ २१ ॥
द्वितीये दधिमध्वाज्यक्षीरबिन्दुचतुष्टयम् ।
कुशाग्रेण सव्रीहीकं सपुष्पतिलतण्डुलम् ॥ २२ ॥
दूर्वां च विष्णुक्रान्तां च श्यामाकं शङ्खपुष्पकम् ।
पद्मकं कुन्दरेणुं च पाद्यपात्रे विनिक्षिपेत् ॥ २३ ॥

त्वगेलापत्रचयं सर्वं सकर्पूरं च चन्दनम् ।
न्यसेदाचमनीयाख्यपात्रे तु मुनिसत्तमाः ! ॥ २४ ॥
कोष्ठं मांसीं हरिद्रे द्वे मुराशैलेयचम्पकान् ।
वचाकच्चोरमुस्ताश्च स्नानीये तु विनिक्षिपेत् ॥ २५ ॥
हृन्मन्त्रेणैव सर्वत्र कुर्याद्वै द्रव्ययोजनम् ।
आधारोपरि पात्राणि स्वपूर्वनियमेन तु ॥ २६ ॥
वायव्यादिषु विन्यस्य तत्तत्कल्पनमन्त्रतः ।
"ओम् अर्घ्यं कल्पयामी" ति उक्त्वा वायुपदे न्यसेत् ॥२७॥
कलशं तद्वदैशान्यां न्यसेदाचमनार्थतः ।
स्नानार्थमग्निकोणे तु पाद्यार्थं नैर्ऋते तथा ॥ २८ ॥
अग्रतो वाऽपि तन्मध्ये न्यसेदर्घ्यं द्वितीयकम् ।
यद्वा प्रागेव पात्राणि न्यस्याधारोपरि द्विजाः ! ॥ २९ ॥
तत्तत्कल्पनमन्त्रैस्तु तानि हस्तेन संस्पृशेत् ।
दक्षिणोत्तरहस्ताभ्यां हृद्बीजेन विचिन्त्य च ॥ ३० ॥
सूर्यसोमौ ततः कुर्याद्द्रव्यदाहसमुद्भवौ ।
बध्वा कामदुघां मुद्रां स्रवन्तीं मन्त्रसंयुताम् ॥ ३१ ॥
गोरूपां हिमशैलाभां निराधारपदे स्थिताम् ।
तया तदमृतीकुर्यात् द्रव्यजालं यथास्थितम् ॥ ३२ ॥
वर्गेऽष्टमे तृतीयार्णं वकारोपरि संस्थितम् ।
ईकारानुस्वारयुक्तं नमःप्रणवमध्यगम ॥ ३३ ॥
सौरभीयो ह्ययं मन्त्रः स्ववाणीसंयुतो द्विजाः ! ।
एवं वाणीद्वयेनैव अग्नीषोमात्मकेन तु ॥ ३४ ॥
योग्यतां पदवीं नीत्वा प्रेपयेद्यदाहृतम् ।
तोयमादाय पात्रेऽथ तत्र हृन्मन्त्रितं क्षिपेत् ॥ ३५ ॥

पुष्पगन्धसमोपेतं सुसितं शालितण्डुलम् ।
मन्त्रयेत्प्रणवाद्येन बहुशो हृदयेन तु ॥ ३६ ॥
तदुद्धृतेनाऽम्भसा वै अस्त्रमन्त्रं समुच्चरन् ।
प्रोक्षयेत्स्वासनं स्थानं यागोपकरणं तथा ॥ ३७ ॥
सास्त्रेण मूलमन्त्रेण अर्घ्यादीनभिमन्त्र्य तु ।
सषडङ्गेन तेनैव कुर्यात्पुष्पादिनाऽर्चनम् ॥ ३८ ॥
धूपपात्रं च घण्टां च समभ्यर्च्य यथाविधि ।
घण्टाचालनपूर्वं तु धूपेनाऽर्घ्यादिकान् यजेत् ॥ ३९ ॥
धूपपात्रस्य घण्टायाः पूजनं चोच्यतेऽधुना ।
पद्मचक्राङ्कितं दिव्यमाधारकजरूपिणम् ॥ ४० ॥
एकनालं च कर्तव्यं शेषं सप्तफणं विभुम् ।
बद्धाञ्जलिपुटं नित्यं ध्यायन्तं कारणं परम् ॥ ४१ ॥
चक्रलाङ्गलहस्तं च पद्मासनगतं विभुम् ।
कर्तव्यं धूपधर्तारं किङ्किणीजालशोभितम् ॥ ४२ ॥
चक्रं तच्चक्रहृदयं पद्मं हृत्कोटरं विदुः ।
चक्रे या या अराख्यास्ता नाड्यो वै द्वादश स्मृताः॥४३॥
किङ्किण्यो याः स्थिता विप्राः ! ज्ञेयास्तास्सूक्ष्मनाडयः।
यासां वै मध्यमा शक्तिर्भुजङ्गकुटिलोपमा ॥ ४४ ॥
धूमधूसरवर्णाभा अण्डं भित्वा विनिर्गता ।
कालाग्निहृदयोत्था सा सत्यान्ते तु लयं गता ॥ ४५ ॥
तया सञ्चोदितो ह्यात्मा मन्त्रमूर्तीश्वरः प्रभुः ।
सान्निध्यं भवति क्षिप्रमप्युच्छिन्नं दहेत्तथा ॥ ४६ ॥
मन्त्रेणाऽनेन विप्रर्षे ! तन्मन्त्रमवधारय ।
ओङ्कारं पूर्वमुद्धृत्य परमात्मा ततः पुनः ॥ ४७ ॥

व्योमानन्देन संयुक्तमनन्ताय पदं ततः ।
कालाग्निरूपाय पदं जगद्भूमपदं तथा ॥ ४८ ॥
सुगन्धिने पदं कुर्यात्सर्वगन्धवहाय च ।
'नमस्स्वाहा' समायुक्तमेकत्रिंशाक्षरं पदम् ॥ ४९ ॥
मन्त्रं द्विजसमाख्यातं धूपपात्रस्य नारद ! ।
मुद्राध्यानसमायुक्तं सर्वसिद्धिकरं परम् ॥ ५० ॥
मन्त्रेणाऽनेन सम्पूज्य धूपपात्रमनन्तरम् ।
घण्टासम्पूजनं कुर्यात्तद्विधानमिहोच्यते ॥ ५१ ॥
आदाय प्रणवं पूर्वमनन्तेशमतः परम् ।
तं चाऽनलेन सम्भिन्नमूर्ध्वाधो मुनिसत्तम ! ॥ ५२ ॥
त्रैलोक्यैश्वर्यदेनाऽथ लाञ्छयेत्पद्मबिन्दुना ।
दद्यादस्याऽवसाने तु ऋग्ध्वनि पदं ततः ॥ ५३ ॥
मन्त्रमात्रे पदं चाऽन्यत्स्वाहाऽक्षरसमन्वितम् ।
तदन्ते परमात्मानं प्रज्ञाऽऽधारोपरि स्थितम् ॥ ५४ ॥
भूधरेण युतं मूर्ध्ना भूधरोपरि विन्यसेत् ॥
विश्वाप्यायकरान्तस्स्थत्रैलोक्यैश्वर्यदं मुने ! ॥ ५५ ॥
त्रयोदशाक्षरो मन्त्रो घण्टाख्यस्सर्वसिद्धिकृत् ।
विन्यासकाले यस्या वै प्लुतमुच्चारयेत्ततः ॥ ५६ ॥
ध्यानयुक्तं द्विजश्रेष्ठ ! तद्ध्यानमवधारय ।
अधोमुखं तु ब्रह्माण्डं ध्यायेज्ज्ञनरवाकुलम् ॥ ५७ ॥
सनालं च तदूर्ध्वे तु पद्ममष्टदलं स्मरेत् ।
प्रकीर्णपत्रं सुसितं केसरालिसुकर्णिकम् ॥ ५८ ॥
तन्मध्ये चिन्तयेद्देवीं वर्गाष्टकभुजान्विताम् ।
मुख्ये हस्तचतुष्के तु लाञ्छनं कमलादिकम ॥ ५९ ॥

स्फाटिकं चाऽक्षसूत्रं च तथा विज्ञानपुस्तकम् ।
अभयं वरदं चैव हस्तद्विद्वितये परे ॥ ६० ॥
पद्मासनेनोपविष्टां पद्मपत्रायतेक्षणाम् ।
पद्मगर्भप्रतीकाशां पद्मलाञ्छनभूषिताम् ॥ ६१ ॥
सिताभरणसञ्छन्नां पीतवस्त्रविमण्डिताम् ।
मन्त्रौघमुद्गिरन्तीं च मन्त्रज्वालप्रभान्विताम् ॥ ६२ ॥
देवैस्सुस्तूयमानां च ब्रह्माद्यैः ब्रह्मवादिभिः ।
ऋषिभिर्मुनिभिस्सिद्धैर्लोकानुग्रहकारिभिः ॥ ६३ ॥
नम्यमानां स्मरेत्सम्यक्पूजाकाले सदैव हि ।
योऽनया पूजयेन्मन्त्री तस्य सिद्धिर्न दूरतः ॥ ६४ ॥
एवं ध्यात्वाऽर्चयेत्सम्यगर्घ्याद्यैस्तु ततः स्मरेत् ।
शब्दब्रह्ममहो यद्यद्धृदब्जाकाशमध्यगम् ॥ ६५ ॥
नित्योदितमनौपम्यमनभ्यासादगोचरम् ।
उपदेष्टुमतोऽन्येषामभक्तानां न युज्यते ॥ ६६ ॥
परस्वरूपं मन्त्राणामेतल्लक्षणमब्जज ! ।
दशप्रकारे यच्छब्दे विसर्गान्तेऽक्षरादिके ॥
नानामन्त्रस्वरूपेण वर्तते वर्णविग्रहे ॥ ६७ ॥
भोगमोक्षप्रदो मन्त्रो य आप्तस्सद्गुरोर्मुखात् ।
पञ्चस्थानगतो ज्ञेयो भक्तैर्दिव्यक्रियापरैः ॥ ६८ ॥
बहिस्स्थप्रतिमादौ तु जिह्वाग्रे हृत्कुशेशये ।
धूपधूमशिखायां च घण्टाशब्दे सुलक्षणे ॥ ६९ ॥
स्वरूपज्योतिरेवान्तर्भावयन् संस्थितं हृदि ।
मध्यमेन स्वरूपेण अप्युच्छिन्नं महामते ! ॥ ७० ॥
धूपधूमाश्रितं विद्धि वैखरीविग्रहं पुनः ।
घण्टायां चाल्यमानायामच्छिन्नमनुभूयते ॥ ७१ ॥

एवं स्मृत्वा ततस्तां तु स्वमन्त्रन्यस्तविग्रहाम् ।
अर्चितां ध्यानसंयुक्तामर्घ्याद्यैर्धूपसंयुतैः ॥ ७२ ॥
सञ्चालयेत्ततस्सम्यक् सुशब्दां मन्त्रबोधिनीम् ।
त्रैलोक्यद्राविणीं घण्टां सर्वदुष्टनिबर्हिणीम् ॥ ७३ ॥
एषा द्युतिर्हि मन्त्राणां सुप्तानां च प्रबोधिनी ।
वारिणी सर्वविघ्नानां सर्वमन्त्रप्रसादिनी ॥ ७४ ॥
प्रणवान्ते ध्वनिर्ह्येषा शब्दशक्तौ लयं गता ।
वर्णदेहाः स्मृता मन्त्राः मन्त्रदेहाश्च देवताः ॥ ७५ ॥
घण्टास्तनितमूलास्ते प्रबुद्धाः कर्मसिद्धिदाः ।
परशब्दोत्थिता शक्ति र्घण्टा स्तनितरूपिणी ॥ ७६ ॥
वर्णत्वं समनुप्राप्ता तैर्वर्णैर्मुनिसत्तम ! ।
मन्त्राणां कल्पिता देहाः नानाकारास्सहस्रशः ॥ ७७ ॥
स्वेच्छया त्वनया शक्त्या सामर्थ्यात्स्वात्मनस्स्वयम् ।
अनुग्रहार्थमिह हि भक्तानां भावितात्मनाम् ॥ ७८ ॥
मननान्मुनिशार्दूल ! त्राणं कुर्वन्ति वै यतः ।
ददते पदमात्मीयं तस्मान्मन्त्राः प्रकीर्तिताः ॥ ७९ ॥
अनभिव्यक्तशब्दास्ते निराकारास्तथैव च ।
घण्टायां चाल्यमानायां निर्यान्ति च सहस्रशः ॥ ८० ॥
अत एव मुनिश्रेष्ठ ! मन्त्रमाता प्रकीर्तिता ।
एषा घण्टाभिधा शक्तिर्वागीशा च सरस्वती ॥ ८१ ॥
वाचि मन्त्रान् स्थितान् सर्वे वाच्यं मन्त्रे प्रतिष्ठितम् ।
मन्त्ररूपात्मकं विश्वं सबाह्याभ्यन्तरं ततः ॥ ८२ ॥
घण्टाशब्दगतं सर्वं तस्मात्तां चालयेत्पुरा ।
आवाहनार्घ्ये धूपे च दीपे नैवेद्यजोपणे ॥ ८३ ॥

जपस्तुत्यवसानाभ्यां प्रवृत्ते चाऽग्नितर्पणे ।
पूर्णाहुतिप्रदाने च मन्त्राणां तु विसर्जने ॥ ८४ ॥
विष्वक्सेनाऽर्चने चैव तत्पूजाप्रतिपादने ।
बलिप्रदानकाले तु देवतानां विशेषतः ॥ ८५ ॥
नित्यमेव प्रयुञ्जीत सम्यङ्मन्त्राऽर्थसिद्धये ।
पूजाकालं विनाऽन्यत्र हितं नाऽस्याः प्रचालनम् ॥ ८६ ॥
नाऽनया तु विना कार्यं पूजनं सिद्धिमिच्छता ।
धूपं दत्वाऽथ पात्राणां घण्टाशब्दसमन्वितम् ॥ ८७ ॥
धूपं दद्याद्यथाकाले यद्वाऽर्घ्यादौ सकृत्सकृत् ।
अनुकल्पे तु हृन्मन्त्रं कुर्यादावर्तनं बुधः ॥ ८८ ॥
आवाहने सन्निधाने सन्निरोधे तथाऽर्चने ।
विसर्जनेऽर्घ्यदानं तु प्राक्पात्रान्नित्यमारभेत् ॥ ८९ ॥
तदम्भसा चाऽर्हणं तु तथैव परिषेचनम् ।
कुर्यात् प्रणयनादानं प्रीणनं प्रीतिकर्मणि ॥ ९० ॥
प्रोक्षणं सर्ववस्तूनामन्यस्मादुदकेन तु ।
आरम्भे सर्वकार्याणां तत्समाप्तौ सदैव हि ॥ ९१ ॥
न्यूनाधिकानां शान्त्यै तु ज्ञानव्यत्ययशान्तये ।
कार्यं तदर्घ्यदानं च नित्यं मन्त्रात्मनो विभोः ॥९२॥
कुम्भोपकुम्भकुण्डानां मन्त्राऽस्त्रकलशाऽर्चने ।
सम्पूजने च भूतानां गुर्वादीनां महामते ! ॥ ९३ ॥
दक्षशिष्यात्मपूजार्थं द्वार्स्थानामर्चनं प्रति ।
प्रासादासनदेवानां गुरूणां सन्ततेस्तथा ॥ ९४ ॥
लाञ्छनाङ्गपरीवारशक्तिभूषणरूपिणाम् ।
मण्डलावरणस्थानां देवानां चाऽर्चने तथा ॥ ९५ ॥

मुद्राबन्धे करासुक्षि तदर्चाक्षालनं तथा ।
पाद्यदानं तृतीयात्तु नित्यं पात्रात्समाचरेत् ॥९६॥
चतुर्थात्तु यथाकालं दद्यादाचमनं ततः ।
हस्तप्रक्षालनं चैव गण्डूपं मुखधावनम् ॥ ९७ ॥
स्नानीयाचाऽऽचरेत्स्नानं प्रयोजकविधिस्त्वयम् ।
अर्घ्यपात्राद् द्वितीयात्तु किञ्चिदुद्धृत्य वै जलम् ॥ ९८ ॥
तेन स्वविग्रहन्यस्तान् मन्त्रानिष्ट्वा यथाक्रमम् ।
गन्धपुष्पप्रधूपैश्च पृथगेव प्रकल्पितैः ॥ ९९ ॥
अथाऽर्घ्यादीन् समादाय द्वारस्थान् देवान् समर्चयेत् ।
निर्गत्य द्वारबाह्ये तु स्थितो वाऽऽसीन एव वा ॥१००॥
वास्तुक्षेत्रेशगरुडद्वार्श्रीचण्डप्रचण्डकान् ।
अभ्यर्च्याऽर्घ्यादिभिर्देवान् प्रासादस्थांश्च पूजयेत् ॥ १०१ ॥
अनेकभेदभिन्नेषु प्रासादेषु महामते ! ।
विस्तरेण समस्तेषु वृत्तायतपुरस्सरम् ॥ १०२ ॥
वक्ष्ये लो(का ऽध्व)कोर्ध्वतत्त्वानां देवतानां च संस्थितिम् ।
सन्निरुध्य च भूर्लोकं पादक्षितितलेऽखिलम् ॥ १०३ ॥
एवं प्रासादपीठेषु भुवर्लोकं यथास्थितम् ।
स्मरेज्जङ्घावधिर्यावत् स्वर्लोकं तत्तदूर्ध्वगम् ॥ १०४ ॥
आरभ्य प्रस्तरोद्देशान्महच्छिखरभूमिगम् ।
जनलोकं च तद्ग्रीवां तपस्संज्ञं तदापगम् ॥ १०५ ॥
सत्यसंज्ञं च यल्लोकं तच्छिखायां तु संस्मरेत् ।
भावयेच्च पुरा व्याप्तिमेवं वै सासलौकिकीम् ॥१०६॥
ततश्चोर्ध्वमयीं व्याप्तिं भावयेत्तु यथाक्रमम् ।
कुम्भाधारोपलान्तस्थमध्वपट्कं स्मरन् न्यसेत् ॥ १०७ ॥

बीजभूतं तदन्तस्स्थमध्वव्याप्तिमनुस्मरेत् ।
बीजतश्चाऽङ्कुरीभूता परस्ताद्व्यक्तिमेति सा ॥ १०८ ॥

प्रासादपीठपर्यन्तं कुम्भाधारोपलात्तु वै ।
भुवनाद्वा यथाऽवस्थो भावनीयस्तु सर्वतः ॥ १०९ ॥

गर्भोच्छ्रयावधिर्यावत्पदाऽध्वानं विलोकयेत् ।
मन्त्राऽध्वा शुकनासान्तं तत्वाऽध्वा वेदिकावधि ॥ ११० ॥

कलाऽध्वा तु गलान्तं च वर्णाऽध्वा तु तदूर्ध्वतः ।
एवं कृत्वाऽऽध्वकीं व्याप्तिं ततस्तत्त्वानि विन्यसेत् ॥ १११ ॥

संयोज्य पार्थिवं तत्वं पादक्षितितले द्विजाः ।
तोयतत्वं न्यसेत्पीठे जङ्घायां तैजसं स्मरेत् ॥ ११२ ॥

ग्रीवोद्देशावधिर्यावद्वायुतत्वं तदूर्ध्वतः ।
आकाशं शिखरस्थं स्यात्तदुद्देशात्क्रमेण तु ॥ ११३ ॥

न्यसेच्छब्दादि तन्मात्रां यावत्पदतलान्तिमम् ।
पार्श्वतो नासिके श्रोत्रे त्वक्सुधा समुदाहृता ॥ ११४ ॥

गवाक्षे चक्षुषी स्यातां जिह्वा भद्राख्यवेदिका ।
घ्राणन्तु शुकनासा स्यादास्यं द्वारमुदाहृतम् ॥ ११५ ॥

विज्ञेयाः पाणयःस्तम्भाः पादाः पादशिलाघटाः ।
वायुभ्यां जलनिर्याणमुपस्थं तु तदन्तरम् ॥ ११६ ॥

मनोऽन्तर्व्योम विज्ञेयं गर्वो ब्रह्मशिलागतः ।
बुद्धिस्तु पिण्डिका ज्ञेया प्रकृतिस्स्यात्तदन्तरं ॥ ११७ ॥

पञ्चविंशतमो ज्ञेयः प्रतिमापुरुषः परः ।
एवं न्यस्तेषु तत्वेषु न्यस्तव्या देवताः क्रमात् ॥ ११८ ॥

घटाधारोपलस्याऽधस्त्वनन्तो नाम नागराट् ।
सहस्रसङ्ख्यातफणामण्डलेन सुमण्डितः ॥ ११९ ॥

तदूर्ध्वे संस्थितं चक्रं सहस्रारोपशोभितम् ।
या शिला कलशाधारसंज्ञां तां विद्धि सर्वगाम् ॥१२०॥
सा मध्यशक्तिस्सामान्या निष्कला पारमेश्वरी ।
तदूर्ध्वसंस्थिताः कुम्भाः नवसङ्ख्यास्तु ये द्विजाः ! ॥१२१॥
तेषां मध्यमकुम्भे तु साङ्गं सपरिवारकम् ।
मन्त्रनाथं समभ्यर्च्य मूलमन्त्रेण देशिकः ॥ १२२ ॥
ततः प्रागादिदिक्स्थेषु वासुदेवादिकान् यजेत् ।
विदिक्स्थेष्वनिरुद्धादीन् यजेदप्ययययोगतः ॥ १२३ ॥
तेषां विधाननवके त्वामध्यादीशगोचरम् ।
स्मर्तव्यास्सर्वतो व्याप्ताः क्रमेण द्विजपुङ्गवाः ! ॥ १२४ ॥
ज्ञानभागा निवसति तथाऽऽनन्दबला प्रभा ।
सर्वगा ब्रह्मवदना द्योतकी सत्यविक्रमा ॥ १२५ ॥
सम्पूर्णा चेति कथिताश्शक्तयो विश्वधारिकाः ।
शिलाष्टके दिग्विदिक्षु तद्बहिस्स्थापिते न्यसेत् ॥ १२६ ॥
धर्माद्यं चाऽग्निकोणात्तु यावदीशपदं पुनः ।
प्रागादावुत्तरान्तं च अधर्माद्यं चतुष्टयम् ॥ १२७ ॥
शिलानामन्तरे भूमौ षट्कं षट्कं क्रमेण तु ।
न्यस्तव्यं पूर्ववर्णाच्च वर्णानां सावसानकम् ॥ १२८ ॥
ततः प्राङ्गणभित्त्यर्थं विन्यस्ते च शिलाऽष्टके ।
दिग्विदिक्षु न्यसेत्प्राग्वत्प्रागुक्तांश्च दिगीश्वरान् ॥ १२९ ॥
चक्रं तदन्तभूमीनां भ्रमद्वह्निस्फुलिङ्गवत् ।
क्षार्णेन चिन्तयेद्व्याप्तिं भूभागं चाङ्गणीयकम् ॥ १३० ॥
बहिः प्राङ्गणभित्तीनां साङ्गं सपरिवारकम् ।
प्रागादावीशकोणान्तमिन्द्राद्यं चाऽष्टकं न्यसेत् ॥ १३१ ॥

तथाविधेपूपलेपु अन्तर्भूमिगतेपु च ।
सर्वाधारमयं चक्रं शाखामूलं समाश्रितम् ॥ १३२ ॥
ज्ञानक्रियात्मके तत्त्वे शाखयोर्युगले स्थिते ।
पारमेश्वर आद्यस्तु द्वारस्योर्ध्वे उदुम्बरे ॥ १३३ ॥
संस्थितस्सर्वतो व्याप्तस्तत्पृष्ठे मध्यदेशतः ।
चतुष्पात्सकलो धर्मः स्थितस्सत्ववतां वरः ॥ १३४ ॥
यदा कवाटौ द्वारस्य कल्पितौ द्विजसत्तमाः ! ।
कालवैश्वानरो देवो ह्यपां पतिरुभाविमौ ॥ १३५ ॥
दाक्षिणोत्तरयोगेन कवाटोपरि संस्थितौ ।
तद्द्वारपार्श्वयोर्वा श्रीमण्टपद्वारपार्श्वयोः ॥ १३६ ॥
निधीशौ शङ्खपद्माख्यौ पूजनीयौ क्रमेण तु ।
ततो जङ्घासमूहे तु तथैवान्तरभूमिपु ॥ १३७ ॥
भवोपकरणीयानां देवानामर्चनं क्रमात् ।
कालोपि यन्नियन्ता च शास्त्रं नानाङ्गलक्षणम् ॥१३८॥
विद्याधिपतयश्चैव सरुद्रस्सगणश्शिवः ।
प्रजापतिसमूहस्तु इन्द्रस्सपरिवारकः ॥ १३९ ॥
मुनयस्सप्त पूर्वेऽन्ये ग्रहास्तारादिकैर्वृताः ।
जीमूतश्चाखिला नागाः अप्सरोगण उत्तमः ॥ १४० ॥
ओपध्यश्चैव पशवो यज्ञास्साङ्गाखिलास्तु ये ।
विद्याचैवाऽपरा विद्या पावकश्चैव मारुतः ॥ १४१ ॥
चन्द्राऽर्कौ वारिवसुधे इत्येते देवतागणाः ।
चतुर्विंशतिसंख्याताः भवोपकरणाऽमराः ॥ १४२ ॥
मूर्तयः केशवाद्यास्तु जङ्घाग्रोपरि संस्थिताः ।
ततस्तु प्रस्तरोद्देशे एते स्थाप्याः क्रमेण तु ॥१४३॥

चक्रशङ्खौ गदापद्मे लाङ्गलं मुसलं शराः ।
शार्ङ्गं च खड्गखेटौ तु दण्डः परशुरीतिहा ॥ १४४ ॥
पाशाङ्कुशौ मुद्गरं च वज्रं शक्तिसमन्वितम् ।
प्रासादे चतुरश्रे तु चतुरश्रायतेऽपि च ॥ १४५ ॥
गरुडं प्रस्तरस्योर्ध्वे न्यसेत्कोणचतुष्टये ।
तदूर्ध्वं वेदिकायां तु भावनीया मुनीश्वराः ! ॥ १४६ ॥
एते पूर्वादिके योगे नैकशृङ्गतनुस्ततः ।
देवो वामनदेहस्तु सर्वव्यापी त्रिविक्रमः ॥ १४७ ॥
नरो नारायणश्चैव हरिः कृष्णस्तथैव च ।
ज्वलत्परशुधृग्रामो रामश्चाऽन्यो धनुर्धरः ॥ १४८ ॥
वेदविद्भगवान् कल्की पातालशयनः प्रभुः ।
ततो ग्रीवातले ध्येयः कूर्मः पातालधारकः ॥ १४९ ॥
वराहो नारसिंहश्चाऽप्यमृताहरणस्तु वै ।
श्रीपतिर्दिव्यदेहोऽथ कान्तात्माऽमृतधारकः ॥ १५० ॥
राहुजित्कालनेमिघ्नः पारिजातहरो महान् ।
लोकनाथस्तु शान्तात्मा दत्तात्रेयो महाप्रभुः ॥ १५१ ॥
न्यग्रोधशायी भगवानित्येते द्विजसत्तमाः ! ।
ततस्तु शिखरोद्देशं त्रिधाकृत्य यथासमम् ॥ १५२ ॥
यावत्तु कलशाधारवेदिकात् द्विजसत्तमाः ! ।
अधोभागे क्रमात् ध्येयाः शिष्टा देवास्तु वैभवाः ॥ १५३ ॥
अनन्तो भगवान् देवश्शक्त्यात्मा मधुसूदनः ।
विद्याधिदेवः कपिलो विश्वरूपो विहङ्गमः ॥ १५४ ॥
क्रोडात्मा वडवो वक्त्रो धर्मो वागीश्वरस्तथा ।
देव एकार्णवशय इत्येते द्वादश स्मृताः ॥ १५५ ॥

ध्रुवस्तु सर्वतोव्यापी तदूर्ध्वपदसंस्थितः ।
पद्मनाभस्तदूर्ध्वे तु व्यापकः परितिष्ठति ॥ १५६ ॥
शुकनासामुखे पूज्यो वासुदेवस्सनातनः ।
यत्र प्रासाददेशे तु शुकनासा न कल्पिता ॥ १५७ ॥
तत्राऽग्रतो नासिकायाः वासुदेवं तु संस्मरेत् ।
शिष्टनासात्रये पूज्याः क्रमात्सङ्कर्षणादयः ॥ १५८ ॥
अथ वा पुरुषस्सत्यो ह्यच्युतोऽनन्त एव च ।
चतुर्दिक्षु क्रमेणैव पूज्या यद्वा क्रमेण तु ॥ १५९ ॥
वराहो नारसिंहश्च श्रीधरश्च हयाननः ।
यद्वा नराद्याश्चत्वारो धर्ममूर्त्यादयोऽपि वा ॥ १६० ॥
यद्वा परशुरामाद्याः स्मर्तव्याः क्रमयोगतः ।
एते तु शक्तिभिस्सर्वे युक्ता वा केवलास्तु वा ॥१६१॥
द्रुमैः पत्रलतायुक्तैर्भूपितैर्वेदिकातले ।
विन्यसेत् पडरं चक्रं ततस्सामलसारके ॥ १६२ ॥
भगवान् जगदाधारो वासुदेवः परः पुमान् ।
लोकानध्वगणं नित्यं तत्वाद्यमपि देवताः ॥ १६३ ॥
प्रासादोपरि विन्यस्तास्समाक्रम्य च संस्थितः ।
तदग्रदेशे हेतीशं यजेद्देवं सुदर्शनम् ॥ १६४ ॥
प्रासादाङ्गेषु विप्रेन्द्राः ! क्रमात्त्रिगदितेषु च ।
देवताऽऽधारभूतेषु यद्यदङ्गं न कल्पितम् ॥ १६५ ॥
यत्र वा तत्तदधिकं तत्रापि च समाचरेत् ।
तत्तत्स्थाने तु बुध्या तु देवतान्यासमूहतः ॥ १६६ ॥
यद्वा ह्यनवक्लृप्ताङ्गे देवतेष्टिं तु वर्जयेत् ।
लोकास्सप्त तथाऽध्वानस्सत्वसङ्घश्च देवताः ॥ १६७ ॥

ध्यातव्यास्तु निराकारास्साधकैर्द्विजसत्तमाः ।
विमानेपि तथा सैद्धे विबुधैश्च प्रतिष्ठिते ॥१६८॥
किं तु तत्र विमानाङ्गमूर्तीनां लाञ्छनादिकम् ।
तासां स्थानानि विप्रेन्द्राः! कल्पितानि यथाविधि ॥१६९॥
विमानावयवांश्चापि सन्निरीक्ष्यैव यत्नतः ।
पूजयेत्सावधानेन चेतसा ध्यानपूर्वकम् ॥१७०॥
लाञ्छनाद्येषु मूर्तीनां प्रासादावयवेष्वपि ।
अनभिव्यक्तिरूपेण लक्षणाद्यपरीक्षणात् ॥१७१॥
स्वप्नादेश्चापि विप्रेन्द्र! देशिकेन्द्रोपदेशतः ।
यथावत्सम्परीक्षेत प्रयत्नेन द्विजोत्तमाः! ॥१७२॥
लक्षणादिषु हीनेषु विपर्यस्तेष्वपि द्विजाः ।
न लक्षणादिकं कुर्यादन्यथा मुनिपुङ्गवाः ॥१७३॥
लक्षणं न परीक्षेत ह्यन्यथाकरणेच्छया ।
अन्यथाकरणार्थं तु लक्षणाद्ये परीक्षिते ॥१७४॥
क्षयत्यायुः कृते तस्मिन् लक्षणैर्नरकं व्रजेत् ।
तस्मात्सर्वप्रयत्नेन स्वयंव्यक्तादिकेऽपि च ॥ १७५ ॥
विमाने संस्थितानां तु मूर्तीनां लक्षणादिकम् ।
स्थानान्यपि च तासां वै विमानावयवानपि ॥१७६॥
यथास्थितं परीक्ष्यैव कृत्वा मूर्तिविनिर्णयम् ।
स्वेन स्वेन विशेषेण लाञ्छनाद्येन वै स्फुटम् ॥१७७॥
स्वेन स्वेन तु मन्त्रेण पूजनं च समाचरेत् ।
प्रासादेषु स्वयंव्यक्तं श्रेष्ठं सर्वेषु च द्विजाः ॥१७८॥
तद्रूपी भगवान् देवः स्वयमेवाऽवतिष्ठते ।
तत्र सन्निहितस्साक्षाद्भगवान् भक्तवत्सलः १७९॥

जाते जीर्णादिदोषे तु न त्यजन्ति कदाचन ।
स्वं स्वं प्रदेशमेतास्तु मन्त्राणां शक्तयः पराः ॥१८०॥
प्रासादान्तस्स्थिताश्चापि स्वयंयक्तपुरस्सराः ।
आकारास्तु विभोस्सम्यक् ज्ञेयाः पूर्वोक्तयोगतः ॥१८१॥
अस्त्रैर्मन्त्रैर्ध्वजैर्येषां व्यक्तिर्व्यक्ता जगत्त्रये ।
तेऽपि लाञ्छनवृन्दं तु धारयन्त्यङ्घ्रिगोचरे ॥१८२॥
ललाटे चांसपट्टे तु पृष्ठे पाणितलद्वये ।
तनूरुहचये मूर्ध्नि कर्मिणां प्रतिपत्तये ॥ १८३ ॥
तत्तल्लाञ्छनवृन्दं तु परीक्ष्यैवं विशेषतः ।
तत्तदाकारनियतैर्वाचकैस्सम्प्रपूजयेत् ॥ १८४ ॥
येषां लाञ्छनवृन्दं तु न व्यक्तं चरणादिषु ।
तानर्चयेद्विषट्कार्णपुरोगेण मुनिश्वराः ! ॥ १८५ ॥
व्यापकानां तु मन्त्राणामेकेनाऽभिमतेन तु ।
इति ज्ञात्वा यथावच्च यः पूजयति मन्त्रवित् ॥१८६॥
स पूजाफलमाप्नोति ह्यन्यथा विपरीतभाक् ।
एतान्युक्तानि सर्वाणि लोकादीनि क्रमेण तु ॥ १८७॥
समाराधनकालेषु देवस्याऽमिततेजसः ।
द्वास्थदेवार्चनं कृत्वा पूजयेत्तदनन्तरम् ॥ १८८ ॥
नमस्कारपदान्तेन स्वनाम्ना प्रणवादिना ।
अर्घ्यालभनमाल्यैश्च धूपेन द्विजसत्तमाः ॥ १८९ ॥
अग्रतो देवदेवस्य द्वारदेशस्य बाह्यतः ।
अन्तर्मण्डलदेशे तु गत्वा वा पूजयेत्क्रमात् ॥ १९० ॥
एवं प्रासादभेदे तु यस्मिन् साधकसत्तमैः ।
एककालं द्विकालं वा त्रिकालं वाऽर्चनं द्विजाः ॥१९१॥

---

(१) पुरोगाणां मुनीश्वर!— इति च पाठः ।

नित्यशः क्रियते तत्र सदा सन्निहितो विभुः ।
अत एव (१) द्विजश्रेष्ठास्तदर्चनपुरस्सरम् ॥१९२॥
कुर्यादाराधनं विष्णोस्साधकस्सिद्धिलालसः ।
य एवं कुरुते भक्त्या ह्यनन्यपरया सदा ॥ १९३ ॥
सोऽचिराल्लभते कामानिह लोके परत्र च ।
मोक्षार्थी कुरुते यस्तु स याति परमं पदम् ॥१९४॥

इति श्रीपाञ्चरात्रे ईश्वरसंहितायाम्
विमानदेवतार्चनविधिर्नाम
तृतीयोऽध्यायः ॥

## अथ चतुर्थोऽध्यायः ।

नारदः ।

प्रासादे संस्थितान् देवानेवमभ्यर्च्य वै द्विजाः ।
द्वारावरणदेवानां पूजनं च यथाक्रमम् ॥१॥
विष्वक्सेनाऽवसानं च कारयेन्मुनिपुङ्गवाः ।
यदङ्गभावमभ्येति द्वास्थाद्यं देवतागणम् ॥२॥
विष्वक्सेनाऽवसानं च नराणामल्पमेधसाम् ।
जन्तोरेकान्तिनस्तद्वै चित्तखेदकृदर्चनम् ॥३॥
विघ्नकृत्प्रकृतस्यापि शिष्याणां तदनर्चनम् ।
अतस्तदनुकम्पार्थं देवभृत्यधियाऽर्चनम् ॥४॥
भक्तिश्रद्धोज्झितं चैवं विहितं त्वेवमेव हि ।
ते तत्पाणिच्युतं प्रह्वा दत्तमप्यवहेलया ॥५॥

(१) द्विजश्रेष्ठ ! इत्यपि पाठः ।

गृह्णन्ति मनसा श्रेयः परं ध्यात्वा धिया हृदि ।
यतस्सर्वेऽच्युतमयास्तच्चित्ताऽर्पितमानसाः ॥६॥
एतावदर्चनात्तेषां गुरोरेकान्तिनस्तु वै ।
स्याद्विरोधनिरासस्तु यतो भृत्यास्तु ते हरेः ॥७॥
कृत्वैवं द्वारयागं तु ततः पुष्पञ्च सम्मुखम् ।
गृहीत्वाऽङ्गुष्ठपूर्वेण स्वाङ्गुलित्रितयेन तु ॥८॥
अभिमन्त्र्य तदस्त्रेण चक्रं तदुपरि स्मरेत् ।
निशिताऽरं ज्वलद्रूपं वर्षन्तमनलाऽशनिम् ॥९॥
क्षयकृद्विघ्नजालानां क्षिपेद्यागगृहान्तरे ।
दक्षिणां तर्जनीं विप्रः कुर्यादूर्ध्वमुखीं ततः ॥१०॥
शिखामन्त्रेण संयुक्तां विद्युद्विलसितप्रभाम् ।
स्मृत्वा (१) भ्रामयमाणां तां संविशेद्यागमन्दिरम् ॥११॥
स्वासनं च ततः प्रोक्ष्य अर्घ्यपाद्योदकेन च ।
उपविश्याऽऽसने यागमारभेत समाहितः ॥१२॥
समयेवात्र कुर्वीत सर्वभोगनिरीक्षणम् ।
न्यस्य भद्रासनं मूलात् प्रोक्षणाऽर्घ्यप्लुतेन तु ॥१३॥
पाणिनाऽप्यथ कूर्चेन तज्जलेन तु मार्जयेत् ।
तत्तावदस्त्रपुष्पेण कुर्याद्विघ्नगणोज्झितम् ॥१४॥
सर्वलोकमयं तत्र सर्वदेवसमाश्रयम् ।
सर्वाधारमयं ध्यायेदन्तर्लीनं तु चक्रराट् ॥१५॥
प्रणवेन स्वनाम्नाऽथ नमोऽन्तेनाऽर्चयेच्च तम् ।
अर्घ्यालभनधूपैस्तु माल्यैर्नानास्रगुद्भवैः ॥१६॥
योगपीठाऽर्चनं कुर्यादनुसन्धानपूर्वकम् ।
स्वनाम्ना प्रणवाद्येन नमोऽन्तेन यथाक्रमम् ॥ १७ ॥

---

(१) भ्रामयमाणस्ताम्— इति च पाठः ।

ततस्तु सर्वमन्त्राणां विन्यासं तत्र चेतसा ।
समाचरेद्यथायोगं पुष्पदानपुरस्सरम् ॥ १८ ॥
बिम्बेन सहितं पीठं योगपीठमुदाहृतम् ।
अनुसन्धानयोगे तु योगपीठं प्रकल्पयेत् ॥ १९ ॥
तन्मन्त्रासनमित्युक्तं मन्त्रन्यासं तु सर्वतः ।
कुर्यात्तत्स्थस्य देवस्य पीठस्याऽधो मुनीश्वराः ! ॥ २० ॥
आधारशक्तिं तस्योर्ध्वे कूर्मं कालाग्निसंज्ञकम् ।
अनन्तेशं स्मरेन्मध्ये सर्वाधारमयं प्रभुम् ॥ २१ ॥
आग्नेयादौ तु धर्माद्यमैशान्यन्तं चतुष्टयम् ।
प्रागादौ त्वप्यधर्माद्यमुत्तरान्तं न्यसेत्परम् ॥ २२ ॥
तदूर्ध्वे कमलं ध्यायेत्स्वनाम्नाऽथ तथोपरि ।
स्मरत्पत्राश्रितं सूर्यं शशाङ्कं केसराऽवनौ ॥२३॥
कर्णिकास्थं हुतभुजं ततो गन्धादिना यजेत् ।
सुस्थिरे सन्निरोधश्च मन्त्राणां विहितस्सदा ॥ २४ ॥
यत्र यत्राऽनुरूपं तु तत्र तन्न्यासमाचरेत् ।
चलबिम्बस्य पीठेऽपि ह्येवमेवाऽर्चयेत् क्रमात् ॥ २५ ॥
किं तु तात्कालिकं तत्र मन्त्राणां सन्निरोधनम् ।
आहूतोपविशेद्यत्र मन्त्रनाथो हि सम्मुखः ॥ २६ ॥
तत्प्रागपेक्षया कुर्याद्धर्मादीनां निवेशनम् ।
साम्मुख्यं भजते यस्मात्साधकं परमेश्वरः ॥ २७ ॥
तदासनं हि चिद्रूपं सिद्धमेतस्य वाहनात् ।
एवं चाऽस्याऽचले पीठे शयानस्य विभोस्त्वधः ॥ २८ ॥
वह्न्यन्तं क्रमशोऽभ्यर्च्य ततोऽनन्तं समर्चयेत् ।
यानारूढे त्वनन्तस्य स्थाने तार्क्ष्यं समर्चयेत् ॥ २९ ॥

लक्ष्म्यादीनां तु देवीनां पीठस्याऽधः फणीश्वरम् ।
तत्कोणेषु च धर्मादींस्तदूर्ध्वे व्यक्तपङ्कजम् ॥ ३० ॥
यामत्रयं ततस्तस्मिन् विन्यसेत्पूर्ववर्त्मना ।
गणेशाद्यर्चनं कुर्यादथ पीठसमीपतः ॥ ३१ ॥
आत्मनः प्राग्वशाद्वायुकोणादारभ्य पूजयेत् ।
विन्यस्य विष्टरान् दर्भान् कुसुमस्तवकानिव ॥ ३२ ॥
विष्वक्सेनं गणाधीशं गुरूंश्च तदनन्तरम् ।
गुरून् परमसंज्ञांश्च यजेत्सर्वगुरूंस्तथा ॥ ३३ ॥
आदिसिद्धिसमूहं तु भगवद्ध्यानतत्परम् ।
नित्याधिकारिणश्चाऽऽप्तान् भगवत्तत्त्ववेदिनः ॥३४॥
चत्वारो मनवश्चाऽन्ये ऋषयस्सप्त पूर्वकाः ।
अर्घ्यादिना यजेदेतान् तत्तन्नाम्ना यथाक्रमम् ॥ ३५ ॥
सर्वेषां क्रमशो ध्यानं शृणुध्वं मुनिपुङ्गवाः ! ।
अनन्तशशिसङ्काशमनन्तमथ संस्मरेत् ॥ ३६ ॥
सहस्रफणमालाऽऽढ्यं सहस्रभुजभूषितम् ।
स्वपाणिसम्पुटेनैव शोभयन् स्वाङ्गभूतलम् ॥ ३७ ॥
सिताऽरविन्दशङ्खाक्षसूत्रचक्रकरान्वितम् ।
पतनाशङ्किवृद्धैर्वै वित्रस्तमनसस्तु च ॥ ३८ ॥
मा भैरित्यभयं यच्छन् आब्रह्मभवनस्य च ।
तुहिनाऽच्छोपलस्वच्छमुक्ताफलशशिप्रभः ॥ ३९ ॥
मृगेन्द्रस्कन्दवदनाः धर्मज्ञानादयश्चतुः ।
पद्मरागप्रवालाऽग्निसुदाडिमफलोज्ज्वलाः ॥ ४० ॥
अन्तर्दयोपयुक्ताश्च राजराजेश्वरोपमाः ।
द्विरष्टवर्षवद्भिद्धि चत्वारो धर्मपूर्वकाः ॥ ४१ ॥
सर्वे सद्वस्त्रसत्पुष्पसदलङ्करणाऽन्विताः ।
शङ्खपद्मधरास्सर्वे वराऽभयकरास्तु वै ॥ ४२ ॥

आग्नेयपद्मविन्यस्तस्साधकास्स्वात्मसिद्धये ।
समर्पितान्तःकरणाः परस्मिन् मन्त्रकारणे ॥ ४३ ॥
चिन्त्यमव्यक्तपद्मं च हिमहेमाग्निभास्वरम् ।
शान्तमष्टभुजं सौम्यं संस्थितं स्वस्तिकेन तु ॥ ४४ ॥
यामत्रयं तदूर्ध्वे तु संस्मरेत्किरणोज्ज्वलम् ।
संस्मरेद्गणनाथं तु वक्ष्यमाणप्रकारतः ॥ ४५ ॥
गणनाथं विना चाऽन्ये सुस्थिताश्शान्तविग्रहाः ।
गणित्राभयहस्ताश्च सर्वाऽनुग्रहकारकाः ॥ ४६ ॥
सर्वे पद्मासना वा ऽथ जटामण्डलभूषिताः ।
एवं ध्यात्वा समभ्यर्च्य मुद्रास्संस्पृश्य तत्क्रमात् ॥४७॥
अनुज्ञां प्रार्थयेत्तेभ्यो यथाऽनुक्रममेव च ।
गृहीत्वा शिरसा तां च तत आवाहयेत्प्रभुम् ॥४८॥
ततस्सर्वगतं देवं मन्त्रमूर्तित्वमागतम् ।
समाहूय (१) सुमन्त्रेण त्वागच्छाऽन्तपदेन तु ॥४९॥
यथा सर्वगतो वायुर्व्यजनेन महामते ।
वृत्तिमभ्येति भगवान् आहूतस्तद्वदेव हि ॥५०॥
भावदर्पणसङ्क्रान्तं कृत्वा हृत्कमलात्तु वै ।
सन्निरुध्य बहिर्वेद्यां मन्त्रोच्चाराऽवसानतः ॥५१॥
मन्त्रमागच्छमानं तु निर्गतं तु स्वकात्पदात् ।
कालं पाद्याऽर्घ्यदानान्तमुत्थितं भावयेत्सदा ॥५२॥
अथोपचर्यमाणं तं भोगैः कालानुकूलतः ।
नानालम्भनवस्त्रस्रग्दानालङ्करणे तथा ॥५३॥
अन्यत्र भोगपूजायां स्मरेत्पद्मासनादिना ।
पुनस्तमेवोपविष्टं सानुकम्पं च सम्मुखम् ॥५४॥

(१) घुमन्त्रेण क्वागच्छा— इति पाठान्तरम् ।

विम्बं विनाऽन्यत्राऽऽधारे भवत्येव महामते ।
विम्बाकृत्यात्मना विम्बे समागत्याऽवतिष्ठते॥५५॥
करोत्यमूर्तामखिलां भोगशक्तिं तु चाऽऽत्मसात् ।
स्थितमायतने वाऽथ साकारं परमेश्वरम् ॥५६॥
शङ्खचक्रधरं विष्णुं सुरसिद्धावतारितम् ।
ऋषिभिर्मनुजैर्वाऽथ भक्तियुक्तैः प्रतिष्ठितम् ॥५७॥
तन्मूर्तौ च स्वमन्त्रेण यजेदावाहनं विना ।
तथा प्रवोधयेत्तं तु कृत्वा हस्तौ सुगन्धिनौ ॥५८॥
गन्धार्घ्यपुष्पैस्सम्पूर्य मूलमन्त्रं समुच्चरन् ।
पीठोपरि हरेरग्रे मूर्ध्नि पुष्पाञ्जलिं क्षिपेत् ॥५९॥
स्वप्रत्यभिमुखं शान्तं सुप्रवुद्धं स्मरेच्च तम् ।
करन्यासं विना तत्र सृष्टिन्यासादितत्त्रयम् ॥६०॥
मूलमन्त्रादिताक्ष्यान्तमन्त्राणां न्यासमेव च ।
कृत्वाऽथ तत्तन्मुद्राश्च तत्तन्मन्त्रैः प्रदर्शयेत् ॥६१॥
दीपयेद्विम्बतोऽन्यत्र तस्मिन् पुष्पाञ्जलिं हरौ ।
'आगच्छ' पदमन्त्रेण मूलमन्त्रेण हृत्कजात् ॥६२॥
प्रत्यहं कर्मविम्बानां मूलविम्बहृदब्जगात् ।
किञ्चिदावाहनं कार्यं तत्र त्वेवं क्रमो द्विजाः ॥६३॥
मूलबेरे तु यत्तेजष्षड्भागैकं तु चोत्सवे ।
षट्त्रिंशदेकभागस्तु वलिकर्माऽर्चनादिषु ॥६४॥
एवं तेजोमयं देवं नाडीदक्षिणमार्गतः ।
तन्नासाग्रेण चाऽऽवाह्य पीठकुम्भादिषु क्षिपेत् ॥६५॥
तत्कदम्बप्रसूनाभे तस्मिन् मन्त्रात्मगोलके ।
स्थानभेदं विनाऽङ्गानि न्यस्याऽभ्यर्च्येह देहतः ॥६६॥
सकलीकृत्य देवेशं ध्यायेत्तद्व्यक्ततां गतम् ।
मूलमन्त्रादिताक्ष्यान्तमन्त्रांस्तत्र च विन्यसेत् ॥६७॥

एवमाहूय देवेशं दत्वाऽर्घ्यं सन्निधित्सया ।
भूयोऽप्यर्घ्यं प्रदायास्मै हृदा मुद्रापुरस्सरम् ॥६८॥
सान्निधाप्याऽर्घ्यदानेन मुद्रापूर्वञ्च वर्मणा ।
सन्निरोध्य तु मूलेन तन्मुद्रासहितेन तम् ॥६९॥
सम्मुखीकृत्य मूलादिमन्त्रांस्तत्र समुच्चरन् ।
प्रदर्शयंस्तथा मुद्रास्त्वष्टाङ्गेनाऽभिवादयेत् ॥७०॥
लययागोक्तविधिना पूजयेत्प्रथमं ततः ।
आमूलात्सर्वमन्त्राणां व्यक्तिस्थानां समर्चनम् ॥७१॥
अर्घ्यपुष्पादिना कुर्यात् स्वेन स्वेन स्वके पदे ।
ततो भगवतो विष्णोर्भासा भास्वरविग्रहान् ॥७२॥
हृदादीन् निस्सृतान् ध्यायेत् स्फुलिङ्गनिचयो यथा ।
भोगस्थाने यथायोगमेकैकं विन्यसेत्ततः ॥७३॥
सकलीकृत्य चाऽर्घ्याद्यैरर्चयेत्तत्र तु क्रमः ।
अष्टपत्राम्बुजे पीठे हृदयाद्यं चतुष्टयम् ॥७४॥
न्यसेत्कमलपत्राणामपूर्वादुत्तरान्तिमम् ।
अग्नीशरक्षोवायव्यदलेष्वस्त्रं यथाक्रमम् ॥७५॥
नेत्रं केसरजालस्थं विन्यसेत्तदनन्तरम् ।
पीठोपरि दलाद्बाह्ये देवस्येशानकोणके ॥७६॥
किरीटं श्रीवत्सकं च विन्यस्याऽऽग्नेयकोणके ।
कौस्तुभं वनमालां च न्यसेत्पद्मं च तत्र वै ॥७७॥
ईशकोणे गदां न्यस्य नैरृते चक्रमुज्ज्वलम् ।
वायव्ये पाञ्चजन्यं च विन्यसेच्च यथाक्रमम् ॥७८॥
देवस्य कर्णिकायां तु श्रियं पुष्टिं ततोऽपरे ।
अग्रतः पीठतो बाह्ये न्यसेच्चारात्पतत्त्रिपम् ॥७९॥
एवं नत्वा ततो ध्यायेन्मन्त्रव्यूहं यथास्थितम् ।
अभ्यन्तरे विमानस्य गर्भभूमौ तु मध्यतः ॥८०॥

सरसीरुहमास्थाय संस्थितं पुरुषोत्तमम् ।
प्रावृड्जलदसन्दोहविलसद्दिव्यविग्रहम् ॥८१॥
सर्वदेवमयं देवं सर्वेषां तेजसां निधिम् ।
सर्वलक्षणसम्पूर्णं सर्वज्ञादिगुणैर्युतम् ॥८२॥
वपुषा सुन्दरेणैव दिव्येनाऽऽविष्कृतेन च ।
मुञ्चन्तमनिशं देहादालोकं ज्ञानलक्षणम् ॥८३॥
प्रयत्नेन विनाऽज्ञाननाशकृद्ध्यायिनां महत् ।
घनकुञ्चितनीलालिदलिताञ्जनसन्निभैः ॥८४॥
कर्पूरधूसरैर्दिव्यैः पुष्पसंवलितान्तरैः ।
किरीटमकुटाक्रान्तैश्शोभितं स्वशिरोरुहैः ॥८५॥
बालचन्द्रप्रतीकाशफालोद्यत्तिलकोज्ज्वलम् ।
सुभ्रुवं सुनसं शान्तं सविलासस्मिताधरम् ॥८६॥
किञ्चिदारक्तगोक्षीरशुद्धनीलाब्जलोचनम् ।
शीतलैर्दृष्टिपातैस्तु जगदाप्यायकारिणम् ॥८७॥
विलसद्गण्डफलकं श्रवणोज्ज्वलकुण्डलम् ।
मुखसौन्दर्यनिष्यन्दचुबुकस्थलशोभितम् ॥८८॥
विकलङ्कशरच्चन्द्रविलसन्मुखमण्डलम् ।
कम्बुग्रीवं पीवरांसं दीर्घबाहुं महोरसम् ॥८९॥
चतुर्भुजमुदाराङ्गं विलसत्पाणिपङ्कजम् ।
पीतकौशेयवसनं निम्ननाभिं तनूदरम् ॥९०॥
चारूरुयुगलं चारुजङ्घाद्वितयमुज्ज्वलैः ।
मणिनूपुरभूपाद्यैर्विलसत्पादपङ्कजम् ॥९१॥
दिव्यगन्धानुलिप्ताङ्गं दिव्याम्बरधरं तथा ।
दिव्यस्रग्वेष्टनोपेतं दिव्यालङ्कारमण्डितम् ॥९२॥
अनेकरत्नखचितकिरीटमकुटोज्ज्वलम् ।
कौस्तुभेनोरसिस्थेन श्रीवत्सेनाऽप्यलङ्कृतम् ॥९३॥

रत्नकाञ्चनसन्मुक्तायुक्तया वनमालया ।
सब्रह्मसूत्रया चैव शोभितं परमेश्वरम् ॥९४॥
मुख्यदक्षिणहस्तेन भीतानामभयप्रदम् ।
श्रोणीतटनिविष्टेन वामहस्तेन लीलया ॥ ९५ ॥
ध्रियमाणं गदां गुर्वीं निषण्णां धरणीतले ।
पश्चाद्दक्षिणहस्तेन चक्रं कालानलद्युति ॥९६॥
प्रणवध्वनिगर्भं तु हिमाऽद्रिशतशोभितम् ।
शङ्खं वामकरेणापि दधानमतुलप्रभम् ॥ ९७ ॥
स्वदेहतेजस्सम्भूतज्वालामण्डलमध्यगम् ।
करुणापूर्णहृदयं जगदुद्धरणोद्यतम् ॥ ९८ ॥
अभिन्नपूर्णषाड्गुण्यविभवेनोपबृंहितम् ।
योगिध्येयमजं नित्यं जगज्जन्मादिकारणम् ॥ ९९ ॥
साक्षाल्लक्ष्मीपतिं देवं ध्यायेन्नारायणं प्रभुम् ।
एवं शयानमासीनं यानारूढमथापि वा ॥ १०० ॥
परं व्यूहं वैभवं वा द्विभुजं वा चतुर्भुजम् ।
अष्टबाह्वादिकं वाऽपि नानाभूषणसंयुतम् ॥ १०१ ॥
नानाऽस्त्रगणसंयुक्तं रूपं भगवतस्तथा ।
लक्ष्म्यादिशक्तिजालं च ध्यायेद्भक्तिसमन्वितः ॥ १०२ ॥
एवमेव हि हृन्मन्त्रं ध्यायेत् कुमुदपाण्डरम् ।
पद्मरागाचलाकारमारक्तं च शिरः स्मरेत् ॥ १०३ ॥
अञ्जनाद्रिप्रतीकाशं शिखामन्त्रं तथाकृतिम् ।
परितस्सूर्यसन्तप्तं यथा कनकपर्वतम् ॥ १०४ ॥
तथा कवचमन्त्रं च ध्यानकाले विचिन्त्य च ।
वृतं ज्वालासहस्रैस्तु अयस्कान्तसमद्युति ॥ १०५ ॥
सर्वास्त्रशक्तिसम्पूर्णमस्त्रमन्त्रं प्रकीर्तितम् ।
निर्धूमाऽङ्गारसदृशं भावयेन्नेत्रमन्त्रराट् ॥ १०६ ॥

ध्येयास्स्वरुचिसंयुक्ता द्विभुजाः पुरुषोत्तमाः ।
वीक्षमाणान् विभोर्वक्त्रं ध्यायेदेतान् मुनीश्वराः ! ॥१०७॥
स्थितानामादिमूर्तीनां स्थितान् ध्यायेत्सदैव हि ।
आसीनानामथाऽऽसीनान् वाहनस्थे सवाहनान् ॥१०८॥
शयितानामथाऽऽसीनान् उत्थितान्वा स्मरेद्धिया ।
अथ ध्यानं भूषणाऽस्त्रशक्तीनामुच्यते क्रमात् ॥१०९॥
किरीटस्सौम्यवदनः काञ्चनाभो महातनुः ।
भाभिराकृतियुक्ताभिर्नानारूपाभिरावृतः ॥११०॥
स्थितो वैद्याधरीयेन स्थानगेनाऽन्तरिक्षगः ।
स्फटिकाद्रिप्रतीकाशं श्रीवत्समथ भावयेत् ॥१११॥
बद्धपद्मासनासीनं हस्तन्यस्तं स्वपार्श्वयोः ।
वहन्तं कूर्ममुद्रां च मुख्यहस्तद्वयेन च ॥११२॥
पद्मरागाऽचलाकारं कौस्तुभं रत्ननायकम् ।
दिशो दश द्योतयन्तं संलग्नाङ्घ्रिस्थितं स्मरेत् ॥११३॥
वहन्तं वक्षसो मध्ये स्वहस्तकृतसम्पुटम् ।
सन्धारयन्तमपरं तथा वै शिरसोपरि ॥११४॥
ध्येया भगवती माला चित्ररूपा मनोहरा ।
सर्वगन्धान्विता सौम्या ईषद्विहसिता नवा ॥११५॥
कुन्दावदातं कमलं सौम्यमीषत्स्मिताननम् ।
रवं रवन्तं मधुरं श्रोत्रेन्द्रियसुखावहम् ॥११६॥
गदां हेमाद्रिसङ्काशां तन्वीं कुवलयेक्षणाम् ।
द्विरष्टवर्षवत्कान्तां कुमारीं नवयौवनाम् ॥११७॥
स्वोत्थेन रश्मिजालेन भासयन्तीं नभस्स्थलम् ।
स्वरश्मिमण्डलान्तस्स्थं वल्गन्तं हेतिपं स्मरेत्॥११८॥
विभोराज्ञां प्रतीक्षन्तं ह्रस्वाङ्गं रक्तलोचनम् ।
तुहिनाऽचलसङ्काशं शङ्खं(१) कमललाञ्छनम्॥११९॥

(१) कमललोचनम्— इति क्वचित् ।

सदागमादिसामान्तमुद्गिरन्तं स्वकैर्मुखैः ।
ध्येयाः स्वरुचिसंयुक्ता द्विभुजाः पुरुषोपमाः ॥१२०॥
साम्राः किरीटपूर्वा ये गदामालाङ्कनाकृतीः ।
एतेऽस्त्रनायकास्सर्वे विभोराज्ञाप्रतीक्षकाः ॥१२१॥
प्रोत्थिता विचलन्तश्च सुसमैः स्थानकैः स्थिताः ।
श्रोणीतटार्पितकराश्चामरव्यजनोद्यताः ॥१२२॥
सपद्मं तु किरीटाद्यं वर्जयित्वा चतुष्टयम् ।
तर्जयन्तं च दुष्टौघमन्येषां दक्षिणं करम् ॥१२३॥
स्मरेद्वै ध्यानकाले च सर्वेषामथ मस्तके ।
ध्येयं स्वकं स्वकं चिह्नं सुप्रबुद्धं निराकृति ॥१२४॥
नलिनीतालहस्ता च लक्ष्मी रक्ताम्बुजप्रभा ।
पुष्टा कनकगौरा चाऽमृतकुम्भधरा स्मृता ॥ १२५ ॥
भोक्तृशक्तिः स्मृता लक्ष्मीः पुष्टिर्वै कर्तृसंज्ञिता ।
भोगार्थमवतीर्णस्य लोकानुग्रहकाम्यया ॥ १२६ ॥
उदितं सह तेनैव शक्तिद्वितयमव्ययम् ।
रक्ततुण्डं महाप्राणं भीमभ्रुकुटिलोचनम् ॥ १२७ ॥
दीव्यचामीकराकारं पद्ममण्डलमण्डितम् ।
संस्मरेत् गरुडं विप्राः ! गृध्रवक्त्रं पृथूदरम् ॥ १२८ ॥
यथोक्तमूर्तियुक्ताश्च तथा ध्यायेद्यथाक्रमम् ।
किरीटो हुतभुग्वेद्यः कौस्तुभस्तु प्रभाकरः ॥ ॥१२९॥
स्वयं शशाङ्कः श्रीवत्सो मालाप्यप्णमाधवादयः ।
अपां पतिर्वै कमलं गदा देवी सरस्वती ॥ १३० ॥
कालश्चक्राधिपो ज्ञेयः खं शङ्खः कथितो द्विजाः ! ।
प्राणं पतत्रिराड्विद्धि एवं तत्त्वेषु संस्थितान् ॥ १३१॥
अधिष्ठातॄन् क्रमाच्चैतानर्चयेदर्घ्यपुष्पकैः ।
यजेत्तदनु देवेशं भोगैरर्घ्यादिभिः क्रमात् ॥ १३२ ॥

विनिवेद्याऽऽसनवरं समाहूतस्य वै विभोः ।
पादपीठं तु सामान्यं मृद्वास्तरणभूषितम् ॥ १३३ ॥
घण्टाशब्दसमोपेतं दत्वाऽर्घ्यं मन्त्रमूर्धनि ।
पाद्यप्रतिग्रहं हैमं विभोर्दद्यात्सुरत्नकम् ॥ १३४ ॥
पाद्यं पादोदकाकर्षं शाटकं चाऽनुलेपनम् ।
सप्रतिग्रहमाचामं साऽनुलेपं च मालिकाम् ॥ १३५ ॥
घृतादिकैर्महादीपैरच्छिन्नैरर्चयेद्धरिम् ।
सुगन्धैर्मधुरैर्धूपैः प्रभूतैरर्चयेद्विभुम् ॥ १३६ ॥
अर्हणं मधुपर्कं च तर्पणं तदनन्तरम् ।
निष्पुंसनं सपात्रं च आचामं गन्धमेव च ॥ १३७ ॥
अथ चूर्णितकर्पूरं घृष्टं श्रीगन्धभादितम् ।
सपूगफलमुत्कृष्टं ताम्बूलं विनिवेद्य च ॥ १३८ ॥
सपुत्रदारमात्मानमष्टाङ्गपतनेन च ।
चेतसा भक्तियुक्तेन निवेद्य तदनन्तरम् ॥ १३९ ॥
भगवानथ विज्ञाप्यः कृत्वा तत्पादगौ करौ ।
स्फुटीकृतं मया देव त्विदं स्नानवरं त्वयि ॥ १४० ॥
सपादपीठमपरं शुभं स्नानासनं महत् ।
आसादयाऽऽशु स्नानार्थं मदनुग्रहकाम्यया ॥ १४१ ॥
विज्ञाप्यैवं मज्जनार्थं कृत्वा मार्गत्रयं ततः ।
स्नानासनं निवेद्याऽथ देवस्य द्वितयं तु वै ॥ १४२ ॥
स्नानार्थमवतीर्णस्य पादपीठमनन्तरम् ।
भक्तिनम्रेण शिरसा दद्यादर्घ्यं तु मूर्धनि ॥ १४३ ॥
विनिवेद्य ततो हैमं सुरत्नं च प्रतिग्रहम् ।
दद्याद्वै पाद्यकलशात् पाद्यं पादाम्बुजद्वये ॥ १४४ ॥
शुभे च पादुके चाथ तदन्ते स्नानशाटकम् ।
सुगन्धशालिसम्पूर्णं मात्रार्थं पात्रमुत्तमम् ॥ १४५ ॥

दर्पणं पूर्णचन्द्राभं गन्धतोयमनन्तरम् ।
पाणीनां क्षालनार्थं तु पादपीठं ततश्शुभम् ॥१४६॥
दन्तकाष्ठं च तदनु मुखशुद्धिप्रतिग्रहम् ।
जिह्वानिर्लेखनं चैव मुखप्रक्षालनं तु वै ॥ १४७ ॥
पुनराचमनं चैव अभ्यङ्गार्थमनन्तरम् ।
तैलं बहुसुगन्धं च चूर्णं गोधूमशालिजम् ॥१४८॥
रजनीचूर्णसम्मिश्रमीपत्पञ्चकभावितम् ।
देयमुद्वर्तनार्थं तु चमर्पीं तदनन्तरम् ॥१४९॥
स्नानार्थं स्वपसंयुक्तं तोयमुष्णमनन्तरम् ।
चन्दनं मुखलेपार्थं घृष्टं कर्पूरभावितम् ॥१५०॥
पञ्चविंशतिभिः कुम्भैस्ततस्संस्नापयेद्विभुम् ।
गव्यं प्रभूतं स्नानार्थं क्षीरं दधि घृतं मधु ॥१५१॥
ऐक्षवं तु रसं ह्यमभावे शर्करोदकम् ।
धात्रीफलोदकं चैव लोध्रतोय मनन्तरम् ॥१५२॥
रक्तचन्दनतोयं च रजनीनीरमुत्तमम् ।
ग्रन्थिपल्लववार्येव ततस्तु तगरोदकम् ॥१५३॥
प्रियङ्गुवारि तदनु मांसीजलमतःपरम् ।
सिद्धार्थकोदकं चाऽथ सर्वौपधिजलं ततः ॥१५४॥
पत्रपुष्पोदके चैव फलबीजोदके त्वथ ।
गन्धोदकं च तदनु हेमरत्नजलं ततः ॥१५५॥
पुण्यतीर्थसरित्तोये केवलं तदनन्तरम् ।
स्नानार्थं कल्पितेनैव उदकेन विमिश्रितम् ॥१५६॥
योक्तव्यं क्रमशो ह्येतदर्घ्यपुष्पसमन्वितम् ।
अन्तरान्तरयोगेन स्नानानां च महामते! ॥१५७॥
क्षाळनं चार्घ्यकलशादर्घ्यदानसमन्वितम् ।
यद्वा द्विपट्ककलशैर्नवभिर्वाऽभिषेचयेत् ॥१५८॥

ततः स्नानीयशेषेण हेमादिद्रव्यनिर्मितम् ।
सम्पूर्णमम्भसा कुम्भं हरिद्राशालितण्डुलैः ॥१५९॥
सुपिष्टैरुपरिष्टाच्च लिप्तं युक्तं स्रगादिना ।
पाणौ कृत्वा तमेकस्मिन् अपरस्मिंस्तु मल्लकम् ॥१६०॥
धूमायमानं सिद्धार्थैर्भ्राम्य मूर्ध्नि बहिःक्षिपेत् ।
सुधौतमहतं चाथ शाटकं विनिवेद्य च॥१६१॥
कचोदकापकर्षार्थमपरं देहवारिधृत् ।
अधरोत्तरवस्त्रे द्वे गन्धधूपादिवासिते ॥१६२॥
स्कन्धप्लोतं निवेद्याथ सुसूक्ष्ममहतं सितम् ।
शिरश्श्यानं ततः कुर्याच्छशिधूपसमन्वितम् ॥१६३॥
कर्पूरचूर्णसम्मिश्रं कुर्याद्देवस्य मूर्धजम् ।
एवं हि चित्रपूर्वाणामन्येषां कमलासन ! ॥१६४॥
सद्रत्नब्रह्मपाषाणवर्जितानां समाचरेत् ।
स्नानार्थं कर्मबिम्बे तु तत्समीपेऽथ दर्पणे ॥१६५॥
स्नानविज्ञापनं कृत्वा कर्मार्चां तस्य सन्निधौ ।
स्नानासने समारोप्य तस्यां सर्वं समाचरेत् ॥१६६॥
तदभावे दर्पणे तु स्नानभोगान् समर्पयेत् ।
चित्रस्थ एवं दद्याच्च भोगानन्यान् यथाक्रमम् ॥१६७॥
तदभावे च तान् सर्वान् पाणिनाऽऽदाय चेतसा ।
निवेदयेन्मण्डलादिष्वेवं भोगनिवेदनम् ॥ १६८ ॥
प्रोक्षणं यावता कुर्यादर्घ्याद्यैरवशिष्टकैः ।
प्रणालभागादपरं स्नानं भद्रासनात्तु वै ॥ १६९ ॥
भूरिनीरघटे श्शुद्धं कृत्वा तत्राऽवतार्य च ।
सपीठं भगवद्बिम्बं तद्विना वाऽर्चितं यदि ॥१७०॥
खप्लुतं भावयेद्देवं निश्शेषं क्षालयेत्ततः ।
भूयो गन्धोदकेनैव पूर्यं कुम्भचतुष्टयम् ॥१७१॥

स्नानकुम्भं विनाऽन्येषां प्राग्वत्कार्या हि कल्पना ।
हृन्मन्त्रेण चतुर्णां तु कुर्याद्वै दिव्ययोजनम् ॥ १७२ ॥
साम्रेण मूलमन्त्रेण सर्वं तच्चाऽभिमन्त्र्य तु ।
मार्गत्रयं क्रमात्कृत्वा विनिवेद्याऽऽसनं ततः ॥ १७३ ॥
तृतीयं रत्नखचितं तत्रस्थं परमेश्वरम् ।
विभाव्याऽलङ्कृतं भक्त्या भोगैस्स्रक्चन्दनादिभिः ॥१७४॥
समभ्यर्च्याऽर्घ्यपाद्येन पादुकाभ्यामनन्तरम् ।
देयमाचमनं भूयः पादपीठं तथैव च ॥१७५॥
समालभ्य सुगन्धेन भक्तितश्चन्दनादिना ।
संवीज्य चन्दनेनैव मायूरेण ततेन च ॥१७६॥
केशप्रसादकृत्कूर्चं पुष्पताम्बूलकर्तनीम् ।
निवेद्य देवदेवाय दुकूलवसने सिते ॥१७७॥
उपवीतं सोत्तरीयं मकुटाद्यमनन्तरम् ।
पादनूपुरपर्यन्तमलङ्करणमुत्तमम् ॥१७८॥
विचित्रं हि शिरोमाल्यं वेष्टनेन समन्वितम् ।
स्रग्दामसूत्रसम्बद्धमाकर्णाच्चरणावधि ॥१७९॥
रुचिरं कङ्कणं चाऽथ दद्यात्प्रतिसरं ततः ।
धातुभिः कुङ्कुमाद्यैर्वा विचित्रं सितसूत्रजम् ॥ १८०॥
पूरितं मृदुतूलेन ग्रथितं चाऽन्तराऽन्तरा ।
अञ्जनं सशलाकं च ताम्बूलं गन्धभावितम् ॥१८१॥
ललाटतिलकं हैमं मुखवासं सरोचनम् ।
कर्णाऽवतंसके पुष्पे मण्डनं दर्पणं महत् ॥१८२॥
प्रकारं चित्रकुसुमैर्दीप्सरलप्रभोज्ज्वलैः ।
प्रभूतैस्तु महाज्वालैस्तिलतैलाऽऽज्यपूरितैः ॥ १८३ ॥
अभुक्ताऽहतसुश्वेतरचितैर्वर्तिवेष्टितैः ।
ग्रन्थीकृतत्वगेलाऽऽद्यैः पूजयेत्तदनन्तरम् ॥१८४॥

कर्पूरचूर्णसम्मिश्रं सुगन्धि मधुरं बहु ।
घृष्टधूपसमायुक्तं गुग्गुलं धूपयेच्छुभम् ॥१८५॥
सहघण्टारवै रम्यैश्चाल्यमानेन बाहुना ।
उपानहौ सितं छत्रं शिविकां च रथादि यत् ॥१८६॥
वाहनं गजपर्यन्तं सपताकं खगध्वजम् ।
सिताऽसितौ चामरौ तु मात्रावित्तमनन्तरम् ॥१८७॥
जानुनी भूगतौ कृत्वा शिरसाऽवनतेन तु ।
आदायोत्तानपाणिभ्यां विनिवेद्य जगत्प्रभोः ॥१८८॥
औपचारिकभोगानामेतेषां पूरणाय च ।
भेरीमृदङ्गशङ्खाद्यैर्जयशब्दसमन्वितैः ॥१८९॥
गीतकैर्विविधैर्नृत्तैस्तन्त्रीवाद्यसमन्वितैः ।
वंशैश्शृङ्गैस्तथा हास्यैरन्यैश्श्राव्यैश्च पूजयेत् ॥१९०॥
स्तोत्रमन्त्रैर्नमस्कारैः प्रणामैश्च प्रदक्षिणैः ।
सङ्कटे सति भूभागे भगवत्यग्रतःस्थिते ॥१९१॥
धिया नमस्कृतिं कुर्याद्बध्वा तु करसम्पुटम् ।
हृद्देशे मूर्धकम्यैस्तु स्मरन् सर्वेश्वरं हरिम् ॥१९२॥
अन्तर्गर्भगृहे विष्णोर्गर्भद्वाराऽर्धमण्डपे ।
प्रणिपातगणं कुर्यात्प्रदक्षिणगणं विना ॥१९३॥
सङ्कटे सति तद्देशे बाह्ये तु मुखमण्टपे ।
स्थापयेच्चलबिम्बानि तत्राऽपि सति सङ्कटे ॥१९४॥
प्रथमाऽऽवरणे वाऽपि द्वितीयावरणेऽपि वा ।
स्थानं सुविस्तृतं कृत्वा प्रासादाग्रं च वर्ज्यदिक् ॥१९५॥
दिक्त्रयेऽभिमते कुर्याद्विदिक्ष्वभिमतेषु च ।
खल्लूरिकाप्रदेशे वा सुदेशे सुपरीक्षिते ॥१९६॥
स्थापयेद्विधिना यात्राबिम्बं देवीसमन्वितम् ।
अन्यानि सर्वबिम्बानि न बहिस्स्थापयेत् क्वचित् ॥१९७॥

मूलबिम्बं समभ्यर्च्य पुरा नीराजनान्तिमम्।
पश्चाद्बहिस्स्थितान् बिम्बान् पूजयेत्तु यथाविधि ॥१९८॥

एवं प्रदक्षिणान्तं च देवमभ्यर्च्य वै ततः।
नीराजयेद्देवदेवं तद्विधानमिहोच्यते ॥१९९॥

नीराजनं तु त्रिविधं सात्त्विकादिविभेदतः।
स्नानान्ते भोगयज्ञान्ते द्वितयं सात्त्विकं भवेत् ॥२००॥

सायङ्काले प्रतिदिनं कुर्याद्राजससंज्ञितम्।
पूजायां दीपदानाग्रे नैवेद्यान्तेऽपि तामसम् ॥२०१॥

कुर्यात् प्रासाद एकस्मिन् तेषामेकं न तु त्रयम्।
स्वयंव्यक्ते तथाऽन्यैश्च विबुधैश्च प्रतिष्ठिते ॥२०२॥

प्रासादे मुनिमुख्यैश्च सात्त्विकाख्यं समाचरेत्।
ब्राह्मणैः क्षत्रियैर्वैश्यैः स्थापिते राजसं भवेत् ॥२०३॥

शूद्रैस्तु स्थापिते स्त्रीभिस्तामसाख्यं समाचरेत्।
सात्त्विकस्य विधानं तु शृणुध्वं मुनिपुङ्गवाः! ॥२०४॥

कर्तव्यं स्नानभोगान्ते यत्तदुक्तं पुरैव तु।
अलङ्कारासनान्ते यत्कर्तव्यं तदिहोच्यते ॥२०५॥

कृतं स्वर्णादिभिर्द्रव्यैः कुम्भमापूर्य वारिभिः।
अर्घ्यपात्रोद्धृतैर्यद्वा केवलैर्गालितैः पुनः ॥२०६॥

अन्तस्सिद्धार्थकान् क्षिप्त्वा कण्ठे कुर्यादलङ्कृतिम्।
अश्वत्थपल्लवैस्स्रग्भिश्चन्दनेनाऽक्षतैरपि ॥२०७॥

अन्यत्र रजनीपिष्टैर्लेपयेत्सर्वतो द्विजाः!।
तदास्ये मल्लकं पुष्पं सम्पूर्णं तु नियोजयेत् ॥२०८॥

संस्कृताऽग्निसमुद्भूतान् पुरा दीपान् प्रदीप्य तु।
विभवेच्छाऽनुरूपेण चतुर्विंशतिकान् द्विजाः! ॥२०९॥

पाकस्थानात्तु वै दीपादुच्छ्रिताच्चतुरङ्गुलैः ।
प्रदीपं मल्लके कृत्वा सकुम्भं विनिवेशयेत् ॥२१०॥
अग्रतो देवदेवस्य सदाधारोपरि स्थितम् ।
तमर्घ्यगन्धस्रग्धूपैर्हृन्मन्त्रेण तु पूजयेत् ॥२११॥
केवलं साऽर्घ्यपुष्पेण साधकस्तदनन्तरम् ।
दद्यादाचमनान्तेऽर्घ्यं मन्त्रेशस्याऽथ वा द्विजाः! ॥२१२॥
अर्घ्यालभनमाल्यानि धूपं चाऽप्यर्घ्यमेव च ।
दीपकुम्भं तु पाणिभ्यामुद्धृतं परिचारिणा ॥२१३॥
देवस्य दक्षिणं पादमारभ्येतरपश्चिमम् ।
भ्रामयेत्सर्वतोऽङ्गानि एकधा वा द्विधा त्रिधा ॥२१४॥
जपन् वै नेत्रमन्त्रं तु हृन्मन्त्रं वा यथारुचि ।
एवं कुम्भं परिभ्राम्य द्विजेन परिचारिणा ॥२१५॥
शुद्धया योषिता वाऽपि द्वाराद्बाह्ये विसर्जयेत् ।
ततस्तु देवदेवस्य दद्यादर्घ्यं तु मूर्धनि ॥२१६॥
पाकस्थानात्तदर्थं तु दीप आनीयते यदा ।
तदानीं तद्विधानं तु शृणुध्वं मुनिपुङ्गवाः! ॥२१७॥
दीक्षितास्सुविनीताश्च सुस्नाताः परिचारिकाः ।
वदनं नासिकारन्ध्रे स्थगयित्वाऽम्बरेण तु ॥२१८॥
सितोष्णीषधरास्सर्वे सितचन्दनभूषिताः ।
सौवर्णानि च पात्राणि विततानि यथारुचि ॥२१९॥
राजतान्यथ ताम्राणि आरकूटमयानि च ।
कांस्यानि वाऽपि सम्पाद्य यथावित्ताऽनुसारतः ॥२२०॥
एकत्रिपञ्चसप्ताऽपि न चैकादश वा तथा ।
द्विषट्षोडश वा यद्वा चतुर्विंशतिसङ्ख्यया ॥२२१॥
पाकाऽऽलयं समासाद्य तत्राऽग्नेस्संस्कृतात्पुरा ।
तेषां मध्येवर्तिदीपान् पात्राणां तु महामते! ॥२२२॥

चतुरङ्गुलिकोत्सेधान् सघृतान् दीपयेत्पुनः ।
उद्धृत्य तानि पात्राणि करैस्तु परिचारकाः ॥२२३॥
वहेयुः पङ्क्तिबन्धेन तदग्रे गणिकाजनाः ।
गच्छेयुर्भगवद्भक्ताः कुर्वन्त्यो नृत्तगीतके ॥२२४॥
तदग्रे शङ्खभेर्यादिसमुद्घोषणतत्पराः ।
तदग्रे वेत्रिणेऽस्पृश्यजनोत्सारणतत्पराः ॥२२५॥
गच्छेयुः परितस्तेषां दीपिकाधारिणो जनाः ।
एवं क्रमात्समासाद्य तिष्ठेयुर्देवसन्निधौ ॥२२६॥
अथाऽन्यो दीक्षितो विप्रः कुम्भमादाय पूर्ववत् ।
समल्लकं तदूर्ध्वे तु तेष्वेकस्मात्प्रदीप्य तु ॥२२७॥
पाकस्थानादाहृतेषु प्रदीपं विनिवेश्य च ।
सदाधारस्थितं कुर्यात्ततस्साधकसत्तमः ॥२२८॥
कुम्भं प्रागवत्समभ्यर्च्य देवेशं च ततः परम् ।
भ्रामयेत्पूर्ववत्कुम्भं तस्मिन् काले द्विजोत्तमाः ॥२२९॥
ऋगाद्यध्ययनं कुर्युर्द्विजाः प्रागादिदिक्स्थिताः ।
सन्निधौ देवदेवस्य नृत्यं तु गणिकास्तदा ॥२३०॥
मङ्गलानि च गीतानि सर्वे गायन्तु गायकाः ।
स्वरेणोच्चतरेणैव स्तुवन्तु स्तोत्रपाठकाः ॥२३१॥
भेरीमृदङ्गशङ्खादीन् घोषयेयुस्समन्ततः ।
एवं सर्वत्र वै कुर्यादृगाद्यध्ययनादिकम् ॥२३२॥
कुम्भमेवं परिभ्राम्य दत्वा तत्परिचारिणः ।
हस्तेऽथ दीपपात्राणि दर्शयेदितराणि च ॥२३३॥
दृष्ट्वा सम्यक्ततो दद्यादर्घ्यं देवस्य मूर्धनि ।
कुम्भपूर्वाणि पात्राणि वहन्तः परिचारकाः ॥२३४॥

प्रदक्षिणक्रमात्सार्धं पूर्ववद्गणिकादिभिः ।
क्षिपेयुर्द्वारबाह्ये वा बाह्यद्वारस्य बाह्यतः ॥२३५॥
अथ वा विनियुक्तानि तानि सङ्गृह्य योषितः ।
सुस्नाता धौतवसना द्विजातीभावितात्मनः ॥२३६॥
ललाटतिलकं दत्वा सर्वाऽलङ्कारभूषिताः ।
क्षिपेयुरुदितेनैव वर्त्मना द्विजसत्तमाः! ॥२३७॥
अथ वा विनियोगात्तु पूर्वं पाकाऽऽलयादपि ।
योषितो दीपपात्राणि गृहीत्वा प्रोक्तवर्त्मना ॥२३८॥
आनयेयुर्विभोरग्रे कर्तुरिच्छाऽनुरूपतः ।
एवं नीराजनं कुर्यादलङ्कारासनं ततः ॥२३९॥
अथ वा भ्रामयेत्कुम्भं दीपाऽष्टकसमन्वितम् ।
यद्वा तत्रापि वै कुम्भं साग्निमल्लकसंयुतम् ॥२४०॥
धूमायमानं सिद्धार्थैर्भ्रामयेद्दीपवर्जितम् ।
एवं नीराजनं प्रोक्तमेकमूर्तौर्द्विजोत्तमाः ॥२४१॥
अनेकमूर्तिपूजायां मुख्यमूर्त्यादितः क्रमात् ।
सर्वासामपि मूर्तीनां दत्वाऽर्घ्याद्यं पृथक् पृथक्॥२४२॥
एकैकेन तु कुम्भेन प्रत्येकमथ वा द्विजाः! ।
सर्वासामपि कुम्भेन प्राग्वन्नीराजनं चरेत् ॥२४३॥
एवं नीराजनं प्रोक्तं कृतं भगवतो विभोः ।
अनुतिष्ठन्ति साहाय्यं तस्मिन् कर्मणि ये जनाः ॥२४४॥
रजस्तमोविनिर्मुक्ता भवेयुस्ते न संशयः ।
एवं नीराजनं प्रोक्तं सात्त्विकं नाम नामतः ॥२४५॥

इति श्रीपाञ्चरात्रे ईश्वरसंहितायां नीराजनान्तविधिर्नाम
चतुर्थोऽध्यायः ।

## अथ पञ्चमोऽध्यायः ।

नारदः ।

ततो भोज्यासने देवो भोगैराभ्यवहारिकैः ।
पूज्यस्सपादपीठं वै दद्याद्भोज्यासनं विभोः ॥१॥
छन्नं दुकूलतूलोत्थमसूरकवरेण तु ।
आरोपयित्वा प्रागास्यं तलस्थे भोजनासने ॥२॥
अर्घ्यं पाद्याचमे दद्यात्प्रतिग्रहसमन्विते ।
तर्पणं सम्प्रतिष्ठाप्य वासितञ्चाऽर्घ्यवारिणा ॥३॥
अथर्वणजलं स्वच्छं सुगन्धं पात्रतः कृतम् ।
मधुपर्कं दधिमधुघृतयुक्तमनन्तरम् ॥४॥
समस्तमेवमेकाङ्गं दधि वाऽपि निवेदयेत् ।
शीतलं तर्पणंजलमथ चूर्णं पुरोदितम् ॥५॥
देयं निष्पुंसनार्थं तु पुनराचमनं विभोः ।
स्वलङ्कृतां सुरूपां च स्रग्युक्तां विनिवेद्य गाम् ॥६॥
ओषधीश्शालिपूर्णाश्च स्रक्फलाढ्यं वनस्पतिम् ।
मूर्तं निवेदयेत्पूर्वं ततस्संस्थाप्य तर्पणम् ॥७॥
प्रच्छादनाऽम्बरं चैव प्रदद्यादर्हणोदकम् ।
षड्रसप्रभवैर्दिव्यैर्नैवेद्यैः पावनैः फलैः ॥८॥
गुल(ड)खण्डाञ्चितैर्भक्ष्यैर्बहुभिर्घृतपाचितैः ।
गुल(ड)मुद्गपयोमिश्रैर्निशाऽऽज्यतिलमिश्रितैः ॥९॥
दधिमिश्रैस्सर्पिभिश्रैर्मधुस्वादुयुतैः फलैः ।
क्रमादन्नैरष्टविधैरपूपान् विनिवेदयेत् ॥१०॥
सरसाभी रसालाभिः पयसा सुश्रितेन च ।
पवित्रैश्शीतलैस्स्वादुरसगन्धैश्च पानकैः ॥११॥

भक्ष्यैर्भोज्यैस्तथा लेह्यैः पेयैरन्यैरनेकशः ।
श्रद्धापूतेन मनसा यजेत्तमजमव्ययम् ॥१२॥
एकैकस्मिंस्तु भोगेऽपि प्रोक्षयेदर्घ्यवारिणा ।
छोटिकां मन्त्रसंयुक्तां कृत्वा पाणिद्वयेन तु ॥१३॥
अथ पाणिद्वयेनैव अग्नीषोमात्मकेन तु ।
योग्यतापदवीं नीत्वा मुद्रां कामदुघां ततः ॥१४॥
बध्वा तदमृतीकुर्याद्भोगजालं यथास्थितम् ।
दत्वाऽर्घ्यं पुष्पमुपरि संस्पृशेद्विष्णुपाणिना ॥१५॥
सव्येन पाणिनाऽऽस्पृश्य प्रकोष्ठं दक्षिणस्य तु ।
तेन दक्षिणहस्तेन अग्रसङ्कुञ्चितेन तु ॥१६॥
निवेदयेत्ततो विप्राश्शिरसाऽवनतेन तत् ।
असन्निधेश्च यो भोगो ह्यङ्गभावमनुव्रजेत् ॥१७॥
तत्तत् ध्यात्वा तु मनसा भक्त्या विष्णोर्निवेदयेत् ।
पावनैः पानकैस्स्वच्छैश्शीतलैर्मधुरादिकैः ॥१८॥
त्वगेलाद्यन्वितैर्मृष्टधूपकर्पूरवासितैः ।
नालिकेरोदकोपेतैस्तर्पणीयमनन्तरम् ॥१९॥
मसूरमाषचूर्णेन रजनीशालिजेन च ।
समुद्धर्ति च संक्षाल्य शीतलैर्बहुवारिभिः ॥२०॥
नैवेद्याऽऽचमनार्थं तु गन्धोदकमनुत्तमम् ।
वाससा निर्मलं कृत्वा चन्दनेन सितेन च ॥२१॥
समालभ्य सुघृष्टेन कर्पूरसहितेन च ।
तिलान्यथ सुरत्नानि सौवर्णे वाऽथ राजते ॥२२॥
पात्रे कृत्वाऽथ मात्रार्थं देवाय विनिवेदयेत् ।
लवङ्गतक्कोलैलात्वक्कर्पूरपरिभावितम् ॥२३॥
जातीपूगफलोपेतं समुगन्धच्छदं बहु ॥
कर्पूरचूर्णसम्मिश्रं मुक्ताचूर्णविमिश्रितम् ॥२४॥

मातलुङ्गफलोपेतं नालिकेरफलाऽन्वितम् ।
प्रदद्यात्प्रणतश्चाऽन्ते ताम्बूलं जगतः पतेः ॥२५॥
प्रक्षाल्य गन्धतोयेन अर्घ्यपात्रोद्धृतेन वै ।
पाणियुग्मं यथा वै स्यात् स्वच्छमत्यन्तनिर्मलम् ॥२६॥
नैवेद्यधूपपात्राद्यैः पात्रैश्चाऽनिर्मलीकृतम् ।
कृत्वा सद्गन्धदिग्धौ तावर्घ्येणाऽर्च्य परस्परम् ॥२७॥
मुद्रां मूलादिमन्त्राणां दर्शयित्वा यथाक्रमम् ।
भूयोऽर्घ्यगन्धपुष्पेण धूपाऽन्तेन समर्च्य च ॥२८॥
जपयज्ञविधानेन देवं सन्तर्पयेत्ततः ।
स्फाटिकेनाऽक्षसूत्रेण स्वकैर्वा करपर्वभिः ॥२९॥
पात्रं संस्थापयेत्पश्चादर्घ्यपात्राच्च वारिणा ।
विलिप्य चन्दनाद्यैस्तु स्थापयेद्भाजने शुभे ॥३०॥
सम्पूज्य पुष्पधूपाद्यैर्मन्त्रं तत्र च विन्यसेत् ।
साधारमासनं चैव शक्तिपूर्वैस्समावृतम् ॥३१॥
चतुर्भुजं तु विरजो नारायणमिवाऽपरम् ।
वरदाऽभयहस्तंच बद्धाञ्जलिधरं स्मरेत् ॥३२॥
ब्रह्मस्थानस्थितं तं च सूत्रं ध्यायेच्छिखोपमम् ।
सन्निधौ भव देवेश ! सन्निरुद्धो भवाऽच्युत ! ॥३३॥
सूत्राऽऽख्यमणिजालेऽस्मिन् यावच्चन्द्रार्कतारकाः ।
एवं मुने ! प्रतिष्ठाप्य सूत्रमन्त्रेऽक्षसंज्ञिके ॥३४॥
प्रतिष्ठितस्य वै पश्चान्मुद्रां स्वां च प्रदर्शयेत् ।
यथाशक्ति जपं कुर्याच्छतमष्टाऽधिकं तु वा ॥३५॥
तन्निवेद्य विभोः पश्चाद्वाक्कर्म मनसाऽन्वितम् ।
पुण्डरीकाक्ष ! विश्वात्मन् ! मन्त्रमूर्ते ! जनार्दन ! ॥३६॥

गृहाणाऽस्मिन् जपं नाथ ! मम दीनस्य शाश्वतम् ।
इत्युक्त्वा सोदकं पश्चात्पुष्पं दक्षिणपाणिगम् ॥३७॥
अग्रतो निक्षिपेद्विष्णोर्मूलमन्त्रेण नारद ! ।
भावयेच्च ततस्सम्यक् स्फुरन्तीं तारकावलिम् ॥३८॥

प्रविष्टां भगवद्वक्त्रे वक्त्रात्तद्धृद्गतां पुनः ।
हृदयात् द्विजशार्दूलं संहाराऽऽख्यक्रमेण तु ॥३९॥
पूर्ववद्ब्रह्मरन्ध्रेण परेण सह योजयेत् ।
एकैकं हृदयादीनां सर्वेषां विहितं त्वथ ॥४०॥

क्रियाऽङ्गत्वान्न दोषोऽस्ति अन्यथा तज्जपं विना ।
धूपं दत्वा प्रणम्याऽथ स्तुत्वा मन्त्रेश्वरं ततः ॥४१॥
अज्ञानात् ज्ञानतो वाऽपि जातमूनाधिकं च यत् ।
दासस्य मम दीनस्य क्षन्तव्यं लोकलोचन ! ॥४२॥

इति विज्ञाप्य देवेशं भक्तितस्साधकोत्तमः ।
सम्पूज्य गन्धधूपैश्च ततस्तु भगवन्मयात् ॥४३॥

यथाक्रमं समभ्यर्च्य नैवेद्यं प्रतिपाद्य च ।
तेषां मन्त्राऽवसानं च अर्हणाद्यं निवेदयेत् ॥४४॥
यद्वेभ्यो देवयज्ञान्ते तन्मात्रान्तं प्रदाय तु ।
अस्मिन् कालेऽर्हणाद्यं तु ताम्बूलान्तं समर्पयेत् ॥४५॥
शय्यासनं ततो दद्यादग्नौ सन्तर्पयेत्ततः ।
न्यस्त्वाऽऽत्मासने यायादनलाऽऽलयमर्घ्यभृत् ॥४६॥

पूर्ववत् द्वारयागं तु कृत्वा सम्प्रविशेत्ततः ।
तत्र पूर्वोक्तविधिना उपस्पृश्य समाहितः ॥४७॥
प्रमाणपरिशुद्धं च विभवाऽनुगुणं शुभम् ।
चतुरावरणं कुण्डं कृत्वा खोष्ठविभूषितम् ॥४८॥

त्र्यंशेनाऽर्धेन वांशेन खाताद्व्यासो विधीयते ।
चक्रशङ्खाऽम्बुजाऽऽकारं वृत्तं वा चतुरश्रकम् ॥४९॥
गदाद्यैश्चक्रपर्यन्तैर्लाञ्छनैर्लांछितं तु वा ।
अग्निकार्योपयोग्यानि यानि यानि महामते ! ॥५०॥
स्रुक्स्रुवादीनि भाण्डानि त्वङ्कितव्यानि तैरपि ।
यद्वा किरीटश्रीवत्समालाकौस्तुभलक्षणम् ॥५१॥
शङ्खचक्रगदापद्मसमस्तव्यस्तलांछितम् ।
भृङ्गारकरकाऽऽकारं कुण्डं कुर्याद्विचक्षणः ॥५२॥
कुण्डं चतुर्मेखलं वा त्रिमेखलमथाऽपि वा ।
द्विमेखलं तथा चैकमेखलं वा प्रकल्पयेत् ॥५३॥
स्थिरं समेखलं कुर्याज्जङ्गमं तु विमेखलम् ।
देशकालवशाच्चैव कुण्डं न घटते यदि ॥५४॥
तं विना हवनच्छेदो न कार्यस्सिद्धिमिच्छता ।
शोधिते ह्युपलिप्ते च स्थलेऽचलमृदाऽन्विते ॥५५॥
होमस्तु विहितस्सम्यक् मन्त्रस्याऽमन्त्रितस्य च ।
पिण्डिका चतुरश्रा तु बहिस्सर्वत्र शस्यते ॥५६॥
मध्ये पद्मं प्रकुर्वीत श्रीपदं प्रद्ममध्यगम् ।
एवं कृते शुचौ कुण्डे अग्निकार्यं समाचरेत् ॥५७॥
चुल्ल्यां वा मल्लके वाऽपि होमं कुर्याद्यथाविधि ।
एतेष्वेकतमं कुण्डं सम्भवाऽनुगुणं शुभम् ॥५८॥
सुधाद्यैर्वर्णकैश्शुद्धैर्भूषयित्वोपलिप्य च ।
सुगन्धैश्चन्दनाद्यैश्च पञ्चगव्यपुरस्सरैः ॥५९॥
कुण्डस्याऽऽरम्भकाले तु संस्कारा न कृता यदि ।
निष्पन्नस्य च ते सर्वे विधेयाश्च क्रमेण तु ॥६०॥

ताडयेदस्त्रमन्त्रेण पुष्पैर्दक्षिणपाणिना ।
खननं तीक्ष्णशस्त्रेण देशिकश्चाऽस्त्रविद्यया ॥६१॥
गृहीत्वा चैकदेशात्तु कुण्डमध्यात्तु मृत्कणम् ।
अङ्गुष्ठाऽनामिकाभ्यां तु हृदयेन समुद्धरेत् ॥६२॥
अस्त्रेणैव समीकृत्य न स्यान्निम्नोन्नतं यथा ।
सेचयेत्कवचेनैव कुट्टयेत्तदनन्तरम् ॥६३॥
लेपयेद्गन्धतोयेन अस्त्रेण परिशोधयेत् ।
अस्त्रजप्तैः कुशाकाण्डैस्तीक्ष्णलाङ्गूलवर्जितैः ॥६४॥
अस्त्राऽभिमन्त्रितेनैव दर्भकाण्डद्वयेन तु ।
तन्मध्ये च कुशाऽग्रेण प्राग्भागमवलम्ब्य च ॥६५॥
आरभ्य दक्षिणाऽऽशायां लिखेल्लेखामुदग्गताम् ।
तस्यामुपरि संलिख्य लेखानां त्रितयं स्फुटम् ॥६६॥
प्रागग्रं दक्षिणाऽऽशादि ह्युदीच्यन्तं च साऽन्तरम् ।
तत्र प्रागग्ररेखासु मध्यैका पिङ्गलाऽभिधा ॥६७॥
दक्षिणोत्तरयोर्द्वे तु सुषुम्नेडादिदैवते ।
चतुर्थी प्रणवेनाऽथ प्रोक्षयेदर्घ्यवारिणा ॥६८॥
तदभ्यर्च्याऽर्घ्यपुष्पाद्यैर्ध्यायेत्तद्भद्रपीठवत् ।
प्रणवैस्तु प्रतिष्ठानं प्राग्वदस्य समाचरेत् ॥६९॥
चतुरश्रस्थले कुण्डे दिग्विदिग(ग्व)ष्टके बहिः ।
सम्पूर्णपात्रं कुम्भानामष्टकं विनिवेश्य च ॥७०॥
ऊर्ध्वाऽधोमेखलानां च चतुर्णां दिक्चतुष्टये ।
कौशेयविष्टरस्थांश्च वासुदेवादिकान् यजेत् ॥७१॥
विदिक्ष्वप्यथ योगेन ह्यूर्ध्वान्तमधरात्तु वै ।
तद्वदेवाऽर्घ्यपुष्पाद्यैः पूजनीयाः क्रमेण तु ॥७२॥

मृदुदर्भसमूहं च नीरसं चाऽश्मकुट्टिमम् ।
शुष्कगोमयचूर्णेन युक्तं गन्धाऽऽत्मना सह ॥७३॥
कुण्डे द्रोणांशमात्रं तु समारोप्य प्रसार्य च ।
अच्छिन्नाग्रैस्ततो दर्भैरस्त्रमन्त्राऽभिमन्त्रितैः ॥७४॥
कुण्डभित्तिगणं सर्वं प्रोत्थितैः परिभूषयेत् ।
वर्मणा चाऽक्षवाटं तु सङ्कल्प्य तदनन्तरम् ॥७५॥
समभ्यर्च्य च पुष्पाद्यैर्मध्यतः प्रणवेन तु ।
तेनैव विधिना नाभिं पूजयेच्चन्द्रसन्निभाम् ॥७६॥
ततः पवित्रकं दार्भं शिखामन्त्राऽभिमन्त्रितम् ।
प्राक्समालेपनोपेतं चतुष्पथपदे न्यसेत् ॥७७॥
हृन्मन्त्रेण ततस्तत्र योगपीठं प्रकल्पयेत् ।
तत्र नारायणाख्यां वै शक्तिं विद्योतलक्षणाम् ॥७८॥
लक्ष्म्याकृतिपदं प्राप्तामममृताऽमृतरूपिणीम् ।
सर्वाऽतिशयरूपां च सर्वशक्तिसमन्विताम् ॥७९॥
सौकुमार्येण रूपेण सर्ववस्त्वन्तरस्थिताम् ।
शाश्वतीं सृष्टिमार्गेण अवतार्य हृदम्बुजे ॥८०॥
पुरा ध्यानक्रमेणैव हृन्मन्त्रेण हृदम्बुजात् ।
स्वनामपदयुक्तेन सनमःप्रणवादिना ॥८१॥
रेचकेन विनिक्षिप्य कुण्डहृत्पद्ममध्यतः ।
सम्पूज्य गन्धपुष्पाद्यैः पद्ममुद्रां प्रदर्श्य च ॥८२॥
ताम्रपात्रेऽथ वाऽन्यस्मिन् समादाय हुताशनम् ।
आरण्यं लौकिकं वाऽथ मणिजं दर्पणोद्भवम् ॥८३॥
निधाय कुण्डस्यैशान्ये संस्कारार्थं च साम्प्रतम् ।
सन्ताड्य चाऽस्त्रमन्त्रेण प्रोक्षयेच्छिखया च तम् ॥८४॥

हृदाऽभ्यर्च्याऽमृतं ध्यानं दत्वाऽऽच्छाद्याऽथ वर्मणा ।
मूलं स्मृत्वा समानीय पूरकेण हृदन्तरे ॥८५॥
मन्त्रानिलकराकृष्टं कृत्वा तस्माद्विनिर्गतम् ।
व्यस्तो गुणगणात् पश्चस्तेजो नाम गुणो हि यः ॥८६॥
परस्य ब्रह्मणस्सोऽयं सामान्यं सर्वतेजसाम् ।
विरेच्य विन्यसेत्तस्मिन् वह्निपात्रे पुराऽर्चिते ॥८७॥
ततोऽग्निपात्रमादाय निर्धूममतिदीप्तिमत् ।
दक्षिणेन करेणैव पाणिभ्यामथ वा द्विजाः ! ॥८८॥
भ्रामयित्वा चतुर्धा वै ततः कुण्डान्तरे क्षिपेत् ।
ध्यायेदेकत्वमापन्नं ततो मन्त्राऽर्चिषा सह ॥८९॥
याज्ञियैरिन्धनैश्शुष्कैः प्रज्वाल्याऽस्त्राभिमन्त्रितैः ।
हृदा दक्षिणहस्तेन कुर्यात्परिसमूहनम् ॥९०॥
प्रदक्षिणक्रमेणैव ह्यार्द्रं पाणितलेन तु ।
तिर्यग्वाऽधोमुखस्थेन नखपृष्ठमदर्शयन् ॥९१॥
अस्त्राऽभिमन्त्रितेनैव प्रोक्षयेदर्घ्यवारिणा ।
ततस्त्वभग्नमूलाग्रैस्समैर्दद्यात्कुशैस्स्तरम् ॥९२॥
दिशि दिश्युत्तराऽऽशान्तं याम्याऽऽशादौ तु सान्तरम् ।
चतुर्गुणैश्चतुर्धा त्वप्यग्रच्छन्नैः परस्परम् ॥९३॥
प्राक्प्रान्तैः पूर्वभागाच्च यावदुत्तरगोचरम् ।
होमोपकरणं सर्वं होमभाण्डपुरस्सरम् ॥९४॥
अवतार्य तदूर्ध्वे तु दक्षिणस्यां तथाऽऽत्मनः ।
द्वन्द्वद्वन्द्वप्रयोगेण द्रव्यस्थापनमाचरेत् ॥९५॥
परिधींश्चेध्मनिचयं मुक्तदर्भैः करण्डिकाम् ।
स्रुक्स्रुवौ च चतुष्कं यदेकत्र विनिवेश्य च ॥९६॥

स्रग्धूपमधुपर्कं च बीजान्येकत्र वै ततः ।
कौशेयं धूतकेशं तु विष्टरं च घृतं चरुम् ॥९७॥
आज्यस्थालीचतुष्कं च निधाय तदनन्तरम् ।
प्रणीतापात्रयुगलं करकं चाऽर्घ्यभाजनम् ॥९८॥
चतुष्कमेतदपरमग्रतो विनिवेश्य च ।
प्रादेशमात्रास्समिधः प्रभूतं शुष्कमिन्धनम् ॥९९॥
पक्ष्मकस्वेदहृद्वस्त्रं वामभागे निधाय वै ।
अर्घ्योदकेन साऽस्त्रेण कृत्स्नं पावनतां नयेत् ॥१००॥
ततस्तु मूलदेशस्थाः ब्रह्मवृक्षादिकोत्थिताः ।
सपर्णास्सत्वचस्स्पष्टा अधो नेमेस्तु चाऽधिकाः ॥१०१॥
प्राक्प्रत्यगुत्तराग्रौ च प्रागग्रौ दक्षिणोत्तरौ ।
चतस्रो वै परिधयश्शिखामन्त्रेण पूजयेत् ॥१०२॥
विष्टराणि ततो दद्यात् हृदा कुम्भाऽष्टके ततः ।
तेषु क्रमात्पूजयेच्च लोकपालान् स्वदिक्स्थितान् ॥१०३॥
आदाय सोदकं चाऽथ प्रणीताऽऽख्यं च भाजनम् ।
पवित्रकं तु तन्मध्ये चतुर्दर्भकृतं न्यसेत् ॥१०४॥
उद्धृत्योद्धृत्य हस्तेन जलं तत्रैव निक्षिपेत् ।
ततस्त्वष्टाक्षरं मन्त्रं जपमानो हि साधकः ॥१०५॥
भूयस्तदम्भसा सर्वं प्रोक्षयेद्विष्टरेण तु ।
शेषस्य स्रावणं कुर्यात्सर्वदिक्षु स्तरोपरि ॥१०६॥
पुनरेवाऽम्भसाऽऽपूर्य तन्मध्ये परमेश्वरम् ।
ध्यात्वाऽर्चयित्वा संस्थाप्य त्वग्रतस्तदनन्तरम् ॥१०७॥
प्रणीते चाऽपरस्मिन् वै पात्रे चाऽग्रे कृते सति ।
सपवित्रं तु तत्राऽर्घ्यं दत्वा चक्रं तु विन्यसेत् ॥१०८॥

मन्त्रनाथं तदूर्ध्वे तु ध्यात्वाऽभ्यर्च्य यथाक्रमम् ।
तत्पात्रमुत्तरस्यां च कृत्वा सम्पूज्य वै पुनः ॥१०९॥

अथाऽऽज्यं दशसंस्कारैस्संस्कुर्यात्साधकोत्तमः ।
अधिश्रयणमत्रादावुपाधिश्रयणं तथा ॥११०॥

प्रसादीकरणं चैव हृन्मन्त्रेण समाचरेत् ।
सम्प्लवोत्प्लवने कुर्यात्प्रणवेन तु साधकः ॥१११॥

हृदा पवित्रीकरणं दृशा नीराजनं तथा ।
ततः कवचमन्त्रेण कुर्यात्तदवकुण्ठनम् ॥११२॥

अवलोकामृतीकारौ क्रमान्नेत्रेण वर्मणा ।
भाण्डस्थस्य यदाज्यस्य दर्भैः प्रज्वलितैः पुरा ॥११३॥

स्पर्शनं विद्धि संस्कारमधिश्रयणसंज्ञकम् ।
उपाधिश्रयणं नाम यत्तद्द्रावणमुच्यते ॥११४॥

आज्यस्थालीमथाऽऽदाय त्वाज्यं यत्प्राग्द्रवीकृतम् ।
तत्तत्र निक्षिपेदाज्यभाण्डाद्दोपापनुत्तये ॥११५॥

प्रवादीकरणं ह्येतदुच्चस्थेन करेण तु ।
पुनरादाय कृत्वाऽग्रे आधारोपरि यत्ततः ॥११६॥

दर्भकाण्डचतुष्कं तु द्वादशाङ्गुलसम्मितम् ।
तिर्यगुत्तानपाणिभ्यामवष्टभ्य च साऽन्तरम् ॥११७॥

अंनामाऽङ्गुष्ठयुग्मेन यथा मध्यं नतं भवेत् ।
तैराज्यं चतुरो वारानानयेच्चतुरो नयेत् ॥११८॥

अन्तराऽन्तरयोगेन ह्यात्मनोऽग्नेस्तु सम्मुखम् ।
प्रणवेनोक्तसङ्ख्येन कुण्डमध्येऽथ निक्षिपेत् ॥ ११९॥

सम्प्लवोत्प्लवने त्वेवं कृत्वा दार्भं पवित्रकम् ।
विनिक्षिपेच्च तन्मध्ये पवित्रीकरणं च तत् ॥१२०॥

कुण्डादुल्मुखमादाय ज्वलन्तं धूमवर्जितम् ।
तेनाऽऽवर्तं सकृद्विप्र ! तद्धि नीराजनं स्मृतम् ॥१२१॥
नीराजीकृत्य तत्पश्चात्कवचोदरगं स्मरेत् ।
अवकुण्ठनमेतद्धि तर्जन्या यत्प्रदक्षिणम् ॥१२२॥
तेजसा हृदयस्थेन दृग्गतेनाऽवलोकनम् ।
निरीक्षणमिदं विप्र ! ततस्तत्रोपरि स्मरेत् ॥१२३॥
चन्द्रमण्डलमध्यस्थं धेनुमुद्रासमन्वितम् ।
मन्त्रं वै सौरभेयं च स्फुरदिन्दुशतप्रभम् ॥१२४॥
तदन्तरस्थं मन्त्रेशं हिमाचलनिभं स्मरेत् ।
तत्स्रुतैरमृतौघैश्च शशिजैर्धेनुजैरपि ॥१२५॥
सर्वसंस्कारसंयुक्तं स्मरेदाज्यं च भावितम् ।
अमृतीकरणं नाम इदं ते सम्प्रकाशितम् ॥१२६॥
स्रुक्स्रुवावथ चाऽऽदाय दर्भपुञ्जलिकेन तु ।
रजोऽपनयनं कुर्यात्प्रक्षाल्योष्णेन वारिणा ॥१२७॥
निर्मलीकृत्य कूर्चेन ज्वालाभिस्सन्प्रतप्य च ।
प्रोक्षयित्वा ऽर्घ्यतोयेन ताडयेद्गन्धपुष्पकैः ॥१२८॥
तदाऽप्रमेयं स्रुचो ज्ञातव्यं कर्मसिद्धये ।
शतपत्रात्मनाऽनन्तो मुष्टिस्तोऽनन्तवक्त्रधृक् ॥१२९॥
अन्तर्बीजात्मभावेन स्थित्वा चोर्ध्वमुखः पुनः ।
सप्तस्कन्धं यदध्यात्मं भूतप्राणमरुन्महत् ॥१३०॥
प्रेरितं ब्रह्मरन्ध्रेण तत्तदिच्छावशात्पुनः ।
सप्तपातालनागं च अगमत् क्ष्माऽम्बुजाऽऽत्मना ॥१३१॥
यदाश्रयत्यध्ववाहे त्वमृतात्मा जलं स्थितः ।
सचक्ररचनाजाले स्थितस्तेजस्त्रिमूर्तिधृक् ॥१३२॥

शङ्खविग्रहधृग्वायुराज्यकोशं च खं ततः ।
निर्बीजमजमक्षोभ्यमाद्यं यस्याऽधिदैवतम् ॥१३३॥
अपरस्मिन् स्रुवे ज्ञेयं यथा जायेत तच्छृणु ।
साक्षादमृतमूर्तिर्वै वरुणः कलशाऽऽत्मना ॥१३४॥
नालाऽऽत्मना तदस्त्रं च संस्थितं विघ्नभीतिहृत् ।
जगदाप्यायकृच्चन्द्रः पद्मत्वेनाऽग्रदेशतः ॥१३५॥
आनन्दाख्यं हि सामर्थ्यं ज्ञेयं तत्पारमेश्वरम् ।
सत्यभूतममेयं च प्रमेयमिदमुच्यते ॥१३६॥
संस्कारकाले त्वारोप्य नित्यं सन्मन्त्रतर्पणे ।
स्वसंज्ञाप्रणवोपेता नमस्कारपदान्विताः ॥१३७॥
सर्वेषामर्चने विप्राः ! आराध्य हृदयेन वा ।
पूजयित्वाऽर्घ्यगन्धाद्यैर्न्यस्तमन्त्रगणं ततः ॥१३८॥
बहुशाखैरभग्नाग्रैस्समूलैस्सुसमैः कुशैः ।
चतुर्भिर्वामहस्तेन त्वादायाऽथ पवित्रकम् ॥१३९॥
दक्षिणाऽनामिकायां तु चतुष्काण्डविनिर्मितम् ।
अङ्गुलीयकरूपं च कृत्वा वै तदनन्तरम् ॥१४०॥
संस्कृताऽऽज्यस्य विप्रुड्भिस्संस्पृशेदिन्धनादिकम् ।
निश्शेषदोषशान्त्यर्थमथाऽग्नेराहुतस्य च ॥१४१॥
शतं शतार्धं पादं वा त्वाहुतीनां स्वशक्तितः ।
तिलानां घृतसिक्तानां शुद्धेन हविषा सह ॥१४२॥
होतव्यं कर्मसिद्ध्यर्थं यथावदवधारय ।
आहुत्यामुद्धृतायां च मूलमन्त्रावसानतः ॥१४३॥
प्रणवान्तं पदं ब्रूयादग्निं शोधय शोधय ।
यथावस्थितरूपेण ततस्तेनैव बुद्धिमान् ॥१४४॥

दद्यात्पूर्णाहुतिं पश्चाद्घृतेन च चतुष्फलीम् ।
अग्नेर्होमोऽथ कर्तव्यस्सर्वसंस्कारसिद्धये ॥१४५॥

हृदाऽनलं पुटीकृत्य कर्मनाम समुच्चरेत् ।
सम्पादयामि स्वाहान्तं सर्वकर्मस्वयं क्रमः ॥१४६॥

आज्येन सिक्तैः कुसुमैस्सर्पिषा वा धिया द्विज ! ।
गर्भाऽऽधानादिसंस्कारान् कुर्याद्दारावसानकान् ॥१४७॥

श्रीकुक्षिकुहरे यद्वै वह्निष्ठस्य प्रवेशनम् ।
गर्भाऽऽधानं तु तद्विद्धि संस्कारं प्रथमं मुने ॥१४८॥

प्राणयोगाच्च या शक्तिर्वह्निश्रीजठरे स्थिता ।
जडरूपा च या सूक्ष्मा तस्याश्चित्प्रसरो हि यः ॥१४९॥

भगवच्छक्तिचैतन्यासामर्थ्याच्च शनैश्शनैः ।
स्मृत्वैवं जुहुयादाज्यं तन्मन्त्रेणोदितेन च ॥१५०॥

भवेत्पुंसवनं चाऽग्नेश्चिच्छक्तिनयनात्तु वै ।
सीमन्ताख्यं तु संस्कारमग्नौ कुर्यादनन्तरम् ॥१५१॥

अव्यक्ताश्च तदन्तस्थाश्शिरःपाण्यादयोऽखिलाः ।
स्वां स्वां वै कर्मसीमानं प्रवुद्धास्संश्रयन्ति ये ॥१५२॥

विभागकलनात्तेषां सीमन्तं तदुदाहृतम् ।
अग्नेर्वै जातकर्मार्थं पूर्ववद्धोमयेत्सकृत् ॥१५३॥

निस्सृतस्य च वै गर्भाज्जातकं तदुदाहृतम् ।
हिरण्यमधुसर्पिर्भ्यां स्तनसम्प्राशनं द्विज ! ॥१५४॥

कुर्यात्तदनु वै नाम जातस्याऽग्नेः प्रयत्नतः ।
वासुदेवादिनाम्ना वै प्रसिद्धेनाऽङ्कयेत्तु तम् ॥१५५॥

एवं संस्कारशुद्धस्य वैष्णवाग्नेः प्रयत्नतः ।
मन्त्रान्नदानं पूर्वं यत्तदन्नप्राशनं भवेत् ॥१५६॥

शिखाबन्धं यदग्नेस्तु तच्चौलमिति चोच्यते ।
यदग्नेर्होमयेदाज्यं तच्चोपनयनं स्मृतम् ॥१५७॥
वेदव्रतं च गोदानं समावर्तविवाहकौ ।
कृत्वाऽनलस्य जिह्वानां भावयेत्सप्तकं पुनः ॥१५८॥
नवखण्डे समिन्धाने कुण्डेऽग्नावर्चिषोद्धृते ।
तथा दीप्तिप्रकाशा च मरीचिस्तापिनी तथा ॥१५९॥
कराला लेलिहा चैव कुण्डं व्याप्य व्यवस्थिताः ।
ईशपूर्वाग्निदिग्भागे प्रभाद्यं त्रितयं स्मृतम् ॥१६०॥
रक्षोवारुणवायव्ये मरीच्याद्यं त्रयं तु तत् ।
उदग्दिङ्मध्यतो याम्ये स्थितैका लेलिहाऽभिधा ॥१६१॥
रक्तं श्वेतं तथा नीलं कृष्णं पीतं तथाऽरुणम् ।
सौदामिनीनिभं ध्यायेज्जिह्वानां सप्तकं क्रमात् ॥१६२॥
स्वस्वबीजैस्स्वसंज्ञैर्वा स्वबीजैर्वा स्वनामभिः ।
एतैर्मन्त्रैर्द्विजश्रेष्ठ ! भावयेच्च यथाक्रमम् ॥१६३॥
अङ्गाराण्यर्चिषश्चैव शक्तिर्या दहनात्मिका ।
त्रिलक्षणोऽयमाधारः आधेयो हुतभुग्विभुः ॥१६४॥
आत्मनोऽग्नेस्तु विश्वेशो वासुदेवस्सनातनः ।
एवं ज्ञात्वा पुरा सम्यक् सक्तां वैश्वानरीं पराम् ॥१६५॥
आधेयोल्लिङ्गिताकारं ध्यात्वा कुण्डगतानलम् ।
तज्जनित्रीं ततः कुण्डाज्ज्वालामार्गेण चागताम् ॥१६६॥
परानन्दप्रकाशाभां नासिक्यां द्वादशाऽवधि ।
ततोऽवतारयोगेन प्रविष्टां भावयेद्धृदि ॥१६७॥
तस्य संशुद्धदेहस्य पुनरेवं समाचरेत् ।
सम्बोधजनकं होमं जडभावप्रशान्तिदम् ॥१६८॥

उच्चार्य मूलमन्त्रं तु प्रणवद्वितयान्वितम् ।
जुहुयादाहुतीनां च सहस्रं शतमेव वा ॥१६९॥
तद्वदाज्येन सन्तप्य दद्यात्पूर्णाहुतिं तथा ।
संस्कृतस्याऽथ वै वह्नेः पूजां कुर्यात्तु भक्तितः ॥१७०॥
पुष्पैर्धूपेन दध्ना च तिलैरक्षतमिश्रितैः ।
अन्नैर्भक्ष्यफलोपेतैराज्येन क्रमशो द्विज ! ॥१७१॥
सम्पूज्यैवं विधानेन स्वमन्त्रेणाऽनलं ततः ।
तर्पयेत यथाशक्ति तिलाऽऽज्याद्यैरनुक्रमात् ॥१७२॥
आज्येन वा केवलेन सहस्रशतसङ्ख्यया ।
अग्नेः पूर्णाहुतिं दत्वा वौषडन्तां घृतेन तु ॥१७३॥
ततः पूजा प्रकर्तव्या देवस्याऽग्नेस्तु मध्यतः ।
पूर्ववच्च स्मरेद्वह्निं साकारं निष्कलप्रभम् ॥१७४॥
स्वयोगबलवीर्येण व्यापकं सर्वदिग्गतम् ।
कदम्बकुसुमाकारं स्वप्रभाभिर्विराजितम् ॥१७५॥
कुण्डमापूरयन् सर्वं सर्वाकृत्या तु सर्वतः ।
एवं हि विततो व्यापी निराकारस्सुदीप्तिमान् ॥१७६॥
अथ ज्वालाजटाधारे वह्नेर्वै कुण्डमध्यतः ।
अनुसन्धीयते बुद्ध्या विष्टरं तु यथोदितम् ॥१७७॥
तदर्चनमथः कुर्यात्पुष्पैर्धूपैस्सचन्दनैः ।
मुद्राबन्धं ततः कुर्यात्पीठामरगणस्य च ॥१७८॥
ततोऽवतार्य तन्मध्ये हृदयात्परमेश्वरम् ।
निरोदकात्स्वमन्त्रेण दद्यात्पुष्पाञ्जलिं विभोः ॥१७९॥
साङ्गं सलाञ्छनं ध्यायेत्सकलं परमेश्वरम् ।
साम्मुख्यं सन्निधानं च सन्निरोधनमाचरेत् ॥१८०॥

अर्घ्यप्रदानपूर्वं तु सर्वं कुर्यात्तु पूर्ववत् ।
मूलबिम्बे यथा ध्यानमग्निमध्ये तथा भवेत् ॥१८१॥
यानगे यानगं ध्यायेदग्नौ स्थाने यथास्थितम् ।
आसीने त्वथ चाऽऽसीनं शयाने च तथाविधम् ॥१८२॥
पद्मरागाऽरुणशुचिं स्मर्तव्यमनलास्पदे ।
मूलादिसर्वमन्त्राणां तत्तन्मुद्राः प्रदर्श्य च ॥१८३॥
अर्घ्यगन्धादिनाऽभ्यर्च्य पूजयेत्सकलं प्रभुम् ।
लयभोगात्मना सम्यक् पूर्वोक्तविधिना तथा ॥१८४॥
समिद्गणं तु पात्रस्थं कृत्वाऽभ्यर्च्य हृदा ततः ।
शिरसाऽवनतेनैव विनिवेद्य ततः प्रभोः ॥१८५॥
आज्येनोभयतस्सिक्तं ब्रह्मक्षीरद्रुमोद्भवम् ।
इध्माष्टकं समादाय द्विधा कृत्वा द्विजोत्तमः ॥१८६॥
निधाय दक्षिणस्यां च मध्य आग्नेयदिग्गतम् ।
विश्रान्तं नैरृतपदे उत्तरस्यां तथाऽपरम् ॥१८७॥
वाय्वीशपदसंरुद्धमाघाराभ्यन्ततः क्षिपेत् ।
इध्ममूलादथाक्रान्तमिध्मेध्मोपरि संस्थितम् ॥१८८॥
स्रुवमाज्येन सम्पूर्य सूर्यबीजेन चिन्तयेत् ।
सहस्रांशुं च तन्मध्ये दद्यात्कुण्डस्य दक्षिणे ॥१८९॥
अपरस्मिन् स्रुचि ध्यात्वा सोमाख्येनाऽक्षरेण तु ।
पूर्णं शशाङ्कबिम्बं च प्रदद्यात्तत उत्तरे ॥१९०॥
सङ्ख्यानुगुणमिध्मानां घृतं च जुहुयात्तु वै ।
सूर्यसोमात्मकं चाऽग्नेर्विद्धि तल्लोचनद्वयम् ॥१९१॥
एतयोरन्तरं यद्धि तदग्नेर्वदनं स्मृतम् ।
तत्र वै जुहुयात्पूर्वं समिधां सप्तकं क्रमात् ॥१९२॥

घृतसिक्तां चतुस्सङ्ख्यामेकैकां द्वि सुपुष्कलाम् ।
प्राक्कुङ्कुमादिना लिप्तां काष्ठसंज्ञां तु होमयेत् ॥१९३॥
स्रग्धूपमधुपर्कं च बीजान्याज्यं यथाक्रमम् ।
तत्राऽन्नसमिधो दाने विशेषोऽयं विधीयते ॥१९४॥
सादितं संस्कृताग्नौ प्राक् तं निधायाऽग्रतश्चरुम् ।
समुद्घाट्याऽवलोक्यादौ सम्प्रोक्ष्याऽर्घ्याम्भसा ततः ॥१९५॥
दर्भकाण्डचतुष्केण साग्निना तदनु स्पृशेत् ।
तन्मध्ये स्रुक्चतुष्कं तु मन्त्रेणाज्यस्य निक्षिपेत् ॥१९६॥
अथादाय स्रुचं तत्र तद्वद्द्याच्चतुष्टयम् ।
चतुरङ्गुलमानेनाऽप्यन्नग्रासमथाऽऽचरेत् ॥१९७॥
तं निधाय स्रुवाग्रभें तदूर्ध्वे पूर्ववद्घृतम् ।
दद्यादग्नौ चतुष्कं तु क्षिपेदन्नाहुतिं ततः ॥१९८॥
भूयोऽग्नौ स्रुक्चतुष्कं त्वप्याज्यस्याऽऽपाद्य यत्नतः ।
ततोऽन्नमाज्यसंसिक्तं प्राग्वत्कृत्वाऽऽहुतिं पुनः॥१९९॥
दद्यात्पूर्वप्रयोगेण एवमेव चतुष्टयम् ।
हुत्वाऽप्यन्नाहुतीनां च आज्याख्यां जुहुयात्ततः ॥२००॥
तिलैर्घृतसमायुक्तैरष्टोत्तरसहस्रकम् ।
शतं शतार्धं पादं वा यथाशक्ति समाचरेत् ॥२०१॥
आज्याक्तैरक्षतैस्तद्वत्तिलैश्च जुहुयात्ततः ।
अर्धमर्धांशसंयुक्तमधिकं चाऽग्रवर्तिनाम् ॥२०२॥
जपकाले तथा होमे कर्तव्यं सिद्धिमिच्छता ।
स्विष्टकृद्धवनं कुर्यादन्नग्रासेन वै सकृत् ॥२०३॥
काम्यैरवश्यफलदैर्देशकालसमुद्भवैः ।
तिलैर्घृतेन पयसा दध्ना वा पायसेन तु ॥२०४॥

सिद्धान्नैस्साधितैर्भक्ष्यैर्बीजैर्लाजैश्च तण्डुलैः ।
मूलैः फलैः पल्लवैश्च सुप्रशस्तैश्च कोमलैः ॥२०५॥
सुगन्धैस्स्थलपद्माद्यैः पुष्पैश्चैव सितादिकैः ।
गुग्गुलेनाऽऽज्यमिश्रेण सम्यक्छ्रीवेष्टकेन वा ॥२०६॥
धात्रीफलैश्च सरसैरुत्पलैश्च शुभैस्तथा ।
सुसितासितरक्तैश्च पद्मैर्बिल्वैस्सुशोभनैः ॥२०७॥
दूर्वाकाण्डैरभग्नाग्रैर्दन्तिसद्दन्तनिर्मलैः ।
एधोभिर्ब्रह्मवृक्षोत्थैः क्षीरद्रुममयैस्तथा ॥२०८॥
अमृताक्षीरसंयुक्ता औदुम्बर्यो मधुप्लुताः ।
अच्छिन्नाग्रा ह्यभग्नाश्च कण्टकैः परिवर्जिताः । ॥२०९॥
सर्वास्त्रिमधुयुक्ताश्च घृतयुक्तास्तु वा पुनः ।
योक्तव्यान्यग्निमध्ये तु समिद्भिस्सह सर्वदा ॥२१०॥
सर्वाण्यन्नविशेषाणि चन्दनादीनि यान्यपि ।
सदन्तकाष्ठं ताम्बूलमुत्कटक्षारवर्जितम् ॥२११॥
दाप्यानि लक्षहोमे तु आसनादीनि यानि च ।
मधुलवणपानांसुकटुतैलोज्झितानि च ॥२१२॥
आज्ययुक्तैस्तिलैश्शान्तिस्सिद्धयस्सकलास्तथा ।
घृतेन पयसा दध्ना होमस्तृप्तिं प्रयच्छति ॥२१३॥
पायसेन तु सिद्धान्नैर्भक्ष्यैः पुष्टिस्सदा भवेत् ।
बीजैर्धान्यैस्तण्डुलैश्च तर्पितो मन्त्रराट् द्विज! ॥२१४॥
प्रयच्छति सदा श्रेयः प्रसन्नः परमेश्वरः ।
पल्लवैः फलमूलैश्च होमस्तुष्टिं प्रयच्छति ॥२१५॥
जहाति चाऽपमृत्युं च रोगांश्चोपशमं नयेत् ।
तर्पितस्स्थलपद्माद्यैः पुष्पैश्चाऽन्यैस्सितादिकैः ॥२१६॥

प्रभामूर्तिगतो मन्त्रस्तर्पितो यदि सत्तम ! ।
विद्यां प्रयच्छत्यचिराद्दीप्तिस्थो भूप्रदः प्रभुः ॥२४१॥
तापयत्याशु शत्रूणां प्रकाशोपर्यवस्थया ।
शत्रुक्षयं ददात्याशु मरीच्यामूर्ध्वगो विभुः ॥२४२॥
तापिन्यामूर्ध्वगो मन्त्रस्सर्वशापोपशान्तिदः ।
विपक्षोच्चाटनं कुर्यात्करालासंस्थितो हुतः ॥२४३॥
लेलिहाऽग्रस्थितो मन्त्रो यदि सन्तर्प्यते मुने ! ।
दद्यादभीप्सिते चैव देहान्ते परमं पदम् ॥२४४॥
स्वाहाकारं सदा होमे पूर्णायां वौषडेन च ।
तमेव शान्तिके कुर्याद्वषडाप्यायने तथा ॥२४५॥
स्वधा पितृक्रियायां च फट्कारं क्षयकर्मणि ।
विद्वेषे हुं वशे स्त्रीणां नमो मोक्षप्रसिद्धये ॥२४६॥
कर्महोमाऽवसाने च घृतेनाऽऽपूर्य सस्रुचम् ।
अभावाच्च प्रभूतेन होमद्रव्येण पूरयेत् ॥२४७॥
तत्रोपरि घृतं दद्यात्ततोऽर्घ्यकुसुमादिभिः ।
मूलदेशात्समारभ्य स्रुचं पूज्य स्रुवाऽन्विताम् ॥२४८॥
घृतयुक्तं तु तत् द्रव्यं स्रुचः पुष्करकुक्षिगम् ।
द्रवचन्द्रोपमं ध्यायेत्ततः पूर्णं समुद्धरेत् ॥२४९॥
स्रग्दण्डे देहनाभौ तु मूले संरुध्य संस्मरेत् ।
निष्कलं मन्त्रनाथं तु पूर्णशीतांशुविग्रहम् ॥२५०॥
आमूलाच्च मरुच्छक्त्या प्रोद्धरेच्च स्वविग्रहात् ।
विधाय चेश्वराऽऽधारे तस्माद्धाराऽमृतं महत् ॥२५१॥
नासिकासन्धिमार्गेण स्रुक्पद्मे पतितं स्मरेत् ।
सामृतामाज्यधारां च वसुधारामिव क्षिपेत् ॥२५२॥

मुखमध्ये तु मन्त्रस्य तब्द्रह्मविवरेऽथ वा ।
हृत्पद्माऽन्तर्गतां सम्यक् प्रविष्टामनुभावयेत् ॥२५३॥

तया वै बृंहितं मन्त्रं दारयेद्ब्रह्मधारया ।
तृप्तं पुष्टं च हृष्टं च तुष्टं वै साधकोपरि ॥२५४॥

मन्त्रोच्चारसमेता वै शरीरकरणान्विता ।
ध्यानोपेता द्विजश्रेष्ठ ! पूर्णेयं परिकीर्तिता ॥२५५॥

सर्वसिद्धिकरी शश्वन्मोक्षलक्ष्मीविवर्धनी ।
बहुशुष्केन्धनेऽग्नौ च होतव्यं कर्मसिद्धये ॥२५६॥

एकाऽनेकप्रयोगाणां न तु कर्मणि कर्मणि ।
ततोऽर्घ्यगन्धपुष्पाद्यैर्मन्त्रनाथं समर्चयेत् ॥२५७॥

मुद्राः प्रदर्शयेत्सर्वा मूलमन्त्रादितः क्रमात् ।
चतुर्थांशेन चाऽङ्गानां कुर्यान्मूलस्य तर्पणात् ॥२५८॥

लाञ्छनाभरणानां च लक्ष्म्यादीनां तदर्धतः ।
अथ वा हृदयादीनां ततोऽर्धेनाऽखिलासु च ॥२५९॥

परमेश्वरकान्तासु तदर्धेन द्विजोत्तम ! ।
लाञ्छनाभरणादीनि सर्वाणि जुहुयात्क्रमात् ॥२६०॥

हृदादिसर्वमन्त्राणामेकैकं जुहुयात्तु वा ।
विसर्जनं ततः कुर्याद्दत्त्वाऽर्घ्यं धूपसंयुतम् ॥२६१॥

भोगस्थानगता मन्त्राः पूजिता ये यथाक्रमम् ।
मुख्यमन्त्रशरीरं च सम्प्रविष्टांश्च संस्मरेत् ॥२६२॥

ज्वाला ज्वालान्तरे यद्वत्समुद्रस्यैव निम्नगाः ।
तं मन्त्रविग्रहं स्थूलं सर्वमन्त्रास्पदं द्विज ! ॥२६३॥

प्रविष्टं भावयेत्सूक्ष्मे अव्यक्ते हृदयात्मके ।
परे प्रागुक्तरूपं तु तं सूक्ष्ममुभयात्मकम् ॥२६४॥

तं परं प्रस्फुरद्रूपं निराधारपदाश्रितम् ।
सन्धिमार्गेण हृत्पद्मे सम्प्रविष्टं तु भावयेत् ॥२६५॥
मन्त्रमुद्रासमेतेन पूरकेण तु सत्तमम् ।
भासितं भावयेद्देहं तेनाऽऽपादाच्छिरोऽवधि ॥२६६॥
प्रविष्टेन तु मन्त्रेण प्रयत्नेन विना द्विज ! ।
विग्रहः कम्पते यस्य मन्त्रस्तस्य प्रसीदति ॥२६७॥
एवं विसृज्य मन्त्रेशं मुद्राबन्धेन वै सह ।
साधारासनमन्त्राणां गणेशस्य द्विजोत्तमाः ! ॥२६८॥
गुर्वादीनां तु विहितमर्घं लाञ्छनदर्पणात् ।
एतेषां च लयं विप्र ! कुर्यात्सृष्टिक्रमेण तु ॥२६९॥
द्वार्स्थाखिलोकपालानां वप्रस्थहरिसेविनाम् ।
गुरुपूर्वक्रमादित्थमर्घमर्घं यथाक्रमम् ॥२७०॥
सकृत्सकृत्स्वशक्त्या वा पूर्णां सर्वेष्वथ क्षिपेत् ।
विष्वक्सेनस्ततो भक्त्या तर्पणीयस्तिलाऽक्षतैः ॥२७१॥
वौषडन्तेन मन्त्रेण दद्यात्पूर्णाहुतिं द्विज ! ।
पूजयित्वा यथान्यायं कुर्यात्तस्य विसर्जनम् ॥२७२॥
अनलं पूजयित्वा तु शक्तितस्तर्पयेत्ततः ।
अच्छिद्रकरणीं पूर्णां पूर्णां मन्त्रेण पातयेत् ॥२७३॥
सन्दर्शयेत्ततो वह्नेर्मुद्रां मन्त्रसमन्विताम् ।
कुण्डे पुष्पाञ्जलिं क्षिप्त्वा वह्निमन्त्रमनुस्मरन् ॥२७४॥
क्षान्त्वा चैव नमस्कृत्य यथाविधि विसृज्य तत् ।
समाघ्राय न्यसेत्कोष्ठे ह्यवतारक्रमेण तु ॥२७५॥
सम्मार्ज्य स्रुक्स्रुवावग्नौ स्रुचं निक्षिप्य चाऽम्भसा ।
अर्घ्यपात्रात्तु चाऽऽपूर्य कुण्डबाह्ये प्रदक्षिणम् ॥२७६॥

कुर्यादीशानकोणाद्वै अच्छिद्रोदकधारया ।
पवित्रकेणाऽध ऊर्ध्वे विनिक्षिप्य करेण वा ॥२७७॥
दद्याच्छिरसि वै शेषं स्रगधो वदनान्न्यसेत् ।
आत्मनो वामभागे तु विष्टरस्रवसंयुतम् ॥२७८॥
अपवास्य जलं पात्रद्वितयस्थं तदर्चितम् ।
उपसंहृत्य तु तथा भस्मना तदनन्तरम् ॥२७९॥
जलनिर्मथितेनैव ह्यूर्ध्वपुण्ड्रचतुष्टयम् ।
हृद्यंसयोर्ललाटे च कुर्याद्दीपशिखाकृतिम् ॥२८०॥
अथाऽर्घ्यपात्रमादाय गत्वा भगवतो गृहम् ।
नमस्कुर्याज्जगन्नाथमष्टाङ्गपतनेन तु ॥२८१॥
आपूर्य पाणियुगलं पुष्पैस्तत्रोपरि स्थितम् ।
संस्मरेन्निष्कलं मन्त्रममृतेनोपबृंहितम् ॥२८२॥
प्रभूतदीप्तिच्छुरितं निक्षिपेन्मन्त्रमूर्धनि ।
तर्पितोऽसि विभो ! भक्त्या होमेनाऽनलमध्यग ! ॥२८३॥
होमद्रव्येषु यद्वीर्यं तदिदं चाऽऽत्मसात्कुरु ।
विनिवेद्यं विभोर्होमं पूजां कृत्वा यथाविधि ॥२८४॥
गृहीतं भावयेत्तेन प्रसन्नेनाऽन्तरात्मना ।
एवं समाप्य होमान्तमर्घ्यगन्धादिभिर्विभुम् ॥२८५॥
समभ्यर्च्य पितॄणां च संविभागमथाऽऽचरेत् ॥

इति श्रीपाञ्चरात्रे ईश्वरसंहितायाम्
भोज्यासनाग्निकार्यविधिर्नाम
पञ्चमोऽध्यायः ।

सौभाग्यमतुलं विप्राः ! अचिरात्सम्प्रयच्छति ।
गुग्गुलाज्यैर्द्विजारोग्यं शुभैर्धात्रीफलैस्तथा ॥२१७॥
शर्करैः बिल्वफलकैः पञ्चगव्यसमुक्षितैः ।
आज्याद्यैः पद्मबीजैश्च लक्ष्मीं शीघ्रं प्रयच्छति ॥२१८॥
उत्पलैर्वश्यकामस्तु भोगकामस्तु होमयेत् ।
दूर्वाङ्कुरैश्च होमेन आयुषो वृद्धिमाप्नुयात् ॥२१९॥
एधोभिश्च शुभैर्होमो मापैद्दशान्तिप्रदः प्रभुः ।
तिलानां शस्यते होमो हरिणाऽऽननमुद्रया ॥२२०॥
घृतस्य कार्षिको होमः क्षीरस्य च विशेषतः ।
शुक्तिमात्राहुतिर्दध्नः प्रसृतिः पायसस्य वा ॥२२१॥
ग्रासार्धमानमन्नानां भक्ष्याणां स्वप्रमाणतः ।
सर्वेषामेव बीजानां मुष्टिना होममाचरेत् ॥२२२॥
अग्राङ्गुलिस्तु लाजानां शालीनां पञ्चकं हुनेत् ।
फलानां स्वप्रमाणं च पल्लवानां तथैव च ॥२२३॥
कर्कन्धुमात्रा गुलिका होतव्या गुग्गुलोस्सदा ।
धात्रीफलप्रमाणं वा सम्भवे सति होमयेत् ॥२२४॥
दूर्वाकाण्डानि विप्रेन्द्र ! चतुरष्टाङ्गुलानि वा ।
समित्प्रादेशमानेन समच्छेदास्त्वगन्विताः ॥२२५॥
अग्नेर्वर्णाश्च गन्धाश्च शब्दाश्चाऽऽकृतयस्तथा ।
विकारा विशिखा चैव संवेद्याः कर्मसिद्धये ॥२२६॥
पद्मरागद्युतिः श्रेष्ठो लाक्षाऽलक्तकसन्निभः ।
बालार्कवर्णो हुतभुक् जयार्थं शस्यते द्विज ! ॥२२७॥
इन्द्रकोपकसङ्काशश्शोणाभो वाऽथ पावकः ।
चक्रचापनिभः श्रेष्ठः कुङ्कुमाभस्तथैव च ॥२२८॥

रक्तानां पुष्पजातीनां वर्णेनाऽग्निरिहोच्यते ।
सुगन्धो द्रव्यगन्धोऽग्निर्घृतगन्धश्च शोभनः ॥२२९॥
आयुर्दः पद्मगन्धस्स्याद्बिल्वगन्धश्च सुव्रतः ।
अग्रगन्धोऽभिचारे तु विहितस्सर्वदाऽनलः ॥२३०॥
जीमूतवल्लकीशङ्खमृदङ्गध्वनितुल्यकः ।
शब्दोऽग्नेस्सिद्धये हेतुरतोऽन्यस्स्यादसिद्धिदः ॥१३१॥
रक्ताभस्तु यदा वह्निः क्षीणार्चिः परिदृश्यते ।
पद्मरागोपलाभश्च स्फटिकाभस्तथा शुभः ॥२३२॥
यद्रूपं कथितं पूर्वं यदि तस्य प्रदक्षिणम् ।
अन्योन्यत्वं प्रपद्येत तदा सिद्धिकरोऽनलः ॥२३३॥
गर्वितेन तु वर्णेन यदि कापोतकादिना ।
परिवर्तं करोत्यग्निस्तथा विप्र! विपर्ययः ॥२३४॥
होमान्ते तन्निमित्तं वै होमं कुर्याच्छताधिकम् ।
विषमा च शिखा वह्नेरुदयाश्च शुभावहाः ॥२३५॥
ह्रस्वाऽह्रस्वोन्नता दीर्घा ज्वाला सिद्धिप्रदा स्मृता ।
स्निग्धप्रदक्षिणाऽऽवर्तः श्रुतिप्रच्छादितध्वनिः ॥२३६॥
स नित्यमेव शुभकृद्यदन्यैर्वर्जितो गुणैः ।
प्रदीप्ते लेलिहानोऽग्नौ निर्धूमे सगुणे तथा ॥२३७॥
हृद्ये तुष्टिप्रदे चैव होतव्यं श्रियमिच्छता ।
अल्पतेजोऽल्परूपश्च विष्फुलिङ्गसमन्वितः ॥२३८॥
ज्वालाभ्रमविहीनश्च कृशानुर्नैव सिद्धिदः ।
अप्रवुद्धे सधूमे च जुहुयाद्यो हुताशने ॥२३९॥
कर्महानिर्भवेत्तस्य त्वाभिचारार्थमश्नुते ।
दुर्गन्धः पीतवर्णश्च अवलीढश्च योऽशुभः ॥२४०॥

## अथ षष्ठोऽध्यायः ।

मुनयः ।

पितृणां संविभागस्य विधिः कीदृक् फलं च किम् ।
तत्सर्वं मुनिशार्दूल वर्ण्यतां भवताऽधुना ॥१॥

नारदः ।

आराध्यस्याऽग्रतो विप्राः प्रत्यहं क्रियते तु यत् ।
विज्ञेयं संविभागं तमुत्तमं सर्वकर्मणाम् ॥२॥
संविभागात्पितृणां च भवत्यनृणवान् नरः ।
प्रयान्ति तृप्तिमतुलां तेन कर्मवशादपि ॥३॥
संविभागः पितृणां च यथा कार्यस्तथोच्यते ।
कुण्डस्य योनिनिकटे दक्षिणाग्रांस्तरे कुशान् ॥४॥
भद्रपीठसमीपे तु क्ष्मातले वा तदूर्ध्वतः ।
स्तरोपरि विकीर्याऽथ तिलान् सरजतोदकान् ॥५॥
क्रमेण भावयेत्तत्र पितॄनथ पितामहान् ।
तृप्तये ह्यथ सर्वेषां देवाय विनिवेद्य च ॥६॥
प्रोक्षितान्यन्नपात्राणि चत्वारि कवलानि वा ।
स्तरोर्ध्वे तु निधायाऽथ सम्पूज्याऽर्घ्यादिना ततः ॥७॥
क्रमेण चातुरात्मीयैर्मन्त्रैरप्ययययोगतः ।
ततस्तु नाम्ना गोत्रेण मन्त्रपूर्वं तिलोदकम् ॥८॥
सर्वेषामर्घ्यकलशान् प्रदद्याच्च यथाक्रमम् ।
तादर्थ्येनाऽथ चतुरो विनिवेश्याऽऽसनेषु च ॥९॥
लब्धलक्षात्परे तत्त्वे ब्राह्मणान् पाञ्चरात्रिकान् ।
प्राङ्मुखं द्वितयं चैव द्वितयञ्चाप्युदङ्मुखम् ॥१०॥

सम्पद्यभावे ऽप्येकं वा विनिवेश्योत्तराननम् ।
अथ तेषां क्रमात्कुर्यादर्चनं चातुरात्म्यवत् ॥११॥
अर्घ्यानुलेपनाद्यैस्तु भोगैर्मात्रावसानकैः ।
तत्तत्कालोचितैस्सर्वैरनुपादेयवर्जितैः ॥१२॥
तैश्चापि मौननिष्ठैस्तु भवितव्यं सुयन्त्रितैः ।
वाग्यता बद्धलक्षास्त्वप्यन्नमूर्तौ जनार्दने ॥१३॥
येऽश्नन्ति पितरस्तेन तृप्तिमायान्ति शाश्वतीम् ।
अतस्सव्यभिचारं तु मौनं वर्ज्यं क्रियापरैः ॥१४॥
शुभमव्यभिचारं यत्तत्कार्यं सर्ववस्तुषु ।
यदङ्गसङ्केतमयैरव्यक्तैर्नासिकाक्षरैः ॥१५॥
कृतमोक्षपुटैर्वद्धैर्मौनं तत्सिद्धिहानिकृत् ।
स्वयमेव स्वबुद्ध्या यत्सर्ववस्तुषु वर्तते ॥१६॥
शब्दैरनुपदिष्टैस्तु तन्मौनं विद्धि सर्वदा ।
तस्माद्धि श्राद्धभोक्तृणां दिव्ये वा पितृकर्मणि ॥१७॥
दद्यान्नैवेद्यवत्सर्वं मर्यादाऽभ्यन्तरेऽग्रतः ।
येनाऽऽचमनपर्यन्तं कालं तिष्ठन्ति वाग्यताः ॥१८॥
विधिनाऽनेन वै नित्यमथ यज्ञे तु वैष्णवे ।
संविभागः पितॄणां च कार्यस्तद्व्रविणैर्नरैः ॥१९॥
(१) कृत्वा तिलोदकान्तं वा फलमूलैस्त्वशक्तितः ।
(२)तदर्धं ग्रासमात्रं तु दद्याद्गोप्पथभैक्षुके ॥२०॥
यस्माद्दिव्यैर्महामन्त्रैर्दत्तं यत्पूजितेऽच्युते ।
पित्रर्थमल्पं वा भूरि तत्तेषामक्षयं भवेत् ॥२१॥

---

(१) "कृत्वा तिलोदकाद्यं वा फलमूलैः स्वशक्तितः ।" (पा)
(२) "तदर्थम् ।" (पा)

तमभ्यर्च्योऽर्घ्यगन्धाद्यैर्मूलमूर्तिगतं विभुम् ।
प्राङ्गणेषु च सर्वेषु प्रासादेष्वाश्रमेषु च ॥२२॥
प्रतिष्ठितेषु शोभार्थं विभवव्यूहमूर्तिषु ।
तथैव गोपुरद्वारदिङ्मूर्तिषु च मण्टपे ॥२३॥
सान्निध्यं चैवं यातासु शक्त्या नित्यं समर्चनम् ।
षोडशैरुपचारैर्वा द्वात्रिंशद्भिस्ततोऽधिकैः ॥२४॥
कुर्यात्तन्मूर्तिमन्त्रैश्च तथा नैमित्तिकेष्वपि ।
जपान्तं हवनान्तं वा स्नानाद्यं साधकस्ततः ॥२५॥
तत्तन्मूर्त्यग्रदेशस्थे कुण्डे होमं समाचरेत् ।
न कर्माऽर्चादिकं तत्र स्नपनं चोत्सवादिकम् ॥२६॥
बलिदानं च सर्वत्र पवित्रारोहणादिषु ।
नाचर्तव्यं विशेषेण परतन्त्रासु मूर्तिषु २७॥
नित्याभिषेकमात्रं तु तासु तत्र समाचरेत् ।
सितादिवर्णयुक्तासु प्रोक्षणं वा निवेदनम् ॥२८॥
मूलालयार्चया सार्धं परतन्त्रासु देशिकैः ।
पवित्रारोहणं कार्यमङ्गत्वेनाऽधिवासितैः ॥२९॥
पूरकेषु च सर्वेषु तथैवाऽऽग्रयणादिके ।
खगेशविष्वक्सेनादिपरिवारगणेष्वपि ॥३०॥
प्रतिष्ठितेषु गेहेषु पूज्यमाश्रयमूर्तिवत् ।
अमूर्तस्य खगेशस्य विष्वक्सेनादिकस्य तु ॥३१॥
कुमुदादिगणेशानां द्वारावरणवासिनाम् ।
अन्येषां परिवाराणां महापीठनिवासिनाम् ॥३२॥
अग्रे नित्योत्सवार्चायाः दद्यात्काललये बलिम् ।
साकारो वा निराकारो विष्वक्सेनो गणैस्सह ॥३३॥

यद्वा समर्चनीयश्च वल्यन्ते शिष्टवस्तुभिः ।
नित्योत्सवं ततः कुर्यात्सर्वालङ्कारसंयुतम् ॥३४॥

प्राकारद्वारदेवानां बलिदानपुरस्सरम् ।
तद्विधानं प्रवक्ष्यामि शृणुध्वं मुनिपुङ्गवाः ! ॥३५॥

कृतेन येन भक्तानामभीष्टं जायते फलम् ।
नित्योत्सवार्थं विम्बं तु सौवर्णं राजतं तु वा ॥३६॥

ताम्रजं पैत्तलं वाऽथ नात्युच्चं तच्चतुर्भुजम् ।
मूलवेराऽनुरूपं च यदेव स्थापितं पुरा ॥३७॥

वस्त्राऽऽभरणमालैश्च यथाशोभमलङ्कृतम् ।
मूलविम्बगतां शक्तिं तस्मिन्नारोप्य मन्त्रतः ॥३८॥

समभ्यर्च्योऽर्घ्यपुष्पाद्यैर्भोगैर्धूपान्तिमैस्ततः ।
आप्तैराराधिते देवे स्वयंव्यक्ताऽऽलयादिषु ॥३९॥

साधकं वरयेदन्यं बलिदानादिकर्मणि ।
पुरा गर्भगृहद्वारि तथा चैवाऽग्रमण्टपे ॥४०॥

घण्टानादसमेतेन दीपेन ज्वलितेन तु ।
द्वार्स्थानर्घ्यादिधूपान्तैस्समभ्यर्च्याऽर्घ्यवारिणा ॥४१॥

दत्वाऽर्हणं ततश्चाऽन्नं तर्पणाम्भस्ततः परम् ।
ताम्बूलं च क्रमाद्त्वा तत्तन्मन्त्रैरनुक्रमात् ॥४२॥

स्वर्णादिनिर्मितं यानं पुरस्तात्प्रथमाऽङ्कणे ।
सुगन्धपुष्पप्रभया क्षौम्यैर्माल्यैस्सितादिभिः ॥४३॥

यथाशोभमलङ्कृत्य तस्मिन् वल्यर्थकौतुकम् ।
प्राचीमुखं समारोप्य प्राङ्कणेषु प्रदक्षिणम् ॥४४॥

आतपत्रैस्सिताद्यैश्च मायूरैः केतुयष्टिभिः ।
पताकाभिश्चाऽमरैश्च तालवृन्तैश्च शोभनैः॥४५॥

गणिकादेवदासीभिर्गायकैर्वाद्यसञ्चयैः ।
भेरीपटहघोषैश्च श्रुतिघोषसमन्वितैः ॥४६॥

एवमाद्यैरलङ्कारैर्गोमयेनोपलेपिते ।
मण्डले हस्तमात्रे तु बलिदानपुरस्सरम् ॥४७॥

द्वारावरणदेवानां ध्यातॄणां वा स्वदिक्षु च ।
वक्ष्यमाणविधानेन नियतोत्सवमाचरेत् ॥४८॥

पीठोर्ध्वे विष्णुभूतानां सगणानामथाऽर्चनम् ।
कृत्वा समुत्किरेत् शेषं तृप्त्यर्थं सोदकं बलिम् ॥४९॥

पीठं प्रदक्षिणं नीत्वा चतुर्धा वा द्विधाऽथ वा ।
सन्तोष्य नृत्तगीताद्यैरेवमन्तः प्रवेशयेत् ॥५०॥

प्राङ्गणेषु विशालेषु बहिष्ठेषु च सादरम् ।
मण्डितं रथमारोप्य परिभ्रमणमाचरेत् ॥५१॥

यानादेरवरोप्याऽथ पादुके विनिवेद्य च ।
अग्रमण्टपमूमिष्ठे भद्रपीठे निवेश्य च ॥५२॥

पाद्यार्घ्याचमनाऽम्भोभिश्चन्दनाद्यनुलेपनैः ।
माल्यैर्नानाविधैश्चापि धूपैस्ताम्बूलपश्चिमैः ॥५३॥

अभ्यर्च्य श्रमशान्त्यर्थं स्वस्थाने सन्निवेशयेत् ।
आदौ निवेशितां शक्तिं तन्मूले विनियोज्य च ॥५४॥

तमभ्यर्च्याऽर्घ्यगन्धाद्यैः प्रणमेत् स्तुतिपूर्वकम् ।
त्रिकालं यत्र विधिवत्क्रियते नियतोत्सवः ॥५५॥

तत्र सर्वसमृद्धिस्स्याद्राज्ञो राष्ट्रस्य चाऽनिशम् ।
अभावे बलिबिम्बस्य हेतुना सन्निधीकृते ॥५६॥

कूर्चेन वाऽन्नमूर्त्या वा कुर्यान्नित्योत्सवं ततः ।
निश्शेषस्योपसंहारं कृत्वा चाऽर्घ्यादिकस्य च ॥५७॥

नत्वा स्तुत्वा च देवेशं ततः पाद्यप्रतिग्रहात् ।
पादोदकं समादाय विग्रहं सेचयेत्स्वकम् ॥५८॥
भुक्तानि पत्रपुष्पाणि विदध्यान्मूर्धनि स्वके ।
पुष्पार्घ्यगन्धपूर्वाणां देवयज्ञे कृते सति ॥५९॥

विनयादाहृतानां च भक्तानां मन्त्रसेविनाम् ।
मूर्ध्नि सन्धारणाच्छ्श्वद्दौर्भाग्यं क्षयमेति च ॥६०॥
कीर्तिं कान्तिं श्रियारोग्यसिद्धिं समुपयाति च ।
पश्चाच्छरीरयात्रार्थमभ्यर्च्य परमेश्वरम् ॥६१॥

लब्धानुज्ञस्तु वै कुर्यादनुयागं यथाविधि ।
भोज्यं नैवेद्यपूर्वं तु सर्वमादाय पात्रगम् ॥६२॥

विनिवेद्य च देवाय पवित्रीकृत्य चाऽम्भसा ।
सत्यरूपा बलक्ष्या चाऽप्यन्नदोषक्षयंकरी ॥६३॥
चेतसा चातुरात्मीया भावनीया च भावना ।
तथाऽऽत्माऽध्यक्षसंज्ञोऽन्ने साधुभावे व्यवस्थितः ॥६४॥

प्रद्युम्नो भगवान् रूपे एतद्वीर्ये तु लाङ्गली ।
भोक्ता महात्मा भगवान् वासुदेवस्स्वयं त्वजः ॥६५॥

चतुःप्रणवसङ्घ्रसं ततोऽम्भश्चुलकं पिबेत् ।
वक्त्रकुण्डे तु तेनैवाप्यन्नाहुतिचतुष्टयम् ॥६६॥
हुत्वा चाऽभिमतैर्ग्रासैस्ततोऽश्नीयाद्यथारुचि ।
समाचम्य पुनर्यायात्प्रयतो भगवद्गृहम् ॥६७॥
मनो बुद्ध्यभिमानेन सह न्यस्य धरातले ।
कूर्मवच्चतुरः पादान् शिरस्तत्रैव पञ्चमम् ॥६८॥
प्रदक्षिणसमेतेन त्वेवंरूपेण सर्वदा ।
अष्टाङ्गेन नमस्कुर्यादष्टाक्षरपुरस्सरम् ॥६९॥

एवमष्टाङ्गयजनमनुयागोन्तमीरितम् ।
अन्तःकरणयागादि यावदात्मनिवेदनम् ॥७०॥

तदाद्यमङ्गयागस्य नाम्नाऽभिगमनं महत् ।
पूजनं चाऽर्घ्यपुष्पाद्यैर्भोगैर्यदखिलं मुने ॥७१॥

बाह्योपचारैस्तद्विद्धि भोगसंज्ञं तु नारद ।
मध्वाज्याद्येन दध्ना च पूजा च पशुनाऽर्चया ॥७२॥

तत्तृतीयं हि यागाङ्गं तुर्यमन्त्रेन पूजनम् ।
निवेदितस्य यद्दानं पूर्वोक्तविधिना मुने ! ॥७३॥

सम्प्रदानं तु तन्नाम यागाङ्गं पञ्चमं स्मृतम् ।
वह्निसन्तर्पणं षष्ठं पितृयागस्तु सप्तमम् ॥७४॥

प्राणाग्निहवनं नाम्ना त्वनुयागस्तदष्टमम् ।
एवमष्टाङ्गसहितां पूजां कुर्याद्यथाविधि ॥७५॥

यत्र द्वादशकालेज्या कर्तव्या ऽऽभूतिविस्तरात् ।
तत्र प्राभातिकीं कुर्यात्पूजामष्टाङ्गसंयुताम् ॥७६॥

अङ्गद्वयं तु पाश्चात्यं विना यातां समाप्य च ।
पितॄणां संविभागं च अनुयागं यथोदितम् ॥७७॥

देशिकस्त्वेज्यया कुर्यान्नित्यं माध्यन्दिनार्चने ।
त्रिकालेष्वेकमष्टाङ्गं षडङ्गं चाचरेद्द्वयम् ॥७८॥

योगार्थिनां च स्वाध्यायं भोगमध्यात्मसंज्ञितम् ।
तत्तत्कालेषु कुर्वीत स्वाध्यायमधुनोच्यते ॥७९॥

अष्टाङ्गेन नमस्कृत्य ह्युपविश्याऽग्रतो विभोः ।
आगमाध्ययनं कुर्यात्तद्वाक्यार्थविचारणम् ॥८०॥

प्राप्तेऽथ सन्ध्यासमये स्नात्वा वा जघनाऽवधि ।
क्षालयित्वा ततः कुर्याद्वाससां परिवर्तनम् ॥८१॥

सायन्तनार्चनं कुर्यात् षडङ्गं बलिपश्चिमम् ।
तत्तत्कालेषु कुर्वीत यथाशास्त्रोदितेन च ॥८२॥

जपं कृत्वा यथाशक्ति स्वासाद्य शयनं ततः ।
समाधाय वहिर्देवं निरालम्बपदे स्थितम् ॥८३॥

अप्रयत्नेन वै तावदनुरुद्धेन चेतसा ।
सह तेनैव वै निद्रा यावदभ्येति साम्प्रतम् ॥८४॥

समुत्थायाऽर्धरात्रेऽथ जितनिद्रो जितश्रमः ।
कमण्डलुस्थितेनैव समाचम्य तु वारिणा ॥८५॥

गुरुं देवं नमस्कृत्य उपविश्याऽजिनासने ।
योगाभ्यासं ततः कुर्याद्यथाविधि मुनीश्वराः ॥८६॥

समाधायाऽऽत्मनाऽऽत्मानं एवं त्यक्त्वा जपक्रियाम् ।
ध्यातृज्ञेयविभागेन यावत्तन्मयतां व्रजेत् ॥८७॥

सदा संवेद्यनिर्मुक्ते समाधौ लभते स्थितिम् ।
अभ्यासाद्भगवद्योगी ब्रह्म सम्पद्यते तदा ॥८८॥

तत्र श्रमजयं कुर्यात्त्यक्त्वा ध्यानासने क्रमात् ।
शय्यासनं निवेद्याऽथ मूलमूर्तेरनन्तरम् ॥८९॥

लक्ष्म्यादिशक्तियुक्तस्य यागमूर्तिगतस्य च ।
तस्मिन्नारोपयेद्देवं सर्वाङ्गपरिशोभिते ॥९०॥

अर्घ्यं पाद्यं तथाऽऽचामं परिग्रहसमन्वितम् ।
दत्वा समालभेत्पश्चाच्चन्दनाद्यनुलेपनैः ॥९१॥

सुगन्धपुष्पमाल्यादिर्दीपधूपे निवेद्य च ।
भक्ष्याण्यपूपपूर्वाणि सक्षीराणि फलानि च ॥९२॥

तर्पणाम्भश्च ताम्बूलं साङ्गं सद्गन्धभावितम् ।
निवेद्य देवदेवाय विभवानुगुणं ततः ॥९३॥

सर्वं च विन्यसेत्पश्चात्तस्मिन् कर्म कृतं च यत् ।
तुष्टं गृहीतं तत्पूर्णं भावयेद्दक्षिणं करम् ॥९४॥
तन्मध्ये निष्कलं मन्त्रं सर्वं यत्किरणाकुलम् ।
योगोत्थां फलसम्पत्तिं लक्ष्मीरूपां विचिन्तयेत् ॥९५॥
मूलमन्त्रं समुच्चार्य पाणिमध्ये तथा स्मरेत् ।
भूयश्च निष्कलं मन्त्रं तस्मादुपरि भावयेत् ॥९६॥
सशीर्षे जानुनी भूमौ कृत्वा विष्णोर्निवेदयेत् ।
प्रसादाऽभिमुखेनाऽथ तेन तच्चाऽऽत्मसात्कृतम् ॥९७॥
भावनीयं द्विजश्रेष्ठाः ! परितुष्टेन चादरात् ।
सन्न्यासं सञ्चयं वाऽथ कृत्वा सम्यक्तु तस्य च ॥९८॥
मन्त्ररूपानुकारिण्या मुद्रणीयं च मुद्रया ।
फलार्थं प्रसवं येन नैति सन्न्यासकारिणाम् ॥९९॥
फलपर्यवसाने च काममागमचोदितम् ।
भर्तुर्नो युज्यते येन सिद्धावैस्तु फलार्थिनाम् ॥१००॥
नित्यं प्रतिष्ठितं बिम्बं विना स्थलजलादिकान् ।
विसर्जनं ततः कुर्याद्दत्वाऽर्घ्यं धूपसंयुतम् ॥१०१॥
भोगस्थानगता मन्त्राः पूजिता ये यथाक्रमम् ।
मुख्यमन्त्रशरीरं तु सम्प्रविष्टांश्च संस्मरेत् ॥१०२॥
ज्वाला ज्वालाऽन्तरे यद्वत्समुद्रस्येव निम्नगाः ।
तन्मन्त्रं विग्रहं स्थूलं सर्वमन्त्रास्पदं द्विजाः ! ॥१०३॥
प्रविष्टं भावयेत्सूक्ष्मे ह्यध्यक्षे ह्युभयाऽऽत्मके ।
परे प्रागुक्तरूपे तु तं सूक्ष्ममुभयात्मकम् ॥१०४॥
तस्मात्परं स्फुरद्रूपं निराधारपदाश्रितम् ।
दर्पणं दर्शयित्वा तु निर्मलं तस्य चाऽग्रतः ॥१०५॥

सन्धिमार्गेण हृत्पद्मं सम्प्रविष्टं तु भावयेत् ।
स्मृत्वा परात्मना तं च स्वसंविद्गगने हृदि ॥१०६॥
विश्रान्तं भावयेद्देवं स्वभावेन समन्वितम् ।
कर्मार्चादिषु बिम्बेषु षट्सु नित्यादिसिद्धये ॥१०७॥
प्रतिष्ठितेषु विधिवन्नित्यं प्रागादिकेऽर्चने ।
तच्छक्त्या योजितां शक्तिं मूलबिम्बाद्यथाविधि ॥१०८॥
समभ्यर्च्याऽर्घ्यपुष्पाद्यैः ताम्बूलाद्यैः पुरोदितैः ।
पुनरारोपयेन्मूले तत्र तत्र नियोजिताम् ॥१०९॥
पूजार्थं कर्मबिम्बादौ नित्यनैमित्तिकादिषु ।
प्राप्ते तु तत्तत्कर्मादौ मूलादावाह्य मन्त्रवित् ॥११०॥
समाप्य तेषु तत्कर्माण्यारब्धानि यथार्थतः ।
समाप्य मूलबिम्बे तु तेभ्यस्तत्र विसर्जयेत् ॥१११॥
मंन्त्रानर्घ्यादिपात्रस्थान् विसृज्य प्राक्प्रयोगतः ।
शेषमर्घ्यादिकं सर्वं भुक्तपूर्वेण वै सह ॥११२॥
पाणिना तोयपूतेन विष्वक्सेनाय चाऽर्च्य च ।
न्यासद्वयं च संगृह्य मनसा च स्वविग्रहात् ॥११३॥
निश्शेषस्योपसंहारं कुर्यादर्घ्यादिकस्य च ।
यागोद्देशात्तथा कुण्डात् स्तराद्यस्याऽखिलस्य च ॥११४॥
सहोपलेपनेनैव सर्वमम्भसि निक्षिपेत् ।
कवाटबन्धनं कुर्यान्मन्त्रं कवचमुच्चरन् ॥११५॥
नियोज्य तत्र रक्षार्थं चक्रं च विहगेश्वरम् ।
स्वेच्छया त्वागतो मन्त्री प्रातरुत्थाय पूर्ववत् ॥११६॥
यथोक्तं सकलं कुर्यात्प्रबोधयजनादिकम् ।
सकृत्त्र्यहं च सप्ताहं पक्षं मासमथापि वा ॥११७॥

यो यजेद्विधिनाऽनेन भक्तिश्रद्धासमन्वितः ।
सोऽपि यायात्परं स्थानं किं पुनर्योऽत्र संस्थितः ॥११८॥
यावज्जीवावधिं कालं बद्धकक्ष्यो महामतिः ॥

इति श्रीपाञ्चरात्रे ईश्वरसंहितायाम्
पितृसंविभागादिशयनोत्सवान्तविधिर्नाम
षष्ठोऽध्यायः ।

---

## अथ सप्तमोऽध्यायः ।

---

मुनयः ।

भगवन्मुनिशार्दूल ! सर्वशास्त्रविशारद ! ।
पुरा प्रधानमूर्तेर्वै पूजनात्समनन्तरम् ॥१॥
प्राङ्गणेषु च सर्वेषु प्रासादेष्वाश्रयेषु च ।
प्रतिष्ठितानां बिम्बानां पूजनं समुदीरितम् ॥२॥
तत्र श्रीभ्वादिदेवीनां पूजनं तु विशेषतः ।
देवर्षे ! श्रोतुमिच्छामो विस्तरेण प्रकाशय ॥३॥

नारदः ।

शृणुध्वं मुनयस्सर्वे श्रीभूदेव्यर्चनं परम् ।
येन विज्ञातमात्रेण वाञ्छितान् लभते नरः॥४॥
भोक्तृशक्तिः स्मृता लक्ष्मीः पुष्टिर्वै कर्तृसंज्ञिता ।
भोगार्थमवतीर्णस्य तस्य लोकानुकम्पया ॥५॥
उदितं सह तेनैव शक्तिद्वितयमव्ययम् ।
नानात्वेन हि वै यस्य परिणामः प्रकाशितः ॥६॥

तत्र श्रियादिदेवीनां रूपत्रयमुदाहृतम् ।
श्रीवत्सगा योगलक्ष्मीर्भोगलक्ष्मीस्तु पार्श्वगा ॥७॥
वीरलक्ष्मीः पृथक्स्थाने स्वातन्त्र्येण प्रतिष्ठिता ।
एवमन्यासु देवीषु रूपत्रयमुदाहृतम् ॥८॥
योगलक्ष्मीभोगलक्ष्म्योर्देवेन सह पूजनम् ।
वीरलक्ष्मीं पृथग्गेहे पूजयेत यथाविधि ॥९॥
यत्र सा पूज्यते देवी तत्र श्रीर्निश्चला भवेत् ।
तद्विधानं प्रवक्ष्यामि शृणुध्वं मुनिपुङ्गवाः ! ॥१०॥
प्रथमावरणे वाऽपि द्वितीयावरणेऽपि वा ।
तृतीयावरणादौ वा श्रियः स्थानं प्रकल्पयेत् ॥११॥
तुष्टिं पुष्टिं च सावित्रीं वाग्देवीं च मुनीश्वराः ! ।
तद्विमानचतुर्दिक्षु दिङ्मूर्तीः परिकल्पयेत् ॥१२॥
कोणेषु वैनतेयं वा सिंहं वाऽपि यथारुचि ।
तदन्तर्ब्रह्मभागे तु दिव्ये वा स्थापयेत् श्रियम् ॥१३॥
चतुर्भुजामुदाराङ्गीं सर्वलक्षणसंयुताम् ।
पद्मासनेनोपविष्टां पद्मपत्रायतेक्षणाम् ॥१४॥
मुख्याभ्याञ्चैव हस्ताभ्यां अभीतिवरदायिनीम् ।
जघन्याभ्यां तु हस्ताभ्यां दिव्यपङ्कजधारिणीम् ॥१५॥
त्रिकालमर्चयेद्देवीं तन्मन्त्रेण द्विजोत्तमाः ।
प्रणवं पूर्वमुद्धृत्य श्रीबीजं तदनन्तरम् ॥१६॥
श्रियै नमष्षडर्णोऽयं मन्त्रस्सर्वार्थसिद्धिदः ।
श्रां श्रीं श्रूं श्रैं श्रौं श्र इति योजयेद्धृदयादिभिः ॥१७॥
मन्त्रेणाऽनेन वै पूर्वं स्नात्वा देशिकसत्तमः ।
प्रक्षाल्य पाणिपादौ च त्वाचम्य च यथाविधि ॥१८॥

प्रासादं सम्प्रविश्याऽथ कुर्यात्सर्वं यथोचितम् ।
स्वासने सुखमासीनः प्राङ्मुखो वाऽप्युदङ्मुखः ॥१९॥
करशुद्धिं च दिग्बन्धं प्राणायामं समाप्य च ।
धारणाद्वितयेनाऽथ शोधयित्वा निजं वपुः ॥२०॥
श्रीमन्त्रं तु ततस्साङ्गं हस्ते देहे च विन्यसेत् ।
किरीटं वनमालां च कमलद्वयमेव च ॥२१॥
हस्तादौ पूर्ववन्न्यस्य बध्वा वै पद्ममुद्रिकाम् ।
तादात्म्यमवलम्ब्याऽथ हृदयाम्भोरुहोदरे ॥२२॥
स्वानन्दधामनिष्ठस्य देवस्य परमात्मनः ।
श्रीवत्सात्तु श्रियं देवीं सर्वलक्षणसंयुताम् ॥२३॥
अवतार्याऽमृतैर्भोगैर्जपान्तं प्राग्वदर्चयेत् ।
ततो वहिर्यजेद्देवीं प्रागुक्तैर्भोगसञ्चयैः ॥२४॥
तदर्थं कल्पयेत्प्राग्वदर्घ्याद्यं पात्रपञ्चकम् ।
प्राग्वत्स्वदेहविन्यस्तान् मन्त्रानभ्यर्च्य मन्त्रवित् ॥२५॥
अर्घ्याद्यैर्धूपपर्यन्तैर्द्वारयागमथाऽऽचरेत् ।
वास्त्वीशं क्षेत्रनाथं च द्वारलक्ष्मीं तथैव च ॥२६॥
चण्डीं चैव प्रचण्डीं च गर्भद्वारस्य पार्श्वयोः ।
समभ्यर्च्य विमानस्य पूजनं च समाचरेत् ॥२७॥
लोकाध्वतत्त्वविन्यासं प्राग्वदेव समाचरेत् ।
देवतान्यसने त्वेष विशेषः श्रूयतामिह ॥२८॥
यजेन्मसूरकाधारे धर्माद्यं यच्चतुष्टयम् ।
मूर्तयो वासुदेवाद्याः केशवाद्याश्च मूर्तयः ॥२९॥
पद्मनाभादयश्चापि यत्र पूज्या मुनीश्वराः ।
तत्तच्छक्तीस्तत्र तत्र यजेत्तानेव वा क्रमात् ॥३०॥

यद्वा तच्छक्तिभिस्सार्धं पूजयेत्तान् यथाक्रमम् ।
लक्ष्मीः कीर्तिर्जया माया व्यूहशक्त्य ईरिताः ॥३१॥
श्रीश्च वागीश्वरी कान्तिक्रियाशक्तिविभूतयः ।
इच्छा प्रीती रतिश्चैव माया धीर्महिमेति च ॥३२॥
शक्तयः केशवादीनां क्रमेण परिकीर्तिताः ।
धीस्तारा वारुणी शक्तिः पद्मा विद्या तथैव च ॥३३॥
साङ्ख्या विश्वा खगा भूर्गौर्लक्ष्मीर्वागीश्वरी तथा ।
अमृता हरिणी छाया नारसिंही तथा सुधा ॥३४॥
श्रीकान्तिवीराः कामा च सत्या शान्तिस्सरोरुहा ।
माया पद्मासना खर्वा विक्रान्तिर्नरसम्भवा ॥३५॥
नारायणी हरिप्रीतिर्गान्धारी काश्यपी तथा ।
वैदेर्हा वेदविद्या च पद्मिनी नागशायिनी ॥३६॥
त्रिंशच्चाऽष्टाविमा देव्यः पद्मनाभादिशक्तयः ।
यत्राऽन्या भगवन्मूर्तिः पुण्या तत्र श्रियं यजेत ॥३७॥
अन्यान् विमानदेवांस्तु पूर्वोक्तानेव पूजयेत् ।
विमानस्य चतुर्दिक्षु कल्पितां च विशेषतः ॥३८॥
तुष्टिं पुष्टिं च सावित्रीं वाग्देवीं च समर्चयेत् ।
अथाऽग्रमण्डपद्वारे दक्षिणे तु बलाकिनी ॥३९॥
वनमालिन्युदग्भागे पूजनीये क्रमेण तु ।
कृत्वैवं द्वारयागं तु कल्पयेदासनं ततः ॥४०॥
सर्वाधारमयं देवं पीठस्याऽधः फणीश्वरम् ।
तत्कोणेषु च धर्मादींस्तदूर्ध्वे व्यक्तपङ्कजम् ॥४१॥
यामत्रयं ततस्तस्मिन् यजेदर्घ्यादिभिः क्रमात् ।
गणनाथादिकांश्चाऽथ समभ्यर्च्य यथाविधि ॥४२॥

ततः श्रियं समावाह्य मन्त्रन्यासादिकं चरेत् ।
सन्निधानादिकं कृत्वा पद्ममुद्रां प्रदर्शयेत् ॥४३॥
मन्त्रान् विग्रहविन्यस्तान् लयोक्तविधिनाऽर्चयेत् ।
भोगयागश्च कर्तव्यः पद्मपीठतलोपरि ॥४४॥
प्रागादिपद्मपत्रेषु हृदयादीनि पूर्ववत् ।
विदिग्दळेषु चैवाऽस्त्रं नेत्रं केसरजालकम् ॥४५॥
पीठोपरि दलाद्बाह्ये त्वाग्नेयेशानकोणयोः ।
किरीटं वनमालां च यातुवायव्यकोणयोः ॥४६॥
कमलद्वितयं चाऽपि विन्यसेत्तदनन्तरम् ।
ततो ध्यानं प्रवक्ष्यामि शृणुध्वं द्विजसत्तमाः! ॥४७॥
अभ्यन्तरे विमानस्य दिव्ये सरसिजासने ।
पद्मासनेनोपविष्टां फुल्लपद्मोदरप्रभाम् ॥४८॥
सर्वलक्षणसम्पन्नां सर्वालङ्कारभूषिताम् ।
चलद्विरेफपटलसमाक्रान्ताऽलकावलिम् ॥४९॥
विलसद्रत्नखचितकिरीटपरिशोभिताम् ।
अर्धचन्द्रललाटस्थराजमानललाटिकाम् ॥५०॥
प्रबुद्धोत्पलविस्तीर्णलोचनां सुस्मितराननाम् ।
कटाक्षैः करुणापूर्णैर्जगदाप्यायकारिणीम् ॥५१॥
दर्पणोदरसङ्काशविलसद्गण्डमण्डलाम् ।
प्रस्फुरन्नासिकावंशमौक्तिकां भ्रलतोज्वलाम् ॥५२॥
मुक्ताफलाभरदनां विलसद्विद्रुमाधराम् ।
रत्नताटङ्कविलसत्कर्णद्वयमनोहराम् ॥५३॥
पूर्णचन्द्रप्रतीकाशवदनां कम्बुकन्धराम् ।
रत्नग्रैवेयकोपेतां माङ्गल्यमणिभूषिताम् ॥५४॥
चतुर्भुजां पीवरांसां मुक्ताहारैश्च भूषिताम् ।

सुकर्कशदृढोत्तुङ्गपीनवृत्तघनस्तनीम् ॥५५॥
विचित्रकञ्चुकेनाढ्यां नानाभूषाविभूषिताम् ।
मुख्यदक्षिणहस्तेन भीतानामभयप्रदाम् ॥५६॥
सव्येन पाणिपद्मेन श्रितानां वरदायिनीम् ।
पश्चाद्दक्षिणहस्तेन पद्मकुड्मलधारिणीम् ॥५७॥
तथाविधेन वामेन दधानां फुल्लपङ्कजम् ।
मणिकङ्कणकेयूरनानारत्नाङ्गुलीयकैः ॥५८॥
मण्डितां दिव्यवसनां मेखलाद्यैरलङ्कृताम् ।
गम्भीरनाभिं त्रिवलीविभूषिततनूदराम् ॥५९॥
विचित्रमणिमञ्जीरविलसत्पादपल्लवाम् ।
दिव्यगन्धानुलिप्ताङ्गीं दिव्यमाल्यविभूषिताम् ॥६०॥
पूर्णेन्दुयुततुल्याभां सौन्दर्यामृतवारिधिम् ।
वीरलक्ष्मीमिमां ध्यायेत्सर्वाभीष्टप्रदायिनीम् ॥६१॥
एवं ध्यात्वा श्रियं देवीं हृदयादींश्च पूर्ववत् ।
किरीटं वनमालां च तथैव कमलद्वयम् ॥६२॥
ध्यात्वाऽथ पूजनं कुर्यादासनाद्यैर्यथोदितैः ।
चतुष्षष्ट्युपचारैर्वा द्वात्रिंशद्भिस्तु वा द्विजाः ॥६३॥
हविर्निवेदयेद्देव्यै पृथक् देवार्पितं तु वा ।
जपान्तं पूजयेद्देवीं होमान्तं वा यथाविधि ॥६४॥
पारतन्त्र्याद्बलिं तत्र कदाऽपि न समाचरेत् ।
मूलालयार्चया सार्धं तस्या देशिकसत्तमैः ॥६५॥
पवित्रारोहणं कार्यमङ्गत्वेनाधिवासितैः ।
तज्जन्मर्क्षादिके कुर्यात्स्नपनञ्चोत्सवादिकम् ॥६६॥
पारतन्त्र्येऽपि वै लक्ष्म्या नवरात्रिषु चोत्सवम् ।

अङ्कुरार्पणपूर्वं तु रक्षाबन्धपुरस्सरम् ॥६७॥
चतुःस्थानार्चनयुतं कुर्याद्राष्ट्राभिवृद्धये ।
बलिदानं ध्वजारोहं तीर्थं तत्र विवर्जयेत् ॥६८॥
पारतन्त्र्ये विधिरयं स्वातन्त्र्ये तूच्यतेधुना ।
ग्रामे वा नगरे वापि पर्वते वा नदीतटे ॥६९॥
सप्राकारं श्रियः स्थानं सविमानं प्रकल्पयेत् ।
तत्र श्रियं प्रतिष्ठाप्य तन्मन्त्रेण यथाविधि ॥७०॥
श्रीवत्साद्देवदेवस्य श्रियं बिम्बहृदम्बुजे ।
समावाह्य तु मन्त्रेण साङ्गेन सकलीक्रियाम् ॥७१॥
कृत्वा सम्पूजयेद्देवीं भोगैस्तु हविरन्तिमैः ।
अथ श्रियं त्वग्निमध्ये प्रीणयेत्समिदादिभिः ॥७२॥
संस्कृत्य विधिवत्कुण्डं वह्निमुत्पादितं तथा ।
संस्कृताज्यस्य विप्रुड्भिस्संस्पृशेदिन्धनादिकम् ॥७३॥
सन्तर्पणं तथाग्नेश्च तस्मिन् मन्त्रासनादिकम् ।
तन्मध्ये हृदयाद्देवीं समावाह्य यथाविधि ॥७४॥
समिद्भिश्चापि नित्याभिः काम्यैश्च जुहुयात्तथा ।
स्विष्टकृद्धवनं चाथ प्रायश्चित्ताहुतिं त्वपि ॥७५॥
पूर्णाहुत्यादिकं कृत्वा ततो लक्ष्मीं हृदम्बुजे ।
विसृज्य परिवाराणां होमं कृत्वा यथाविधि ॥७६॥
प्रविश्य तु ततो देव्या मन्दिरं यजनास्पदम् ।
समर्पणं च होमस्य पितॄणां तर्पणं त्वपि ॥७७॥
बलिदानं च भूतानामिष्टशिष्टजनस्य च ।
प्रदानं यज्ञशीलानां कारूणां भावितात्मनाम् ॥७८॥
अनुयागं च विधिवन्नैवेद्यप्राशनादिकम् ।

पूर्ववत्सकलं कुर्याद्भोगमोक्षप्रसिद्धये ॥७९॥
अत्रैवं बलिदानादौ परिवारार्चनक्रमः ।
प्रथमावरणे पूज्याः प्रागादौ कुमुदादिकाः ॥८०॥
घिर्भीपिकां शाङ्करीं च यजेत्तद्वारपार्श्वयोः ।
द्वितीयावरणे पश्चादुपेन्द्रादीन् प्रपूजयेत् ॥८१॥
तद्वारपार्श्वयोश्चैव शङ्खपद्मनिधी यजेत् ।
तृतीयावरणे पश्चादिन्द्रादीन् परिपूजयेत् ॥८२॥
तद्वारपार्श्वयोः पूज्यौ नलकूबरजृम्भलौ ।
चतुर्थावरणे चैव वज्रादीन् परिपूजयेत् ॥८३॥
तद्वारदक्षिणे पार्श्वे शिविकुण्डलमर्चयेत् ।
उत्तरे मणिभद्रं च पञ्चमावरणे ततः ॥८४॥
लोहिताक्षादिकानिष्ट्वा ततस्तद्वारपार्श्वयोः ।
जयां च विजयां चैव पूजयेत्तु यथाक्रमम् ॥८५॥
महापीठे तु विधिवत्कुमुदादीन् समर्चयेत् ।
सुमुखीं पूजयेद्विष्वक्सेनस्थाने चतुर्भुजाम् ॥८६॥
वेत्रहस्तां दक्षिणेन तर्जनीं चापि बिभ्रतीम् ।
पश्चाद्दक्षिणहस्ताभ्यां दधानां पङ्कजद्वयम् ॥८७॥
एवं सर्वपरीवारान् बलिदानादिभिर्यजेत् ।
पवित्रारोहणादीनि पृथक्कुर्याद्यथाविधि ॥८८॥
गरुडध्वजमारोप्य कुर्याच्चैव महोत्सवम् ।
चतुस्स्थानार्चनादीनि श्रीमन्त्रेण समाचरेत् ॥८९॥
एवमुक्तो मुनिश्रेष्ठाः ! श्र्यादिदेव्यर्चनक्रमः ।
एवं पुष्ट्यादिदेवीश्च पूजयेत्स्वस्वमन्त्रतः ॥९०॥

मुनयः ।

भगवन् ! सर्वशास्त्रज्ञ ! शरणागतवत्सल !

श्रुतं श्रियाद्यर्चनं तु त्वत्तोऽस्माभिर्मुनीश्वर ! ॥९१॥
सुदर्शनार्चनं त्वद्य वक्तुमर्हसि नः प्रभो !

नारदः ।

शृणुध्वं मुनयस्सर्वे सावधानेन चेतसा ॥९२॥
सौदर्शनार्चनविधिमैहिकामुष्मिकप्रदम् ।
सौदर्शनीया मन्त्राश्च मूर्तयश्चाप्यनेकधा ॥९३॥
तत्राभिमतमन्त्रेण मूर्तिं चाभिमतां यजेत् ।
दिव्याद्यायतने चित्रे प्राङ्गणादौ तु कुत्रचित् ॥९४॥
ग्रामादौ तु नदीतीरे विपिने पर्वतेपि वा ।
प्रासादं मण्डपं वाथ सचित्रं सर्वतोमुखम् ॥९५॥
प्राङ्मुखं वापि कुर्वीत सगवाक्षकवाटकम् ।
एकादितलसंयुक्तं चक्रलाञ्छनलाञ्छितम् ॥९६॥
मुखभद्रसमोपेतमारोहणसमन्वितम् ।
सप्राकारं समासाद्य प्रासादाभ्यन्तरे तथा ॥९७॥
बिम्बं सौदर्शनं तत्र प्रतिष्ठाप्य यथाविधि ।
यजेत्रिकालं प्रयतो देशिकस्तस्य मंन्त्रतः ॥९८॥
तत्राधिव्याधिदुर्भिक्षभूतवेतालदुर्ग्रहाः ।
न बाधन्ते जनान् सर्वान् शुभं भवति नित्यशः ॥९९॥
तत्रार्चनविधानं तु शृणुध्वं मन्त्रपूर्वकम् ।
सुगुप्ते भूतले शुद्धे वर्णचक्रं परिस्तरेत् ॥१००॥
अकारादि क्षकारान्तं सर्वार्णमयरूपिणम् ।
स्वक्षनाभ्यरनेमीभिः प्रंधीभिश्चाप्यलङ्कृतम् ॥१०१॥
कारणं सर्वमन्त्राणां क्षेत्रे प्रणवमालिखेत् ।
अकाराद्या विसर्गान्ताः स्वरा नाभ्यङ्गमाश्रिताः ॥१०२॥
ककारादीनि भान्तानि तदराणां त्रिरष्टके ।

मादिहान्तानि नेमौ तु क्षार्णं प्रधिगणे स्थितम् ॥१०३॥
शब्दब्रह्ममयं चक्रं पुरा वर्णगणं ततः ।
प्रणवाद्यैर्नमोन्तैश्च संज्ञाभिः क्रमशस्ततः ॥१०४॥
विन्यस्तमातृयन्त्रं स्वं देशिको विधिवद् गुरुः ।
समभ्यर्च्यार्घ्यपुष्पाद्यैर्मातृकामन्त्रविग्रहम् ॥१०५॥
ततस्समुद्धरेन्मन्त्रान् सर्वाभिमतसिद्धिदान् ।
जेतुं शक्त्यात्मना या तु सृष्टिस्थितिलयोन्मुखी ॥१०६॥
क्रियाशक्तिस्समुद्दिष्टा सुकल्पजननी पुरा ।
कालरूपमधिष्ठाय तयैतद्बृंहितं जगत् ॥१०७॥
कालचक्रं जगच्चक्रं तस्मात्सौदर्शनं वपुः ।
तमधिष्ठाय सा शक्तिर्जीवभूता व्यवस्थिता ॥१०८॥
विनाकृतं तया सर्वमसत्कल्पमिदं भवेत् ।
तस्मात्समुद्धरेच्छक्तिमभिष्टोमसमप्रभाम् ॥१०९॥
अक्षाधारां तु वै नित्यामनाद्यन्तां च वैष्णवीम् ।
पूर्वं नेम्यन्तिमद्वन्द्वं तदाद्यं सानलद्वयम् ॥११०॥
नाभितुर्यान्तिमद्वाभ्यां पिण्डमेतदलङ्कृतम् ।
सौदर्शनमहाशक्तिः सर्वसिद्धिप्रदायिनी ॥१११॥
जीवभूता षडर्णस्य प्रकाशानन्दरूपिणी ।
हृदयाद्यङ्गसिद्ध्यर्थं पिण्डमेतत्स्वरोज्झितैः ॥११२॥
दीर्घैराद्यैस्त्रिभिश्चान्त्यैर्भेदयेन्नेत्रपश्चिमम् ।
प्रणवादीनि चैतानि तुर्यान्तैर्हृदयादिभिः ॥११३॥
नमस्स्वाहावषड्ढुंफड्वौषड्भिर्जातिभिस्सह ।
क्रमान्नियोजनीयानि विज्ञानादिगुणैस्सह ॥११४॥
शक्तेः प्रकृतिरूपस्य षडर्णस्योद्धृतिस्त्वथ ।

पूर्ववत्समुपाहृत्य चान्तिमद्वयमन्तिमम् ॥११५॥
तत्राष्टमंसतृतीयमस्यां यान्त्यन्ततोऽन्तिमम् ।
सपञ्चमस्वरान्तं च कुर्यान्नेम्याद्यभूपितम् ॥११६॥
पश्चादेकादशारार्णयुक्तं तद्द्विगुणारगम ।
अन्यार्णमविमुक्तं तु कुर्यात्तत्पञ्चषष्ठयोः ॥११७॥
अयं सौदर्शनो मन्त्रः षडर्णः समुदीरितः ।
तृतीयः पञ्चमः षष्ठः प्रत्येकं त्र्यक्षरः स्मृतः ॥११८॥
अन्ये वर्णसमोपेता वर्णाः स्युर्व्यक्षरास्त्रयः ।
एष कालात्मनो विष्णोर्विश्वरूपस्य वाचकः ॥११९॥
सतारया च शक्त्या च ह्यष्टार्णः परिकीर्तितः ।
क्षेत्रक्षेत्रज्ञयुक्त्या तु यथा प्रकृतिगः पुमान् ॥१२०॥
स्थूलसूक्ष्मात्मको ध्येयस्तथा सौदर्शनो हरिः ।
दर्शनं परतत्त्वस्य स्तात्तदाख्यानदर्शनम् ॥१२१॥
तन्निष्ठानामिदं नित्यमज्ञानतिमिरापहम् ।
छिनत्ति संशयं तेषां सदुपायप्रवृत्तये ॥१२२॥
रूपान्तरमिदं तस्य संशयच्छेदकारणम ।
नूनं वर्णाश्रमाचारनिष्ठानामाननेषु तु ॥१२३॥
छिनत्ति दूषकान् जन्तून् स्वकविद्याप्रभावतः ।
लाञ्छितानामनेनाशु भक्तानां भावितात्मनाम् ॥१२४॥
करस्थो विजयस्तुं स्यादिह लोके परत्र च ।
किं पुनर्विषये यत्र स्थापिते पूजिते सति ॥१२५॥
लक्षणं हृदयादीनां मन्त्राणां तूच्यतेऽधुना ।
प्रागेव हृदयादीनां मन्त्रार्णानि यथाक्रमम् ॥१२६॥
विन्यसेद्बीजभूतानि तारान्ते विन्दुना ततः ।
अविसूनां क्रमादन्ते यथा सूर्याक्षरद्वयात् ॥१२७॥

महासुदर्शनज्वालपदयोरन्तिमेऽपि च ।
चक्रायेति पदं षोढा शिरोन्ते योजयेत्क्रमात् ॥१२८॥
विज्ञानादिगुणोपेतैस्तुर्यान्तैर्हृदयादिभिः ।
नमस्स्वाहादिनेत्रान्तैः प्रागुक्तविधिना लिखेत् ॥१२९॥
ध्येयान्याकारपत्तीनि भोगस्थानेषु मूलवत् ।
वर्णभूषणवस्त्रास्त्रभुजसंस्थानचेष्टितैः ॥१३०॥
ज्ञात्वैवं मन्त्रमाहात्म्यं योऽर्चयेद्विधिपूर्वकम् ।
दिग्बन्धवह्निप्राकारगायत्र्यावाहनादिकैः ॥१३१॥
यागोपकरणैर्मन्त्रैर्भोगदानविवर्जितैः ।
क्रमात्सर्वफलावाप्तिर्मन्त्रसिद्धिश्च जायते ॥१३२॥
दशदिग्बन्धमन्त्राणां वक्ष्यते लक्षणं पुरा ।
ओंपूर्वं पुरुषायेति स्वाहान्तं तदनन्तरम् ॥१३३॥
अस्त्रेण बन्धयामीति स्वाहान्तं च षडक्षरम् ।
इति दिग्बन्धमन्त्रोऽयमीरितो दुष्टदोषहृत् ॥१३४॥
प्रणवं प्राक् समुद्धृत्य मनुवा *ग्निजाययोः ।
आयान्तं विन्यसेच्चक्रमग्निप्राकारसंज्ञकम् ॥१३५॥
कीर्तितं चक्रगायत्रीं शृणुध्वं मुनिसत्तमाः ।
जातिपूर्वं पुरस्कृत्य चक्रायेति समुद्धरेत् ॥१३६॥
द्वितीयं विष्णुगायत्र्या नृसूक्ताद्यक्षरत्रयम् ।
नेत्राभ्यां पदमादाय नेमिपूर्वान्तंयोजितम् ॥१३७॥
धीमहीति तदन्ते नो विनिवेश्यो निवारितः ।
गायत्र्यन्तं समुद्धार्य तदन्ते चतुरक्षरम् ॥१३८॥
सौदर्शनी समुद्दिष्टा गायत्री तारकाक्षरा ।
सतारका पुरा चेयं भवेदेकाक्षराधिका ॥१३९॥

अथ मन्त्रत्रयं वक्ष्ये सामान्यं सर्वपूजने ।
तारद्वयं पुरोद्धृत्य परमं पदमुद्धरेत् ॥१४०॥

याम्येत्यवस्थितं चाऽथ नेम्याद्यं द्विनवारकम् ।
द्विदशारं गतं वर्णं नाभिपद्ममर्धनि ॥१४१॥

ततस्तु गृहकाम्यायो इति पञ्चार्णमुद्धरेत् ।
युतं नेमिद्वितीयेन द्विनवारं गतं ततः ॥१४२॥

षोडशारं गतं वर्णं द्वितीयस्वरसंयुतम् ।
नेमिपद्मवर्णं च षोडशारं गतं पुनः ॥१४३॥

तृतीयद्वारसंयुक्तं तृतीयं नेमिमण्डलात् ।
नेम्यन्तमास्वरोपेतमरान्तश्च स्वरान्तरम् ॥१४४॥

नेम्याद्यं षोडशारस्थं नेम्यष्टममिकारगम् ।
न्यूनविंशारगोर्ध्वं तु द्विनवाक्षरमूर्धनि ॥१४५॥

स्वरं तृतीयं संयोज्य ततश्च द्विनवारगम् ।
पुनर्मन्त्रशरीरेति प्रणवान्तं ततो नमः ॥१४६॥

पुनश्चं नमसा युक्तो मन्त्र आवाहनोचितः ।
प्रदाने सर्वभोगानां मन्त्रोयं सम्प्रकाश्यते ॥१४७॥

प्रणवं पूर्वमुच्चार्य सर्वभोगैककारणम् ।
नेम्यन्तं विन्दुसंयुक्तं त्रिभेदं पदमप्यथ ॥१४८॥

गृहाणेति शिरोन्तोयं भोगदानस्य वाचकः ।
आवाहने तथाऽर्चायां विसर्जनविधौ तथा ॥१४९॥

प्रणवं पूर्वमुद्धृत्य सम्बोध्य भगवन्निति ।
मन्त्रमूर्ते पदं दद्यात्स्वपदं च द्वितीयया ॥१५०॥

आसादय क्षमस्वेति प्रणवान्तं समुद्धरेत् ।
सुदर्शनार्चनार्थं तु मन्त्रास्त्वेवं मयोदिताः ॥१५१॥

इहार्चनविधानं तु प्रवक्ष्यामि मुनीश्वराः !।
प्राग्वत्स्नानादिकं कृत्वा प्रविश्य यजनालयम् ॥१५२॥
प्रक्षाल्य पादावाचम्य सोत्तरीयः स्वलङ्कृतः।
धृतोर्ध्वपुण्ड्रः कुसुमैर्द्वास्थानभ्यर्च्य पूर्ववत् ॥१५३॥
कवाटोद्घाटनं कृत्वा प्रविश्याभ्यन्तरे विभुम्।
प्रणिपत्य च गायत्र्या पाणिप्रक्षालनादिकम् ॥१५४॥
अर्चायां विष्टरे यन्त्रे कृत्वा मार्गत्रयं ततः।
प्रासादं शोधयित्वास्य पुरतः फलकादिके ॥१५५॥
प्रोक्षिते चास्त्रमन्त्रेण सम्मुखं रुचिरासने।
समासीनस्स्वपार्श्वस्थयाज्ञीयं चाधिवासनम् ॥१५६॥
करशुद्धिं स्थानशुद्धिं कृत्वाऽस्त्रेण यथापुरम्।
पाणिभ्यामुक्तमन्त्रेण संयुक्तेनास्त्रमुद्रया ॥१५७॥
पूजास्थानगतान् विघ्नान् बाह्यतो दृश्यविग्रहान्।
विरेच्य बन्धनं कुर्याद्दिक्षु चैव विदिक्षु च ॥१५८॥
कवचेनावकुण्ठ्याथ प्राणानायम्य पूर्ववत्।
भूतशुद्धिं ततः कृत्वा मन्त्रन्यासमथाचरेत् ॥१५९॥
अकारादिक्षकारान्तं मातृकां मन्त्रमातरम्।
विन्यसेत्करयोः पूर्वं विग्रहे चक्रमाप्लवन् ॥१६०॥
कृत्वैवं व्यापकन्यासमादित्यातपसप्रभम्।
दक्षेतरक्रमेणैव शाखासु तलयोरपि॥ १६१॥
अङ्गुष्ठादिकनिष्ठान्तमेकैकस्याश्चतुश्चतुः।
एवं द्वाविंशकं न्यस्य तलयोर्दशकं ततः ॥१६२॥
मध्ये च द्विचतुष्के च पञ्चकं पञ्चकं तथा।
प्रणवद्वयमध्यस्थानेवं न्यस्य करद्वये ॥१६३॥

व्यापकन्यासपूर्वं तु स्वशरीरेपि विन्यसेत् ।
मूर्ध्नः पादतलं यावत्पाणिभ्यां तपनांशुवत् ॥१६४॥
व्यापयित्वा ततो न्यासं पृथगेव समाचरेत् ।
केशान्ते वक्त्रवृत्ते च नेत्रयोः श्रवणद्वये ॥१६५॥
घ्राणरन्ध्रद्वये गण्डद्वये दक्षेतरक्रमात् ।
उत्तराधरयोगेन दन्तयोस्तच्छदद्वये ॥१६६॥
मूर्ध्नि न्यसेत्स्वरानन्यान् सविसर्गाननन्तरम् ।
कवर्गं दक्षिणे बाहौ सन्धिपञ्चगतं क्रमात् ॥१६७॥
वामे तथा चवर्गं च पादयोर्दक्षिणादितः ।
सन्धिगौ टतवर्गौ च पूर्ववत्तूभपार्श्वयोः ॥१६८॥
पृष्ठे नाभौ च हृदये पवर्गं धातुसप्तके ।
यादिसान्तानि वर्णानि हकारं हृदयान्तरे ॥१६९॥
क्षकारं हृदयाकाशे न्यस्यैवं मातृकां पुरा ।
ततः शक्त्या षडर्णं तु न्यसेत्करशरीरगम् ॥१७०॥
करन्यासं पुरा कुर्यात्तच्छृणुध्वं मुनीश्वराः ! ।
पुटीकृतेन ताराभ्यां मन्त्रेणैव सशक्तिना ॥१७१॥
नखान्तं मणिबन्धादि प्राग्वत्पाणिद्वयं मृजेत् ।
आद्यन्ते तारशक्त्याद्यैः शक्तिवर्णैस्सबिन्दुकैः ॥१७२॥
अङ्गुष्ठादिकनिष्ठान्तं त्यक्त्वा मध्यमपर्वसु ।
विन्यसेत्करजाग्रेषु चरमं वर्णमेव च ॥१७३॥
एवमर्णानि विन्यस्य हृदयादीनि विन्यसेत् ।
मूलाग्रपर्वस्वङ्गानि वर्णन्यासक्रमेण तु ॥१७४॥
पाणिभ्यामालभेद्देहमामूर्ध्नश्चरणावधि ।
कृत्वैवं व्यापकन्यासमङ्गन्यासं समाचरेत् ॥१७५॥

मूर्ध्नि वक्त्रे च हृदये नाभौ गुह्ये च पादयोः ।
पादादिश्च शिरोन्तस्तु संहृतिन्यास उच्यते ॥१७६॥
हृदि मूर्ध्नि शिखायां तु स्कन्धयोः करमध्यतः ।
नेत्रयोर्न्यसनीयानि निस्स्वैर्मन्त्रैरुतैः क्रमात् ॥१७७॥
हृदयादीनि विन्यस्य पश्चात्पाणितलद्वये ।
किरीटं कौस्तुभं मालां श्रीवत्सं च यथापुरम् ॥१७८॥
विन्यसेदायुधान्यष्टौ पद्मादीनि यथाक्रमम् ।
दक्षिणोत्तरयोरंसे इच्छाशक्तिं स्वपार्श्वयोः ॥१७९॥
ऊरुमूले मनस्तत्त्वं न्यस्य मन्त्रमयं स्वकम् ।
भावयेदहमित्यन्तस्सुदर्शनवपुर्हरिः ॥१८०॥
गायत्र्यावर्तयेद्बाह्ये स्वात्मानं चक्रमुद्रया ।
चक्रज्वालावलिं विप्राः परितो मन्त्रवित्तमः ॥१८१॥
भावनाजनितं यागमाचरेदादिचोदितम् ।
नियम्य करणग्रामं प्राग्वद्धे ज्ञानगोचरे ॥१८२॥
आसनं हृदि सङ्कल्प्य त्वनन्ताद्यं तु पूर्ववत् ।
परस्माद्भगवत्तत्त्वाच्चित्स्वरूपं परात्मकम् ॥१८३॥
मनसा मन्त्रमुच्चार्य विष्टरोर्ध्वेवतार्य च ।
मन्त्रन्यासादिकं कृत्वा लयभोगार्चनं तथा ॥१८४॥
शिरोर्ध्वे देवदेवस्य भावयेदिन्दुमण्डलम् ।
तत्स्तैरमृतौघैश्च कुर्यादर्घ्यादिकल्पनम् ॥१८५॥
षोडशैरुपचारैर्वा द्वात्रिंशद्भिस्तु वा यजेत् ।
कृत्वैवं मानसं यागं जपान्तं तु यथाविधि ॥१८६॥
ततो बहिर्यजेद्देवं हेतीशं देशिकोत्तमः ।
मूर्तैरर्घ्यादिभिर्भोगैर्विधिवत्समुपाहृतैः ॥१८७॥

प्राग्वदर्घ्यादिपात्राणां स्थापनं पूजनं ततः ।
देहविन्यस्तमन्त्राणां गर्भद्वारस्थपूजनम् ॥१८८॥
चण्डं चैव प्रचण्डं च गर्भद्वारे प्रपूजयेत् ।
तथाऽग्रमण्टपद्वारे यजेद्धातृविधातृकौ ॥१८९॥
कृत्वैवं द्वारयागं तु प्रविश्याभ्यन्तरं ततः ।
फणीश्वरं समारभ्य योगपीठं प्रकल्पयेत् ॥१९०॥
गणनाथादिकांश्चैव समभ्यर्च्य यथाविधि ।
ततः सुदर्शनं देवं समावाह्य तु पूर्ववत् ॥१९१॥
मन्त्रन्यासं ततः कुर्यात्सृष्टिन्यासादितस्त्रयम् ।
स्थानेषु हृदयादीनि भूषणानि तथैव च ॥१९२॥
ततश्चास्त्रवराणां तु षट्कं चापि विन्यसेत् ।
इच्छाशक्तिं मनस्तत्वं विन्यसेच्च स्वदेहवत् ॥१९३॥
लयभोगौ च कृत्वाथ ध्यायेद्देवं सुदर्शनम् ।
सहस्रारं महाचक्रमयुताग्निचयोत्कटम् ॥१९४॥
षडध्वमयमुद्भ्रान्तं भगवच्छक्तिजृम्भितम् ।
अक्षस्थं परमात्मानं नारायणमनामयम् ॥१९५॥
चक्ररूपिणमीशानं दिव्यकुङ्कुमसन्निभम् ।
पिङ्गाक्षं पिङ्गकेशाढ्यं रक्ताम्बरधरं विभुम् ॥१९६॥
महौजसं महाकायं भुजैरष्टभिरन्वितम् ।
दंष्ट्रानिष्ठ्यूतघोराग्निज्वालाकोलाहलाकुलम् ॥१९७॥
कुटिलभ्रुकुटीभङ्गभङ्गुरालकषट्पदम् ।
ललाटनयनोद्गीर्णज्वालाज्वलितदिङ्मुखम् ॥१९८॥
ऊर्ध्वज्वालागणालीढकिरीटतटशोभितम् ।
श्रीवत्सकौस्तुभोरस्कं दिव्यमालाविभूपितम् ॥१९९॥

उद्यज्जानुमनेकास्त्रं स्थितं परमशोभनम् ।
गदाङ्कुशौ च मुसलं चक्रमत्युग्रतेजसम् ॥२००॥

शङ्खं च सशरं चापं पाशं कौमोदकीं क्रमात् ।
मुख्यदक्षिणहस्तादि मुख्यवामकरावधि ॥२०१॥
दधानमतुलं वीरं दिव्याभरणभूषितम् ।
निजाट्टहाससन्त्रस्तदैत्यदानवसञ्चयम् ॥२०२॥

अयुतायुतवह्नीनामास्पदे दीप्ततेजसाम् ।
अध्वषट्कमये चक्रे चक्रिणं चक्रमुत्तमम् ॥२०३॥

ध्यायेदेवंविधं देवं चिन्तितार्थफलप्रदम् ।
ध्यायेच्च हृदयादीनि किरीटादीनि पूर्ववत् ॥२०४॥

आयुधानामथ ध्यानं शृणुध्वं द्विजसत्तमाः ।
चक्रशङ्खगदाः पद्मं प्राग्वद्ध्यायेद्गुरूत्तमः ॥२०५॥
कृशाङ्गं दीर्घबाहुं च पिङ्गलाक्षं तु चाङ्कुशम् ।
विकरालमुखं रौद्रं भिन्नाञ्जनगिरिप्रभम् ॥२०६॥

कृशोदरं च मुसलमग्निज्वालावलीवृतम् ।
अङ्गारराशिसदृशं प्रलम्बमतिनिष्ठुरम् ॥२०७॥

नीलोत्पलदलश्याममिष्वस्त्रं बाणविग्रहम् ।
नानारूपं च निशितं दीर्घदिग्बन्धविक्रमम् ॥२०८॥

कार्मुकं हेमगौरं च किङ्किणीजालमण्डितम् ।
आस्फोटयत्तु स्वकरौ महाजलदनिःस्वनम् ॥२०९॥
पाशं फणिगणाकीर्णं विद्युज्जिह्वं भयानकम् ।
हेमलिपाण्डराभं च घोरास्यं रक्तलोचनम् ॥२१०॥

ध्येयाः स्वरुचिसंयुक्ता द्विभुजाः पुरुषोत्तमाः ।
एतेऽस्त्रनायकाः सर्वे विभोराज्ञाप्रतीक्षकाः ॥॥ २११

श्रेत्थिता विचलन्तश्च सुसमैः स्थानकैः स्थिताः।
श्रोणीतटार्पितकराश्चामरव्यजनोद्यताः ॥२१२॥
सपद्मं तु किरीटाद्यं वर्जयित्वा चतुष्टयम् ।
तर्जयन्तश्च दुष्टौघमन्येषां दक्षिणं करम् ॥२१३॥
स्मर्तव्यं ध्यानकाले तु सर्वेषामथ मस्तके ।
ध्येयं स्वकं स्वकं चिह्नं सुप्रसिद्धं निराकृति ॥२१४॥
अधिष्ठातृक्रमस्तेषां कथ्यते मुनिसत्तमाः ! ।
ज्ञातव्यश्चाङ्कुशः कामो मुसलं नागनायकः ॥२१५॥
शब्दादयः सायकाख्यं धनुर्विद्धि समीरणम् ।
पाशो मायेति विज्ञेय एवं ध्यात्वा समर्चयेत् ॥२१६॥
आसनाद्यैश्च सांस्पर्शैर्हृदयङ्गमपार्थिवैः ।
प्रीणयेत्तु विधानेन होमान्तं वा जपान्तिमम् ॥२१७॥
एवमेव स्वयंव्यक्तं दिव्यं सैद्धमथापि वा ।
स्थापितं मनुजैर्वापि शैलमृल्लोहसम्भवम् ॥२१८॥
अष्टबाहुं चतुर्बाहुं तथा षोडशबाहुकम् ।
चलस्थिरविभागेन स्थापितं च यथारुचि ॥२१९॥
त्रिकालमर्चयेद्देवं सर्वानिष्टनिवारकम् ।
नैमित्तिकानि काम्यानि नित्यानि यजनानि च ॥२२०
विशेषेणैव कार्याणि विना स्वापं महोत्सवम् ।
शान्तिके पौष्टिके चैव तथैवाप्ययनादिषु ॥२२१॥
ध्यानेन पूजितेनैव हुतेन जपितेन च ।
समीहितानि पूर्यन्ते भक्तानां भावितात्मनाम् ॥२२२॥
इति सम्यक् समाख्यातं परं सौदर्शनार्चनम् ।

इति श्रीपाञ्चरात्रे ईश्वरसंहितायां
लक्ष्मीसुदर्शनार्चनविधिर्नाम
सप्तमोऽध्यायः।

## अथाऽष्टमोऽध्यायः ।

मुनयः ।

भगवन् मुनिशार्दूल भगवच्छास्त्रकोविद ! ।
गरुडप्रमुखानां च पूजनं प्रागुदीरितम् ॥१॥
तद्विधानं विशेषेण प्रकाशय कृपानिधे ! ।

नारदः ।

शृणुध्वं मुनयः सर्वे गरुडस्यार्चनं पुरा ॥२॥
येन विज्ञातमात्रेण वाञ्छितं साधकोऽश्नुते ।
विष्णोः सङ्कर्षणाख्यस्य विज्ञानबलशालिनः ॥३॥
मूर्तिः ज्ञानबलाख्या या सर्वाधारस्वरूपिणी ।
महिमेति जगद्धातुः विज्ञेयो विहगेश्वरः ॥४॥
सर्वरोगभयघ्नश्च क्षेपकः सर्वविद्विषाम् ।
ततः समर्चयेन्नित्यं प्रासादे स्थाप्य मन्त्रवित् ॥५॥
प्राङ्गणे प्रथमे वाथ द्वितीये मूलमन्दिरात् ।
अग्रदेशे प्रकुर्वीत प्रासादं मण्टपाकृतिम् ॥६॥
चतुर्द्वारसमोपेतं वर्गत्रयसमन्वितम् ।
वर्गषट्कान्वितं वाथ सर्वालङ्कारशोभितम् ॥७॥
मूलगेहात् त्रिभागोच्चमर्धोच्चं वा सविस्तरम् ।
तस्मिन् ब्राह्मेथ दिव्ये वा दिव्ययुक्तेथ मानुषे ॥८॥
संस्थाप्य लोहजां वाथ शैलीमर्चां यथोदिताम् ।
त्रिकालमर्चयेन्नित्यं मुख्यमूर्त्यर्चनान्तिमे ॥९॥
तद्विधानं विशेषेण मन्त्रपूर्वमिहोच्यते ।
प्रणवं पूर्वमुद्धृत्य पक्षिशब्दमनन्तरम् ॥१०॥

पञ्चाक्षरो महामन्त्रः स्वाहान्तः सम्प्रकीर्तितः ।
मन्त्रार्णानि सबिन्दूनि प्रागोङ्कारान्वितानि च ॥११॥
समुच्चार्याथतुर्यान्तैः ज्ञानाद्यैश्च हृदादिभिः ।
अनेत्रैरस्त्रपर्यन्तैरङ्गान्येतानि वै द्विजाः ॥१२॥

प्राङ्मूलमन्त्रमध्याद्यव्यत्ययाद्विपहा भवेत् ।
सोयं मन्त्रः समाख्यातस्त्रिदशैरपि दुर्लभः ॥१३॥

पञ्चाक्षर इति ख्यातो गारुडो मुनिसत्तमाः ।
पञ्चाङ्गानि यथापूर्वमक्षरैः स्युः सबिन्दुकैः ॥१४॥
साङ्गेनानेन मन्त्रेण स्थापनीयो विधानतः ।
मूलालयगते बिम्बे सुस्थिते वाथ यानगे ॥१५॥
स्थितैव गारुडी मूर्तिर्याने वा गमनोन्मुखी ।
शयने चासने चैव त्वासीना वाथ सुस्थिता ॥१६॥
द्वारावरणदेवानां ध्यानाध्याये विशेषतः ।
ध्वजारोहेपि सुव्यक्तं लक्षणं चास्य वक्ष्यते ॥१७॥
एवं ज्ञात्वा यथा कालं तन्मन्त्रनिरतो द्विजाः ! ।
स्नात्वा तदीयमन्त्रेण कृतपादावनेजनः ॥१८॥
उपस्पृश्य यथान्यायं प्रासादं सम्प्रविश्य च ।
स्वासने सुखमासीनः प्राङ्मुखो वाप्युदङ्मुखः ॥१९॥
करशुद्धिं च दिग्बन्धं प्राणायामं समाप्य च ।
भूतशुद्धिं च विधिवन्मन्त्रविन्यस्तविग्रहः ॥२०॥
पक्षीशमुद्रां बध्वाथ हृदयाम्भोरुहोदरे ।
स्वानन्दधामनिष्ठस्य देवस्य चतुरात्मनः ॥२१॥
सङ्कर्षणांशात्सम्पूर्णविज्ञानबलसङ्कुलात् ।
अवतार्यामृतैर्भोगैः जपान्तं प्राग्वदर्च्य च ॥२२॥

ततो मूर्तैर्यजेद्भाखे प्रागुक्तैर्भोगसञ्चयैः ।
पात्रशिष्टैश्च देवान्नैः साधितैः पृथगेव वा ॥२३॥
तदर्थं कल्पयेत्प्राग्वदर्घ्याद्यं पात्रपञ्चकम् ।
द्वितयं चाथ वैकस्मिन् पाद्यं स्नानीयवारि च ॥२४॥
अर्घ्याचामे तदन्यस्मिन् एकस्मिन् सकलं तु वा ।
प्राग्वत्स्वदेहविन्यस्तान् मन्त्रानभ्यर्च्य मन्त्रवित् ॥२५॥
अर्घ्याद्यैर्धूपपर्यन्तैस्ततो द्वारचतुष्टये ।
वास्त्वीशं क्षेत्रनाथं च द्वारलक्ष्मीं स्वमन्त्रतः ॥२६॥
चण्डाद्यं च गणं प्राग्वदासनं कल्पयेत्ततः ।
शेषपूर्वं च धर्माद्यमष्टकं विन्यसेत्क्रमात् ॥२७॥
तदूर्ध्वे व्यक्तपद्मं च यामत्रयसमन्वितम् ।
समभ्यर्च्य च गन्धाद्यैर्गणनाथादिकानपि ॥२८॥
हृत्पद्मकर्णिकामध्ये मानसैरर्चितं पुरा ।
स्वविद्यया समावाह्य स्वस्थानाद्बिम्बहृत्कजे ॥२९॥
सकलीकृत्य विधिवदङ्गभूषणलाञ्छनैः ।
किरीटं वनमालां च विन्यस्य तदनन्तरम् ॥३०॥
अनन्तादींश्च नागेशान् न्यसेद्वामकरादिषु ।
सत्याख्यया दक्षिणतो बलशक्त्या स्वरूपया ॥३१॥
गणित्रकं च मन्दारकुसुमस्तबकं तथा ।
कलशं चामृताधारं फणीन्द्रं दक्षिणादितः ॥३२॥
शक्तिः प्रागुदिता तस्य बलधर्मस्वरूपिणी ।
पक्षीशमुद्रां सन्दर्श्य लययागं समाचरेत् ॥३३॥
भोगयागश्च कर्तव्यः पद्मपीठतलोपरि ।
प्रागादिपद्मपत्रेषु हृदयादीनि पूर्ववत् ॥३४॥

विदिक्पत्रेषु चैवार्च्यमेषां वर्णानि पूर्ववत् ।
रूपलावण्यभूषाद्यैर्मूलमन्त्रशरीरवत् ॥३५॥

किरीटं वनमालां च न्यसेद्देशिकसत्तमः ।
पुरस्तात्पिष्ठतश्चास्य दक्षिणोत्तरयोः क्रमात् ॥३६॥

चतुष्टयक्रमेणैव शेषाद्याः पन्नगेश्वराः ।
अग्नीशरक्षोवायव्यकोणेषु विहगेशितुः ॥३७॥

चतुष्टयं गणित्राद्यं विन्यसेत्तु यथाक्रमम् ।
दक्षिणे विहगेशस्य सत्याख्या कर्णिकोपरि ॥३८॥

प्राणापानसमानोदानव्यानप्राणरूपिणः ।
मध्यस्थस्य खगेशस्य बहिः प्रागादितः क्रमात् ॥३९

सत्यः सुपर्णो गरुडस्ताक्ष्यश्च विहगेश्वरः ।
पञ्चात्मकस्य प्राणस्य विकारस्त्वेष पञ्चधा ॥४०॥

सत्याद्या दिक्षु चत्वारः कोणेषु विहगेश्वरः ।
ध्यानमेषां विशेषेण समासात्कथ्यतेऽधुना ॥४१॥

आचाङ्घ्रिगोचराः सर्वे यस्य देहास्तु पौरुषः ।
द्विभुजस्तुहिनाभस्तु स सत्यः प्राणदैवतम् ॥४२॥

सुपर्णः पद्मरागाभो निर्मलस्वर्णलोचनः ।
गरुडः काञ्चनाभस्तु कुटिलभ्ररुणेक्षणः ॥४३॥
व
केकराक्षस्तु ताक्ष्यो वै प्रावृड्जलदसन्निभः ।
द्रवत्कनकनेत्रस्तु शबलाभश्च पञ्चमः ॥४४॥

चतुर्भुजाः सुपर्णाद्याः सौम्यरूपा घनाकुलाः ।
पतत्रिचरणास्सर्वे पक्षमण्डलमण्डिताः ॥४५॥

लम्बोदरास्सुपीनाङ्गाः कुण्डलाद्यैर्विभूषिताः ।
कुटिलभ्रूसुवृत्ताक्षा वज्रतुण्डाः सितानना: ॥४६॥

अपानादिसमीराणामाधिपत्येन संस्थिताः ।
महाबला महाकाया रक्ततुण्डोत्र पञ्चमः ॥४७॥
खखाङ्गुष्ठद्वयप्रोतगणित्लोभयपाणिना ।
पुष्पाञ्जलिधराः सर्वे मुख्येन विहगोत्तमाः ॥४८॥
सुपर्णः पश्चिमाभ्यां तु पाणिभ्यां दक्षिणादितः ।
मन्दारपुष्पस्तवकं दधद्विस्मयमुद्रिकाम् ॥४९॥
तथाविधाभ्यां गरुडस्ते धत्ते व्यत्ययेन तु ।
तार्क्ष्यः पश्चिमयोर्नित्यं धत्ते दक्षिणवामयोः ॥५०॥
कद्रूं तथामृतं कुम्भं पञ्चमो विहगेश्वरः ।
दक्षिणेन सुधाकुम्भं वामेन तु फणीश्वरम् ॥५१॥
नित्योदितस्य व्यूहस्य तथा शान्तोदितस्य च ।
प्राणापानादिवायूनां पञ्चानामपि नामभाक् ॥५२॥
गरुडः परिवारत्वे ध्वजत्वेपि विशेपतः ।
योजनीयस्तथान्येपु सुपुप्त्यादिपदेपु च ॥५३॥
वासुदेवादिमूर्तीनां चतुर्णां क्रमशस्त्वमी ।
सत्याद्यास्तार्क्ष्यपर्यन्ताः तत्तन्मूर्त्यन्तरेपु च ॥५४॥
त्रिपु त्रिपु समादेयाः सत्याद्याः केशवादिपु ।
पद्मनाभादिमूर्तीनां पञ्चमो विहगेश्वरः ॥५५॥
परात्परपरव्यूहव्यूहान्तरतनोर्विभोः ।
प्रादुर्भावतनोश्चापि जगद्रक्षणकांक्षिणः ॥५६॥
खगानां कारणत्वाच्च प्रागुक्तो वा खगेश्वरः ।
इति ते गरुडव्यूहप्रभावः सम्प्रकाशितः ॥५७॥
कुमुदाद्यास्ततो बाह्ये शक्राद्यास्तद्बहिः क्रमात् ।
तद्बहिः कुमुदादीनां भूतेशाश्चोत्कटादयः॥५८॥

गणेशः पूजनीयो वा तदग्रे वलिमण्डपे ।
महापीठेऽथ वा पूज्याः गरुडस्यानुयायिनः ॥५९॥
पालयन्तश्च तद्भक्तान् दिव्यान्यायतनान्यपि ।
ध्यात्वैवमर्चनं कुर्यादासनाद्यैः यथोदितैः ॥६०॥
चतुष्षष्ट्युपचारैर्वा द्वात्रिंशद्भिस्तु वेतरैः ।
षोडशैरुपचारैर्वा मुख्यमध्याधमक्रमात् ॥६१॥
तन्निवेदितमन्नाद्यं नराणां रोगिणां सदा ।
वन्ध्यानां वनितानां च जयेच्छूनां च भूभुजाम् ॥६२॥
विषोपहतवेषाणां प्रदद्यात्संविभज्य च ।
आर्द्रायां प्रतिमासं तु विशेषेणैवमर्चयेत् ॥६३॥
उत्सवेषु विशेषेण भ्रामयेदुत्सवार्चया ।
इति सम्यक् समाख्यातं गरुडस्यार्चनं परम् ॥६४॥
विष्वक्सेनार्चनं त्वद्य पौष्करोक्तं तु कथ्यते ।
शृणुध्वं मुनयस्सर्वे सावधानेन चेतसा ॥६५॥

पौष्कर उवाच ।

किमर्थमाह भगवान् विघ्नोच्छेदकरं प्रभुम् ।
समस्तविघ्ननाथानां परमं कारणं च यः ॥६६॥
विष्वक्सेनस्तु यष्टव्यो भोगभूमिगतेऽच्युते ।
कैर्द्रव्यैः केन विधिना किं करोत्यभिपूजितः ॥६७॥

श्रीभगवान् ।

भविनां भाविनो विघ्नाः सद्धर्मविनिवारकाः ।
न यागयज्ञधर्माद्यैः मन्ये संसारिणां शुभम् ॥६८॥
तत्प्रवृत्तौ तु ये विघ्नाः प्रोत्साहविनिवारकाः ।
व्यपारयन्ति च ते सर्वे चक्रज्वालाभयार्दिताः॥६९॥

प्रागार्जितेन केनापि कर्मणा चैव साम्प्रतम् ।
अनुभुङ्क्ते फलं यागाद्विविधं चाग्रतः स्थितम् ॥७०॥
तस्य संरक्षणार्थं तु विष्वक्सेनस्तदैव हि ।
काले यागावसानाख्ये द्वितीये वासरेथ वा ॥७१॥
कृत्वा निर्व्याकुलं चित्तं यष्टव्यः फलसिद्धये ।
यागनिर्वर्तनोच्छेषैरम्लानैरर्घ्यपूर्वकैः ॥७२॥
उपचारमयैर्भोगैः सर्वैराभरणादिकैः ।
नैवेद्यैर्मधुपर्काद्यैः मुख्यमूर्तेर्निवेदितैः ॥७३॥
द्विजप्रदानशिष्टैस्तु स्वयम्प्राशनवर्जितैः ।
तथा चर्वन्तरस्थैश्च ह्यपरेभ्यो निवेदितैः ॥७४॥
संस्कृतैरूष्मलोपेतैर्मधुराज्यपरिप्लुतैः ।

पौष्करः ।

क एषोतुलवीर्यो हि यस्य दूराद्द्रवन्ति च ॥७५॥
विघ्ना निमेषमात्रेण त्रैलोक्योन्मूलनक्षमाः ।

भगवान् ।

कालवैश्वानराख्या या मूर्तिस्तुर्यात्मनो विभोः ॥७६॥
स एव द्विजदेवो हि विष्वक्सेनः प्रकीर्तितः ।
स्थित आहवनीयादिभेदेन मखयाजिनाम् ॥७७॥
ऋक्पूतं हुतमादाय तर्पयत्यखिलं जगत् ।
एवं मन्त्रमयाद्यागात्सात्त्विकाद्ब्रह्मभावितात् ॥७८॥
सम्प्राप्य गुरुमूर्तेर्वै प्रापणं मन्त्रसंस्कृतम् ।
अनाहूतामराणां च सर्वलोकनिवासिनाम् ॥७९॥
स्वयं संविभजत्याशु सदनुग्रहकाम्यया ।
ज्ञात्वैवं तस्य माहात्म्यं वृत्तिस्थं फलसिद्धये ॥८०॥

त्रिसन्ध्यं नित्यपूजायां वल्यन्ते तं समर्चयेत् ।
वत्सरोत्सवपूर्वेषु तथा वैशेषिकेष्वपि ॥८१॥
वृत्त्याद्याधारभूतेषु क्रमात्कृत्वा पुरार्चनम् ।
केवलं वाथ होमान्तं स्वशक्त्या विभवेन वा ॥८२॥
विस्तरेणाथ वा शश्वत्ततः कमलसम्भव! ।
कृत्वा पर्णपुटे तोयं पात्रे वा कलशेऽव्रणे ॥८३॥
तमात्मनोत्तरे भागे ह्यर्चयित्वा निवेद्य च ।
अथापरस्मिन् भाण्डे तु तदस्त्रपरिमन्त्रिते ॥८४॥
नैवेद्याद्भागमादाय तथा चर्वन्तरस्थितात् ।
ओदनादंशमुद्धृत्य दध्याज्यव्यञ्जनैः सह ॥८५॥
समालभनपुष्पार्घ्यकुशाम्बुपरिभावितम् ।
तद्हृन्मन्त्रेण बहुशो ह्यभिमन्त्र्याब्जसम्भव! ॥८६॥
तन्मूलमन्त्रमुच्चार्य ध्यानभावनयान्वितम् ।
प्राक्सन्निवेशिते भाण्डे समुत्कीर्य पिधाय तत् ॥८७॥
प्रणवाष्टकजप्तं वा तन्नाम्ना सह पौष्कर! ।
एकं वै सोदकं पात्रं सनैवेद्यं जलाप्लुतम् ॥८८॥
सर्वत्र सर्वदा यागे कुर्यात्प्राग्विधिना विना ।
तच्चापि क्ष्मातले कूपे तटाकादौ तु चोत्किरेत् ॥८९॥
ज्ञात्वैवं यत्नतो मन्त्री तन्मन्त्रेण समर्चयेत् ।
साङ्गं मन्त्रमथो वक्ष्ये यथावदवधारय ॥९०॥
आक्रान्तमनलेनैव प्राणाख्यं बीजनायकम् ।
त्रैलोक्यैश्वर्यदोपेतमूर्जोपरिगतं तु तत् ॥९१॥
ततो वराहमादाय भूधरव्योमभूषितम् ।
विष्वक्सेनाय तदनु सनमस्कं पदं न्यसेत् ॥९२॥

प्रणवाद्यो ह्ययं मन्त्रो विष्वक्सेनस्य कीर्तितः ।
पूर्वबीजं हि यच्चास्य ऊकारस्वरवर्जितः ॥९३॥
आकाराद्यैश्च षड्दीर्घैर्भिन्नमङ्गगणं नयेत् ।
प्रणवेन स्वनाम्नाथ जातिभिः षड्भिरन्वितम् ॥९४॥
नमः स्वाहादिभिश्चायं विष्वक्सेनस्य वाचकः ।
साङ्गेनानेन मन्त्रेण प्रतिष्ठाप्य विधानतः ॥९५॥
प्रथमावरणे वाऽथ द्वितीयावरणेऽथ वा ।
ईशानसोमदिङ्मध्ये प्रासादे दक्षिणामुखे ॥९६॥
मूलालयोच्चार्न्नीचे च कल्पिते गर्भमान्दिरे ।
ब्रह्मस्थानेऽथ वा दिव्यं मूलबेरांशमानतः ॥९७॥
कल्पितस्य शिलादारुलोहपूर्वैस्तु वस्तुभिः ।
पूजनं मुख्यकल्पं स्यादनुकल्पोऽग्रमण्डपे ॥९८॥
प्रागुक्तकोणभूभागे मेखलात्रयनिर्मिते ।
पीठेऽवतार्य गगनादमूर्तं मूर्तमेव वा ॥९९॥
केवलं बलिदानेन तर्पयेदुदकेन च ।
चतुः स्थानावतीर्णस्य मण्डलादिषु वृत्तिषु ॥१००॥
परव्यूहादिरूपस्य देवस्य यजनावधौ ।
प्रासादान्तर्गतस्यापि स्वस्थानस्थस्य मण्डपे ॥१०१॥
पूजनं विधिवत्कार्यमारम्भदिवसान्वितः ।
सर्वकर्मावसाने तु मण्डलादिगते विभौ ॥१०२॥
स्वे स्वे धाम्नि विसृष्टे तु ध्यात्वा मण्डलमध्यतः ।
पूजयेद्विधिवन्मन्त्री द्वितीये वासरेऽपि च ॥१०३॥
भगवद्यजनार्थं तु प्रासादस्थं विशेषतः ।
यथाविधि समभ्यर्च्य नैवेद्यैस्तन्निवेदितैः ॥१०४॥

अर्घ्याद्यैरखिलैरन्यैस्ताम्बूलाद्यैश्च नित्यशः ।
जलस्थलादिनिलयांस्तद्भूतांश्चाथ तर्पयेत् ॥१०५॥

प्रासादस्थस्य तस्याथ देहमानानुसारतः ।
कृत्वा हेमादिभिर्दिव्यैर्विशेषार्चां विधानतः ॥१०६॥

उग्रां वा शान्तरूपां वा विघ्नविध्वंसनक्षमाम् ।
चतुर्भुजां वा द्विभुजामासीनां वाऽथ सुस्थिताम् ॥१०७॥

द्विभुजस्य चतुर्हस्तामन्यधा वा प्रकल्पिताम् ।
वैशेषिकेषु प्राप्तेषु पूजयेदुत्सवार्चया ॥१०८॥

मृगयाद्युत्सवे प्राप्ते यत्र यत्र व्रजेत्प्रभुः ।
तत्र तत्र नयेदेनां निर्विघ्नफलसिद्धये ॥१०९॥

ध्यानमस्य प्रवक्ष्यामि यथावच्छृणु सत्तम ।
नवदूर्वाङ्कुराभं च त्वीषत्पीतलकान्तिभाक् ॥११०॥

चतुर्दंष्ट्रं चतुर्बाहुं चतुष्किष्कुं चतुर्गतिम् ।
पूर्णाङ्गं केसरिस्कन्धं पृथूरःस्थलराजितम् ॥१११॥

दक्षिणावर्तनिम्नेन नाभीरन्ध्रेण शोभितम् ।
आजानुबाहुं श्रीमन्तं पिङ्गलार्चिर्जटाधरम् ॥११२॥

द्रवत्कनकपिङ्गाक्षं चिपिटं पृथुनासिकम् ।
सितदीर्घनखश्रेणीशोभितं कुटिलभ्रुवम् ॥११३॥

विस्तीर्णगण्डवदनं बालेन्दुकुटिलोपमैः ।
नवकिंवरुणाकारैर्लोमभिः पूर्णविग्रहम् ॥११४॥

शोभनेन प्रलम्बेन पृथुना प्रोन्नतेन च ।
माणिक्यकुण्डलाढ्येन युक्तं श्रोत्रद्वयेन तु ॥११५॥

मकुटेनोन्नतेनैव हाराद्यैरुपशोभितम् ।
चित्रकौशेयवसनं विचित्रस्रग्विमण्डितम् ॥११६॥

प्रलयद्द्वादशादित्यसहस्रगुणदीधितिम् ।
ईषदूर्ध्वं तथा तिर्यग्विनिपातितलोचनम् ॥११७॥
कुन्देन्दुकान्तिदशनं किञ्चिद्विहसिताननम् ।
स्वभावसौम्यममलं मायाक्रोधोपरञ्जितम् ॥११८॥
सविलासचलत्पादन्यासस्थानकसंस्थितम् ।
स्वेनान्तः करणेनैवं भावयन्तं परं पदम् ॥११९॥
अङ्गुष्ठादिकनिष्ठान्तं वामपाणौ लतात्रयम् ।
नमयित्वोन्नता चैकाग्राणाग्रे विनियोजिता ॥१२०॥
सद्विग्नभीतिप्रदया त्वनया मुद्रयान्वितम् ।
रथाङ्गशङ्खहस्तं च लम्बमानगदाधरम् ॥१२१॥
श्रोणीतटनिविष्टेन सावहेलनपाणिना ।
इत्थं रूपधरं देवमनेकाद्भुतविग्रहम् ॥१२२॥
उग्ररूपमिमं ध्यायेदाग्नेयमनलप्रभम् ।
दंष्ट्रातर्जननिर्मुक्तं साभयं शान्तलक्षणम् ॥१२३॥
मुख्यदक्षिणहस्तेन भक्तानामभयप्रदम् ।
तथाविधेन वामेन लम्बमानगदाधरम् ॥१२४॥
पृष्ठदक्षिणवामाभ्यां चक्रशङ्खधरं क्रमात् ।
एवं चतुर्भुजस्योक्तं द्विभुजस्यावधारय ॥ १२५॥
उक्ताभ्यामुग्रशान्ताभ्यां चक्रशङ्खधरं विना ।
प्रागुक्तद्वितयं वाऽथ द्वितीयं चित्ततन्तु वा ॥१२६॥
गदाविरहितं वाथ वामकट्यवलम्बितम् ।
स्थानकेनासनेवाममूरुदेशे निवेशितम् ॥१२७॥
गोपनीमुद्रया वाथ कटकाकारमुद्रया ।
उभाभ्यामपि पाणिभ्यां विश्रान्तं पीठपृष्ठतः ॥१२८॥

अवष्टभ्य गदामूर्ध्वे मातङ्गमुसलाकृतिम् ।
प्रकृपद्मदळमाक्रम्य पादाभ्यां कर्णिकासनम् ॥१२९॥

सुस्थितं कर्णिकायां वा प्राग्वदन्यैरलङ्कृतम् ।
एवं ध्यानविशेषेषु त्वेकं स्थाप्य विधानतः ॥१३०॥
समर्चयीत कालेषु प्रागुक्तेषु स्वमन्त्रतः ।
चतुःस्थानार्चनार्थं तु मण्डलानां तु मध्यतः ॥१३१॥
पूजितेष्वथ मन्त्रेषु नियुक्तेषु स्वधामनि ।
ईशानसोमदिङ्मध्ये चतुरश्रे पुरेऽथवा ॥१३२॥

द्वारशोभाग्रनिर्मुक्ते रेखात्रितयभूषिते ।
तदन्तरेऽर्धचन्द्रस्थे कमलेऽष्टदळान्विते ॥१३३॥
साम्राज्येन नियुक्तेऽस्मिन् विघ्नानामच्युतेन तु ।
पूजिते विधिना शश्वदभीष्टं साधकोऽश्नुते ॥१३४॥
तस्मान्मन्त्रैस्तदर्थैस्तु स्नात्वा पूर्वं विधानतः ।
प्रक्षाल्य पाणिपादौ वा त्वाचम्य न्यासमाचरेत् ॥१३५॥

तदधिष्ठातृकत्वेन धारणाभिः स्वविग्रहम् ।
शोधयित्वा पुनर्न्यस्य षडङ्गादिं करादितः ॥१३६॥
प्राग्वदानन्दधामाच्च ह्यवतार्य तथा प्रभुम् ।
इष्ट्वा हृत्पुण्डरीके तु स्वापेक्षां निष्कळात्मकम् ॥१३७॥
तमेव सकळत्वेन यातं ध्यात्वा बहिर्यजेत् ।
प्राग्वदर्घ्यादिपात्राणि प्रतिष्ठाप्य स्वविग्रहे ॥१३८॥
विन्यस्य मन्त्रानभ्यर्च्य द्वारदक्षिणसौम्ययोः ।
चण्डप्रचण्डसदृशौ बलप्रबलसंज्ञितौ ॥१३९॥

वायुवेगं महाघ्राणं द्वाराग्रे गरुडोपमम् ।
समभ्यर्च्य यथापूर्वं प्राग्दत्वा कमलासनम् ॥१४०॥

धर्माद्यनन्तपर्यन्तं पद्मकं नवकन्तु वा ।
सत्वेनाच्छादितं पश्चात्केवलेनाम्बुजं स्मरेत् ॥१४१॥
तस्मिन्नावाह्य तं देवं हृदये ध्यानचोदितम् ।
सन्निधानादिकं कृत्वा मुद्राबन्धपुरस्सरम् ॥१४२॥
समभ्यर्च्यार्घ्यपुष्पाद्यैः लययागविधानतः ।
कर्णिकामध्यगं तस्य हृदाद्यं मुख्यमन्त्रवित् ॥१४३॥
पद्मच्छदान्तरस्थाश्च तदाकारद्युतिं विना ।
किं त्वङ्गानां च सर्वत्र ध्यानमुक्तं सितादिकम् ॥१४४॥
क्रियाख्यां तेजसीं शक्तिं स्वाहापर्यायरूपिणीम् ।
लक्ष्मीरूपधरां प्रीतां सर्वालङ्कारमण्डिताम् ॥१४५॥
प्रियानुरूपां सततं स्वासीनां वाथ सुस्थिताम् ।
दक्षिणोत्तरयोगेन चामरोभयधारिणीम् ॥१४६॥
ओं ह्रीं क्रियायै स्वाहान्तो मन्त्रोयं सम्प्रकीर्तितः ।
अनेन स्वामिनो देहात् तैजसाद्विघ्नसूदनात् ॥१४७॥
वामपार्श्ववतार्यास्य भोगयागावसानतः ।
गजाननो जयत्सेनो हरिवक्त्रो महाबलः ॥१४८॥
कालप्रकृतिसंज्ञश्च चतुर्थः कमलोद्भव ! ।
गणराजेश्वराश्चैते चत्वारश्चण्डविग्रहाः ॥१४९॥
आज्ञाप्रतीक्षकाश्चास्य सुश्वेतचमरोद्यताः ।
विनायकादयश्चैव विघ्नेशप्रवरास्तु ये ॥१५०॥
अमीषां गणनाथानां नित्यमाज्ञानुपालिनान् ।
ईशानादिषु कोणेषु पद्मबाह्ये स्थितान्यसेत् ॥१५१॥
वीक्षमाणा विभोर्वक्त्रं तत्तुल्यस्थानके स्थिताः ।
तद्वत्कराङ्किताः सर्वे किं तु मुद्राविवर्जिताः ॥१५२॥

ध्यानमेषां पृथग्भूतं शारीरमवधारय ।
भीमद्विपेन्द्रवदनं चतुर्दंष्ट्रं त्रिलोचनम् ॥१५३॥
कम्बुग्रीवं चतुर्बाहुं पूर्णचन्द्रायुतद्युतिम् ।
हारनूपुरकेयूरमेखलादाममण्डितम् ॥१५४॥
नानास्रग्गन्धवस्त्राढ्यमनौपम्यपराक्रमम् ।
ध्यायेद्गजाननमतो जयत्सेनं च संस्मरेत् ॥१५५॥
महत्तुरङ्गवदनं पद्मरागाचलप्रभम् ।
द्रवच्चामीकराक्षं च त्वनेकाद्भुतविग्रहम् ॥१५६
हरिवक्त्रमतो ध्यायेत्सटाच्छुरितमस्तकम् ।
निष्टप्तकनकप्रख्यं घोरघर्घरनिस्वनम् ॥१५७॥
मृगराड्वदनं विप्राः! कल्पान्तानलवेगिनम् ।
कालप्रकृतिनामानं भावयेदञ्जनाद्रिवत् ॥१५८॥
दंष्ट्राकरालवदनं पिङ्गलश्मश्रुलोचनम् ।
झषकुण्डलभृद्रौद्रं मीनवन्निम्ननासिकम् ॥१५९॥
गणराजेश्वराद्येते महापुरुषलक्षणैः ।
संयुक्ताश्चाखिलैर्विप्राः! आपादात्कन्धरावधि ॥१६०॥
यत्किञ्चिन्मण्डनं वस्तु तदाद्योक्तं स्मरेत्त्रिषु ।
एतेषामर्चनं कुर्यात्स्वनाम्ना प्रणवादिना ॥१६१॥
नमान्तेनोऽब्जसम्भूत नानासिद्धिफलाप्तये ।
अष्टाष्टकैस्तदर्धैर्वा तस्यार्धैर्वा यथारुचि ॥१६२॥
क्षिप्रकर्मप्रसिध्यर्थमष्टाभिर्वा समर्चयेत् ।
तन्निवेदितमन्नाद्यमर्घ्यस्रक्चन्दनादिकम् ॥१६३॥
न देयं कस्यचित्प्राज्ञैरैहिकामुष्मिकाप्तये ।
स्वाश्रितानामनुज्ञातं भूतानाञ्चैव तेन तत् ॥१६४॥
नित्यं तदूर्ध्वतस्तेषामाशास्थगितचारिणी ।

अत एव हि भोक्तॄणामर्थहानिं ददाति तत् ॥१६५॥
नूनमाशागणं सर्वं ध्वंसयन्ति सदैवहि ।
तस्माद्ददाति योऽन्येषां स्वयमश्नाति वाऽधमः ॥१६६॥
मोहादुपेक्षते वाऽपि स याति नरकेऽधमः ।
अतः श्रेयोऽर्थिना कार्यः परिहारः सदैव हि ॥१६७॥
तच्चापि क्ष्मातले कूपे तटाकादौ तु चोत्क्षिपेत ।
नोपभोगं यथा याति काकादिष्वब्जसम्भव ॥१६८॥
यस्मात्सन्मन्त्रपूतं तत्प्राधान्येनापि वर्धते ।
अतो निषिद्धः पापानामपापानां विशेषतः ॥१६९॥
इति सम्यक् समाख्यातं विष्वक्सेनार्चनं परम् ।
पूजनं कुमुदादीनां शृणुध्वमथ योगिनः ! ॥१७०॥
द्वारावरणदेवानां सुस्थितानां स्वसद्मसु ।
चलानां वाऽथ हेमाद्यैर्निर्मितानां यथाविधि ॥१७१॥
त्रिकालं वा द्विकालं वा सङ्कटे त्वेककालकम् ।
तत्तन्मन्त्रेण कुर्वीत पूजामष्टोपचारतः ॥१७२॥
इत्येवं वैनतेयादिपरिवारगणस्य च ।
पूजनं सर्वमाख्यातं सर्वसिद्धिफलप्रदम् ॥१७३॥
इतोऽन्यच्छ्रोतुमिच्छा चेत्कथ्यतां मुनिसत्तमाः ! ।

मुनयः ।

भगवन् ! मन्दिरे विष्णोः स्थापिता लोकपूजिताः ॥१७४॥
विष्णुभक्ताः कथं पूज्यास्तद्विधानं वदस्व नः ।

नारदः ।

एकान्तिनो महाभागाः शठकोपपुरस्सराः ॥१७५॥
क्षोण्यां कृतावतारा ये लोकोज्जीवनहेतुना ।
शाण्डिल्याद्याश्च ये चान्ये पाञ्चरात्रप्रवर्तकाः ॥१७६॥

प्रह्लादश्चैव सुग्रीवो वायुसूनुर्विभीषणः ।
ये चान्ये सनकाद्याश्च पञ्चकालपरायणाः ॥१७७॥
भक्तोत्तमास्ते विज्ञेयास्तान् दिव्यायतनादिषु ।
चरस्थिरविभागेन लोहैर्वा शिलयापि वा ॥१७८॥
स्वस्ववर्णाश्रमाचारसदृशाकृतिचेष्टितान् ।
लाञ्छितान् चक्रशङ्खाभ्यां भुजयोर्दक्षिणादितः ॥१७९॥
पद्मविष्टरमध्ये तु स्वासीनान् वाथ सुस्थितान् ।
ऋजु स्थितान्यथाशोभं पैशाचस्थानकेऽथवा ॥१८०॥
निर्माय च विधानेन प्राङ्गणे मण्टपेऽथ वा ।
प्रासादेष्वनुरूपेषु कल्पितेष्वग्रतो विभोः ॥१८१॥
यथावकाशं वामे वा दक्षिणे वाथ पश्चिमे ।
स्वस्वमन्त्रैः प्रतिष्ठाप्य विधिवच्छ्रद्धयार्चयेत् ॥१८२॥
शृणुध्वमथ तन्मन्त्रान् स्थापनादिषु कर्मसु ।
प्रधानपुरुषेशाद्यतारकब्रह्मणाथ वा ॥१८३॥
अहंसतारकेणैव सविसर्गेण चान्तिके ।
आद्येन वा द्वितीयेन युक्तया त्रितयेन वा ॥१८४॥
संज्ञया योजनीयास्ते साङ्गयागस्त्वथोच्यते ।
ताराद्ययोर्द्वयोरेकं षोढा कृत्वा तदन्तिमे ॥१८५॥
ज्ञानादिहृदयादीनि चतुर्थ्यन्तान्युदीरयेत् ।
प्रणवाधारयुक्तानि प्रागेवाङ्गान्यमूनि वै ॥१८६॥
मन्त्रेणानेन वै भक्तान् पूजयेत्तु यथाविधि ।
प्राग्वत्स्नानादिकं कृत्वा सोर्ध्वपुण्ड्रः स्वलङ्कृतः ॥१८७॥
पादौ प्रक्षाल्य चाचम्य प्रविश्य यजनालयम् ।
कवाटोद्घाटनं कुर्याद्द्वार्स्थाभ्यर्चनपूर्वकम् ॥१८८॥
तन्मन्त्रेण प्रणम्याथ बिम्बशुध्यादिकं तथा ।

प्रासादशोधनादीनि कृत्वा वै तस्य दक्षिणे ॥१८९॥
पार्श्वे समुपविश्याथ करशुद्धिं समाचरेत् ।
दिग्बन्धं चैव सायामां भूतशुद्धिं समाप्य च ॥१९०॥
पुटीकृतेन ताराभ्यां भक्तमन्त्रेण मन्त्रवित् ।
नखान्तं मणिबन्धाद्यं प्राग्वत्पाणिद्वयं मृजेत् ॥१९१॥
अङ्गानि चैव विन्यस्य पूर्वोक्तविधिना ततः ।
तुळसीनळिनाक्षाणां मालिकाद्वितयं तथा ॥१९२॥
चक्रशङ्खौ पाणितलद्वये न्यस्य यथाक्रमम् ।
कृत्वैवं करविन्यासं ततस्तन्मन्त्रमुच्चरन् ॥१९३॥
पाणिभ्यामालभेद्देहमामूर्ध्नश्चरणावधि ।
कृत्वैवं व्यापकन्यासं हृदयादीनि विन्यसेत् ॥१९४॥
ततो मालाद्वयं कण्ठे चक्रशङ्खौ भुजद्वये ।
विन्यस्य हार्दधीमुद्रां बध्वा तादात्म्यमाश्रयेत् ॥१९५॥
ततः स्वहृदयाम्भोजे देवस्य परमात्मनः ।
पादाधस्ताच्चेतनन्तु विचिन्त्य तदनन्तरम् ॥१९६॥
तस्माच्चैतन्यमावाह्य यजेद्भोगैस्तु मानसैः ।
ततो बहिर्यजेद्भक्तं प्रागुक्तैर्भोगसञ्चयैः ॥१९७॥
तदर्थं पञ्चपात्राणि चतुस्त्र्येकमेव वा ।
कल्पयित्वा ततो देहन्यस्तान् मन्त्रान् समर्चयेत् ॥१९८॥
द्वारयागं ततः कुर्यादर्घ्याद्यैर्देशिकोत्तमः ।
सावित्रं सवितारं च गर्भद्वारस्य पार्श्वयोः ॥१९९॥
सम्पूज्य तद्विमाने तु चतुर्दिक्षु यथाक्रमम् ।
भक्तमूर्तीस्समभ्यर्च्य अर्घ्याद्यैर्मुनिसत्तमाः ॥२००॥
ततोऽग्रमण्टपद्वारे दुर्गां गणपतिं यजेत् ।
इन्द्रादिलोकपालांस्तु प्रथमावरणादिषु ॥२०१॥

सम्पूज्यावरणद्वारे त्विन्द्रं चेन्द्रजयं यजेत् ।
यद्वा द्वारेषु सर्वेषु तथैवावरणेषु च ॥२०२॥
तत्तच्छिष्यगणानेव परिवारान् प्रकल्पयेत् ।
महापीठे यजेत्सर्वभूतेभ्यो नम इत्यथ ॥२०३॥
गर्भगेहे सम्प्रविश्य कल्पयेदासनं गुरुः ।
धर्मादीन् चतुरः पीठकोणेष्वभ्यर्च्य पूर्ववत् ॥२०४॥
सत्वेनाच्छादितं पश्चात्केवलेनाम्बुजं यजेत् ।
तत्रावतार्य तं भक्तं मन्त्रन्यासं समाचरेत् ॥२०५॥
यथा देहे तथा बिम्बे लयोक्तविधिना ततः ।
समभ्यर्च्य ततो भोगयागं कुर्याद्यथाविधि ॥२०६॥
प्रागादिपद्मपत्रेषु हृदयादीनि पूर्ववत् ।
विदिग्दळेषु चैवास्त्रं नेत्रं केसरजालगम् ॥२०७॥
पीठोपरि दळाद्बाह्ये त्वाग्नेयेशानकोणयोः ।
मालाद्वयं तु पूर्वोक्तं चक्रशङ्खौ च पूजयेत् ॥२०८॥
ततो ध्यायेद्विष्णुभक्तं सर्वलक्षणसंयुतम् ।
स्वस्ववर्णाश्रमाचारसदृशाकृतिचेष्टितम् ॥२०९॥
बद्धाञ्जलिपुटं वाथ व्याख्यामुद्रासमन्वितम् ।
पद्मविष्टरमध्ये तु स्वासीनं वाथ सुस्थितम् ॥२१०॥
ललाटादिषु चाङ्गेषु ह्यूर्ध्वपुण्ड्रैरलङ्कृतम् ।
लाञ्छितं चक्रशङ्खाभ्यां भुजयोर्दक्षिणादितः ॥२११॥
तुळसीनळिनाक्षाणां मालाद्वितयभूषितम् ।
एवं ध्यात्वा विष्णुभक्तं हृदयादींश्च पूर्ववत् ॥२१२॥
ध्यात्वाथ पूजनं कुर्यादासनाद्यैर्यथोदितैः ।
द्वात्रिंशदुपचारैर्वा ह्यष्टभिर्वा द्विरष्टभिः ॥२१३॥
जपान्तंवाऽपि होमान्तं तत्तन्मन्त्रेण पूर्ववत् ।

अस्वातन्त्र्याद्बलिं तत्र न कदापि समाचरेत् ॥२१४॥
तत्तज्जन्मदिने कुर्यात्तेषां वैशेषिकार्चनम् ।
सहैव देवदेवेन सङ्क्रान्त्यामयनादिषु ॥२१५॥
कालेष्वेतेषु कर्तव्यमुत्सवभ्रमणादिकम् ।
पृथग्वाप्युत्सवः कार्यो ध्वजारोहणवर्जितः ॥२१६॥
न होमा न बलिस्तीर्थं पारतन्त्र्ये विधिस्त्वयम् ।
स्वातन्त्र्ये चाग्रहारादौ विपिने वा नदीतटे ॥२१७॥
सप्रकारं समानं तु यथेष्टतलशोभितम् ।
कल्पयित्वा प्रयत्नेन रथ्याभिश्च परिष्कृतम् ॥२१८॥
देशान्तरगतानां वा भगवल्लोकवासिनाम् ।
दृश्यरूपमदृश्यं वा देवसारूप्यतां गतम् ॥२१९॥
स्थापयित्वा विधानेन प्रासादे मानुषे पदे ।
दिव्यमानुषयोर्वाथ दिव्ये वा मानुषाश्रिते ॥२२०॥
विष्णोर्मन्त्रासनाव्यक्तपद्ममध्यस्थचेतनात् ।
भक्तबिम्बहृदम्बोजे चैतन्यमवतार्य च ॥२२१॥
सकलीकृत्य मन्त्रेण साङ्गेनाभ्यर्चयेत्सदा ।
आवाहने विशेषोऽयं जीवतां वाप्यजीवताम् ॥२२२॥
सर्वत्राव्यक्तपद्माद्यैरष्टभिर्वा द्विरष्टभिः ।
भोगैः प्रागुदितैः स्फीतैः ताम्बूलान्तैः समर्चयेत्॥२२३॥
कृत्वा पद्मध्वजारोहं हंसध्वजमथापि वा ।
समारोप्य यथाशास्त्रं कुर्यात्तत्र महोत्सवम् ॥२२४॥
बलिदानादिकं तीर्थं सर्वं तत्र समाचरेत् ।
भक्तप्रणीता गाथाश्च श्रुत्यन्तार्थोपबृंहिताः ॥२२५॥
श्रावयेद्विधिवद्देवं भक्त्या गीतिपुरस्सरम् ।
तन्निवेदितमन्नाद्यं गायकेभ्यः प्रदापयेत् ॥२२६॥

इति सम्यक् समाख्यातं विष्णुभुक्तार्चनं परम् ।
गोपनीयं प्रयत्नेन नास्तिकानां विशेषतः ॥२२७॥
प्रकाशनीयं भक्तानां नित्यकर्मरतात्मनाम् ॥

इति श्रीपाञ्चरात्रे ईश्वरसंहितायां
गरुडादिपरिवारार्चनविधिर्नाम
अष्टमोऽध्यायः

---

## अथ नवमोऽध्यायः।

---

मुनयः।

पुरा नित्योत्सवविधौ द्वारावरणवासिनाम् ।
देवानां पूजनं प्रोक्तं तेषां ध्यानादिकं क्रमात् ॥१॥
वदस्व मुनिशार्दूल ! सर्वशास्त्रविशारद! ।

नारदः ।

शृणुध्वं मुनयः सर्वे सावधानेन चेतसा ॥२॥
द्वारावरणदेवानां लक्षणं तु यथाविधि ।
प्रासादद्वारदेवेभ्यः समारभ्य यथाक्रमम् ॥३॥
प्रासादद्वारबाह्ये तु ह्यधस्थौदुम्बरान्तिमे ।
वास्त्वीशक्षेत्रनाथौ द्वौ स्थितौ दक्षेतरक्रमात् ॥४॥
शुक्लवक्त्रः कृष्णदेहो द्विभुजो रत्नपात्रधृक् ।
दक्षिणेन करेणैव सर्वामरसमाश्रयः ॥५॥
पुण्डरीकसमानाभवस्त्रस्रगनुलेपनः ।
गदोद्यतकरो विप्राः! ध्यातव्यो वास्तुपूरुषः ॥६॥
क्षेत्रेशं द्विभुजं ध्यायेद्धेमाभवसनस्रजम् ।
नीलजीमूतसङ्काशं दण्डहस्तं महातनुम् ॥७॥
मुष्टिकुद्दामहस्तेन यागक्षेत्रस्य पालकम् ।

कुण्डलाद्यैरलङ्कारैरेतौ शोभितविग्रहौ ॥८॥
वीक्षमाणौ विभोर्वक्त्रं तेजसातीव निर्भरौ ।
तप्तकांचनवर्णाभां प्रवालसदृशाम्बराम् ॥९॥
हारनूपुरकेयूरकरण्डमकुटादिकैः ।
अलङ्कृतामलङ्कारैः पुण्डरीकनिभेक्षणाम् ॥१०॥
अकलङ्कसुसम्पूर्णशरच्चन्द्रनिभाननाम् ।
पद्मकुम्भकरां लक्ष्मीं पद्मोपरि गतां स्मरेत् ॥११॥
पद्मासनेनोपविष्टां द्वारस्योर्ध्व उंदुम्बरे ।
तरुणादित्यसङ्काशो महोरस्कश्चतुर्भुजः ॥१२॥
उन्नतश्चोन्नतांसश्च पूर्णाङ्गो नातिमांसलः ।
तनूदरो निम्ननाभो रोमराजिविराजितः ॥१३॥
दंष्ट्राकरालवदनः पिङ्गश्मश्रुजटाधरः ।
मधुपिङ्गलनेत्रश्च कुटिलभ्रूलतायुतः ॥१४॥
प्रलम्बलोलश्रवणः पृथुघ्राणः सिताननः ।
कुण्डलालङ्कृतश्चैव हारकेयूरभूषितः ॥१५॥
बद्धोष्णीपललाटश्च तिलकेनाप्यलङ्कृतः ।
शुक्लाम्बरधरः स्रग्वी भुजयुग्मेऽस्य दक्षिणे ॥१६॥
प्रोद्यतं संस्मरेच्चक्रं प्रज्वलन्तीं गदाम्परे ।
श्रोणीतटनिषण्णां तु विश्रान्तां वसुधातले ॥१७॥
पूर्ववामकरे शंखमन्यस्मिंश्चाक्षसूत्रकम् ।
एवं गणाधिपश्चण्डो विक्रमेणापराजितः ॥१८॥
क्रुद्धो विघ्नायुतानां तु क्षणात्संहरणक्षमः ।
ध्येयो गर्भगृहद्वारशाखामूले तु दक्षिणे ॥१९॥
तत्रैवापरभागे तु प्रचण्डं त्वीदृशं यजेत् ।
किं तु सव्यापसव्याभ्यां भुजाभ्यां स्याद्विपर्ययः ॥२०॥

भुजद्वये यच्चण्डस्य वामे सम्परिकीर्तितम् ।
दक्षिणे तत्प्रचण्डस्य ध्येयं वा परिकल्प्य वा ॥२१॥
ध्यायेद्द्वाराग्रदेशे तु गरुडं काञ्चनप्रभम् ।
कुटिलभ्रूसुवृत्ताक्षं पक्षमण्डलमण्डितम् ॥२२॥
लम्बोदरं सुपीनाङ्गं सर्वभूषणभूषितम् ।
मकुटाद्यैरलङ्कारैर्नूपुराद्यैर्विराजितम् ॥२३॥
नीलं वसानं वसनं नानामाल्योपशोभितम् ।
सम्मुखं देवदेवस्य भूगतं विधृताञ्जलिम् ॥२४॥
द्विभुजं तुहिनाभं तु सत्याख्यं विहगाधिपम् ।
प्राणाधिदैवतं चक्रे बलिमण्डलमध्यगे ॥२५॥
संस्थितं संस्मरेत्सर्वैरङ्गैः पूरुपरूपिणम् ।
प्रलम्बमानजठरं पक्षराजिविराजितम् ॥२६॥
दक्षिणेन करेणैव धारयन्तं गणित्रकम् ।
उत्तानितेतरकरं कुण्डलाद्यैर्विभूषितम् ॥२७॥
नीलकौशेयवसनं नीलमाल्यानुलेपनम् ।
अनाकुलाभ्यां नेत्राभ्यां वीक्षमाणं सदा विभुम् ॥२८॥
अथाग्रमण्टपद्वारशाखायुगळसंस्थितौ ।
पद्मगर्भप्रतीकाशावतिभीमपराक्रमौ ॥२९॥
चण्डप्रचण्डसदृशौ भुजलाञ्छनभूषणैः ।
रक्ताम्बरधरौ चैव रक्तस्रगनुलेपनौ ॥३०॥
गणौ धातृविधातारौ ध्यात्वा सम्पूज्य तत्परः ।
कुमुदादिगणेशानान् प्रथमावरणे यजेत् ॥३१॥
पूर्वे च वह्निदिग्भागे पूज्यौ द्वौ गणनायकौ ।
कुमुदः कुमुदाक्षश्च प्रसन्नवदनेक्षणौ ॥३२॥
तुहिनाचलसङ्काशौ प्रथमे वयसि स्थितौ ।

नानाभरणदिग्धाङ्गौ नानाकुण्डलभूषितौ ॥३३॥
नानामाल्याञ्चितौ चैव नानामौलिधरौ द्विजाः ।
नानागन्धविलिप्ताङ्गौ नानावस्त्रविभूषितौ ॥३४॥
कुमुदाख्यगणेशस्य ध्यातव्यो दक्षिणः करः ।
चन्द्ररश्मिप्रतीकाशचामरेण विराजितः ॥३५॥
अभिगच्छाभयं ध्यायेद् द्वितीयं दक्षिणं करम् ।
भवभङ्गात्प्रपन्नानां परेषां गुणशासनम ॥३६॥
तस्यैवाद्यं वामकरं प्रबुद्धकमलोद्यतम् ।
तूष्णीं भीसूचकं ध्यायेद्बहिःस्थानां परं करम् ॥३७॥
एतद्वै कुमुदाक्षस्य वैपरीत्येन भावयेत् ।
द्वाभ्यां द्वाभ्यां कराभ्यां वै अन्येषामेवमेव हि ॥३८॥
पुण्डरीको वामनश्च द्वावेतौ हुतभुक्प्रभौ ।
गरुडध्वजहस्तौ च शेषमन्यत्पुरोदितम् ॥३९॥
कृत्वा ध्यात्वाथ वा न्यस्य दक्षिणे नैर्ऋतेऽपि च ।
शङ्कुकर्णाभिधानो यः सर्वनेत्राभिसंज्ञितः ॥४०॥
द्वावेतौ चम्पकाभौ तु मायूरव्यजनोद्यतौ ।
महाविभूतेर्देवस्य प्रत्यग्वायुदिगाश्रितौ ॥४१॥
सुमुखः सुप्रतिष्ठश्च विभोः सोमेशदिक्स्थितौ ।
चिन्त्यौ मुद्गफलश्यामावातपत्रकरोदितौ ॥४२॥
नोक्तशेषकराणां तु तद्विद्धि कुमुदोदितम् ।
एते भगवतो विप्रास्त्वन्तरङ्गा मयोदिताः ॥४३॥
कर्मणा मनसा वाचा तद्भागगतमानसाः ।
ज्ञानादिपञ्चगुणोपेतैराकीर्णाः कोटिशः परैः ॥४४॥
भूतैः सिद्धैरनन्तैश्च प्रार्थयानैः परं पदम् ।
वस्त्रभूषाङ्गरागाद्यैः सर्वे ते कुमुदोपमाः ॥४५॥

श्वेतमृत्कल्पितेनैव ह्यूर्ध्वपुण्ड्रेण भूषिताः ।
ललाटस्थेन सर्वेऽपि कुमुदादिगणाधिपाः ॥४६॥
एवमन्येपि भूताद्याः सर्वे पारिषदा द्विजाः ! ।
एवमावृतिदेवाश्च द्वारस्थाश्च तथैव हि ॥४७॥
एवं मदीया विप्राश्च क्षत्रविट्छूद्रजातयः ।
मृदैव वा चन्दनेन कल्पितैरूर्ध्वपुण्ड्रकैः ॥४८॥
द्वादशैश्च चतुर्भिर्वा भूषिताः स्युः सदा द्विजाः ! ।
अतसीकुसुमश्यामौ पीतमाल्याम्बरान्वितौ. ॥४९॥
पीतोष्णीषधरौ रौद्रौ प्राग्वद्भुजविभूषितौ ।
गणौ चण्डाकृतिधरौ दुर्दर्शौ दुरतिक्रमौ ॥५०॥
जयं च विजयं नाम्ना यजेत्तद्द्वारपार्श्वयोः ।
तदुद्देशात्समारभ्य बहिर्द्वारावसानकम् ॥५१॥
द्वितीयावरणक्षेत्रं षोढा कृत्वा तु पञ्चमे ।
भागे तु गरुडं विप्राः ! कृत्वा ध्यात्वाऽथ वा न्यसेत् ॥५२॥
दीप्यच्चामीकराकारं भीमभ्रुकुटिलोचनम् ।
पृथुदंष्ट्रं पृथुघ्राणं पृथुगात्रं पृथूदरम् ॥५३॥
पक्षाङ्कुराञ्चितोरस्कं पक्षमण्डलमण्डितम् ।
हारकेयूरताटङ्कमकुटाद्यैस्तु भूषणैः ॥५४॥
भूषितं नीलवसनं नानामाल्यविभूषितम् ।
नानागन्धविलिप्ताङ्गं नागैकादशभूषितम् ॥५५॥
पुष्पस्तवकसम्पूर्णमञ्जलिं दधतं द्विजाः ! ।
उन्नम्य दक्षिणं जानुमासनीकृत्य चेतरत् ॥५६॥
सुखासने समासीनं विभोराज्ञाप्रतीक्षकम् ।
तपःकर्मात्मतत्वानां दर्शकं सिद्धतां गतम् ॥५७॥
भगवत्तुल्यसामर्थ्यसार्वज्ञ्यादिगुणैर्युतम् ।

वियुक्तं प्राकृताद् दुःखान्नियुक्तं चेश्वरेण तु ॥५८॥
भवसन्तारकत्वेन ह्येतदावृतिके क्रमात् ।
उपेन्द्रः पूर्वदिग्भागे संस्थितो द्विजसत्तमाः! ॥५९॥
वह्नौ तेजोधराख्यस्तु दक्षिणे दुरतिक्रमः ।
नैर्ऋते तु महाकर्मा पश्चिमे तु महाह्रदः ॥६०॥
अग्राह्यो वायुदिग्भागे वसुरेतास्तथोत्तरे ।
पूर्वोत्तरे वर्धमानः साक्षी गगनगोचरः ॥६१॥
आधारनिलयं नाम्ना सर्वस्याधोगतं स्मरेत् ।
एते स्फाटिकवर्णाभाः श्वेतमाल्याम्बरान्विताः ॥६२॥
गणित्रकं रथाङ्गं च शङ्खं चैव गदां तथा ।
दधाना मुख्यदक्षादि मुख्यवामान्तमेव हि ॥६३॥
करैश्चतुर्भिः सुसमा मकुटादिविभूषिताः ।
तेजसा विघ्नजालानि प्रेरयन्तो महौजसः ॥६४॥
स्थानकैः संस्थिताः सर्वे ध्यानोन्मीलितलोचनाः ।
अथ वा द्विभुजा एते वज्राद्यं दशकं क्रमात् ॥६५॥
दक्षिणे लोकपालीयं धारयन्तः करेण तु ।
गणित्रकं तु वामेन वरदभयदास्तु वा ॥६६॥
तथा वर्णाङ्गरागाद्यैरिन्द्रादिसदृशास्तु वा ।
द्वितीयगोपुरद्वारपार्श्वयोरन्तरस्थयोः ॥ ६७॥
विन्यसेद्द्वारपालाख्यावेतौ वामादितो गणौ ।
निधीशौ शंखपद्मौ तु निधिभाण्डोपरि स्थितौ ॥६८॥
स्थूलदन्तौ च दान्तौ च द्विभुजौ भगवन्मयौ ।
कुटिलभ्रूलतायुक्तौ किञ्चिदुन्नतवक्षसौ ॥६९॥
लम्बोदरौ सुपीनाङ्गौ ह्रस्वपाणिपदौ द्विजाः! ।
शंखपद्मसमानाभौ नीलशुक्लाम्बरस्रजौ ॥७०॥

मकुटाद्यैस्तु विविधैरलङ्कारैरलङ्कृतौ ।
दक्षिणेन करेणैव धारयन्तौ सरोरुहम् ॥७१॥
इतरेण करेणैव ह्युत्तानेन निधिं स्वकम् ।
अथ वा वामदक्षाभ्यां प्रवेशाभीतिदान्वितौ ॥७२॥
करद्वयेन शङ्खं वा पद्मं वा दधतौ द्विजाः! ।
वामेन दधतौ पद्मं दक्षं शंखं निधीश्वरौ ॥७३॥
शंखपद्मधरौ वापि शिरसा मकुटोपरि ।
शंखचक्रधरौवापि साधकेच्छावशेन तु ॥७४॥
तद्द्वारशाखानिष्ठौ तु संस्मरेद्दक्षिणादितः ।
क्षीरकुन्दावदातौ च नीलकौशेयवाससौ ॥७५॥
नीलनीरजवर्णाभैः पुष्पैर्भूपितविग्रहौ ।
पूर्वोक्तगणसादृश्यौ नाम्ना भद्रसुभद्रकौ ॥७६॥
तद्द्वारबाह्यतः पश्चात्पार्श्वयोर्गोपुरस्थितौ ।
एतौ गणेश्वरौ न्यसेद् ध्यात्वा वा परिकल्प्य वा ॥७७॥
अथ वा द्विभुजावेतौ तदा भद्रस्य दक्षिणम् ।
करं तु तर्जनीयुक्तं वाममीषत्तु कुञ्चितम् ॥७८॥
गदाग्रोपरि विश्रान्तं गदामूलोपरि स्थितम् ।
व्यत्यस्तं दक्षिणं पादं वामं तु भुवि संस्थितम् ॥७९॥
भद्रस्य वामयोर्विप्रा यदुक्तं पाणिपादयोः ।
दक्षयोस्तत्सुभद्रस्य दक्षोक्तं वामकं भवेत् ॥८०॥
किं तु तद्वामहस्तं तु युक्तं विस्मयमुद्रया ।
यद्वा भद्रो दक्षकरेऽभीतिमुद्रासमन्वितः ॥८१॥
गदोपरिष्टाद्विश्रान्तवामहस्तो द्विजोत्तमाः! ।
पश्चात्करद्वयेनापि चक्रशंखधरः क्रमात ॥८२॥
सुभद्रस्तु गदान्यस्तदक्षहस्तस्तथेतरे ।

अभीतिमुद्रासंयुक्तश्चक्रशंखसमन्वितः ॥८३॥
चण्डादिष्वप्येवमेव द्विभुजत्वादिकं भवेत् ।
चण्डप्रचण्डौ धाता च विधाता च जयस्तथा ॥८४॥
विजयश्चापि भद्रश्च सुभद्रश्च गणेश्वरः ।
एते गणेश्वरा ह्यष्टौ प्रभापुष्पाम्बरैर्विना ॥८५॥
देहवक्त्राकृतैस्तुल्यास्तथैवाभरणायुधैः ।
भक्तानां विघ्नजालस्य सर्वदिक्संस्थितस्य च ॥८६॥
संसारफलदातुर्वै छेदनार्थं समुद्यताः ।
परस्परमुखाः सर्वे स्थानकैः संस्थिताः समैः ॥८७॥
गणेशायुतलक्षैस्तु नानावर्णवपुर्धरैः ।
अच्युताराधनपरैरनेकैः परिवारिताः ॥८८॥
तृतीयावरणे पश्चात्पूर्वादिक्रमयोगतः ।
इन्द्रादिलोकपालानां दशकं विन्यसेद्द्विजाः! ॥८९॥
शतधामनिभं ध्यायेच्चतुर्बाहुं पुरन्दरम् ।
महितद्विपसंस्थं तु सुतीक्ष्णकुलिशोद्यतम् ॥९०॥
अजारूढं स्मरेद्रक्तं शक्तिपाणिं हुताशनम् ।
सहस्रार्चिभिराकीर्णं सहस्रादित्यभासुरम् ॥९१॥
महामहिषसंस्थं तं त्वञ्जनाद्रिसमप्रभम् ।
सभीमदण्डहस्तं च स्मरेद्देवं पित्रीश्वरम् ॥९२॥
दंष्ट्राकरालवदनं कृष्णमेघसमप्रभम् ।
घोरं प्रेतासनं ध्यायेत् खड्गधृग्राक्षसेश्वरम् ॥९३॥
मुक्ताफलद्युतिसमं भीमं पाशकरोद्यतम् ।
नागकन्यासहस्राढ्यं मकरस्थमपां पतिम् ॥९४॥
नीलतोयदसङ्काशं महाध्वजपटाङ्कितम् ।
ध्यायेत्समीरणं देवं संस्थितं हरिणोपरि ॥९५॥

सोमं तारागणोपेतं शङ्खगोक्षीरपाण्डुरम् ।
बृहच्छशकपृष्ठस्थं शिशिरास्त्रकरं स्मरेत् ॥९६॥
सितभूतिविलिप्ताङ्गं त्रिनेत्रं वृषवाहनम् ।
त्रिशूलायुधहस्तं च त्वीशानं ज्ञानिनं स्मरेत् ॥९७॥
पाताळदिग्गतं ध्यायेत् कूर्मारूढं हलायुधम् ।
सितं सहस्रफणभृद्योनन्तो नाम नागराट् ॥९८॥
भचक्रं भ्रामयंतं तु दण्डहस्तं प्रजापतिम् ।
हंसारूढं खसंस्थं तु ध्यायेद् ध्रुवमजं विभुम् ॥९९॥
एते चतुर्भुजाः सर्वे अक्षसूत्रविभूषिताः ।
चिन्तयन्तः परं तत्त्वं वराभयकरोद्यताः ॥१००॥
दिव्याभरणदिग्धाङ्गा दिव्यमाल्याम्बरान्विताः ।
दिव्यरूपधराश्चैव दिव्यगन्धवहा द्विजाः ! ॥१०१॥
रक्तशुक्लनिशापीतनीलचम्पकसप्रभैः ।
व्योमस्फटिकमार्ताण्डराजोपलनिभैस्तथा ॥१०२॥
माल्याङ्गरागवसनैः महार्घैः समलंकृताः ।
भूषिता भूषणैश्चित्रैः करण्डमकुटादिभिः ॥१०३॥
एभ्यश्चतुर्भुजस्त्वत्र विज्ञेयो वृषभध्वजः ।
द्विभुजास्त्वथ वा चान्ये वरदाभयदास्तु वा ॥१०४॥
इति लोकेश्वरेषूक्तं ततो वै द्विजसत्तमाः ! ।
तृतीयावरणद्वारे शाखामूले तु दक्षिणे ॥१०५॥
सुदर्शनं चतुर्हस्तं ह्रस्वकायं ज्वलत्प्रभम् ।
क्रोधरक्तेक्षणं दैत्यदानवासृग्विलेपनम् ॥१०६॥
नृत्यन्तं मदमत्तं च सहस्रारान्तरास्थितम् ।
दंष्ट्राकराळवदनं कुटिलभ्रूलतायुतम् ॥१०७॥
कल्पान्तपावकाकारं स्वरश्मिपरिवेष्टितम् ।

दक्षिणे भुजयुग्मे तु पूर्वेण च सुदर्शनम् ॥१०८॥
धारयन्तं ततोऽन्येन विश्रान्तां भूतले गदाम् ।
शंखं मुख्येन वामेन ह्यपरेण गणित्रकम् ॥१०९॥
हारकेयूरताटङ्कमकुटादिविभूषणैः ।
विभूषितं विचित्रैस्तु श्वेतमाल्याम्बरादिकैः ॥११०॥
विघ्नानुत्पाटयन्तं तु दीप्तेन स्वेन तेजसा ।
संस्मरेत्तु ततोऽन्यस्मिन् शाखामूले ततो द्विजाः ! ॥१११॥
सुस्थितं गरुडं विप्राः तप्तकाञ्चनसन्निभम् ।
सौम्यवक्त्रं विवृत्ताक्षं रक्ततुण्डं सुभीषणम् ॥११२॥
पृथूदरं दीर्घपुच्छं पक्षमण्डलमण्डितम् ।
रक्ताम्बरधरं चैव रक्तस्रगनुलेपनम् ॥११३॥
दंष्ट्राकरालवदनं भ्रुकुटीकुटिलेक्षणम् ।
विचित्रकञ्चुकधरं भुजगेन्द्रैरलङ्कृतम् ॥११४॥
मकुटाद्यैरलङ्कारैर्विविधैस्तु विभूषितम् ।
भुजद्वये यच्चक्रस्य वामे सम्परिकीर्तितम् ॥११५॥
दक्षिणे तद्भवेदस्य दक्षोक्तं वामकं भवेत् ।
वज्रं शक्तिस्तथा दण्डः खड्गः पाशो ध्वजस्तथा ॥११६॥
शिशिराख्यं त्रिशूलं तु लाङ्गलं मुसलं तथा ।
पूर्वादिक्रमयोगेन चतुर्थावरणे स्थिताः ॥११७॥
एतेषां क्रमशो ध्यानं साम्प्रतं कथ्यते द्विजाः ! ।
वज्रं वज्रोपलाभं तु सितदीर्घनखाङ्कितम् ॥११८॥
दंष्ट्राकरालवदनं ज्वलत्कनकलोचनम् ।
सौदामिनीप्रभां शक्तिं शान्ताग्निवदनेक्षणाम् ॥११९॥
घनघर्घरनिर्घोषमुद्गिरन्तीं मुहुर्मुहुः ।
बद्धमुष्टिं स्मरेद्दण्डं रक्ताङ्गं रक्तलोचनम् ॥१२०॥

क्रोधमूर्तिं स्वदशनैर्दशन्तमधरं स्वकम् ।
स्वरश्मिखचितं ध्यायेन्नृत्यमानं तु नन्दकम् ॥१२१॥
शरदाकाशसङ्काशं दशन्तं दशनावळीम् ।
पाशं गुणगणाकीर्णं विद्युज्जिह्वं भयानकम् ॥१२२॥
हेमाळिपाण्डुराभं तु घोरास्यं रक्तलोचनम् ।
शरज्जलदसङ्काशं ध्वजं कुटिललोचनम् ॥१२३॥
स्वतेजसा जगत्सर्वं द्योतयन्तं बलोत्कटम् ।
शिशिरं शीतधामाभं पीनाङ्गं पृथुविग्रहम् ॥१२४॥
जटाकलापधृत्सौम्यं पुण्डरीकनिभेक्षणम् ।
उदयार्कसहस्राभं त्रिशूलं भीषणाकृतिम् ॥१२५॥
कल्पान्तपावकाकारं स्वरश्मिपरिवेष्टितम् ।
सन्ध्याजलदसङ्काशं लाङ्गलं भीमलोचनम् ॥१२६॥
क्षामाङ्गमुन्नतांसं तु वज्रकायं बलोत्कटम् ।
कुन्दावदातं मुसलं सौम्यमीषत्स्मिताननम् ॥१२७॥
रवं रवन्तं मधुरं श्रोत्रेन्द्रियसुखावहम् ।
नीलरक्तसितापीतपावकाञ्जनसन्निभैः ॥१२८॥
हेमचन्द्रहिमाकाशसमानाभैः क्रमेण तु ।
माल्याङ्गरागवसनैरुचितैः समलङ्कृताः ॥१२९॥
दिव्यैराभरणैर्युक्ताः स्वचिह्नाङ्कितमस्तकाः ।
तर्जयन्तश्च दुष्टौघं दक्षिणेन करेण तु ॥१३०॥
वामेन कटिमालम्ब्य सुसमे स्थानके स्थिताः ।
चतुर्थावरणद्वारदक्षिणोत्तरशाखयोः ॥१३१॥
गङ्गां च यमुनां चैव ध्यात्वा सम्पूजयेत्क्रमात् ।
भगवत्पादसम्भूतां गङ्गां कुमुदसन्निभाम् ॥१३२॥
नवयौवनलावण्यसौकुमार्यगणैर्वृताम् ।

नीलाङ्गरागवसनां नीलमाल्यैरलङ्कृताम् ॥१३३॥
द्विभुजां सौम्यवदनां पुण्डरीकनिभेक्षणाम् ।
हारनूपुरकेयूरकुण्डलाद्युपशोभिताम् ॥१३४॥
संसारतापसन्तप्तानारुरुक्षून् परं पदम् ।
वासनाकर्मपङ्कानि क्षाळयन्तीं स्वतेजसा ॥१३५॥
वहन्तीं दक्षिणेनैव कलशं वारिपूरितम् ।
वामेन तर्जयन्तीं तु करेण प्राकृतान् जनान् ॥१३६॥
यमुनां नीलरत्नाभां नीलकुञ्चितमूर्धजाम् ।
सिताङ्गरागवसनां सितमाल्योपशोभिताम् ॥१३७॥
दक्षिणे तर्जनीमुद्रा वामे तु कलशः स्मृतः ।
अन्यत्सर्वं तु गङ्गोक्तमत्रापि स्यान्मुनीश्वराः! ॥१३८॥
लोहिताक्षो महावीर्यस्त्वप्रमेयः सुशोभनः ।
वीरहा विक्रमो भीमः शतावर्तस्तु चाष्टमः ॥१३९॥
ऐश्वरीदिक्क्रमेणैव पञ्चमावरणे स्थिताः ।
ध्यायेच्चन्द्रप्रतीकाशं लोहिताक्षं बलोत्कटम् ॥१४०॥
नीलाम्बरधरं नीलमाल्यं नीलानुलेपनम् ।
महावीर्यं महाकायं पीतवर्णं महाभुजम् ॥१४१॥
प्रवाळाभाम्बरधरं रक्तस्रगनुलेपनम् ।
संस्मरेदप्रमेयाख्यमप्रमेयबलोत्कटम् ॥१४२॥
हरिताकृतिमापीतवसनस्राग्विलेपनम् ।
सुशोभनं शोभनाङ्गं मुक्ताफलनिभं स्मरेत् ॥१४३॥
अतसीपुष्पसङ्काशवासोमाल्यानुलेपनम् ।
वीरघ्नं वीरहाख्यं च ध्यायेचंपकसन्निभम् ॥१४४॥
वार्ह्लीकारञ्जितारक्तवसनस्रग्विमण्डितम् ।
विक्रमं विक्रमावासं चापोदरनिभं स्मरेत् ॥१४५॥

कुन्देन्दुकान्तिवसनं सितमाल्यानुलेपनम् ।
भीमं भीमाकृतिं ध्यायेत्तप्तकाञ्चनसन्निभम् ॥१४६॥
पाण्डरारुणकौशेयं तद्वद्गन्धस्रगन्वितम् ।
अतसीकुसुमश्यामं शतावर्तं तु भावयेत् ॥१४७॥
पीताम्बरधरं पीतमाल्यगन्धविभूषितम् ।
भुजद्वयान्विता ह्येते चान्तर्मुदितमानसाः ॥१४८॥
दक्षिणैः पाणिभिः सर्वे ज्वलन्तं परशुं तथा ।
वामैः शङ्खवरं दीप्तं दधानाश्चारुकुण्डलाः ॥१४९॥
समाः समविभक्ताङ्गाः प्रशान्ताकृतयस्तथा ।
स्थानकैः संस्थिताः सर्वे सप्रभाभिर्विराजिताः ॥१५०॥
प्रसन्नवदनाः सौम्याः त्रैलोक्योद्धरणक्षमाः ।
हारनूपुरकेयूरपूर्वभूषाविभूषिताः ॥१५१॥
तदाज्ञाप्रेक्षकाश्चैव दुष्टदोषोपशान्तिदाः ।
बलेन महता क्षिप्तदेवासुरमहोरगाः ॥१५२॥
एकवीरासहायाश्च त्वप्रयत्नेन लीलया ।
आब्रह्मभवनं शश्वत्परिवर्तयितुंक्षमाः ॥१५३॥
एतदावरणद्वारचतुष्के द्वारदेवताः ।
न्यस्येद्युग्मप्रयोगेण पूर्वद्वारादितः क्रमात् ॥१५४॥
वज्रनाभं हरीशं च पूर्वस्यां दक्षिणोत्तरे ।
ध्यायेत्तु वज्रनाभाख्यं शतधामसमप्रभम् ॥१५५॥
मुख्यदक्षिणहस्तेन निषेधाभिनयान्वितम् ।
वेत्रलतां द्वितीयेन चक्रराजं तृतीयतः ॥१५६॥
मुख्यवामकरेणैव श्रोणीतटकृतार्पणम् ।
शङ्खराजं द्वितीयेन तथा वज्रं तृतीयतः ॥१५७॥
धारयन्तं तथा रुक्मभूषणैर्विविधैरपि ।

रक्तमाल्याम्बरधरं रक्तस्रगनुलेपनम् ॥१५८॥
एवं वामे हरीशं च निषेधाभिनयोज्झितम् ।
प्रवेशाभिनयाख्येन पाणिना किं तु चिह्नितम् ॥१५९॥
एको ह्यत्र निषेधं च त्वभक्तानां करोति वै ।
भक्तानामपरश्चैव प्रवेशं सम्प्रयच्छति ॥१६०॥
द्वारे द्वारे प्रतीहारद्वयस्यैवं प्रयोजनम् ।
दक्षोक्तं वज्रनाभस्य तद्धरीशस्य वामगम् ॥१६१॥
आद्यवामगतं सर्वमन्यदक्षिणपाणिगम् ।
धर्माध्यक्षनिन्यर्त्तीशौ दक्षिणे दक्षिणोत्तरे ॥१६२॥
कुर्यादन्तकसादृश्यौ पूर्ववद्भुजभूषितौ ।
पीतकौशेयवसनौ पीतमाल्यविलेपनौ ॥१६३॥
किं तु दण्डगदाहस्तौ वज्रचक्रविवर्जितौ ।
शुद्धाक्षममृतानन्दं प्रतीच्यां दक्षिणादितः ॥१६४॥
बाणकार्मुकमेकस्मिन् पाणौ पाशमथापरे ।
आद्यं करचतुष्कं यत्तद्यग्रं पूर्ववद्भवेत् ॥१६५॥
आकृतौ जलनाथस्य सदृशौ सर्वदैव हि ।
नीलकौशेयवसनौ नीलस्रगनुलेपनौ ॥१६६॥
वसुनाथं सुधानन्दमुदग्दिग्दक्षिणोत्तरे ।
खड्गमुद्गरहस्तौ च प्राग्वच्छेषं चतुष्टयम् ॥१६७॥
कराणामनयोः कार्यं रूपेणोडुपतेः समौ ।
अतसीकुसुमश्यामकौशेयस्रग्विलेपनौ ॥१६८॥
भूषणैर्भूषिता ह्येते विविधैर्वज्रनाभवत् ।
षष्ठावरणदेवानां तद्बास्थानां विशेषतः ॥१६९॥
शृणुध्वं ध्यानमधुना तत्त्वतो मुनिपुङ्गवाः ! ।
पूर्वादीशानपर्यन्तं षष्ठावरणसंस्थिताः ॥१७०॥

एताश्च देवता विप्रास्तेजोरूपसमन्विताः ।
कालोपि यन्नियन्ता च शास्त्रं नानाङ्गलक्षणम् ॥१७१॥
विद्याधिपतयश्चैव सरुद्रः सगणः शिवः ।
प्रजापतिसमूहस्तु इन्द्रः सपरिवारकः ॥१७२॥
मुख्ये द्वारचतुष्के तु पूर्ववत्संस्थिताः क्रमात् ।
चक्रशङ्खौ पद्मगदे लांगलं मुसलं शराः ॥१७३॥
शार्ङ्गं चैते क्रमाद्ध्येया विद्युत्तुहिनकुन्दभाः ।
पीतनीलसितारक्तसितगोक्षीरसन्निभैः ॥१७४॥
हरितालारुणाभैस्तु वस्त्रमाल्यानुलेपनैः ।
सर्वरत्नमयैर्युक्तैर्भूषणैरप्यलङ्कृताः ॥१७५॥
महाबला महावीर्यास्त्वेकवक्त्रा द्विबाहवः ।
एते तु नायकाः सर्वे स्वचिह्नाङ्कितमस्तकाः ॥१७६॥
दुष्टौघं तर्जयन्तश्च दक्षिणेन करेण तु ।
कटिमालम्ब्य वामेन स्थानकैः सुसमैः स्थिताः ॥१७७॥
दृढव्रतो बहुशिरा महाकायो महाबलः ।
जितक्रोधो दुराधर्षो महोत्साहस्त्रिविक्रमः ॥१७८॥
अतुलो दुष्प्रहार्चिष्मान् सर्वदृग्दुरतिक्रमः ।
विषमो गहनोऽमोघप्पोडशोपप्रवेशदाः ॥१७९॥
शक्राग्निमध्यमारभ्य शक्रेशानान्तरावधि ।
शुक्लशोणसुवर्णालिपिङ्गरक्तसितासिताः ॥१८०॥
रक्तपीतातसीहेमशोणशुभ्रसितासिताः ।
वर्णानुरूपसद्वस्त्रमाल्यालेपनभूषणाः ॥१८१॥
नामानुरूपचारित्राः शंखमुद्गरधारिणः ।
सव्येतरक्रमेणैव प्रवेशकनिषेधकाः ॥१८२॥

क्षणाद्भुवनसंहारसृष्टिस्थितिकृतिक्षमाः ।
उक्तानेतान् क्रमेणैव पूर्ववत्संप्रपूजयेत् ॥१८३॥
मुनयः सप्त पूर्वेन्ये गृहास्तारादिकैर्वृताः ।
जीमूताश्चाखिला नागास्त्वप्सरोगण उत्तमः ॥१८४॥
ओषध्यश्चैव पशवो यज्ञाः साङ्गाखिलास्तु ये ।
सूक्ष्मरूपेण तिष्ठन्ति पूर्ववत्सप्तमावृतौ ॥१८५॥
सम्भवः प्रभवश्चैव पूर्णः पुष्कर एव च ।
आनन्दो नन्दनश्चैव वीरसेनः सुषेणकः ॥१८६॥
तन्मुख्यद्वारशाखास्थौ द्वौ द्वौ दक्षिणवामयोः ।
सम्भवः श्वेतवर्णस्तु प्रभवः कुन्दसन्निभः ॥१८७॥
पूर्णस्तु रक्तवर्णाभस्त्वतिरक्तस्तु पुष्करः ।
आनन्दः पीतवर्णस्तु हेमाभो नन्द उच्यते ॥१८८॥
कृष्णाभो वीरसेनस्तु सुषेणोऽञ्जनसन्निभः ।
मकुटाङ्गदचित्राङ्गा गदाहस्ता द्विबाहवः ॥१८९॥
चतुर्भुजा वा विप्रेन्द्राः ! शंखचक्रगदाधराः ।
पूर्ववत्पाणिनान्येन प्रवेशकनिषेधकाः ॥१९०॥
दंष्ट्राकराळवदना निग्रहानुग्रहक्षमाः ।
क्षेमकृच्छिवकृत्प्राज्ञो होमकृद्भूतभावनः ॥१९१॥
युगान्ताग्न्यशनश्चैव संवर्तो भीषणस्तथा ।
सङ्क्रन्दनश्चानिमिषः शतपर्वा शताननः ॥१९२॥
औदुम्बरः प्रकृतिको विरामश्चांशुमाल्यपि ।
औपदौवारिकं त्वेतद्गणषोडशकं क्रमात् ॥१९३॥
दृढव्रतादिसदृशं वर्णतः षड्भुजान्वितम् ।
वामदक्षिणयोगेन पृष्ठतः पूर्वपश्चिमम् ॥१९४॥
शंखमुद्गरपद्माक्षवराभयसमन्वितम् ।

नानावर्णस्त्रगुष्णीषवस्त्रालेपनभूषणम् ॥१९५॥
प्रागुक्तगुणशौर्याढ्यं सर्वकर्मकृतिक्षमम् ।
तच्छोभाष्टकरक्षार्थं शतगन्युर्विरोचनः ॥१९६॥
अप्रतर्क्यस्त्वनुल्लङ्घ्यस्त्वप्रमेयाभिधानकः ।
अमर्षी च महाभूतश्चकोराक्षस्तथाऽष्टमः ॥१९७॥
इन्द्राग्निमध्योपद्वारपार्श्वशोभास्वनुक्रमात् ।
एकैकशः स्थिताः शूराः प्रवेशकनिषेधकाः ॥१९८॥
नीलपीतजपाश्यामसितहिङ्गुलकेन्दुभाः ।
महाबला महावीर्याः सुदुर्लङ्घ्यपराक्रमाः ॥१९९॥
नानाविधाम्बरस्रग्भिर्भूषणैरनुलेपनैः ।
अन्यैरनुपदिष्टैश्च यथाशोभमलङ्कृताः ॥२००॥
षाड्गुण्यमहिमायुक्ताश्चतुर्हस्ताः क्रमेण तु ।
पृष्ठदक्षिणवामाभ्यां चक्रशङ्खसमन्विताः ॥२०१॥
गदाग्रोपरिविश्रान्तमुख्यहस्तद्वयान्विताः ।
द्वारोपद्वारशोभेशानेतान् सम्पूजयेत्क्रमात् ॥२०२॥
विद्या चैवापराऽविद्या पावकश्चैव मारुतः ।
चन्द्रार्कौ वारिवसुधे ह्येताः संसारदेवताः ॥२०३॥
सूक्ष्मरूपेण तिष्ठन्ति बाह्यावरणभूतले ।
अमरेशो विरूपाक्षः सुधर्मिष्ठो नियामकः ॥२०४॥
सर्वसत्वाश्रयश्चेति गहनस्तदनन्तरम् ।
महाराजेश्वरश्चापि धनाध्यक्षेश्वरस्तथा ॥२०५॥
एते गणेश्वरास्त्वष्टौ तन्मुख्यद्वारपालकाः ।
ध्येयाश्चतुर्भुजाः सर्वे मुख्यपाणिद्वयेन तु ॥२०६॥
अमरेशविरूपाक्षौ वज्रवेत्रलताकरौ ।
पृष्ठगाभ्यां तु पाणिभ्यां चक्रशङ्खसमुज्वलौ ॥२०७॥

कुङ्कुमाञ्जनसङ्काशौ दंष्ट्रया विकृताननौ ।
दक्षिणोत्तरयोगेन लाञ्छनव्यत्ययान्वितौ ॥२०८॥
द्वारदक्षिणवामस्थौ प्रवेशकनिषेधकौ ।
सुधर्मिष्ठो नियन्ता च सुसितश्यामळप्रभौ ॥२०९॥
सुभीमदण्डहस्तौ च वज्रायुधविवर्जितौ ।
यथाक्रमोदितानन्यान् धारयन्तौ यथाविधि ॥२१०॥
सर्वसत्वाश्रयश्चातिगहनः श्यामळः सितः ।
किं तु पाशकरावेतौ पूर्ववद्भुजभूषितौ ॥२११॥
महाराजेश्वरो रक्तो धनाध्यक्षेश्वरोऽसितः ।
शिशिरायुधसंयुक्तौ त्रिकमन्यद्यथा पुरा ॥२१२॥
महाबला महावीर्या दुष्टदोपक्षयङ्कराः ।
दुर्निरीक्षाश्च दुर्धर्षा दैत्यदानवहिंसकाः ॥२१३॥
नानामहार्घवासोभिः भूषालैपैरलङ्कृताः ।
महर्षभं प्रभूतं च गम्भीरं प्राणगोचरम् ॥२१४॥
योगाङ्गं योगनिलयं सनातनमशृंखलम् ।
तारकान्तरितं तारं विरामं विषमं तथा ॥२१५॥
दुरतिक्रमं[1] दुर्गाहं च सुधूम्रमनिलाशनम् ।
तत्सालकोपद्वारेषु विन्यसेत्पूर्ववर्त्मना ॥२१६॥
उक्तोपद्वारपालानां वर्णतः सममुज्वलम् ।
गणषोडशकं त्वेतच्चतुष्पाणिसमन्वितम् ॥२१७॥
गौणवामकराद्यं तु मुख्यवामकरावधि ।
शंखपट्टसहस्तं च निषेधाभिनयाङ्कितम् ॥२१८॥
प्रवेशाभिनयाङ्कं च नानावर्णाम्बरस्रजम् ।
नानास्थानकसंयुक्तं नानाभूषणभूषितम् ॥२१९॥

(१)दुराक्रमं । इति—(पा)

अक्षसूत्रधरं वाथ प्रपन्नानां प्रवेशकृत्।
निषेधकृत्तथान्येषां न्यस्तव्यं मुनिसत्तमाः! ॥२२०॥
देवव्रतं निरातङ्कं भीष्मं च पुरुषं तथा।
उग्रं वीरेश्वरं रम्यमरिष्टं मुनिसत्तमाः! ॥२२१॥
निर्विषण्णं युगान्तांशं शतानन्दं शताननम्।
तेजोधरं विशालाक्षं युगांशं देवनन्दनम् ॥२२२॥
एतं द्विरष्टशोभासु गणमेकैकशो न्यसेत्।
उपद्वारेशसदृशं वर्णतो लाञ्छनैर्विना ॥२२३॥
चतुर्भिः पाणिभिश्चैव पृष्ठदक्षिणपूर्वकम्।
मुख्यदक्षिणहस्तान्तं शंखचक्रगदाधरम् ॥२२४॥
निषेधकृच्च पापानामपापानां प्रवेशकृत्।
नानास्रगम्बरोष्णीषभूषालेपाद्यलङ्कृताः ॥२२५॥
अनन्ताचिन्त्यविभवाः सर्वभूतसमाश्रयाः।
नानाशस्त्रास्त्रकुशलाः नानाज्ञानसमन्विताः ॥२२६॥
निरस्तानेकदैत्येशाः साधूनां पालनोद्यताः।
द्वारद्वयान्विते साले मुख्यद्वारगतावुभौ ॥२२७॥
तिष्ठतः सूक्ष्मरूपेण तदन्यद्वारपार्श्वयोः।
प्राकारसर्वकोणेषु वह्निकोणादितो न्यसेत् ॥२२८॥
प्रभवाप्ययरूपाणां मूर्तीनां चतुरात्मनाम्।
तथा मूर्त्यन्तराणां च तत्कान्त्वानामनुक्रमात् ॥२२९॥
मन्त्राणामस्त्रसंघादि तेषां रूपमनुस्मरन्।
चतुर्णामपि कोणानामव्यक्तं भवनाद्बहिः ॥२३०॥
संयजेद्भवनाम्ना वै यस्मान्नान्यो भवः स्मृतः।
तेषां बहिः स्वमन्त्रेण दिक्क्रमेण तु हेतिराट् ॥२३१॥

१—हेतिपम्। इति—(पा)

कुङ्कुमाञ्जनसङ्काशौ दंष्ट्रया विकृताननौ ।
दक्षिणोत्तरयोगेन लाञ्छनव्यत्ययान्वितौ ॥२०८॥
द्वारदक्षिणवामस्थौ प्रवेशकनिषेधकौ ।
सुधर्मिष्ठो नियन्ता च सुसितश्यामळप्रभौ ॥२०९॥
सुभीमदण्डहस्तौ च वज्रायुधविवर्जितौ ।
यथाक्रमोदितानन्यान् धारयन्तौ यथाविधि ॥२१०॥
सर्वसत्वाश्रयश्चातिगहनः श्यामळः सितः ।
किं तु पाशकरावेतौ पूर्ववद्भुजभूषितौ ॥२११॥
महाराजेश्वरो रक्तो धनाध्यक्षेश्वरोऽसितः ।
शिशिरायुधसंयुक्तौ त्रिकमन्यद्यथा पुरा ॥२१२॥
महाबला महावीर्या दुष्टदोपक्षयङ्कराः ।
दुर्निरीक्षाश्च दुर्धर्षा दैत्यदानवहिंसकाः ॥२१३॥
नानामहार्घवासोभिः भूषालेपैरलङ्कृताः ।
महर्षभं प्रभूतं च गम्भीरं प्राणगोचरम् ॥२१४॥
योगाङ्गं योगनिलयं सनातनमशृंखलम् ।
तारकान्तरितं तारं विरामं विषमं तथा ॥२१५॥
दुरतिक्रमं दुर्ग्रहं च सुधूम्रमनिलाशनम् ।
तत्सालकोपद्वारेषु विन्यसेत्पूर्ववर्त्मना ॥२१६॥
उक्तोपद्वारपालानां वर्णतः सममुज्वलम् ।
गणषोडशकं स्वेतच्चतुष्पाणिसमन्वितम् ॥२१७॥
गौणवामकराद्यं तु मुख्यवामकरावधि ।
शंखपट्टसहस्तं च निषेधाभिनयाङ्कितम् ॥२१८॥
प्रवेशाभिनयाङ्कं च नानावर्णाम्बरस्रजम् ।
नानास्थानकसंयुक्तं नानाभूषणभूषितम् ॥२१९॥

(१)दुराक्रमं । इति—(पा)

अक्षसूत्रधरं वाथ प्रपन्नानां प्रवेशकृत् ।
निषेधकृत्तथान्येषां न्यस्तव्यं मुनिसत्तमाः ! ॥२२०॥
देवव्रतं निरातङ्कं भीष्मं च पुरुषं तथा ।
उग्रं वीरेश्वरं रम्यमरिष्टं मुनिसत्तमाः ! ॥२२१॥
निर्विषण्णं युगान्तांशं शतानन्दं शताननम् ।
तेजोधरं विशालाक्षं युगांशं देवनन्दनम् ॥२२२॥
एतं द्विरष्टशोभासु गणमेकैकशो न्यसेत् ।
उपद्वारेशसदृशं वर्णतो लाञ्छनैर्विना ॥२२३॥
चतुर्भिः पाणिभिश्चैव पृष्ठदक्षिणपूर्वकम् ।
मुख्यदक्षिणहस्तान्तं शंखचक्रगदाधरम् ॥२२४॥
निषेधकृच्च पापानामपापानां प्रवेशकृत् ।
नानास्रगम्बरोष्णीषभूषालेपाद्यलङ्कृताः ॥२२५॥
अनन्ताचिन्त्यविभवाः सर्वभूतसमाश्रयाः ।
नानाशस्त्रास्त्रकुशलाः नानाज्ञानसमन्विताः ॥२२६॥
निरस्तानेकदैत्येशाः साधूनां पालनोद्यताः ।
द्वारद्वयान्विते साले मुख्यद्वारगतावुभौ ॥२२७॥
तिष्ठतः सूक्ष्मरूपेण तदन्यद्वारपार्श्वयोः ।
प्राकारसर्वकोणेषु वह्निकोणादितो न्यसेत् ॥२२८॥
प्रभवाप्ययरूपाणां मूर्तीनां चतुरात्मनाम् ।
तथा मूर्त्यन्तराणां च तत्कान्तानामनुक्रमात् ॥२२९॥
मन्त्राणामस्त्रसंघादि तेषां रूपमनुस्मरन् ।
चतुर्णामपि कोणानामव्यक्तं भवनाद्बहिः ॥२३०॥
संयजेद्ध्वनाम्ना वै यस्मान्नान्यो भवः स्मृतः ।
तेषां बहिः स्वमन्त्रेण दिक्क्रमेण तु हेतिराट् ॥२३१॥

१—हेतिपम् । इति—(पा)

स्वमरीचिगणेनैव भासयन्तं निवेश्य च ।
न्यस्यैवमर्चनं कुर्यान्मन्त्रमुद्रान्वितेन तु ॥२३२॥
निरीक्षणादिशुद्धेन अर्घ्यस्रक्चन्दनादिना ।
वासुदेवाभिधानस्तु देवः षाड्गुण्यविग्रहः ॥२३३॥
कर्मिणामुपकारार्थं प्रासादं स्थूलविग्रहम् ।
सर्वज्ञानक्रियाढ्यं च सर्वतत्वसमाश्रयम् ॥२३४॥
समासाद्यानुगृह्णाति सदार्चान्तर्गतः प्रभुः ।
तस्मात्तदङ्गभूतेषु प्राकारेष्वष्टसु क्रमात् ॥२३५॥
पृथ्व्यादिबुद्धिनिष्ठन्तु बाह्यतत्वाष्टकं न्यसेत् ।
प्रासादश्चाङ्गसंयुक्तः प्रकृतिस्त्रिगुणात्मिका ॥२३६॥
तद्गता प्रतिमा जीवस्तद्गतः परमः पुमान् ।
अतोऽधिदैवतान्यत्र तत्वान्येतान्यनुक्रमात् ॥२३७॥
सर्वत्र व्यापकत्वेन ध्यात्वा सम्पूजयेत्ततः ।
सर्वाधारमयेनैव सर्वसत्वाश्रयेण च ॥२३८॥
सर्वदोषविपघ्नेन कालचक्राम्बुजेन तु ।
सम्पुटीकृत्य भवनं सप्राकारमथोर्ध्वतः ॥२३९॥
सम्पूज्य हार्दयीं मुद्रां चक्रमुद्रासमन्विताम् ।
प्रदर्श्य सर्वतो दिक्षु कवचेनावकुण्ठयेत् ॥२४०॥
एकमूर्तिविधाने च तथैकद्वारभूषिते ।
भवनेऽयं विधानस्याद्दिग्व्यूहपरिनिष्ठिते ॥२४१॥
चतुर्द्वारान्विते गेहे दिग्द्वाराग्रस्थमण्टपे ।
सर्वतोभद्रसाले च अघनिर्मोचनेपि च ॥२४२॥
सदध्वदेशधर्माख्ये द्वारद्विद्वितयान्विते ।
द्वारपालगणन्यासे विशेषोऽयं प्रकाश्यते ॥२४३॥
चण्डाद्याश्च सुभद्रान्ताः प्रासादद्वाश्चतुष्टये ।

न्यसनीयाः क्रमेणैव पूर्ववद्वंद्वयोगतः ॥२४४॥
द्वारोर्ध्वोदुम्बरद्वन्द्वद्वितयस्था यथाक्रमम् ।
लक्ष्मीः कीर्तिर्जया माया देव्यः प्रागुक्तलक्षणाः ॥२४५॥
सत्यः सुपर्णो गरुडस्ताक्ष्यस्त्वग्रेपु संस्थिताः ।
अनिवर्ती महावृत्तिर्दर्पहा सर्वजित् स्थिरः ॥२४६॥
जयन्तो भयकृन्मानी त्वष्टमो द्विजसत्तमाः ! ।
दिगग्रमण्टपद्वारशाखापार्श्वे समास्थिताः ॥२४७॥
अनिवर्ती महावृत्तिः कृष्णाभः शुकसन्निभः ।
दर्पहा सर्वजिच्चैव पाण्डुरक्तसुवर्णभौ । ॥२४८॥
स्थिरो जयन्तः सततं श्यामाञ्जनसमद्युती ।
भयकृच्चैव मानी च पिङ्गळः पाण्डुरोज्वलः ॥२४९॥
द्विभुजाः सर्व एवैते दक्षिणेन करेण तु ।
नन्दकं शंखमन्येन दधानाः क्रूरविक्रमाः ॥२५०॥
यदा चतुर्भुजा ध्येयास्तदा चैते गणेश्वराः ।
मुख्यदक्षिणहस्तेन खड्गवेत्रलतान्विताः ॥२५१॥
तथा वामकरे शंखं पृष्ठगे दक्षिणादितः ।
पाणिद्वये चक्रपद्मे बिभ्रतो ज्वलनप्रभाः ॥२५२॥
नानावस्त्रस्रगुष्णीपभूषणालेपनान्विताः ।
व्यत्यस्तहस्तचरणा लाञ्छनव्यत्ययान्विताः ॥२५३॥
ऊर्जितश्चामृताङ्गस्तु सर्वाङ्गः सर्वतोमुखः ।
शुभ्राङ्गो वरदश्चैव वागीशः शब्दविक्रमः ॥२५४॥
पाञ्चजन्यविशेषा हि द्वौ द्वौ चैव क्रमात् स्थितौ ।
सर्वतोभद्रसालस्थचतुर्द्वारेपु पूर्ववत् ॥२५५॥
द्विबाहवस्तु संस्मर्याः दक्षिणेन करेण तु ।
गृहीतमुसलाः सर्वे शंखमन्येन पाणिना ॥२५६॥

दधानाश्चैव चत्वारः पूर्वे बन्धूकसन्निभाः ।
अन्ये परभृताभास्तु सर्वभूषणभूषिताः ॥२५७॥
बलेन महता क्षिप्तदेवासुरमहोरगाः ।
एकवीरासहायाश्च अप्रयत्नेन लीलया ॥२५८॥
आब्रह्मभवनं शश्वत्परिवर्तयितुं क्षमाः ।
विश्वेशो विश्वकृद्विश्वो विश्वात्मा विश्वलोचनः ॥२५९॥
विश्वपादो विश्वभुजस्तथा वै विश्वकर्मकृत् ।
एते द्वितीयसालस्य दिग्द्वारपु नियामकाः ॥२६०॥
द्विबाहवः परिज्ञेयाः वामदक्षिणयोगतः ।
गदाखड्गास्त्रसंयुक्ताः करण्डमकुटान्विताः ॥२६१॥
शोणपिङ्गसितश्यामा रक्तपीतसितासिताः ।
सर्ववर्णाम्बरालेपस्रग्भूषाभिर्विराजिताः ॥२६२॥
एकवीरासहायाश्च सर्वदोपनिवारकाः ।
तद्द्वारान्तरभागेपु वामदक्षिणयोगतः ॥२६३॥
प्रासादाभिमुखान्न्यस्येन्निधिनाथेश्वरान् क्रमात् ।
शंखपद्मौ महापद्मशतधामाभिधौ ततः ॥२६४॥
अखण्डितः सन्ततश्चानन्तधार इति श्रुतः ।
सर्वद्वार इति ख्यातः प्रथमौ पूर्वमीरितौ ॥२६५॥
अन्येपां वक्ष्यते पण्णां वर्णरूपादिकं क्रमात् ।
रक्तः कृष्णः सुवर्णाभः सितारुणतमालभाः ॥२६६॥
शंखपद्मनिधीशोक्तसर्वलक्षणलक्षिताः ।
वसुरत्नसुवर्णाढ्यलोहधान्यधनाधिपाः ॥२६७॥
सर्वौपधीनिधीशानास्तेपामूर्ध्वे सुखासनाः ।
सर्वालङ्कारसंयुक्ताः स्वाश्रिताभिमतप्रदाः ॥२६८॥
ततः तृतीयावरणद्वारेषु द्वन्द्वयोगतः ।
तद्दक्षिणोत्तराभ्यां तु शाखाभ्यां विन्यसेत्क्रमात् ॥२६९॥

पुरतश्चक्रगरुडौ हलतालौ तु दक्षिणे ।
पश्चिमे शार्ङ्गमकरौ सौम्ये नन्दकऋश्यकौ ॥२७०॥
चक्रपक्षीशसीराणां शङ्खनन्दकयोरपि ।
स्वेषु स्थानेषु पूर्वोक्तं वर्णरूपादिकं द्विजाः ! ॥२७१॥
अन्येषां तालपूर्वाणां त्रयाणामथ वक्ष्यते ।
तालो ध्वजः स्याद्भूतादिस्तालरूपाभिमानकः ॥२७२॥
झषः सर्वाङ्गनिभृतो जगद्बीज उदाहृतः ।
ससर्वोपद्रवो ऋश्यः संसारश्चपलात्मकः ॥२७३॥
एतान् सूक्ष्मस्वरूपेण ध्यात्वा सम्पूजयेत्क्रमात् ।
गङ्गा च यमुना गोदा नदी च महती तथा ॥२७४॥
वितस्ता नर्मदा चैव जम्ब्वाख्या च सरस्वती ।
नद्यश्चतुर्थसालस्य दिग्द्वारेषु क्रमात् स्थिताः ॥२७५॥
गङ्गायमुनयोरुक्तं वर्णरूपादिकं पुरा ।
ताभ्यामन्याः समानास्तु वर्णशोभां विनैव तु ॥२७६॥
सितारुणाः सितस्वर्णसितकुन्दसमप्रभाः ।
प्रमत्तप्रौढवेषाश्च नानाभरणभूषिताः ॥२७७॥
सर्वधातुविचित्राङ्गाः सर्वरत्नविराजिताः ।
सुधाकुम्भधरा द्वाभ्यां कराभ्यां पूर्ववच्च ताः ॥२७८॥
एवं दिग्द्वारभवनद्वास्थस्थितिरुदाहृता ।
एकमूर्तेषु दिङ्मूर्तेः प्राकारेष्वूर्ध्वगेषु च ॥२७९॥
द्वारादयस्तदीयाश्च सामान्याः समुदाहृताः ।
सर्वसालप्रतीहारशाखापार्श्वगतावुभौ ॥२८०॥
ध्येयौ वा स्थापनीयौ वा बाह्याहारगतौ यदि ।
यथोक्तलक्षणोपेतौ स्थापनीयौ यथाक्रमम् ॥२८१॥
एवमावरणेशानान् ध्यात्वा संस्थाप्य वार्चयेत् ।

ध्यानोत्थाः पीठदेशेषु स्वाकारात्मसु सद्मसु ॥२८२॥
तदर्थमङ्कणक्षेत्रं त्रिधा वा पञ्चधा भजेत् ।
त्रिभागमेकभागं वा त्यक्त्वा तन्मध्यतो बहिः ॥२८३॥
पीठं वायतनं कुर्यात्सर्वदिक्ष्वन्तरेऽथ वा ।
अधरोत्तरनिष्ठाभ्यां प्रागुक्ते पूर्ववत् स्थिते ॥२८४॥
शिलेष्टकादिभिः क्लृप्ताः पीठिका हस्तविस्तृताः ।
तदर्धेनोच्छ्रिताः सर्वाः सर्वालङ्कारशोभिताः ॥२८५॥
चतुरश्राः सुवृत्ता वा सम्पूज्या वाथ केवलाः ।
ग्रामादिवास्तुदेवानां स्वदिग्भागगतेषु च ॥२८६॥
गोमयादिविलिप्तेषु मण्डलेषु बलिं हरेत् ।
विस्तारोच्छ्रायमानाद्वै पीठाः प्रागुक्तलक्षणाः ॥२८७॥
अर्धमानेन वा कार्या रथयात्राऽविरोधतः ।
एवमावरणेशानाः पीठेषु स्वासु दिक्षु च ॥२८८॥
दुष्टदोषनिरासार्थं प्रासादाभिमुखं स्थिताः ।
चतुःस्थानावतीर्णस्य द्वारे च यजनालये ॥२८९॥
स्थापनं गणनाथानां शृणुध्वं मुनिपुङ्गवाः ! ।
वास्तुक्षेत्रेशसंज्ञौ द्वौ प्राग्द्वारे पूर्ववत् स्थितौ ॥२९०॥
लक्ष्मीः कीर्तिर्जया माया द्वारेपूर्ध्वस्थिताः क्रमात् ।
चक्रनाभादयो देवा द्वौ द्वौ दिग्द्वारशाखयोः ॥२९१॥
प्रागादिद्वारकुम्भेषु सम्भवप्रभवादयः ।
कुमुदाद्यन्तरङ्गं च भूतानामष्टकं परम् ॥२९२॥
द्वारान्तर्युग्मयुक्त्या तु भ्रमणीदेशमाश्रितम् ।
सुपर्णश्चक्रसंज्ञश्च सत्यः कौमोदकी द्विजाः ! ॥२९३॥
योजनीयाः क्रमेणैव द्वाराणामग्रभूतले ।
हेमदण्डगतः सत्यः किं तु पश्चिमदिग्गतः ॥२९४॥

चण्डाद्याश्च सुभद्रान्ताः द्वौ द्वौ प्रागादिषु द्विजाः![1] ।
दक्षिणोत्तरयोगेन तोरणस्तंभमूलगाः ॥२९५॥
चक्रद्वितयमध्यस्थः पक्षीशस्तोरणोपरि ।
तत्पार्श्वयोः स्थितं चक्रं नानावर्णपताकयोः ॥२९६॥
सत्यादिकं चतुष्कं तु मध्यवेद्या ध्वजाष्टके ।
प्रभवाप्ययययोगेन पूज्यं प्रागादियोगतः ॥२९७॥
इन्द्रादिलोकपालास्ते सिद्धसंघपुरःसराः ।
वज्रादयस्तदस्त्राश्च स्वासु दिक्षु वहिः स्थिताः ॥२९८॥
मुख्यकल्पेऽथ वान्येषु निमित्तेष्वेवमाचरेत् ।
अनुकल्पेऽथ चण्डादीन् वास्तुनाथादिपूर्वकम् ॥२९९॥
द्वारेषु केवलान्न्यस्य गरुडान्तं प्रपूजयेत् ।
सर्वद्वारेषु वा पूज्यः सहेतीशः पतत्रिरः ॥३००॥
विविधासु प्रतिष्ठासु जीर्णोद्धारविधावपि ।
महोत्सवेषु सर्वेषु ध्वजारोहणकर्मणि ॥३०१॥
मङ्गळाङ्कुररोपे च पवित्रारोहणादिषु ।
तथा चानन्तकलशाद्यभिषेकविधावपि ॥३०२॥
प्रायश्चित्तेष्वनित्येषु काम्येष्वपि च नित्यशः ।
मुख्यकल्पोक्तविधिना कुर्यादन्यत्र चान्यथा ॥३०३॥
सिद्धसंघास्तथेन्द्राद्यास्तदस्त्राश्च यथाक्रमम् ।

---

१— पक्षीशस्तोरणोपरि ।
सुसितासु पताकासु सत्याख्यो विहगाधिपः ॥
सुपर्णः शोणवर्णासु गरुडः पिङ्गळासु च ।
राजपाषाणवर्णासु तार्क्ष्यसंज्ञः प्रतिष्ठितः ॥
नानावर्णपताकायां सम्पूज्यो विहगेश्वरः ।
इन्द्रादिलोकपालास्ते—(पा)

लोकदिक्पालकास्त्वेते स्वसेनाभिः समावृताः ॥३०४॥
प्रसिद्धप्राग्वशेनैव नित्यं स्वं स्थानमाश्रिताः ।
दिक्पालकत्वादास्पृष्टैर्यतस्तेषां स्थितिः स्थिरा ॥३०५॥
भगवन्मन्त्रमूर्तीनामनन्तानां मुनीश्वराः ! ।
स्वस्थानस्था नमस्यन्ति पूजयन्ति जपन्ति च ॥३०६॥
ध्वजाद्यैरुपचारैश्च सम्यक् परिचरन्ति च ।
कैवल्यसिद्धये शश्वद्वहुभिः स्वानुगैः सह ॥३०७॥
पालयन्ति च भक्तानां बलमोजो ददन्ति च ।
ध्वंसयन्ति च विघ्नौघमनिशं मन्त्रयाजिनाम् ॥३०८॥
संरक्षन्ति फलं मान्त्रं वर्धमानं द्विलक्षणम् ।
अधिकारमनादीयं शक्तिबीजं जगत्प्रभोः ॥३०९॥
दिक्सिद्धये दशत्वं तद्व्यक्तयेऽष्टदिशात्मता ।
बाह्यत्रिसालभूमिष्ठाः कालाद्या भवदेवताः ॥३१०॥
तत्साधकत्वात्पूर्वोक्तदिग्भागे नियताः सदा ।
वज्रनाभादयो देवाः लोकदिग्द्वारपालकाः ॥३११॥
तथाऽमरेशपूर्वाश्च सम्भवप्रभवादयः ।
प्रसिद्धप्राक्क्रमेणैव दिग्द्वारेषु स्थिताः क्रमात ॥३१२॥
कालाद्यमष्टकं नित्यमिन्द्राद्यं रुद्रपश्चिमम् ।
नियन्ता कालतत्वान्ते तदन्ते सुस्थितं वियत् ॥१३३॥
क्रमात्पूर्वोत्तरे कोणे न्यसेद्दक्षिणपश्चिमे ।
विद्याऽविद्याद्वयं यद्वै स्वपदस्थेऽग्निमारुते ॥१३४॥
चन्द्रादित्यावुदग्याम्यस्थानयोर्विनिवेश्य च ।
प्रत्यग्भागगतं तोयं प्राग्भागे विन्यसेद्वसम् ॥३१५॥
कुमुदाद्यावृतीशाना लोहिताक्षादयस्तथा ।
वज्रनाभादिकं मुक्त्वा द्वारपालं त्रिरष्टकम् ॥३१६॥

द्वारपालगणास्त्वेते सालकोणगतास्तथा ।
प्रोक्तक्रमेण तिष्ठन्ति भगवत्प्रागपेक्षया ॥३१७॥
कुमुदादिगणेशानाः पुरग्रामादिवास्तुनि ।
पालिकावसथे चैव दिक्पालोक्तवशास्थिताः ॥३१८॥
त्रिसन्ध्यमेव देवानां बलिदानं समाचरेत् ।
सङ्कल्पितेषु सालेषु द्वारावरणवासिनाम् ॥३१९॥
असङ्कल्पितसालोक्तदेवानां नाचरेद्बलिम् ।
तत्तन्निर्माणकाले तान् प्रतिष्ठाप्य यथाविधि ॥३२०॥
देवयात्रासमेतन्तु बलिदानं समाचरेत् ।
एवं सर्वं समापाद्य महापीठोर्ध्वभूतलम् ॥३२१॥
प्रक्षाळितं समारुह्य प्राङ्मुखो वाप्युदङ्मुखः ।
तदूर्ध्वाम्बुजदिक्पत्रे कुमुदादीनथान्तरे ॥३२२॥
सर्वभूतान्पारिषदानाहूय ग्रहसंज्ञितान् ।
सम्पूज्य सोदकं तत्र बलिशेषं समुत्किरेत् ॥३२३॥
पश्चादाचम्य विधिवत्स्नात्वा वा संविशेद् गृहम् ।
सर्वद्वारावृतीशानां कोणस्थानां समर्चने ॥३२४॥
नतिप्रणवसंयुक्तः स्वनामा मन्त्र ईरितः ।
महापीठस्थभूतानां पार्षदानां ग्रहात्मनाम् ॥३२५॥
तारान्ते विष्णुशब्दं च नियुञ्ज्यादुदितक्रमात् ।
सर्वकोणगता मन्त्राः फडन्ताः समुदीरिताः ॥३२६॥
सर्वे समुदिता मन्त्राः स्वाहान्ता होमकर्मणि ।
ध्यात्वैवमर्च्य तन्मन्त्रैरर्घ्याद्यैरुपचारकैः ॥३२७॥
दर्शयेदावृतीशानां मुद्रां तर्जनिसंज्ञिताम् ।
द्वारपालगणानां तु चण्डाद्युक्तमनन्तरम् ॥३२८॥
धर्माद्यावरणादूर्ध्वं हेतुना येन केन चित् ।

बलिदानमशक्यं चेत्तत्रत्यानां यथाक्रमम् ॥३२९॥
सर्वतोभद्रपूर्वेषु द्विगुणीकृत्य चाचरेत् ।
मुख्यकल्पे तथान्यत्र यथाशक्त्यावृतिक्षितौ ॥३३०॥
तद्बाह्यावृतिदेवानामावृत्यावृत्य तर्पयेत् ।
द्वारोपद्वारपालानां तस्मिन् द्वारे समर्पयेत् ॥३३१॥
महापीठोदितानां च तद्द्वाराग्रकमण्डले ।
ध्यानोत्थानां त्वसञ्चारे न दोषः केन हेतुना ॥३३२॥
तत्तदावरणद्वारदेशेपूक्तक्रमेण तु ।
द्रव्यमूर्तिगतानां च सञ्चारः स्यादनिष्टकः ॥३३३॥
एवमावृतिदेवानां त्रिसन्ध्यं बलिमाचरेत् ।
नित्योत्सवार्थं विम्बस्य सान्निधौ तत्समाचरेत् ॥३३४॥
नृत्तगेयादिसंयुक्तं वेदघोषसमन्वितम् ।
द्वारावरणदेवानां ध्यानादीत्थं प्रकाशितम् ॥३३५॥
एवं हि बलिदानान्तं यत्र पूजां समाचरेत् ।
तत्र देवस्य सान्निध्यं नैरन्तर्येण सिद्ध्यति ॥३३६॥
एवं कालत्रये कुर्यात्पूजनं देशिकोत्तमः ।
न च कालत्रयान्न्यूनं पूजनं विहितं सदा ॥३३७॥
प्रासादेषु स्वयंव्यक्तपूर्वेषु द्विजसत्तमाः ! ।
कालत्रयं प्रधानं स्यात्तदूर्ध्वं कर्तुरिच्छया ॥३३८॥
विभवापेक्षया चैव वर्धयेत यथाक्रमम् ।
यावत् द्वादशमः कालस्तावद्वै मुनिपुङ्गवाः! ॥३३९॥
श्रेष्ठः प्रभातकालः स्यात् त्रिषु कालेषु वै पुनः ।
यथावन्मन्त्रविन्यासमात्मनः करदेहयोः ॥३४०॥
हृद्यागं स्थानसंशुद्धिं सायामां भौतिकीं ततः ।
नित्यं प्रभातिके कुर्यादन्यलेच्छानुरूपतः ॥३४१॥

स्नपनं बलिदानं च कुर्यात्कालत्रये सदा ।
मूर्तेरासनपूजा तु कार्या कालचतुष्टये ॥३४२॥
पञ्चकाले भवेन्न्यासः षट्काले हवनक्रिया ।
अत ऊर्ध्वेषु कालेषु जपान्तं पूजनं भवेत् ॥३४३॥
अलङ्कारासनाद्यं च पूर्ववत्क्रमयोगतः ।
विनोक्तेन प्रकारेण ह्यन्यथा न समाचरेत् ॥३४४॥
मुख्यकल्पे तु होमान्तं नित्यनैमित्तिकात्मिकाम् ।
पूजां क्रमेण वै कुर्यात्तत्तद्धोमावसानिकाम् ॥३४५॥
अनुकल्पे तु जप्यान्तं यागानन्तरितेषु च ।
यागेषु हवनान्तेषु नित्यनैमित्तिकादिषु ॥३४६॥
तत्तद्यागं जपान्तं च क्रमात्कृत्वा ततः परम् ।
तत्तद्धोमं मुनिश्रेष्ठाः ! क्रमात्कुर्याद्यथाविधि ॥३४७॥
अनुकल्पेषु यागेषु स्नपकालोदितेषु वै ।
आसनार्घ्ये ततः पाद्यमाचामं सप्रतिग्रहम् ॥३४८॥
गन्धं माल्यं तथा दीपं धूपं मात्रां क्रमेण तु ।
दत्वा भोज्यावसानं तु क्रमाद्द्द्याद्विधानतः ॥३४९॥
इत्येवमर्चनविधिः साङ्गोपाङ्गः प्रदर्शितः ।
इतोन्यच्छ्रोतुमिच्छा चेत्कथ्यतां मुनिपुङ्गवाः ! ॥३५०॥

इति श्रीपाञ्चरात्रे ईश्वरसंहितायां
द्वारावरणदेवतालक्षणादिविधिर्नाम
नवमोऽध्यायः



## अथ दशमोऽध्यायः ।

---

मुनयः ।

भगवन्मुनिशार्दूल ! सर्वज्ञ ! वदतां वर ! ।
नित्यार्चनादिकं सर्वं श्रुतं त्वत्तः सविस्तरम् ॥१॥
महोत्सवाद्युत्सवांस्तु सांप्रतं वक्तुमर्हसि ।

नारदः ।

अथातः संप्रवक्ष्यामि महोत्सवविधिक्रमम् ॥२॥
सव इत्युच्यते दुःखं विद्वद्भिर्मुनिपुङ्गवाः ! ।
उद्धृतः स सवो यस्मात्तस्मादुत्सव उच्यते ॥३॥
नित्यो नैमित्तिकः काम्यस्त्रिविधः स महोत्सवः ।
वत्सरे वत्सरे यस्तु क्रियते स तु नित्यकः ॥४॥
भूमिकम्पे दिशां दाहे महोत्पातेषु सत्सु च ।
दुर्भिक्षे व्याधिते राष्ट्रे तथावै शत्रुसङ्कटे ॥५॥
अनावृष्टौ च सर्वत्र नक्षत्रपतने च खात् ।
हसने भगवन्मूर्तेरङ्गानां चलने सति ॥६॥
रोदने चासनाद्बिम्बे परिभ्रमति सत्तमाः ! ।
व्यत्यासे शशिसूर्यस्य तथान्येष्वेवमादिषु ॥७॥
शान्त्यर्थं यत्प्रकुर्वीत स नैमित्तिक उच्यते ।
चतुर्णां पुरुषार्थानामुद्दिश्यान्यतमं फलम् ॥८॥
उत्सवोऽनुष्ठितः काम्यः सङ्कल्पितफलप्रदः ।
ज्योतिश्शास्त्रेषु कुशलैर्ब्राह्मणैः सह देशिकः ॥९॥
पूर्वं कृत्वा यथाशास्त्रं तीर्थर्क्षविनिर्णयम् ।
तीर्थयात्रानुसारेण ध्वजारोहं प्रकल्पयेत् ॥१०॥

मन्त्रमूर्तिप्रतिष्ठानकाल एव मुनीश्वराः ! ।
प्रासादस्य शिखाग्रे तु स्थापितः खगराड्ध्वजः ॥११॥
हेतिराजसमायुक्तो यत्र यत्र सदा द्विजाः ! ।
विना त्वन्यध्वजारोहमुत्सवं परिकल्पयेत् ॥१२॥
तत्राप्यन्यध्वजारोहं कुर्याद्वा विभवे सति ।
कुर्यादुत्सवमन्यत्र ध्वजारोहणपूर्वकम् ॥१३॥
नवाहं दैविकं प्रोक्तं सप्ताहं मध्यमं भवेत् ।
पञ्चाहमधमं विद्यात् त्रिविधं चोत्सवं स्मृतम् ॥१४॥
तत्र तावत्प्रवक्ष्यामि नवाहस्य विधिक्रमम् ।
ध्वजाधिवासपूर्वेद्युः देशिको मन्त्रवित्तमः ॥१५॥
स्नायाद्वपनपूर्वं तु भगवद्यागसिद्धये ।
निशामुखे प्रवृत्ते तु आचार्यो मूर्तिपैः सह ॥१६॥
स्नानादिनित्यनियमान् कृत्वा चैव यथाविधि ।
भूषणैर्विविधैर्वस्त्रैर्नूतनैश्च विभूषितः ॥१७॥
सितोष्णीषोत्तरीयश्च चित्रमाल्यैरलङ्कृतः ।
प्रविश्य देवसदनं यजमानसमन्वितः ॥१८॥
नित्यार्चनावसाने तु वैष्णवान् द्विजसत्तमान् ।
षट्कर्मनिरतांश्चैव पञ्चकालपरायणान् ॥१९॥
समभ्यर्च्य ततस्तेभ्यो ह्यनुज्ञां प्रतिगृह्य च ।
विष्वक्सेनं समभ्यर्च्य यागविघ्नप्रशान्तये ॥२०॥
पश्चात्स्वदेहशुद्ध्यर्थं पुण्याहं वाचयेद्गुरुः ।
प्रकल्प्य भूतले शुद्धे धान्यपीठं यथाविधि ॥२१॥
विन्यस्य मङ्गलं कुम्भं सम्पूर्णं गन्धवारिणा ।
रत्नहाटककूर्चस्रग्वस्त्रपल्लवसंयुतम् ॥२२॥
चन्दनाद्युपलिप्तं च परितश्चार्ध्यचर्चितम् ।

तत्कुम्भस्य चतुर्दिक्षु चतुरो मूर्तिपान्न्यसेत् ॥२३॥
अद्भिर्गन्धैस्तथा पुष्पैरक्षतैर्दक्षिणादिभिः ।
तोषयित्वा तु तान् सर्वान् ततः कुम्भे सुदर्शनम् ॥२४॥
समावाह्य समभ्यर्च्य ध्यायमानोऽच्युतं हृदि ।
दर्भैः स्पृशंस्तु कलशं ब्राह्मणैः सह देशिकः ॥२५॥
ओंकाराद्यं पवित्रान्तं मन्त्राणां प्राक्चतुष्टयम् ।
पाठयेच्च सपुण्याहं गायत्रीत्रितयान्वितम् ॥२६॥
ततश्चात्मानुवादं च आत्मव्यूहं तथैव च ।
ततश्च शुद्धिमन्त्रांस्तु पठेदेवं समाहितः ॥२७॥
शुद्धयेस्तु परो देवो वासुदेवोस्तु शुद्धये ।
सङ्कर्षणः शुद्धयेस्तु प्रद्युम्नश्चास्तु शुद्धये ॥२८॥
शुद्धयेस्त्वनिरुद्धोपि केशवश्चास्तु शुद्धये ।
नारायणोस्तु विश्वेशः शुद्धये सर्वकर्मसु ॥२९॥
शुद्धये माधवश्चास्तु सर्वलोकहिते रतः ।
गोविन्दः शुद्धये चास्तु परमात्मा सनातनः ॥३०॥
शुद्धये विष्णुरस्त्वाद्यः शुद्धये मधुसूदनः ।
सर्वलोकहितो देवः शुद्धयेऽस्तु त्रिविक्रमः ॥३१॥
वामनः शुद्धये चास्तु श्रीधरोऽप्यास्तु शुद्धये ।
शुद्धयेऽस्तु हृषीकेशः पद्मनाभोऽस्तु शुद्धये ॥३२॥
सदा दामोदरो देवः शुद्धयेऽस्तु जगत्पतिः ।
शुद्धये पद्मनाभोऽस्तु शुद्धयेऽस्तु सदा ध्रुवः ॥३३॥
अनन्तः शुद्धये चास्तु शक्त्यात्मा चास्तु शुद्धये ।
सर्वकर्मसु चैवास्तु शुद्धये मधुसूदनः ॥३४॥
सदा विद्याधिदेवोऽस्तु शुद्धये कपिलस्तथा ।
शुद्धये विश्वरूपोऽस्तु शुद्धयेऽस्तु विहङ्गमः ॥३५॥

क्रोडात्मा शुद्धये चास्तु शुद्धये वडवाननः ।
शुद्धयेऽस्तु सदा धर्मश्चास्तु वागीश्वरस्तथा ॥३६॥
देव एकार्णवशयः शुद्धयेऽस्तु निरन्तरम् ।
शुद्धयेऽस्तु सदा देवः कूर्मः पाताळधारकः ॥३७॥
वराहः शुद्धये चास्तु नारसिंहोऽस्तु शुद्धये ।
अमृताहरणश्चास्तु शुद्धये सर्वकर्मणाम् ॥३८॥
श्रीपतिः शुद्धये चास्तु शान्तात्मा चास्तु शुद्धये ।
शुद्धये राहुजिच्चास्तु कालनेमिघ्न एव च ॥३९॥
पारिजातहरश्चास्तु लोकनाथोऽस्तु शुद्धये ।
सर्वत्र शुद्धये चास्तु दत्तात्रेयो महाप्रभुः ॥४०॥
न्यग्रोधशायी भगवान् शुद्धये चास्तु सर्वदा ।
एकशृङ्गतनुश्चास्तु वामनश्चापि शुद्धये ॥४१॥
त्रिविक्रमः शुद्धयेऽस्तु शुद्धयेऽस्तु नरः सदा ।
नारायणः शुद्धयेऽस्तु हरिः कृष्णश्च शुद्धये ॥४२॥
ज्वलत्परशुधृग्रामः शुद्धयेऽस्तु धनुर्धरः ।
रामश्च शुद्धये चास्तु वेदविद्भगवांस्ततः ॥४३॥
शुद्धयेऽस्तु सदा कल्की सर्वदोषक्षयंकरः ।
शुद्धयेऽस्तु सदा देवः पाताळशयनः प्रभुः ॥४४॥
शुद्धये सन्तु सर्वेषां सर्वे सर्वत्र सर्वदा ।
एते सर्वे सदा देवाः शान्तये सन्तु पूजिताः ॥४५॥
ऋद्धये पुष्टये सन्तु सिद्धये भक्तयेऽपि च ।
शिवाय मुक्तये सन्तु वृद्धये सर्वकर्मणाम् ॥४६॥
मन्त्राणां देशिकानां च स्थानानामपि सर्वदा ।
पुत्रमित्रकळत्राणां दासीदासगवामपि ॥४७॥
वेदशास्त्रागमादीनां व्रतानामिष्टसंपदाम् ।

मनोरथानां सर्वेषां हितानां सन्तु सर्वदा ॥४८॥
आयुष्यारोग्यमेधानां धनधान्यादिसम्पदाम् ।
पुण्यानामणिमादीनां गुणानां श्रेयसामपि ॥४९॥
राज्ञो जनपदस्यापि यजमानस्य मन्त्रिणाम् ।
वैष्णवानां विशेषेण परत्र हितमिच्छताम् ॥५०॥
पञ्चकालविशुद्धानां सत्वस्थानां शुभात्मनाम् ।
स्वस्त्यस्तु च शिवं चास्तु शुभं चास्तु पुनः पुनः ॥५१॥
अविघ्नमनिशं चास्तु दीर्घमायुष्यमस्तुवै ।
समाहितं मनश्चास्तु सम्पदश्चोत्तरोत्तरम् ॥५२॥
पुण्याहं शुद्धये चास्तु वासुदेवादिमूर्तयः ।
शङ्खचक्रगदापद्मयुक्तः सर्वेश्वरेश्वरः ॥५३॥
प्रीयतां भगवान् देवो लाङ्गली प्रियतां सदा ।
प्रद्युम्नः प्रीयतां नित्यमनिरुद्धः सुरेश्वरः ॥५४॥
नारायणः सुरेशोपि कर्मणां पूरणाय च ।
न्यूनाधिकानां शान्त्यर्थं प्रीयतां प्रीयतां विभुः ॥५५॥
पुण्याहं स्वस्ति ऋद्धिं च संवाच्य सह मूर्तिपैः ।
तदाद्भिः शतधारेण स्थानानीत्यादिकेन च ॥५६॥
आत्मानं प्रोक्षयेत्पश्चाद्देशिकः स्वात्मशुद्धये ।
एवं सर्वेषु योगेषु कुर्यात्पुण्याहवाचनम् ॥५७॥
गोहिरण्यादिदानैश्च शुद्धिं प्राप्याथ देशिकः ।
देवस्य सन्निधिं गत्वा ह्युपविष्टस्तथासने ॥५८॥
सायामां भूतसंशुद्धिं धारणाभ्यां समाचरेत् ।
देहविन्यस्तमन्त्रोऽथ मानसं यागमाचरेत् ॥५९॥
मन्त्रासने ततो देवं समभ्यर्च्य यथाविधि ।
स्नानासनं ततो नीत्वा स्नापयेन्नवभिर्घटैः ॥६०॥

देवस्य पुरतो भूमिं स्नपनार्थं यथाविधि ।
त्रेधा विभज्य कोष्ठानां नवके द्विजसत्तमाः ! ॥६१॥
धान्यपीठादिकं कृत्वा कलशानधिवास्य च ।
पाद्यमर्घ्यं तथाऽऽचामं सर्वौषधिजलं तथा ॥६२॥
प्रागाद्युत्तरपर्यन्तं न्यसेत्कोष्ठचतुष्टये ।
दधि क्षीरं मधु घृतमाग्नेयादिषु विन्यसेत् ॥६३॥
शुद्धाम्भःकलशं मध्ये विन्यस्य तदनन्तरम् ।
हरिद्राचूर्णकुम्भं तु तेषां च पुरतो न्यसेत् ॥६४॥
पुण्याहं वाचयित्वा तु प्रोक्षयेत्तज्जलैस्तु तान् ।
प्रागादिदिक्षु विन्यस्तकुम्भेषु प्रभवक्रमात् ॥६५॥
चतुरो वासुदेवादीन् विदिक्स्थकलशेषु तु ।
ईशादिवह्निपर्यन्तं तानेवाप्यययोगतः ॥६६॥
मध्ये शुद्धोदकलशे यजेन्नारायणं विभुम् ।
अर्घ्यालभनपुष्पैश्च धूपेन मुनिपुङ्गवाः ! ॥६७॥
हरिद्राचूर्णकुम्भे तु श्रियं देवीं समर्चयेत् ।
स्नानासनोदितैर्भोगैर्मुखलेपान्तिमैः क्रमात् ॥६८॥
सम्पूज्य देवदेवेशं कुम्भैः संस्नापयेत्ततः ।
प्रथमं विष्णुगायत्र्या तथेदंविष्णुरित्यृचा ॥६९॥
ततस्त्रीणिपदाद्येन विष्णोः कर्माणि मन्त्रतः ।
प्रागादिदिक्षु विन्यस्तैः पाद्याद्यैः स्नापयेत्क्रमात् ॥७०॥
दधिक्राविण्णमन्त्रेण आप्यायस्वेति मन्त्रतः ।
मधुवातेति मन्त्रेण ततः शुक्रमसीत्यृचा ॥७१॥
विदिक्षु न्यस्तकलशैर्दध्याद्यैः स्नापयेद्विभुम् ।
श्रीसूक्तेन ततो देवं हारिद्रेण विलेपयेत् ॥७२॥
ततः पुरुषसूक्तं तु पठद्भिर्ब्राह्मणैः सह ।

सहस्रधारया देवं शुद्धोदेनाभिषेचयेत् ॥७३॥
प्रतिद्रव्यं तु वस्त्रेण ह्यर्घ्यालभनमाल्यकैः ।
धूपेन च समभ्यर्च्य ततस्तेनाभिषेचयेत् ॥७४॥
यद्वार्घ्यपाद्यमाचामं गन्धस्रग्धूपदीपकम् ।
नैवेद्यं चार्पयेत्सर्वं केवलं चार्घ्यमेव च ॥७५॥
ततो नीराजनादींश्च कृत्वा देवस्य पूर्ववत् ।
अलङ्कारासनं नीत्वा आसनादिक्रमाद्यजेत् ॥७६॥
भोगैः सांस्पर्शिकैः प्राग्वद्विविधैरौपचारिकैः ।
हृदयङ्गमसंज्ञैश्च समभ्यर्च्य यथाविधि ॥७७॥
स्तुत्वा स्तोत्रैर्जितंताद्यैः प्रणमेद्देशिको विभुम् ।
अथाङ्कुरार्पणं कुर्याद्देशिको मन्त्रवित्तमः ॥७८॥
तद्विधानं विस्तरेण शृणुध्वं मुनिसत्तमाः ! ।
त्रिविधानि च पात्राणि मङ्गळाङ्कुररोपणे ॥७९॥
पालिका घटिकाश्चेति शरावाश्चेति भेदतः ।
पालिकानामथोच्छ्रायः पञ्चविंशाङ्गुलो भवेत् ॥८०॥
तदाननस्य विस्तारो भवेद्वै षोडशाङ्गुलः ।
अष्टाङ्गुळस्तदुच्छ्रायो ह्यङ्गुळं वलयं ततः ॥८१॥
भवेत्कण्ठबिलं विप्रास्ततोऽष्टाङ्गुळविस्तृतम् ।
आरभ्य वक्त्रवलयाद्यावत्कण्ठबिलं द्विजाः! ॥८२॥
ह्रासयेदनुपातेन तन्नाळं द्वादशाङ्गुळम् ।
उच्छ्रायादथ विस्तारान्मध्यतस्तु षडङ्गुळम् ॥८३॥
अधस्तादङ्गुळानान्तु चतुष्कं विस्तृतं भवेत् ।
ततः कण्ठबिलाच्चैव ह्रासयेदनुपाततः ॥८४॥
पादपीठमधोत्सेधाद्विज्ञेयं चतुरङ्गुळम् ।
दशाङ्गुळस्तद्विस्तारस्तत्सन्धिश्चाङ्गुळो भवेत् ॥८५॥

तत्सन्धेश्च भवेन्नाहं सार्धमेकांगुळं द्विजाः ! ।
उन्मत्तकुसुमाकारं वक्त्रं पद्माकृतिर्भवेत् ॥८६॥
पालिकोत्सेधतुल्यास्तु घटिकाः समुदाहृताः ।
अङ्गुळत्रयहीना वा तदूर्ध्वं कलशाकृतिः ॥८७॥
घटिकाः पञ्चवक्त्राः स्युरेतासां मध्यमं मुखम् ।
षडङ्गुळं च विस्तीर्णं चतुर्दिक्षु चतुष्टयम् ॥८८॥
चतुरङ्गुळविस्तारं कलशोदरविस्तृतिः ।
षोडशांगुळमानोक्तशेषं प्राग्वत्समाचरेत् ॥८९॥
यदांगुळत्रयन्यूनास्तदा सप्तांगुळोच्छ्रितम् ।
तदाननं तु तन्नाळमर्धोत्तरदशांगुळम् ॥९०॥
सार्धत्रयाङ्गुळं पीठं प्राग्वत्सर्वत्र विस्तरः ।
शरावाः पालिकोत्सेधतुल्याः पञ्चभिरङ्गुळैः ॥९१॥
हीना वा वक्त्रविस्तारात्समारभ्य मुनीश्वराः ! ।
पादपीठस्य विस्तारं यावत्तावत्क्रमेण तु ॥९२॥
पूर्वोक्तात्पादहीना तु भवेत्सर्वत्र विस्तृतिः ।
भवेत् त्रिपादहीना तु पादपीठस्य विस्तृतिः ॥९३॥
यदा शरावा हीनाः स्युरङ्गुळैः पञ्चभिस्तदा ।
मुखं षडङ्गुळोच्छ्रायं तन्नाळं तु दशाङ्गुळम् ॥९४॥
त्र्यङ्गुळं पादपीठं स्यात्प्राग्वत्सर्वत्र विस्तृतिः ।
एतदुत्तममानं तु पात्राणां कथितं द्विजाः ! ॥९५॥
एतदेव मुनिश्रेष्ठाः ! पादहीनं तु मध्यमम् ।
अर्धहीनं तु तन्मानमधमं परिकीर्तितम् ॥९६॥
अतो न्यूनं न कर्तव्यं कदाचित्सिद्धिकाङ्क्षिभिः ।
हेमादिलोहजाः सर्वे मृण्मया वा यथावसु ॥९७॥
प्रत्येकं पालिकादीनां द्विषट्कं चोत्तमं भवेत् ।

द्विरष्टकं वा षट्त्रिंशद्विभवे सति कल्पयेत् ॥९८॥
प्रत्यष्टकं मध्यमं स्याच्चतुष्कमधमं भवेत् ।
सर्वार्थे पालिकाः प्राग्वत्षोडशाष्टौ यथाबलम् ॥९९॥
चतस्रो वा ततस्तासु मङ्गलाङ्कुरकल्पनम् ।
अयुग्मा मानुषे कार्ये दैवे युग्मास्तु पालिकाः ॥१००॥
महोत्सवे प्रतिष्ठायां पवित्रारोपणे तथा ।
जीर्णोद्धारविधौ वापि सहस्रकलशे तथा ॥१०१॥
त्रिवर्गपालिका यद्वा भवेदुत्तमसङ्ख्यया ।
भवेन्मध्यमया वापि नान्यथा द्विजसत्तमाः! ॥१०२॥
कर्मस्वन्येषु सर्वेषु यथावित्तं यथारुचि ।
अङ्कुरावापनस्थानमण्टपं परिकल्पयेत् ॥१०३॥
प्रथमावरणे वापि द्वितीयावरणेपि वा ।
तृतीयावरणे वापि चतुर्थावरणेपि वा ॥१०४॥
शुभे विविक्तेऽभिमते देशे वै देशिकोत्तमः ।
चतुर्दिक्षु चतुर्द्वारं चतुर्वन्दनमालिकम् ॥१०५॥
दर्भमालापरिक्षिप्तं मुक्तादामविराजितम् ।
विततक्षौमसञ्छन्नं गोमयालिप्तभूतलम् ॥१०६॥
प्रदीपमालाविततमक्षतैश्चापि सर्वतः ।
सुधाचूर्णैश्च धवलैश्चित्रिताभ्यन्तरस्थलम् ॥१०७॥
मण्टपं कल्पयित्वैवं यद्वा स्नपनमण्टपे ;
यागाख्यमण्टपे वापि कुर्यादङ्कुररोपणम् ॥१०८॥
अङ्कुरानर्पयेद्रात्रौ य इच्छेद्राष्ट्रवर्धनम् ।
बीजानामधिपः सोम ओषधीशोऽमृतात्मकः ॥१०९॥
न प्रीणाति सदा तत्र अङ्कुरार्पणमह्नि चेत् ।
तस्मात्सर्वप्रयत्नेन रात्र्यामेवाङ्कुरार्पणम् ॥११०॥

कुर्यात्सम्यग्विधानेन भगवद्भक्तिसंयुतः ।
तस्मिन् जगत्प्रिये प्रीते शीतांशौ प्राणिजीवने ॥१११॥
तद्देशे सर्वसस्यानां संपत्तिर्महती भवेत् ।
गवां च लोकमातॄणां नृणामपि च सर्वशः ॥११२॥
अज्ञानादह्नि कुर्याच्चेदङ्कुराणामथार्पणम् ।
अशोभनं भवेद्राष्ट्रमसमृद्धजनान्वितम् ॥११३॥
सद्यःकालीनके विप्राः ! कर्मणि स्याद्दिवापि वा ।
यद्यत्तत्रोपयोग्यं स्यात्तत्सर्वं च समार्जयेत् ॥११४॥
सम्भृत्य सर्वसम्भारानाचार्यो मूर्तिपैः सह ।
तदर्थमर्पयित्वा तु यजमानसमन्वितः ॥११५॥
भगवन्तं जगद्योनिं पूजयित्वा विधानतः ।
ततस्त्वभिनवे पात्रे सौवर्णे राजतेऽथ वा ॥११६॥
तिलसर्षपनीवारशालिमाषप्रियङ्गवः ।
कुलुत्थमुद्गनिष्पावयवगोधूमवैणवाः ॥११७॥
बीजानि द्वादशैतानि पृथक् पात्रेषु वा द्विजाः ! ।
सम्भृत्य तु मुनिश्रेष्ठाः ! स्थापयित्वा तु मूर्धनि ॥११८॥
दीक्षितस्य तु विप्रस्य पुष्पाक्षतकराञ्जलिः ।
आचार्यः प्रविशेत्सार्धं साधकैर्भगवन्मयैः ॥११९॥
प्रासादाभ्यन्तरं विप्रास्तत्राधारोपरि न्यसेत् ।
बीजपात्रं ततोऽर्घ्येण गन्धैः पुष्पैश्च धूपकैः ॥१२०॥
सम्पूज्य मूलबिम्बस्थं तथा चोत्सवबिम्बगम् ।
बीजपात्रं ततोऽभ्यर्च्य देवाय विनिवेदयेत् ॥१२१॥
सह शङ्खनिनादैश्च मङ्गलैर्गीतनिस्वनैः ।
तूर्यनादैश्च विविधैः श्रुतिघोषैः समन्ततः ॥१२२॥
स्थापयित्वा तु तत्पात्रं दीक्षितस्यैव मूर्धनि ।

साधकैः सहितो विप्राः ! बहिर्निर्गत्य देशिकः ॥१२३॥
धाम प्रदक्षिणीकृत्य न्यसेदङ्कुरमण्टपे ।
विष्वक्सेनन्तु वा तार्क्ष्यं हनुमत्प्रमुखन्तु वा ॥१२४॥
हेतीशं वापि वस्त्राद्यैरलङ्कृत्य विशेषतः ।
यानादिकं समारोप्य प्रक्षाल्याद्भिः खनित्रकम् ॥१२५॥
नवेन वाससाऽऽच्छाद्य भूषयित्वा तु माल्यकैः ।
देशिको वाहयेद्विप्रैः शूद्रैर्वा दीक्षितैर्द्विजाः ! ॥१२६॥
चित्रध्वजपताकाभिः सार्धमङ्कुरपात्रकैः ।
त्रिविधैः पालिकाद्यैश्च शङ्खतूर्यादिभिः सह ॥१२७॥
आम्नायोद्घोषणपरैर्भक्तैर्भागवतैर्विभोः ।
गायकैर्गणिकाभिश्च तथान्यैर्मङ्गलैः सह ॥१२८॥
क्रमात्प्रदक्षिणीकृत्य सर्वेष्वावरणेषु च ।
दिशं प्राचीमुदीचीं वा अथवा प्रागुदग्दिशम् ॥१२९॥
अदूरं समनुप्राप्य तत्रोद्याने मनोहरे ।
केवले वा शुचौ देशे मृदं शुद्धां समाहरेत् ॥१३०॥
अस्त्रमन्त्रेण धरणीं सम्प्रोक्ष्य प्रथमं गुरुः ।
महीसूक्तेन संस्पृश्य ध्यायन्नेकाग्रचेतसा ॥१३१॥
मूर्तिं देवस्य वाराहीमभ्यर्च्य कुसुमैर्भुवम् ।
अस्त्राम्बुना प्रोक्षितेन पुष्पैरभ्यर्चितेन च ॥१३२॥
खनित्रेण खनेद्भूमिं प्राङ्मुखः क्रोडमन्त्रतः ।
लोहजे भाजने मृत्स्नां वेत्रजे वा यथारुचि ॥१३३॥
गृहीत्वा मूलमन्त्रेण वेष्टयित्वा च वाससा ।
प्रत्यग्रेण तथा नद्या वालुकां गोमयं तथा ॥१३४॥
गोकुलात्पूर्ववत्पात्रे गृहीत्वाऽऽच्छाद्य वाससा ।
यानादिके समारोप्य यद्वा दीक्षितमूर्धनि ॥१३५॥

गत्वा प्रदक्षिणं ग्रामं प्रविशेन्मण्टपं ततः ।
मण्टपं शोधयित्वा तु यथोक्तविधिना द्विजाः ! ॥१३६॥
ततो मण्टपमध्ये तु सूत्राण्यास्फालयेत्क्रमात् ।
प्रागायतानि प्रथमं क्रमात्सप्तदश क्षिपेत् ॥१३७॥
उदगायतसूत्राणि चतुर्दश निपातयेत् ।
सूत्रात्सूत्रादन्तरालं षोडशाङ्गुळसंमितम् ॥१३८॥
त्रयाधिकदशैव स्युः पूर्वपश्चिमपङ्क्तयः ।
एवं षोडशसङ्ख्याता दक्षिणोत्तरपङ्क्तयः ॥१३९॥
बीजपात्रप्रतिष्ठार्थं पूर्वपश्चिमपङ्क्तिषु ।
मध्ये पङ्क्तित्रयं स्थाप्यं वीथ्यर्थं द्वितये सृजेत् ॥१४०॥
भूयश्च पङ्क्तित्रितयं स्थापयेत्पार्श्वयोर्द्वयोः ।
दक्षिणोत्तरमध्ये तु स्थाप्यं पङ्क्तिचतुष्टयम् ॥१४१॥
द्वितयं द्वितयं पार्श्वे वीथ्यर्थं विसृजेत्पुनः ।
चतुश्चतुश्च पङ्क्तीनां स्थापयेत्क्रमयोगतः ॥१४२॥
आशास्वष्टासु मध्ये च शरावघटपालिकाः ।
द्वादश द्वादश स्थाप्याः शतमष्टोत्तरं भवेत् ॥१४३॥
आग्नेये दक्षिणे भागे नैरृतेऽपि च पालिकाः ।
घटिका वारुणे ब्राह्मे तथा पौरन्दरेऽपि च ॥१४४॥
शरावा मारुते सौम्ये ईशाने च यथाविधि ।
प्रत्येकं पालिकादीनां षोडशत्वेन कल्पने ॥१४५॥
दक्षिणोत्तरगं सूत्रपञ्चकं विनिवेशयेत् ।
प्रागायतानि सूत्राणि पूर्ववद्विनिवेशयेत् ॥१४६॥
आचरेत् पूर्ववद्विप्राः ! प्राक्प्रत्यक्पङ्क्तिकल्पनम् ।
तत्र दक्षिणतः पङ्क्तिचतुष्के स्थापयेत्क्रमात् ॥१४७॥
पालिकाः षोडश पुरो मध्ये पङ्क्तिचतुष्टये ।

घटिकाः षोडश न्यस्त्वा उत्तरे विनिवेशयेत् ॥१४८॥
शरावानपि तत्सङ्ख्यानथ द्वादशकल्पने ।
दक्षिणोत्तरसूत्राणि चत्वार्यत्र विनिक्षिपेत् ॥१४९॥
पूर्वापराणि सूत्राणि पूर्ववद्विनिपातयेत् ।
अष्टाधिकानि कोष्ठानि चत्वारिंशद्भवन्ति हि ॥१५०॥
याम्ये द्वादशकोष्ठानि स्थापयित्वा ततो मृजेत् ।
वीथ्यर्थं भागषट्कं तु मध्यतः स्थापयेत्ततः ॥१५१॥
भागद्वादशकं पश्चाद्भागषट्कं विलोपयेत् ।
भूयश्चोत्तरदिक्स्थाप्यं कोष्ठद्वादशकं क्रमात ॥१५२॥
न्यसेत्तु पालिकादीनि भागद्वादशकत्रये ।
आग्नेयादीशपर्यन्तं दक्षिणाशादितः क्रमात् ॥१५३॥
प्रत्येकं पालिकादीनामष्टसंख्याप्रकल्पने ।
दक्षिणोत्तरसूत्राणि त्रीण्येव तु नियोजयेत् ॥१५४॥
अन्यत्सर्वं भवेत्प्राग्वदथ प्रतिचतुष्टये ।
दक्षिणोत्तरगं सूत्रत्रितयं विनिपातयेत् ॥१५५॥
पूर्वपश्चिमसूत्राणि एकादश विनिक्षिपेत ।
सर्वार्थे पालिकानां तु षोडशानां परिग्रहे ॥१५६॥
पञ्च दक्षिणसूत्राणि प्राक्सूत्राणि तथा क्षिपेत् ।
प्राक्सूत्रात्पञ्च चाष्टानां दक्षसूत्रत्रयं क्षिपेत् ॥१५७॥
चतुर्विंशतिसङ्ख्यानां पालिकानां परिग्रहे ।
पूर्वदक्षिणसूत्राणां सप्तकं पञ्चकं क्षिपेत् ॥१५८॥
चतुः परिग्रहे सूत्रं त्रितयं त्रितयं क्षिपेत् ।
पूर्ववत्सूत्रपातः स्यादाद्यसङ्ख्यासु पञ्चसु ॥१५९॥
एवमास्फाल्य सूत्राणि विभवेच्छानुसारतः ।
पदेषु पालिकादीनां शालिभिर्व्रीहिभिस्तथा ॥१६०॥

आढकादिमितैः प्राग्वदुत्तमादिव्यपेक्षया ।
वृत्तां वा चतुरश्रां वा कल्पयेत्पीठिकां क्रमात् ॥१६१॥
पालिकादीनि पात्राणि क्षाळयेन्मूलमन्त्रतः ।
सहदेवीं च दूर्वां च सार्धमश्वत्थपल्लवैः ॥१६२॥
शिरीषपल्लवैश्चापि निशापत्रैस्तथैव च ।
कण्ठेषु पालिकादीनां बन्धयेत्तदनन्तरम् ॥१६३॥
कुशकाशतृणैस्तेषां बिलमूलानि पूरयेत् ।
बिलानि प्रथमं मृद्भिर्वालुकाभिरनन्तरम् ॥१६४॥
करीषचूर्णैरुपरि समृद्धं पूरयेद्बिलम् ।
यद्वा मृदादिकं विप्राः ! सर्वं संमिश्रय पूरयेत् ॥१६५॥
कोष्ठेषु विन्यसेत्तानि पालिकादीन्यनुक्रमात् ।
आग्नेयादीशपर्यन्तं प्रतिस्कन्धं द्विजोत्तमाः ! ॥१६६॥
द्वादशानां तु नवकमष्टोत्तरशते न्यसेत् ।
ब्रह्मादीशानपर्यन्तमुदितक्रमयोगतः ॥१६७॥
तेषां तु पश्चिमे स्थाने धान्यराशौ सलक्षणम् ।
विन्यसेत्सोमकुम्भं तु वेष्टितं नववाससा ॥१६८॥
गन्धसर्वौषधीरत्नकूर्चपल्लवसंयुतम् ।
एवं सर्वं समापाद्य दीक्षितैः परिचारकैः ॥१६९॥
तत्तत्सर्वं समापाद्य यद्यत्प्रागनुपार्जितम् ।
समारभेत्ततः कर्म देशिकः प्राङ्मुखः पदे ॥१७०॥
पश्चिमे घटिकास्थानादुपविश्यासने शुभे ।
न्यासमुद्दीप्य विधिना प्रोक्षणार्घ्यं प्रकल्पयेत् ॥१७१॥
देहविन्यस्तमन्त्राणां कुर्यादर्घ्यादिनार्चनम् ।
द्वारपालार्चनं कृत्व विभवेच्छानुरूपतः ॥१७२॥
तोरणानि ध्वजांश्चैव द्वारकुम्भांश्च पूजयेत् ।

पुण्याहं वाचयित्वा तु पूर्वोक्तविधिना गुरुः ॥१७३॥
यजेदर्घ्यादिभिः पश्चात्पालिकाद्यधिदेवताः ।
अब्जनाभं परं चैव पद्मनाभं ध्रुवं तथा ॥१७४॥
पात्रस्कन्धत्रिके विप्राः ! क्रमेण परिपूजयेत् ।
पालिकानां द्वादशके वह्न्यादीशानपश्चिमम् ॥१७५॥
अनन्तादि द्वादशकं घटिकाद्वादशे ततः ।
कूर्मादिकं द्वादशकं शरावाणां तु द्वादशे ॥१७६॥
द्विपट्कमेकशृङ्गाद्यं क्रमेण परिपूजयेत् ।
प्रत्येकं पालिकादीनां कृते षोडशकल्पने ॥१७७॥
अनन्ताद्यं च पट्त्रिंशत्पातालशयनान्तिमम् ।
लक्ष्म्यादिमतिपर्यन्तं शक्तिद्वादशकं यजेत् ॥१७८॥
प्रत्येकं पालिकादीनां पट्त्रिंशत्परिकल्पने ।
चतुष्टयं तु मूर्तीनां स्वप्नाख्यपदसंस्थितम् ॥१७९॥
प्रभवाप्यययोगेन जाग्रद्रूपं तथाऽष्टकम् ।
मूर्त्यन्तरद्वादशकं तच्छक्तीनां चतुस्त्रयम् ॥१८०॥
अनन्ताद्यं च पट्त्रिंशत्पातालशयनान्तिमम् ।
स्वधादीनां च शक्तीनां चतुस्त्रिंशच्च तत्परम् ॥१८१॥
चक्रशङ्खौ क्रमाद्भोगैरर्घ्यगन्धादिभिर्यजेत् ।
अष्टके केशवाद्यांश्च तदीयाः शक्तयो यजेत् ॥१८२॥
चतुष्के केशवाद्यांस्तु केवलान् द्वादशार्चयेत् ।
सर्वार्थं पालिकानां तु क्रमात्षोडशके यजेत् ॥१८३॥
वासुदेवादि चतुरः केशवादींश्च द्वादश ।
अष्टके वासुदेवादीन् प्रभवाप्यययोगतः ॥१८४॥
चतुष्के वासुदेवादीन् प्रभवानुक्रमेण तु ।
एवमिष्ट्वा ततः सोमकुम्भपूजां समाचरेत् ॥१८५॥

कुम्भे सोमात्मकं देवं करके च सुदर्शनम् ।
अष्टदिक्षु च विन्यस्तकुम्भेष्विन्द्रादिकान्यजेत् ॥१८६॥
एवं कुम्भार्चनं कृत्वा बीजक्षालनमाचरेत् ।
गव्येन पयसा सम्यङ् मूलमन्त्रेण वै द्विजाः ॥१८७॥
बीजानां नामधेयैस्तु चतुर्थ्यन्तैः पृथक् पृथक् ।
अर्घ्याद्यैः पूजयित्वा तु वाससा परिवेष्ट्य च ॥१८८॥
कुण्डे वा स्थण्डिले वाग्निं प्रतिष्ठाप्य यथाविधि ।
कृत्वा सन्तर्पणं चाग्नेस्तस्मिन्मन्त्रासनादिकम् ॥१८९॥
परिकल्प्य च तन्मध्ये देवमावाह्य पूर्ववत् ।
सन्निधानादिकं सर्वं प्रागवदेव समाचरेत् ॥१९०॥
समिद्भिश्चैव नित्याभिः काम्यैश्च जुहुयात्ततः ।
पालिकाद्यधिदेवानां मन्त्रैश्चापि यथाक्रमम् ॥१९१॥
अष्टौ चतुः सकृद्वापि हुनेदाज्येन वै द्विजाः! ।
हुत्वा सोमादिमन्त्रैश्च सम्पाताज्यं समाहरेत् ॥१९२॥
हुतावशिष्टमाज्यं तु तदन्यं वापि संस्कृतम् ।
आदाय लोहजे पात्रे मृण्मये वा यथारुचि ॥१९३॥
उभाभ्यां चैव हस्ताभ्यां दूर्वामादाय मूलतः ।
घृते निमज्य चाग्राणि पालिकादिषु सेचयेत् ॥१९४॥
हस्तव्यत्यासमार्गेण वह्न्यादीशानपश्चिमम् ।
प्रतिस्कन्धं घृतारोपे दूर्वाभेदः प्रकीर्तितः ॥१९५॥
एवं कृत्वा घृतारोपं भूयः स्कन्धाधिदेवताः ।
प्रपूज्य सर्वबीजानि मन्त्रयेन्मूलमन्त्रतः ॥१९६॥
आचार्यादीननुज्ञाप्य देशिकेन्द्र उदङ्मुखः ।
प्राङ्मुखो वा मुहूर्ते तु शोभने पालिकादिषु ॥१९७॥
अष्टाक्षरेण मन्त्रेण सर्वबीजानि वापयेत् ।

यद्वा जितन्तामन्त्रेण ह्यभयेनाथ वा द्विजाः! ॥१९८॥
आग्नेयादीशपर्यन्तं प्रतिस्कन्धं क्रमेण तु ।
शङ्खदुन्दुभिनिर्घोषजयनादसमन्वितम् ॥१९९॥
बीजानि द्वादशोक्तानि वपेद्द्वादशसु क्रमात् ।
यद्वा सर्वाणि संमिश्र्य वपेदिच्छानुसारतः ॥२००॥
बीजानामप्यलाभे तु मुद्गमेकं तु वा वपेत् ।
आचार्यानुमताश्चान्ये देशिकाः साधका अपि ॥२०१॥
वपेयुर्ध्यानसंयुक्ताः केवलं गुरुरेव वा ।
हरिद्राचूर्णसंमिश्रैर्जलैः कुसुमवासितैः ॥२०२॥
बहुभिः सेचयेद्विप्राः ! देशिकेन्द्रः क्रमेण तु ।
प्रतिस्कन्धोपरिष्टात्तु चन्द्रमण्डलमध्यगम् ॥२०३॥
तत्कान्तिसन्निभं देवं स्वदेहोत्थैर्निरन्तरैः ।
सिञ्चन्तममृतौघैस्तु बीजान्युप्तानि सर्वतः ॥२०४॥
ध्यात्वार्चयित्वा पात्राणि नवैस्तु सदशैः शुभैः ।
आच्छादयित्वा वसनैः प्रतिस्कन्धं क्रमेण तु ॥२०५॥
वासुदेवं जगद्योनिं सर्वेषामूर्ध्वतो यजेत् ।
भूतकूरबलिं दद्यादष्टदिक्षु द्विजोत्तमाः ! ॥२०६॥
भूतानां कुमुदादीनां पूर्वादिक्रमयोगतः ।
तदा प्रभृति ते सर्वे रक्षन्ति कुमुदादयः ॥२०७॥
आचार्यान् गुरुपूर्वांश्च साधकान् वैष्णवानपि ।
प्रभूतैस्तु तथोद्दिष्टैस्ताम्बूलैः सुमनःफलैः ॥२०८॥
गुरुं च तोषयेद्वित्तैर्यजमानः प्रयत्नवान् ।
क्रमादुद्धृत्य तान् सर्वान् सुगुप्ते स्थापयेत्ततः ॥२०९॥
मण्टपेशानकोणे वा देशेऽन्यत्र यथारुचि ।
तत्रापि पालिकादीनां परितोऽष्टासु दिक्षु च ॥२१०॥

भूतानां कुमुदादीनामैन्द्रादिक्रमयोगतः ।
बलिं तु मण्टपे दद्याद्भूतक्रूरविधानतः ॥२११॥
दीपान् बहूननिर्वाणान् परितः परिदीपयेत् ।
ऊनाधिक्योपशान्त्यर्थं शतमष्टोत्तरं हुनेत् ॥२१२॥
पूर्णाहुत्यादिकं कृत्वा देशिकेन्द्रो यथाविधि ।
ततः कुण्डगतं देवं विसृज्य हृदयान्तरे ॥२१३॥
चतुर्द्वाराधिदेवानां मन्त्रैश्चापि यथाक्रमम् ।
हुत्वाज्येन ततो वह्निं विसृजेत्तु यथाविधि ॥२१४॥
परितः पालिकादीनां प्रतिरात्रं पृथक् पृथक् ।
दद्याद्दिवा रजन्यां वा बलिं कालद्वयेपि वा ॥२१५॥
प्रातः कर्मदिने दद्याद्बलिं देशिकसत्तमः ।
यदा चोप्तानि बीजानि तदा प्रभृति नित्यशः ॥२१६॥
न कश्चित्प्रविशेत्तत्र न स्पृशेद्वा कथं चन ।
आचार्य एव प्रविशेत्तच्छिष्यो वा समाहितः ॥२१७॥
उच्छिष्टादीनि सर्वाणि दूरतः परिवर्जयेत् ।
अदत्वा तु बलिं काञ्चिन्न कुर्यात्पालिकाक्रियाम् ॥२१८॥
हरिद्रावारिभिः सिञ्चेदङ्कुराण्यभिवृद्धये ।
अङ्कुरान् श्यामळान् रक्तान् कृष्णांस्तिर्यग्गतांस्तथा ॥२१९॥
अप्ररूढान् मुनिश्रेष्ठाः ! वर्जयेत्तु प्रयत्नतः ।
श्यामेषु द्रव्यनाशः स्याद्रक्तेषु कलहो भवेत् ॥२२०॥
कृष्णेषु मानसी पीडा रोगी तिर्यग्गतेषु च ।
अप्ररूढेषु मरणं भवेत्तत्र न संशयः ॥२२१॥
शुभं पीतेषु शुक्लेषु ऋजुपूर्ध्वगतेष्वपि ।
सर्वसम्पत्समृद्धिश्च कर्तुः कारयितुर्भवेत् ॥२२२॥
कर्मार्थमङ्कुराण्यादौ यः समारोपयेद्गुरुः ।

स एव कर्म कात्स्न्येन कुर्यात्प्राज्ञोपि नेतरः ॥२२३॥
अनुज्ञया वा तत्पुत्रः शिष्यो वा तत्समाचरेत् ।
एवं सर्वेषु यागेषु अङ्कुरारोपणं भवेत् ॥२२४॥
देशं कालं तथा वित्तं ज्ञात्वा स्वाधीनतां तथा ।
उक्तं सर्वं समभ्यूह्य कुर्यात्कर्म प्रधानकम् ॥२२५॥
एवं कृत्वाङ्कुरारोपं गत्वा देवस्य सन्निधिम् ।
देवमर्घ्यादिनाभ्यर्च्य नैवेद्यान्तं यथाविधि ॥२२६॥
अनिर्वाणं यथादीपं रात्रिशेषं समापयेत ।
तदन्येद्युः प्रभातायां ध्वजार्थं पटमाहरेत् ॥२२७॥
यथावित्तानुसारेण क्रीतं वाभिनवं शुभं ।
दुकूलपट्टं देवाङ्गं चित्रक्षौममथापि वा ॥२२८॥
अथ कार्पासकं वापि नीलरोमादिवर्जितम् ।
सुलक्षणं दृढं स्निग्धं पटमानमिहोच्यते ॥२२९॥
आयतं नवभिर्हस्तैः सप्तभिः पञ्चभिस्तु वा ।
मूलबेरसमायामं द्वारायाममथापि वा ॥२३०॥
आयामार्धेन विस्तीर्णं पादेन कृतशेखरम् ।
शेखरेण समं पुच्छं तदर्धं कर्णपुच्छकम् ॥२३१॥
वालाख्यध्वजवस्त्रं तु पटाख्यपरिसंमितम् ।
विस्तारं पटतुल्यं तु पूर्ववच्छिखरं भवेत् ॥२३२॥
निर्णेजितं खलीयुक्तं शोषितं लक्षणान्वितम् ।
पटं विचित्रयेद्विद्वान् शिल्पिना कुशलेन वै ॥२३३॥
छत्रं तु शिखरे कुर्यात्पार्श्वयोः श्वेतचामरे ।
अधोऽनेकदलं पद्मं तदधः पूर्णकुम्भकम् ॥२३४॥
कुम्भस्य पार्श्वे विलिखेत्साङ्कुरं पालिकागणम् ।
दीपौ सुशोभनौ कुर्यात्पालिकानां तु पार्श्वयोः ॥२३५॥

ध्वजं तु गरुडाकारमेकमूर्तेस्तु सत्तमाः ! ।
सत्यः सुपर्णो गरुडस्तार्क्ष्यश्च चतुरात्मनः ॥२३६॥
पञ्चमूर्तेस्तु चत्वारो विहगेश्वरसंयुताः ।
सुपर्णताळमकरऋश्या वा चतुरात्मनः ॥२३७॥
ततऊर्ध्वं तु सर्वेषां व्यूहानां गरुडो ध्वजः ।
पटमध्ये तु गरुडं द्विभुजं विधृताञ्जलिम् ॥२३८॥
पुष्पांञ्जलिपुटं वाऽथ सुवर्णाचलसन्निभम् ।
गगनेगमनारम्भपक्षविक्षेपणान्वितम् ॥२३९॥
कुञ्चितो वामपादस्तु दक्षिणः पृष्ठतः स्थितः ।
किञ्चिदायतवृत्ताक्षं नीलदीर्घाग्रनासिकम् ॥२४०॥
अतीव शान्तवेषं तु तथा प्रहसिताननम् ।
बालचन्द्रसमाकारं दंष्ट्राद्वयविराजितम् ॥२४१॥
कुटिलभ्रुकुटीभङ्गं भङ्गुराळकशोभितम् ।
कम्बुग्रीवं बृहद्बाहुं पीवांसं दृढवक्षसम् ॥२४२॥
पृथूदरं निम्ननाभिं रोमराजिविराजितम् ।
सुवृत्तकनकस्तम्भपीवरोरुद्वयान्वितम् ॥२४३॥
हेमरम्भासमाकारजङ्घाकान्तपदद्वयम् ।
करण्डमकुटाक्रान्तपुष्पापीडविराजितम् ॥२४४॥
वृत्ते वैपुल्यमानेन लोचने पद्मपत्रवत् ।
भ्रूयुग्मं तारसिम्नोत्थं घ्राणाग्रं शुकतुण्डवत् ॥२४५॥
सिंह्मवन्मध्यदेशस्तु तद्वंशं गजपृष्ठवत् ।
तदेवं दैवदीर्घेण विस्तृतं हंसपक्षवत् ॥२४६॥
स्वपक्षमानाद्दिगुणं तत्पुच्छं शतशाखिनम् ।
सर्वेषामेव सामान्यं विशेषाख्यमथोच्यते ॥२४७॥
मकुटादिसपादान्तं नानारत्नेन शोभितम् ।

हारकेयूरकटकब्रह्मसूत्रविभूषितम् ॥२४८॥
प्रलम्बकर्णपाशान्तविश्रान्तशुभकुण्डलम् ।
ललाटतिलकोपेतं पुष्पकर्णावतंसकम् ॥२४९॥
रत्नाङ्गुळीयकोपेतं शिञ्जिनीरञ्जिताङ्घ्रिकम् ।
अन्यैराभरणैर्दिव्यैर्भूषितं सर्पभूषितम् ॥२५०॥
नीलाम्बरधरं नीलवारवाणविराजितम् ।
फुल्लरक्तोत्पलदलस्रग्भिर्मण्डितकन्धरम् ॥२५१॥
तथा विचित्रकुसुमस्रग्भिरन्याभिरुज्वलम् ।
अनन्तो वामकटको यज्ञसूत्रं तु वासुकिः ॥२५२॥
तक्षकः कटिसूत्रं तु हारः कार्कोटकस्तथा ।
पद्मो दक्षिणकर्णे तु महापद्मस्तु वामतः ॥२५३॥
शङ्खः शिरःप्रदेशे तु गुलिकश्च भुजान्तरे ।
एतैरष्टोरगैराद्यैर्भूषितं भुजगोत्तमैः ॥२५४॥
अनन्तः शुक्लवर्णाभो रक्तवर्णस्तु वासुकिः ।
तक्षकः पीतवर्णाभो धूम्रः कार्कोटकस्तथा ॥२५५॥
शङ्खस्तुहिनवर्णाभो गुलिकस्त्वळिसन्निभः ।
पद्मः पद्मसमानाभो महापद्मस्तु पिङ्गळः ॥२५६॥
पञ्चवर्णैर्लिखेद्देवं देवं पञ्चायुधं तथा ।
चक्रं खड्गं शरं चैव शङ्खं शार्ङ्गं गदां तथा ॥२५७॥
पटोर्ध्वे ह्युभये पार्श्वे विलिखेच्च यथाविधि ।
तदधो दक्षिणे पार्श्वे वह्निमण्डलमालिखेत् ॥२५८॥
तद्वल्लिखेद्वामभागे स्वस्तिकं लक्षणान्वितम् ।
लेपयेत्पटशेषं तु श्यामलेनासितेन वा ॥२५९॥
विचित्रपुष्पसंयुक्तपल्लवल्लीसमन्वितम् ।
एवं शिल्पिवरेणैव कारयेद्देशिकोत्तमः ॥२६०॥

शूद्रेण वा द्विजश्रेष्ठाः ! दीक्षितेन यथाविधि ।
कुलालेनाऽथवा मन्त्री कारयेत्कुशलेन च ॥२६१॥
एवं सर्वं समापाद्य देशिकः सुसमाहितः ।
सायंकाले तु संप्राप्ते सहितो मूर्तिधारकैः ॥२६२॥
कारुशालां प्रविश्याथ तोषयित्वा तु शिल्पिनम् ।
तत्पटं तु समादाय विन्यसेच्छिल्प्यमूर्धनि ॥२६३॥
शंखदुन्दुभिनिर्घोषैः काहळध्वनिभिस्तथा ।
गीतैश्च विविधैरन्यैः श्रुतिघोषैः पृथग्विधैः ॥२६४॥
सह ध्वजपटं तस्मादानयेन्मुखमण्टपे ।
प्रविश्याभ्यन्तरं मूलविम्बस्थं परमेश्वरम् ॥२६५॥
अभिवाद्यार्घ्यगन्धाद्यैः पूजयेत्पुष्पधूपकैः ।
विसृज्य शिल्पिनं पश्चात्सम्प्रोक्ष्यार्घ्याम्भसा पटम् ॥२६६॥
सिद्धार्थकान्वितैः पुष्पैस्ताडयेदस्त्रमन्त्रतः ।
दर्शयेद्देवदेवस्य संमुखं साधकोत्तमः ॥२६७॥
दहनाप्यायनं कुर्याद्विधिदृष्टेन कर्मणा ।
भूयोऽर्घ्यगन्धपुष्पाद्यैः प्रपूज्य परमेश्वरम् ॥२६८॥
गिरोच्चया त्विमं मन्त्रं बद्धाञ्जलिकरः पठेत् ।
भगवन् ! पुण्डरीकाक्ष ! सर्वेश्वर ! जगन्मय ! ॥२६९॥
त्वया यथा तु कथितं तथा कर्तुं न शक्यते ।
अस्वातन्त्र्यादसामर्थ्याच्छ्रद्धादीनामभावतः ॥२७०॥
तस्मान्मानादिसर्वेषामूनाधिक्योपशान्तये ।
समालोकय नेत्राभ्यां शीतळाभ्यां पटस्थितम् ॥२७१॥
सर्वदोषापहारिभ्यां वैनतेयं प्रसीद ओं ।
दीक्षितानां ततो विप्राः ! हस्ते दत्वा तु तं पटम् ॥२७२॥
चतुः प्रदक्षिणीकृत्य तेन सार्धं तु देशिकः ।

प्रथमावरणे वाऽपि द्वितीयावरणेऽपि वा ॥२७३॥
प्रविशेद्यजमानेन प्रासादाग्रस्थमण्टपम् ।
तत्र न्यस्त्वा भद्रपीठं तदूर्ध्वे शालितण्डुलैः ॥२७४॥
वेदिं कृत्वा तु तत्पृष्ठे भद्राख्यं मण्डलं लिखेत् ।
विभवे सति वस्त्रं तु समास्तीर्य तदूर्ध्वतः ॥२७५॥
तिलराशिं समुत्कीर्य तन्मध्ये स्वस्तिकं लिखेत् ।
तस्योपरिष्टात्संस्थाप्य प्रासादाभिमुखं पटम् ॥२७६॥
उपविश्यासने पश्चादाचार्यः सुसमाहितः ।
करशुद्ध्यादि पूर्वोक्तं स्वदेहार्चनपश्चिमम् ॥२७७॥
सर्वं खगेशमन्त्रेण साङ्गेन तु समाचरेत् ।
द्वार्स्थतोरणकुम्भादियजनं प्राग्वदाचरेत् ॥२७८॥
ततः पुण्याहघोषं तु कारयेत्पूर्ववद्द्विजाः ! ।
गरुडस्याग्रतः प्राग्वत्कुम्भं करकसंयुतम ॥२७९॥
भारमात्रोपक्लृप्ते तु धान्यपीठे तु विन्यसेत् ।
जलद्रोण्यादिकं पात्रं गन्धतोयैः सुपूरितम् ॥२८०॥
दक्षिणे करकस्याथ विनिवेश्य च तत्र तु ।
सघश्छायाधिवसनमाचरेद्गरुडस्य तु ॥२८१॥
अधमाधममार्गेण स्नपनं तु समाचरेत् ।
अग्रतो वैनतेयस्य वेदिकोपरि संस्थिते ॥२८२॥
दर्पणे तु ततः पश्चान्मुहूर्ते शोभने गुरुः ।
नयनोन्मीलनं कुर्याद्वक्ष्यमाणविधानतः ॥२८३॥
सर्वेषामपि सर्पाणां नेत्रोन्मीलनमाचरेत् ।
प्राग्वत्संशुद्धदेहस्तु शिल्पी प्रकटतां नयेत् ॥२८४॥
सर्वं तु विधिवत्कुर्यान्नेत्रयोः पूरणादिकम् ।
कुम्भे च करके चैव आसनं परिकल्प्य च ॥२८५॥

कुम्भे गरुडमावाह्य करके मन्त्रमस्त्रपम् ।
पूजयित्वार्घ्यगन्धाद्यैस्ततो दिक्कलशाष्टके ॥२८६॥
इन्द्रादिलोकपालांस्तु प्रादक्षिण्येन पूज्य च ।
भित्तिसंसेचनं कृत्वा भूयः संस्थाप्य तत्र तु ॥२८७॥
ततो ध्वजपटे प्राग्वदासनं परिकल्प्य च ।
ततो गरुडमन्त्रं तु सहस्रादित्यभास्वरम् ॥२८८॥
सर्वरोगप्रशमनं सर्वोपद्रवनाशनम् ।
सर्वसिद्धिप्रदं नृणां सर्वदारिद्र्यनाशनम् ॥२८९॥
हृदयाद्रेच्य विप्रेन्द्राः ! पटस्थगरुडे न्यसेत् ।
सकलीकरणं कृत्वा सन्निधिं च समाचरेत् ॥२९०॥
सन्निरोधं च सांमुख्यं मुद्राबन्धं तथैव च ।
लययागं भोगयागं यथावद्द्विजसत्तमाः ! ॥२९१॥
सर्वं गरुडमन्त्रेण साङ्गेन तु समाचरेत् ।
कुम्भे च करके चैव पटे च क्रमयोगतः ॥२९२॥
महता विभवेनैव पूजनं च समाचरेत् ।
अलङ्कारासनान्तं च यथोक्तेन क्रमेण तु ॥२९३॥
कृत्वा सम्पूजनं विप्राः ! गरुडस्य ततः परम् ।
प्रासादाभ्यन्तरे विप्राः ! देशिकानुमतेन तु ॥२९४॥
अन्येन गुरुणा यद्वा साधकेन विशेषवत् ।
पूजनं कारयेत्सम्यङ्मूलमूर्तिगतस्य च ॥२९५॥
यात्रामूर्तिगतस्यापि विभोर्दानान्तमेव च ।
तत्परं वैनतेयस्य भोज्यासनपुरःसरैः ॥२९६॥
विविधैर्मधुपर्कान्तैर्हव्यैः सफलमूलकैः ।
अन्यैरतिप्रभूतैश्च तथान्यैर्विविधैरपि ॥२९७॥
भोगैरिष्ट्वा जपान्तं च पूर्ववत्क्रमयोगतः ।

संप्रदानं पृथक्कुर्यात्कारिभ्यस्तु यथाविधि ॥२९८॥
मन्त्रास्त्रकुम्भयोर्दत्तमाचार्येभ्यो ददेत्ततः ।
पटस्थस्यापि नैवेद्यं किञ्चिदादाय पात्रगम् ॥२९९॥
देशिकः स्वयमादद्याद्गुर्वादिभ्योपि वै ददेत् ।
मूलबिम्बास्थितस्यापि यात्राबिम्बस्थितस्य च ॥३००॥
देवस्य मधुपर्काद्यैर्नैवेद्यं प्रतिपादितम् ।
दापयेद्देशिकादिभ्यस्ततो होमं समाचरेत् ॥३०१॥
कुण्डं सलक्षणं कृत्वा प्राग्भागे गरुडस्य तु ।
तत्रानलं तु संस्कृत्य आवाह्य विहगेश्वरम् ॥३०२॥
समिधां सप्तकं हुत्वा शान्त्यर्थं तु तिलैर्घृतैः ।
आहुत्यष्टोत्तरशतं हुत्वा पूर्णां निवेदयेत् ॥३०३॥
यद्वा नैमित्तिके कुण्डे होमं कुर्यात्तु देशिकः ।
एवं ध्वजाधिवासं तु कृत्वा गर्भगृहं व्रजेत् ॥३०४॥
रक्षाबन्धं ततः कुर्याद्यथाविधि मुनीश्वराः ! ।
मूलमूर्तिगतं देवमर्घ्याद्यैः सम्प्रपूज्य च ॥३०५॥
तत्पादगौ करौ कृत्वा देवं विज्ञापयेदिदम् ।
भगवन् ! पुण्डरीकाक्ष ! करिष्ये कौतुकक्रियाम् ॥३०६॥
महोत्सवार्थं देवेश ! तदर्थं त्वं प्रसीद मे ।
इति विज्ञाप्य देवेशमावाह्योत्सवकौतुके ॥३०७॥
अर्घ्यगन्धादिनाभ्यर्च्य वासोभिर्विविधैः शुभैः ।
भूषणैर्दिव्यगन्धैश्चाप्यलङ्कृत्य विशेषतः ॥३०८॥
सौवर्णं यानमारोप्य शङ्खभेर्यादिसंयुतम् ।
छत्राद्यैश्च समायुक्तं प्रादक्षिण्यक्रमेण तु ॥३०९॥
आस्थानमण्टपं नीत्वा सौवर्णे भद्रविष्टरे ।
तत्र मुक्तावितानाद्यैरुपरिष्टाद्विभूषिते ॥३१०॥

सर्वसाधनसंयुक्ते समारोप्य विधानतः ।
पूजयित्वा जगन्नाथं प्रभूतान्नं निवेद्य च ॥३११॥
कृत्वा सन्तर्पणान्तं च प्रासादं सम्प्रवेशयेत् ।
ततस्तु हेमजं पात्रं राजतं वा समाहरेत् ॥३१२॥
शालिभिस्तण्डुलैर्विप्राः ! भारमानैः सुपूरितम् ।
तदर्धैर्वापि तत्पादैः षडंशैर्वाऽष्टमांशकैः ॥३१३॥
तदूर्ध्वे हेमजं सूत्रं क्षौमं कार्पासमेव वा ।
पट्टजं पञ्चभिः सूत्रैश्चतुर्भिः सप्तभिस्तु वा ॥३१४॥
कृतं न्यस्य सताम्बूलं तत्पात्रं विन्यसेत्ततः ।
गर्भाग्रमण्टपे पीठे शालिभिः परिकल्पिते ॥३१५॥
भारमानैस्तदर्धैर्वा एवं शालिविनिर्मिते ।
पीठे पात्रान्तरे न्यस्येदपूपिकसमन्वितम् ॥३१६॥
अर्घ्यादिना समभ्यर्च्य सम्यगाच्छाद्य वाससा ।
पात्रद्वयं दीक्षितयोर्न्यस्त्वा शिरसि देशिकः ॥३१७॥
यानादिके वा संस्थाप्य विभवानुगुणं द्विजाः ! ।
सह ताभ्यां तु पात्राभ्यां नृत्तगीतादिसंयुतम् ॥३१८॥
प्रदक्षिणं परिभ्राम्य सर्वेष्वावरणेष्वपि ।
एकस्मिन्वा चतुः कृत्वा ग्रामादौ वा प्रदक्षिणम् ॥३१९॥
नीत्वैकधा ततो विप्राः ! प्रविशेन्मूलमन्दिरम् ।
यद्वा सुदर्शनोपेतं विष्वक्सेनेन वा द्विजाः ॥३२०॥
खगेशं वा हनूमन्तं विभीषणसमन्वितम् ।
यानादिकं समारोप्य भ्रामयेत्तु यथारुचि ॥३२१॥
गर्भगेहं प्रविश्याऽथ देवदेवस्य सन्निधौ ।
पात्रद्वयं तु विन्यस्य आधारोपरि पूजयेत् ॥३२२॥
अष्टाक्षरेण मन्त्रेण अर्घ्यगन्धादिकैस्तथा ।

कृत्वा पुण्याहघोषं तु देवमर्घ्यादिभिर्यजेत् ॥३२३॥
ततः प्रतिसरं चेष्ट्वा गन्धधूपाधिवासितम् ।
प्रथमं देवदेवस्य मूलमूर्तिगतस्य च ॥३२४॥
बन्धयेत्कौतुकं सूत्रैर्हैमजैः पट्टजैस्तु वा ।
हेमजं सूत्रमादाय गन्धेनालिप्य बन्धयेत् ॥३२५॥
देवस्य दक्षिणे हस्ते यात्रामूर्तिगतस्य च ।
जितन्ताख्येनमन्त्रेण शङ्खगीतादिसंयुतम् ॥३२६॥
स्पृष्ट्वा दक्षिणहस्तेन सूत्रमस्त्रशतं जपेत् ।
श्रियो वामकरे कुर्यात्पट्टसूत्रेण कौतुकम् ॥३२७॥
श्रीसूक्तमुच्चरन्वाऽपि तन्मन्त्रेण द्विजोत्तमाः ! ।
पुष्ट्यास्तु वामहस्ते तु क्षौमसूत्रेण बन्धयेत् ॥३२८॥
कुर्यात्स्नपनबिम्बस्य पट्टसूत्रेण कौतुकम् ।
बलिबिम्बादिकानां च कृत्वैवं कौतुकं ततः ॥३२९॥
कौतुकं देशिकेन्द्रस्तु कार्पासेन स्वदक्षिणे ।
करे तु मूलमन्त्रेण बन्धयेत्तु ततः परम् ॥३३०॥
तथैव कर्मकर्तॄणां कौतुकं बन्धयेत्क्रमात् ।
विभवे सति सर्वेषां सूत्रं हेममयं भवेत् ॥३३१॥
देवमर्घ्यादिनाभ्यर्च्य अपूपादीन्निवेदयेत् ।
ताम्बूलादीन् समर्प्याथ ताम्बूलैस्तोषयेद्द्विजान् ॥३३२॥
दीक्षितान् वैष्णवांश्चापि देशिकेन्द्रपुरस्सरान् ।
आचार्यः स्वयमादद्यात्तदर्थं तण्डुलादिकम् ॥३३३॥
एवं सर्वेषु यागेषु कार्यं कौतुकबन्धनम् ।
रक्षाबन्धं तु कृत्वैवं रात्रिशेषं समापयेत् ॥३३४॥
ततः प्रभाते सुस्नातः स्वाचान्तो देशिकोत्तमः ।
नित्याऽर्चनं विभोः कृत्वा विशेषयजनं तथा ॥३३५॥

वैनतेयं ततोऽभ्यर्च्य कुम्भपूर्वं यथाविधि ।
महाहविर्निवेद्याथ होमं कृत्वा तु पूर्ववत् ॥२३६॥
ततः कुर्यात् ध्वजस्तम्भस्थापनं देशिकोत्तमः ।
प्रथमावरणे वापि द्वितीयावरणादिके ॥२३७॥
स्थापयेद्गोपुरास्यान्तर्बहिर्वा स्तम्भमुत्तमम् ।
अथ वा बलिपीठस्य पुरोभागे मुनीश्वराः ! ॥२३८॥
पश्चाद्भागेऽपि वा कुर्यात् ध्वजपीठप्रकल्पनम् ।
तयोस्तदन्तरं कुर्याद्धस्तं वा तालमेव वा ॥२३९॥
उत्तरे ध्वजपीठस्य पूर्वस्यां दिशि वा द्विजाः ! ।
शाययेच्च ध्वजस्तम्भं ध्वजयष्टिसमन्वितम् ॥२४०॥
पूर्वाग्रमुत्तराग्रं वा लक्षणाढ्यं सुशोभनम् ।
अन्तस्सारो बहिस्सारो निस्सारस्त्रिविधस्तरुः ॥२४१॥
अन्तस्सारश्चन्दनादिः प्रशस्तः स्तम्भकल्पने ।
क्रमुकादिर्बहिस्सारः सोऽपि शस्तो मुनीश्वराः ! ॥२४२॥
किंशुकाद्यं तु निस्सारं वर्जयेत् स्तम्भकर्मणि ।
आर्द्रं नवमृजुं स्निग्धं वक्रस्फोटनवर्जितम् ॥२४३॥
अयुग्मपर्वकं स्निग्धं सत्वचं सुस्थिरं तथा ।
ग्राहयेत्तु ध्वजस्तम्भं शास्त्रदृष्ट्या परीक्ष्य तु ॥२४४॥
शततालं तु मुख्यं स्याद्विंशन्यून मथापि वा ।
षष्टितालमितं वापि मानाङ्गुलवशेन तु ॥२४५॥
मात्राङ्गुलवशेनापि प्रमाणं परिकल्पयेत् ।
प्रासादशिखराग्रोच्चं प्रासादोच्चमथापि वा ॥२४६॥
कर्णोच्चं गोपुरोच्चं वा यथाशक्ति प्रकल्पयेत् ।
चतुर्धा विभजेत् स्तम्भमेकांशेनैव मस्तकम् ॥२४७॥
तस्य चाधारभूतानां छिद्रितानां त्रिमूलतः ।

त्रयाणामपि पीठानां स्तम्भाग्रे विनिवेशनम् ॥३४८॥
अग्रे पीठद्वयच्छिद्रे ध्वजयष्टिं तु योजयेत् ।
दर्भमुष्टिं तदूर्ध्वे तु बन्धयेत् घण्टया सह ॥३४९॥
वेष्टयेद्दर्भमालाभिर्ध्वजदण्डं प्रदक्षिणम् ।
एवं कृत्वा ध्वजस्तम्भं प्रोक्षयेदस्त्रवारिणा ॥३५०॥
ध्वजपीठस्थिते गर्ते रत्नधान्यानि निक्षिपेत् ।
देशिकस्ताक्ष्यमन्त्रेण ततो ब्राह्मणसत्तमैः ॥३५१॥
शूद्रैर्वा दीक्षितैर्विप्राः देवदासैरथापि वा ।
शङ्खभेर्यादिनिर्घोषगीतवादित्रसंयुतम् ॥३५२॥
स्थापयेत्तु ध्वजस्तम्भं तस्मिन् गर्ते ऋजुस्थितम् ।
प्रासादाभिमुखं स्थाप्य वालुकाभिश्च पूरयेत ॥३५३॥
हस्तपादादिभिः कृत्वा सुदृढं तु यथा भवेत् ।
स्तम्भमूलस्थले वेदिं पञ्चहस्तसमुच्छ्रिताम् ॥३५४॥
त्रिहस्तैरुच्छ्रितां वापि एकहस्तसमुच्छ्रिताम् ।
तावद्भिरेव विस्तीर्णां चतुरश्रां प्रकल्पयेत् ॥३५५॥
तदूर्ध्वे मध्यदेशे तु पद्ममष्टदलैर्युतम् ।
कर्णिकास्थो यथा स्तम्भस्तथा कुर्याद्विचक्षणः ॥३५६॥
प्रासादाऽन्तः प्रविश्याथ मूलमूर्तिगतं विभुम् ।
अर्घ्यगन्धादिनाभ्यर्च्य तस्मादुत्सवकौतुके ॥३५७॥
किञ्चिदावाह्य तं चापि देवीभ्यां सहितं ततः ।
पूजयित्वा जगन्नाथं पादुके विनिवेद्य च ॥३५८॥
याने प्ररोप्य तदनु सौवर्णप्रभयान्विते ।
एवमेव हि बल्यर्चामिष्ठा याने निवेशयेत् ॥३५९॥
आचार्यो मूर्तिपैः सार्धं गत्वा गरुडसन्निधिम् ।
रथे वा कुञ्जरे याने ध्वजमारोप्य यत्नतः ॥३६०॥

प्रभया चित्रकुसुमैः कृतया भूषयेत् ध्वजम् ।
वासोभिर्भूषणैः स्रग्भिर्विचित्राभिश्च भूषयेत् ॥३६१॥
छत्रचामरपूर्वैश्च मयूरव्यजनैस्ततः ।
विचित्रैस्तालवृन्तैश्च आतपत्रैर्मनोहरैः ॥३६२॥
केतुदण्डैर्विचित्रैश्च दुकूलपटशोभितैः ।
चतुर्वेदमयोद्घोषैः स्तोत्रघोषसमन्वितैः ॥३६३॥
गीतकैर्विविधैर्वाद्यैः शङ्खकाहळनिस्वनैः ।
भेरीमृदङ्गपूर्वाणां घोषैरन्यैश्च मङ्गळैः ॥३६४॥
ब्राह्मणैर्ध्रियमाणैश्च साऽङ्कुरैः पालिकागणैः ।
सुवेषगणिकासङ्घैः सदा भक्तजनैः सह ॥३६५॥
क्ष्वेळितास्फोटितैर्युक्तं जयशब्दसमन्वितम् ।
बलिबिम्बं पुरस्कृत्य मध्ये ध्वजपटं ततः ॥३६६॥
यात्रामूर्तिं च तदनु क्रमेण भ्रामयेत्ततः ।
प्रथमावृतिमारभ्य रथ्यावरणपश्चिमम् ॥३६७॥
बलिदानपुरस्कं तु कृत्वा ग्रामप्रदक्षिणम् ।
यात्राबिम्बं च तदनु नयेदास्थानमण्टपे ॥३६८॥
निवेश्य विष्टरे हैमे ध्वजपीठस्य सम्मुखम् ।
आचार्यो मूर्तिपैः सार्धमादाय गरुडध्वजम् ॥३६९॥
सह शङ्खनिनादाद्यैः प्रादक्षिण्येन योगतः ।
ध्वजपीठं समानीय स्तम्भं प्रक्षाळ्य सज्जलैः ॥३७०॥
विभवे सति वस्त्रेण संवेष्ट्य ध्वजदण्डकम् ।
त्रिवृत्कृतैस्तु कार्पाससूत्रैरतिदृढैः कृताम् ॥३७१॥
रज्जुमादाय तदनु सुदृढां देशिकोत्तमः ।
यष्ट्यग्रसंस्थिते यन्त्रे योजयित्वा तया ततः ॥३७२॥
ध्वजस्य शिखरं विप्राः! बन्धयेत्सुदृढं ततः ।

सर्वैः परिजनैः सार्धं कुम्भपार्श्वं समाश्रयेत् ॥३७३॥
तत्कुम्भं तु समुद्धृत्य विन्यसेच्छिष्यमूर्धनि ।
उपकुम्भाऽष्टकं चैव वाहयेद्ब्राह्मणैः सह ॥३७४॥
वर्धनीं च समादाय आचार्यः स्वकरेण तु ।
अच्छिन्नधारया युक्तं वाद्यघोषपुरस्सरम् ॥३७५॥
देवागारं परिभ्राम्य स्तम्भमूलं समाश्रयेत ।
पुण्याहं वाचयित्वा तु सम्प्रोक्ष्यास्त्रेण वै ध्वजम् ॥३७६॥
गारुडेनैव मन्त्रेण पटस्थं गरुडं यजेत् ।
अर्घ्यं पाद्यं तथाचामं गन्धं माल्यं च धूपकम् ॥३७७॥
अपूपान् पृथुकांश्चापि पानकं तर्पणं ततः ।
नालिकेरजलैर्युक्तमाचामं तदनन्तरम् ॥३७८॥
कर्पूरादिसमायुक्तं दत्वा ताम्बूलमुत्तमम् ।
तन्मुद्रां दर्शयित्वा तु ततः पुरुषसूक्ततः ॥३७९॥
महाकुम्भस्थतोयेन सम्प्रोक्ष्य गरुडं ततः ।
महाकुम्भस्थगरुडं पटस्थे तु निवेशयेत ॥३८०॥
उपकुम्भाष्टकेनैव अष्ट नागान् यथाक्रमम् ।
आयुधानां तथैवोक्तं करकास्त्रजलेन तु ॥३८१॥
एवं क्रमेण सम्प्रोक्ष्य ततो देशिकसत्तमः ।
मन्त्रन्यासादिकं कृत्वा पुष्पाञ्जलिपुरःसरम् ॥३८२॥
सन्निधिं सन्निरोधं च सांमुख्यं च समाचरेत् ।
ततस्त्वर्घ्यादिभिः पूज्य उपहारान् बहूनपि ॥३८३॥
मुद्गान्नादीन्निवेद्याथ ताम्बूलादीन् समर्पयेत् ।
स्तोत्रैः स्तुवीत गरुडं बद्धाञ्जलिपुटो गुरुः ॥३८४॥
वाहनाय महाविष्णोः तार्क्ष्यायामिततेजसे ।
गरुडाय नमस्तुभ्यं सर्वसर्पेन्द्रमृत्यवे ॥३८५

नमो नमस्ते पक्षीन्द्र ! स्वाध्यायवपुषे नमः ।
विहगेन्द्र ! नमस्तेस्तु समुत्पाटितकल्पक ! ॥३८६॥
आहृतामृतकुम्भाय जननीदास्यमोचिने ।
सुरासुरेन्द्रजयिने नागेन्द्राभरणाय ते ॥३८७॥
यदाधारमिदं सर्वं तदाधाराय ते नमः ।
पक्षौ यस्य बृहत्साम रथन्तरमपि द्वयम् ॥३८८॥
अक्षिणी चापि गायत्री त्रिवृत्साम शिरः स्मृतम् ।
स्तोम आत्मा नमस्तस्मै वामदेव्याङ्गसम्पदे ॥३८९॥
नमः प्राणादिवायूनामीशानाय गरुत्मते ।
दोषानपनयाखण्डान् गुणानावह सर्वतः ॥३९०॥
विघ्नानि जहि सर्वाणि आत्मसात्कुरु मामपि ।
स्तुत्वैवं श्रावयेत्तस्य बृहत्साम रथन्तरम् ॥३९१॥
तत्काले देशिकेन्द्रस्तु ध्यायमानः खगेश्वरम् ।
नैवेद्यं कवलीकृत्य मन्त्रयित्वा तु मन्त्रवित् ॥३९२॥
पौरुषैर्गारुडैर्मन्त्रैः वन्ध्यानामपि योषिताम् ।
क्षिपेदञ्जलिषु ध्यात्वा गरुडं चाच्युतं हरिम् ॥३९३॥
भक्षयित्वा स्त्रियः पिण्डान् जनयेयुः सुतान् बहून् ।
ततस्तु गरुडाग्रे तु ताम्बूलैर्गन्धमाल्यकैः ॥३९४॥
दैवज्ञं पूजयित्वा तु लब्ध्वा लग्नं शुभप्रदम् ।
सुमुहूर्ते सुलग्ने च आशीर्वादपुरस्सरम् ॥३९५॥
घण्टाशब्दमृदङ्गैश्च सर्ववाद्यरवैः सह ।
रज्जूनारोहयेद्धीरं सुपर्णोसीति मन्त्रतः ॥३९६॥
रज्जुं च बन्धयेत् स्तम्भे प्रादक्षिण्यक्रमेण तु ।
प्रासादाभिमुखं स्तम्भे स्थापयेद्गरुडध्वजम् ॥३९७॥
पूर्वाह्णे वाथ मध्याह्ने ध्वजस्यारोहणं महत् ।

यात्रामूर्तिं च तदनु यानमारोप्य देशिकः ॥३९८॥
ध्वजस्तम्भसमीपं तु नीत्वा चादर्शयेत् ध्वजम् ।
आह्वानार्थमशेषाणां भक्तानां पतगेश्वरम् ॥३९९॥
नियुज्य देवस्तदनु प्राप्नुयान्मण्टपावनिम् ।
प्रार्थयेत्सन्निधिं चाथ गरुडस्य ध्वजोदरे ॥४००॥
अस्माद्दिनात्समारभ्य यावत्तीर्थदिनान्तिमम् ।
सन्निधिं कुरु पक्षीन्द्र ! राज्ञो जनपदस्य च ॥४०१॥
ग्रामस्य यजमानस्य वैष्णवानां विशेषतः ।
तुष्ट्यै पुष्ट्यै चैव सर्वशत्रुजयाय च ॥४०२॥
अपमृत्युजयार्थाय वैनतेय ! प्रसीद ओम् ।
इति विज्ञाप्य पक्षीन्द्रं विकिरेत्कुसुमाञ्जलिम् ॥४०३॥
सन्निधौ देवदेवस्य गत्वा पुष्पाञ्जलिं क्षिपेत् ।
ज्ञानतोऽज्ञानतो वापि यथोक्तं न कृतं मया ॥४०४॥
तत्सर्वं पूर्णमेवास्तु सुतृप्तो भव सर्वदा ।
ओमच्युत ! जगन्नाथ ! मन्त्रमूर्ते ! जनार्दन ! ४०५॥
रक्ष मां पुण्डरीकाक्ष ! क्षमस्वाद्य प्रसीद ओम् ।
इति विज्ञाप्य देवेशं यात्रामूर्तिगतं विभुम् ॥४०६॥
अन्यत्र मण्टपे नीत्वा विशेषार्चनपूर्वकम् ।
प्रभूतान्नं निवेद्याथ सर्वं हवनपश्चिमम् ॥४०७॥
कृत्वा यथाक्रमेणैव प्रासादं तु प्रवेशयेत् ।
कल्पयेत् ध्वजपीठोर्ध्वे चतुःस्तम्भान्वितां प्रपाम् ॥४०८॥
यद्वा स्तम्भाष्टकापेतां षोडशस्तम्भसंयुताम् ।
चतुस्तोरणसंयुक्तां दर्भमालापरिष्कृताम् ॥४०९॥
भूषितां तु पताकाद्यैर्वाद्ये यवनिकान्विताम् ।
दीपान् प्रदीपयेत्तत्र अनिर्वाणान् समन्ततः ॥४१०॥

तद्वासरात्समारभ्य पुष्पयागदिनान्तिमम् ।
त्रिसन्ध्यमर्चनं कुर्यात्सविशेषं जपान्वितम् ॥४११॥
बलिकाले बलिं दद्यादस्यापि प्रतिवासरम् ।
एवं ध्वजाधिरोहान्तं दिवाकृत्यमुदीरितम् ॥४१२॥

इति श्रीपाञ्चरात्रे ईश्वरसंहितायां
महोत्सवध्वजारोहणान्तविधिर्नाम
दशमोऽध्यायः

---

## अथ एकादशोऽध्यायः ।

---

नारदः ।

निशामुखे प्रवृत्ते तु देशिको मूर्तिपैः सह ।
स्नानादिनित्यनियमान् कृत्वा चैव यथाविधि ॥१॥
देवस्य सन्निधिं गत्वा नित्यपूजां समाचरेत् ।
यात्रामूर्तिगतं देवं श्रीपुष्टिभ्यां समन्वितम् ॥२॥
आस्थानमण्टपं नीत्वा स्थापयेत्स्नानविष्टरे ।
ततस्तु वक्ष्यमाणं यत् स्नपनं त्वधमोत्तमम् ॥३॥
तेन संस्नापयेद्देवं यथाविभवविस्तरम् ।
अलङ्कारासनेऽभ्यर्च्य भोगैः परमपावनैः ॥४॥
प्रभूतमथ नैवेद्यं विनिवेद्य यथाक्रमम् ।
कृत्वा जपावसानं तु भेरीताडनमाचरेत् ॥५॥
देवस्य दक्षिणे पार्श्वे उपविश्यासने गुरुः ।
भेरीसंस्थापनार्थं तु देवेशस्याग्रतस्ततः ॥६॥
चरणंपवित्रमुच्चार्य महीं प्रक्षाल्य वारिणा ।

विष्णोरराटमन्त्रेण दर्भैस्सम्मार्ज्य देशिकः ॥७॥
गन्धद्वारेति मन्त्रेण गोमयेनानुलेपयेत्[1] ।
आपउन्दन्तुमन्त्रेण सुधाचूर्णैरलङ्कृतिः ॥८॥
देवस्यत्वेति मन्त्रेण विकिरेदक्षतान् क्षितौ ।
ग्रीष्मोहेमन्तमन्त्रेण धान्यपीठं प्रकल्पयेत् ॥९॥
शन्नोदेवीति मन्त्रेण शतपत्रं चतुर्दिशि ।
त्रातारमिति मन्त्रेण मध्ये पद्मं च संलिखेत् ॥१०॥
धननागेति मन्त्रेण ऊर्ध्वं दर्भैः परिस्तरेत् ।
मूर्धानमिति मन्त्रेण नमस्कुर्याद्ध्रुवं ततः ॥११॥
तत्र कोणचतुष्के तु न्यसेद्दीपचतुष्टयम् ।
वाचयेत् स्वस्ति पुण्याहं ततो देशिकसत्तमः ॥१२॥
तज्जलैः प्रोक्षयेद्भेरीं आपउन्दन्तुमन्त्रतः ।
अग्निरायुष्यमन्त्रेण प्रोक्षयेत्सर्ववाद्यकान् ॥१३॥
अर्यमायेति तद्भेरीं विन्यसेद्धान्यविष्टरे ।
तत्पूर्वे शङ्खनिकरं वह्नौ काहलसञ्चयम् ॥१४॥
याम्ये तु मर्दलं तन्त्रीं वंशयुक्तां तु यातुदिक् ।
वारुण्यां तु मृदङ्गं च डुड्डुकान् हस्तमर्दलान् ॥१५॥
वायव्ये झल्लरीं न्यस्य कांस्यतालसमन्वितम् ।
पटहं हस्तपटहं सोमे डुड्डुकसंयुतम् ॥१६॥
ऐशान्यां डुड्डुकां झल्लीं हस्तघण्टासमन्वितम् ।
तेषां बाह्ये तु विप्रेन्द्राः! दक्षिणे गणिकाजनान् ॥१७॥

---

१– धान्यपीठं प्रकल्पयेत् ॥७॥
शन्नोदेवीतिमन्त्रेण गोमयेनानुलेपयेत् ।
आप उन्दन्तु मन्त्रेण सुधाचूर्णैरलङ्कृतिः ॥
देवस्यत्वेति मन्त्रेण ऊर्ध्वं दर्भैः परिस्तरेत् । इति–(पा)

न्यसेन्मङ्गलगानार्थं तत्पार्श्वे मन्त्रगायकान्।
नर्तकानग्रतः स्थाप्य उत्तरे वन्दिवृन्दकान् ॥१८॥
स्वस्वस्थानेषु संस्थाप्य अन्यान्वै वाद्यकोविदान्।
एवं क्रमेण संस्थाप्य सम्भवानुगुणं द्विजाः! ॥१९॥
गरुडस्थानमासाद्य अर्घ्याद्यैर्हविरन्तिमैः।
आराध्य गरुडं पूर्वं भेरीपार्श्वं समाश्रयेत् ॥२०॥
वाससा वेष्टयेद्भेरीं यथावित्तानुसारतः।
शब्दविग्रहमाकाशं भेर्यां संस्कृत्य पूजयेत् ॥२१॥
भेरीमध्ये ततो विष्णुं पूजयेद्विष्णुमन्त्रतः।
ब्रह्माणं दक्षिणेभ्यर्च्य रुद्रमभ्यर्च्य वामके ॥२२॥
कोणं तद्दक्षिणे स्थाप्य वायुं तत्र सुपूजयेत्।
शंखेषु विष्णुमभ्यर्च्य काहलेषु सरस्वतीम् ॥२३॥
मर्दलेष्विन्दुमभ्यर्च्य तन्त्र्यां गन्धर्वमर्चयेत्।
मृदङ्गे रुद्रमभ्यर्च्य षण्मुखं डुड्डुकेषु च ॥२४॥
हस्तमर्दलवाद्येषु मेदिनीं च समर्चयेत्।
झल्लर्यां विष्णुमभ्यर्च्य ब्रह्माणं कांस्यतालके ॥ ५॥
पटहेषु श्रियं देवीं घण्टायां तु सरस्वतीम्।
अन्येषु सर्ववाद्येषु विष्णुमेव समर्चयेत् ॥२६॥
भेर्यादिसर्ववाद्यानि यजेदेवं गुरुः स्वयम्।
तत्काले वारवनिताः पुष्पाञ्जलिसमन्विताः ॥२७॥
भेर्यूर्ध्वे तानि पुष्पाणि विकिरेयुर्मुदान्विताः।
ततः पारशवं स्नातं दर्भपाणिमलङ्कृतम् ॥२८॥
उपवीतादिसंयुक्तं पञ्चसंस्कारशालिनम्।
भगवद्भक्तिसंयुक्तमग्रतः स्थाप्य वीक्षयेत् ॥२९॥
अस्त्रेण प्रोक्षयेत्पश्चादर्घ्यतोयेन तत्परम्।

मुहूर्ते शोभने प्राप्ते भेरीमेवं प्रपूजिताम् ॥३०॥
कोणेन ताडयेन्मूर्तित्रयं ध्यायन् गुरुः स्वयम् ।
तद्विष्णोरिति मन्त्रेण प्रथमं ताडनं भवेत् ॥३१॥
ब्रह्मजज्ञान मन्त्रेण द्वितीयं ताडनं भवेत् ।
कद्रुद्रायेति मन्त्रेण तृतीयं ताडनं भवेत् ॥३२॥
त्रिस्थानादिषु देवानां त्रिधा वै तेन ताडयेत् ।
ततः पाराशवस्तां तु वहन् भेरीमलङ्कृताम् ॥३३॥
प्रथमं वामहस्तेन त्रिधा सन्ताडनं चरेत् ।
दक्षिणेन ततः सम्यक्तथा सन्ताडयेत्त्रिधा ॥३४॥
प्रथमं शङ्खनादं तु द्वितीयं काहलस्वनम् ।
तृतीयं ताडनं प्रोक्तं क्रमेणैवं हि कारयेत् ॥३५॥
देवताह्वानवेलायां सर्ववाद्यानि घोषयेत् ।
देवतावाहिनीं गाथां संस्कृतां प्राकृतां तु वा ॥३६॥
द्रामिडीं वा यथेच्छातस्तदा संश्रावयेद्विभुम् ।
तत्काले देवतानृत्तं तत्तद्गीतादिसंयुतम् ॥३७॥
दर्शयेद्देवदेवस्य देवतानां सुतृप्तये ।
ततस्तु चोत्सवं विम्बं देवीभ्यां सह देशिकः ॥३८॥
यानमारोप्य सुदृढमलङ्कृत्य विशेषतः ।
बलिविम्बपुरस्कं तु यात्रामूर्तिमनन्तरम् ॥३९॥
भ्रामयेत्क्रमयोगेन वाद्यघोषपुरस्सरम् ।
सर्वैः परिजनैः सार्धं बलिदानपुरस्सरम् ॥४०॥
पायसं द्रोणमानं तु समादायाथ पात्रतः ।
तथार्घ्यगन्धमाल्यानि धूपं ताम्बूलमेव च ॥४१॥
प्रासादद्वारमारभ्य बहिर्द्वारावसानकम् ।
आवृतिष्वपि सर्वासु वीथ्यावरणपश्चिमम् ॥४२॥

बलिं प्रदाय विधिना गीतनृत्तादिसंयुतम् ।
ततः प्रविश्य ग्रामं तु पूर्वस्यां दिशि संस्थितः ॥४३॥
देवताऽऽवाहनं कुर्यात्प्राङ्मुखो देशिकः स्वयम् ।
तत्पुत्रस्तस्य शिष्यो वा स्वरेणोच्चतरेण तु ॥४४
आगच्छतामरगणाः प्रागाशां येऽधिशेरते ।
विरूपाश्च सुरूपाश्च सपर्यामुद्यतामिमाम् ॥४५॥
गृहीत्वा पान्तु नस्तृप्ताः कुमुदस्यानुयायिनः ।
महन्त्विममुपायान्तु प्रीतास्तेभ्यो नमोऽस्तु वः ॥४६॥
अनेन मन्त्रेणावाह्य कुमुदं सगणं ततः ।
अर्घ्यलेपनमाल्यानि धूपं तोयं यथाक्रमम् ॥४७॥
पायसान्नं पुनस्तोयं ताम्बूलं च प्रदापयेत् ।
पश्चात्सन्तोपयेद्रम्यैर्महद्भिः शङ्खजै रवैः ॥४८॥
तदीयतालसङ्गीतनृत्तैश्चापि ततः परम् ।
आगच्छतामरगणाः येऽग्न्याशामधिशेरते ॥४९॥
भीमा भीममुखा रौद्राः सपर्यामुद्यतामिमाम् ।
गृहीत्वा पान्तु नस्तृप्ताः कुमुदाक्षानुयायिनः ॥५०॥
महन्त्विममुपायान्तु प्रीतास्तेभ्यो नमोस्तु वः ।
अनेन कुमुदाक्षं तु समावाह्य गणाधिपम् ॥५१॥
प्राग्वत्सन्तोपयित्वा तु ततः सम्प्राप्य याम्यदिक् ।
आगच्छत पितृगणाः याम्याशां येधिशेरते ॥५२॥
दारुणा दारुणाचाराः सपर्यामुद्यतामिमाम् ।
गृहीत्वा पान्तु नस्तृप्ताः पुण्डरीकानुयायिनः ॥५३॥
महन्त्विममुपायान्तु प्रीतास्तेभ्यो नमोस्तु वः ।
अनेन पुण्डरीकाख्यं समावाह्य गणेश्वरम् ॥५४॥
क्रमेण पूजयित्वा तु गत्वा वै यातुधानदिक् ।

आगच्छत यातुगणाः यात्वाशां येधिशेरते ॥५५॥
क्रव्याशिनः क्रूरधियः सपर्यामुद्यतामिमाम् ।
गृहीत्वा पान्तु नस्तृप्ताः वामनस्यानुयायिनः ॥५६॥
महन्त्विममुपायान्तु प्रीतास्तेभ्यो नमोस्तु वः ।
इत्यावाह्य गणेशं तु वामनं पूजयेत्क्रमात् ॥५७॥
वारुणाशां ततो गत्वा शङ्कुकर्णं गणेश्वरम् ।
आगच्छताहिप्रथमाः प्रतीचीं येधिशेरते ॥५८॥
महाविषा दन्दशूकाः सपर्यामुद्यतामिमाम् ।
गृहीत्वा पान्तु नस्तृप्ताः शङ्कुकर्णानुयायिनः ॥५९॥
महन्त्विममुपायान्तु प्रीतास्तेभ्यो नमोस्तु वः ।
इत्यावाह्य यजेत्प्राग्वत्पश्चात्सम्प्राप्य वायुदिक् ॥६०॥
आयान्तु गन्धर्वगणाः वाय्वाशां येधिशेरते ।
सुदर्शना भीमवेगाः सपर्यामुद्यतामिमाम् ॥६१॥
गृहीत्वा पान्तु नस्तृप्ताः सर्वनेत्रानुयायिनः ।
महन्त्विममुपायान्तु प्रीतास्तेभ्यो नमोस्तु वः ॥६२॥
अनेनावाह्य सगणं सर्वनेत्रं तु तोपयेत् ।
ततः सोमदिशं गत्वा सुमुखं तु गणाधिपम् ॥६३॥
आगच्छत यक्षगणा उदीचीं येधिशेरते ।
विरूपा दण्डहस्ताश्च सपर्यामुद्यतामिमाम् ॥६४॥
गृहीत्वा पान्तु नस्तृप्ताः सुमुखस्यानुयायिनः ।
महन्त्विममुपायान्तु प्रीतास्तेभ्यो नमोस्तु वः ॥६५॥
इति मन्त्रेण चावाह्य तोपयेत्पूर्ववर्त्मना ।
ततस्त्वीशदिशं गत्वा गणेशं सुप्रतिष्ठितम् ॥६६॥
आयान्तु पिशाचगणाः ईशाशां येधिशेरते ।
सशूलायुधहस्ताश्च सपर्यामुद्यतामिमाम् ॥६७॥

गृहीत्वा पान्तु नस्तृप्ताः सुप्रतिष्ठानुयायिनः ।
महन्त्विममुपायान्तु प्रीतास्तेभ्यो नमोस्तु वः ॥६८॥
मन्त्रेणावाह्य सम्पूज्य गत्वा वै ग्राममध्यतः ।
तत्र चावाहयेदूर्ध्वे प्रश्निगर्भं गणेश्वरम् ॥६९॥
आगच्छत सिद्धगणाः गगनं येधिशेरते ।
शुचिमतयः शुचयः सपर्यामुद्यतामिमाम् ॥७०॥
गृहीत्वा पान्तु नस्तृप्ताः प्रश्निगर्भानुयायिनः ।
महन्त्विममुपायान्तु प्रीतास्तेभ्यो नमोस्तु वः ॥७१॥
आवाह्य तोपयित्वा तु अधस्तान्मानवं ततः ।
आगच्छताधरगणाः पृथिवीं येधिशेरते ॥७२॥
बहुरूपा बहुज्ञानाः सपर्यामुद्यतामिमाम् ।
गृहीत्वा पान्तु नस्तृप्ताः मानवस्यानुयायिनः ॥७३॥
महन्त्विममुपायान्तु प्रीतास्तेभ्यो नमोस्तु वः ।
आवाह्य तोपयेत्प्राग्वत्क्रमात्कृत्वावसानकम् ॥७४॥
तृप्तये सर्वभूतानां बलिशेषं ततः क्षिपेत् ।
बलिदाने तु पूर्वादि वैवस्वतदिगन्तिमम् ॥७५॥
आचार्यः प्राङ्मुखः स्थित्वा कुर्यादावाहनादिकम् ।
यात्त्वादित्रितये कुर्यात् पूर्वोदितमुदङ्मुखः ॥७६॥
सोमेशदिग्द्वये ग्राममध्येपि प्राङ्मुखो भवेत् ।
समतालस्तथा बद्धतालो वै शृङ्गिणी तथा ॥७७
मल्लतालो मङ्गलश्च जयतालश्च भद्रकः ।
ढक्करीसंज्ञितस्तालो ब्रह्मतालस्तथैव च ॥७८॥
अनन्तताल इत्येते दश तालाः प्रकीर्तिताः ।
कुमुदादिगणेशानां दशानां क्रमशो द्विजाः ! ॥७९॥
षड्जर्षभौ च गान्धारो मध्यमः पञ्चमस्तथा ।

धैवतश्चैव निषादो धैवतो मध्यमस्तथा ॥८०॥
पञ्चमश्च क्रमेणैव कथिताः स्युर्दश स्वराः ।
गान्धारराग: कौलाख्यः कौशिको नटभाषिकः ॥८१॥
श्रीः कामदश्च तत्केशी दक्षरागस्तथैव च ।
चालापाण्यभिधो रागो मेघरागश्च पञ्चमः ॥८२॥
इत्येते कुमुदादीनां दशरागाः प्रकीर्तिताः ।
विलासं सर्वतोभद्रं खेटकं चक्रमण्डलम् ॥८३॥
कान्तारकुट्टिमं पृष्ठकुट्टिमं कटिबन्धनम् ।
वामजानूर्ध्वनृत्तं तु आदिमं च द्वयं पुनः ॥८४॥
एते नृत्तविशेषाश्च कुमुदादेः क्रमात् स्मृताः ।
एते ह्यावृतिदेवानां क्रमात्तालादयः स्मृताः ॥८५॥
अन्येषां सर्वदेवानां तालो भद्रः प्रशस्यते ।
भवेद्गरुडतालस्तु पक्षीशस्य तु मध्यमः ॥८६॥
स्वरो रागस्तु गौडः स्यान्नृत्तं वै विष्णुकान्तकम् ।
विष्वक्सेनजयतालं स्यान्नृत्तं स्वस्तिकमुच्यते ॥८७॥
ऋषभस्तु स्वरः प्रोक्तो वराटीराग एव च ।
भेरीताडनपूर्वं तु देवतावाहनं चरेत् ॥८८॥
घोषयेद्गारुडं ताळमन्तराळे तु वै दिशाम् ।
तत्काले देशिकेन्द्रेण स्वयं संस्कृतगाथया ॥८९॥
अन्ये चतुर्मुखमुखा आहूतव्या मरुद्गणाः ।
देवस्योत्सवसेवार्थं तथान्ये भगवद्गणाः ॥९०॥
तथान्ये भगवद्भक्ताः जनास्तत्पादसेविनः ।
यद्वा गुरोरनुमतैर्भगवद्भक्तिबृंहितैः ॥९१॥
आह्वातव्यास्तु तैर्विप्रैर्दिव्यया गाथया द्विजाः ! ।
एवं ग्रामं परिक्रम्य प्रासादं सम्प्रविश्य तु ॥९२॥

गरुडस्थानमासाद्य तोषयित्वा खगध्वजम् ।
ताळादिकैस्ततस्त्वेनं विष्वक्सेनं तु तोषयेत् ॥९३॥
ततस्तु चौत्सवं बिम्बं यागशालां प्रवेशयेत् ।
वक्ष्यमाणप्रकारेण सर्वलक्षणसंयुताम् ॥९४॥
प्रथमावरणे वापि द्वितीयावरणेपि वा ।
तृतीयावरणादौ वा यथाभिमतदिग्गताम् ॥९५॥
तथा प्रागाननां यद्वा यथाभिमतदिङ्मुखाम् ।
एकद्वारां चतुर्द्वारां यद्वा द्वारद्वयान्विताम् ॥९६॥
भित्तियुक्तामयुक्तां वा कोणभित्तिसमन्विताम् ।
क्षिप्रकर्मप्रसिद्ध्यर्थं केवलं वा प्रपाकृतिम् ॥९७॥
धूमनिर्गमनोपेतां मध्ये वेदिसमन्विताम् ।
तदूर्ध्वे होमकुण्डं तु सचतुर्मेखलं भवेत् ॥९८॥
मेखलात्रययुक्तं वा द्विमेखलमथापि वा ।
तथैकमेखलं वापि चतुरश्रं सलक्षणम् ॥९९॥
तत्पूर्वे मण्डलोपेतां वह्नौ दीपघटान्विताम् ।
पश्चिमे दीप (बिम्ब) संयुक्तामुत्तरे चाङ्कुरैर्युताम् ॥१००॥
ईशान्ये कुम्भसंयुक्तां सर्वोपकरणैर्युताम् ।
अलङ्कृतां वितानाद्यैस्तोरणध्वजशोभिताम् ॥१०१॥
एवंविधां यागशालां प्रविश्य गुरुसत्तमः ।
प्राग्दिक् प्रत्यङ्मुखा योज्या ऋङ्मयाः स्वासनेषु च ॥१०२॥
दक्षिणे च उदग्वक्त्रान्यजुर्वेदांश्च योजयेत् ।
प्राङ्मुखान्पश्चिमे भागे सामगान्विनिवेशयेत् ॥१०३॥
सह चैकायनैर्विप्रैर्मूर्तिसंज्ञोपलक्षितैः ।
दिश्युत्तरस्यां च ततो नित्यकर्मपरायणान् ॥१०४॥
निवेश्याथर्ववेदज्ञान् सर्वान् द्विद्विकसंख्यया ।

प्रवर्तिते वेदघोषे वाद्यघोषे च बाह्यतः ॥१०५॥
प्रविश्य कलशस्थानं समीपे तु वरासने ।
प्राङ्मुखः संस्मरेन्मन्त्रं पूर्ववद्व्याप्तिभाविते ॥१०६॥
उपविश्य यथान्यायमन्तर्यागान्तमाचरेत् ।
करादिशुद्धिपूर्वं तु पश्चादर्घ्यादिकल्पनम् ॥१०७॥
प्राग्यत्कृत्वा ततोऽभ्यर्च्य मन्त्रसङ्घं तु देहगम् ।
पुण्याहं वाचयित्वा तु प्रोक्षयेत्सर्वसाधनम् ॥१०८॥
द्वौ द्वौ तु पूर्वं कलशौ सौवर्णौ राजतौ तु वा ।
ताम्रजौ मृण्मयौ वाथ सापिधानौ सपल्लवौ ॥१०९॥
फलरत्नादिकैर्युक्तौ सूत्रेण परिवेष्टितौ ।
शालिपीठोपरि स्थाप्य प्रतिद्वारे तु पार्श्वयोः ॥११०॥
द्वारयागं ततः कुर्यात्पूर्वाद्युत्तरपश्चिमम् ।
अर्घ्यालेपनमाल्यैश्च धूपैर्गुग्गुलुमिश्रितैः ॥१११॥
अथादाय दृढं शुभ्रमेकरूपं च निर्व्रणम् ।
कुम्भं च मृण्मयं रम्यं सौवर्णं वाथ राजतम् ॥११२॥
रत्नहाटकस्रग्गन्धफलसर्वौषधीयुतम् ।
शुभपादपशाखाढ्यं पट्टस्रग्गन्धभूषितम् ॥११३॥
गालितोदकसम्पूर्णं वारिधारान्वितं नवम् ।
चन्दनाद्यनुलिप्तं च परितश्चाक्षतार्चितम् ॥११४॥
वेष्टितं परितः सूत्रैर्विकीर्योपरि तं न्यसेत् ।
तद्देवताशरीरं तु पश्येदमलवर्चसम् ॥११५॥
सास्त्रेण चक्रमन्त्रेण मन्त्रयेदथ वर्धनीम् ।
पूर्वोक्तद्रव्यसंयुक्तां परितः सूत्रवेष्टिताम् ॥११६॥
आवाह्य मन्त्रनाथस्य दक्षिणे कलशोत्तरे ।
विन्यस्य परितस्तत्र स्थापयेत्कलशाष्टकम् ॥११७॥

सपल्लवं सापिधानं सूत्रेण परिवेष्टितम् ।
कुम्भमध्ये विभोः पश्चादासनं परिकल्प्य च ॥११८॥
तन्मध्ये पुण्डरीकाक्षं समावाह्य विधानतः ।
सान्निधिं सान्निरोधादि भोगयागावसानकम् ॥११९॥
पूर्ववत्सकलं कृत्वा तस्य दक्षिणदिग्गतम् ।
अस्त्रविग्रहरूपं च ध्यात्वाभ्यर्च्य यथाविधि ॥१२०॥
ध्वंसयन्तं च विघ्नानां जालं कर्मावसानकम् ।
अष्टासु तत्र कुम्भेषु परितः स्थापितेषु च ॥१२१॥
वासुदेवादयः पूज्याः प्रभवाप्यययोगतः ।
इदमभ्यर्थयेद्देवं सास्त्रं बद्धांजलिः स्थितः ॥१२२॥
यागालयं हि विश्वेश गृहाण रचितं मया ।
आसामर्ति भज विभो क्रियाज्ञानां च सन्निधिम् ॥१२३॥
ततोऽस्त्रोदकधारां चाप्यच्छिन्नां भित्तिकां नयेत् ।
प्रदक्षिणेन प्राग्भावात्तत्पादान्तं च तत् स्मरेत् ॥१२४॥
अथवेशानदिग्भागात्तत्पादान्तं द्विजोत्तमाः ! ।
पृष्ठतः कलशं भ्राम्य तुल्यकालं तु वा पृथक् ॥१२५॥
कलशं वर्धनीयुक्तं विन्यस्य विकिरोर्ध्वगंमं ।
अर्घ्यदानं तयोः कृत्वा पुष्पाद्यैः पूरयेत्पुनः ॥१२६॥
अस्त्रेण वस्त्रयुग्मं तु अहतं चाभिमन्त्र्य वै ।
धूपाधिवासितं कृत्वा तावुभौ परिवेष्ट्य च ॥१२७॥
अथ वा भद्रपीठं तु विन्यसेद्विकिरोर्ध्वगम् ।
सास्त्रं हि मन्त्रकलशं तत्राधारगतं न्यसेत् ॥१२८॥
चतुस्त्र्यैकभारैर्वा शालिभिर्विष्टरे कृते ।
तावन्मानांस्तदर्धान्वा तदूर्ध्वे तण्डुलान्न्यसेत् ॥१२९॥
तत्पादांस्तत्समान्वापि तदूर्ध्वे विन्यसेत्तिलान् ।

तदूर्ध्वे चाहतं वस्त्रयुग्ममास्तीर्य वै शुभम् ॥१३०॥
कलशं वर्धनीयुक्तं तदूर्ध्वे वापि विन्यसेत् ।
प्राग्वत्साखं तु देवेशमासनादिक्रमाद्यजेत् ॥१३१॥
व्यापारमाचरेद्दिव्यं कुम्भके च स्मरन्विभुम् ।
नानिशं युज्यते यस्मात्तस्माद्देया प्रतिक्रिया ॥१३२॥
विभाव्य मन्त्रिणा कौम्भी अस्त्रं रक्षार्थमेव हि ।
ततो मण्डलवेदिं तु समासाद्य च देशिकः ॥१३३॥
उपलिप्याथ भूभागं साम्भसा गोमयेन तु ।
तत्र मण्डलमालेख्यं सूत्रयित्वा यथाविधि ॥१३४॥
तद्विधानं विशेषेण शृणुध्वं मुनिपुङ्गवाः ! ।
संसाध्य यष्टियोगेन सूत्रात्पूर्वापरे पुरा ॥१३५॥
तद्दिग्द्वयान्तरे दद्यात्पार्श्वे सूत्रचतुष्टयम् ।
समांशेन द्विधा कृत्वा स्फुटं मध्यात्तदन्त्य च ॥१३६॥
साधितेनार्धमानेन प्राक्प्रत्यक्स्थेन तन्तुना ।
दक्षिणोत्तरभागाभ्यां समुत्पाद्य चतुष्पथौ ॥१३७॥
सूत्रं पूर्वापरसमं कृत्वा तदुपरि क्षिपेत् ।
पुनरर्धसमं दिक्षु दत्वा कोणचतुष्टयम् ॥१३८॥
चतुष्पथचतुष्कोण नयेद्व्यक्ति प्रसार्य वै ।
समं सूत्रचतुष्कं च चतुरश्राश्रसिद्धये ॥१३९॥
तद्विभज्याष्टदशभिश्चतुर्दिक्षु पदैः समैः ।
क्षिपेत्सूत्रगणं तत्र घटिकारेणुरञ्जितम् ॥१४०॥
मध्ये पद्मावनीं कुर्याद्भागपङ्क्तित्रये क्रमात् ।
तद्बहिः पदपङ्क्त्या तु पीठमष्टदिगन्वितम् ॥१४१॥
तस्य भागचतुष्काढ्यं दिक्चतुष्कं प्रकल्प्य च ।
विदिक्चतुष्कं त्रिपदं पङ्क्त्या पीठप्रदक्षिणम् ॥१४२॥

प्रदक्षिणक्षितेर्बाह्याच्चतुष्कं दिक्चतुष्टयात् ।
चतुर्णां तु चतुर्णां तु बाह्याद्बाह्यं द्वयं द्वयम् ॥१४३॥
शोधयित्वा तु तद्बाह्याच्चतुष्कं द्वारसिद्धये ।
चतुष्टयं क्रमेणैव भूयो दिक्षु पदं पदम् ॥१४४॥
सबाह्याभ्यन्तरगतं शोधनीयं प्रयत्नतः ।
पुनः सर्वपदाभ्यां तु षट्कं षट्कं तु चान्तरात् ॥१४५॥
सम्मार्ज्य पूर्णशोभार्थं तत्र रक्तोत्पलाष्टकम् ।
यथा दिक्षु स्थितं कुर्यात्पूजनाय दिवौकसाम् ॥१४६॥
बाह्यस्थपदपङ्क्तात्तु त्रीणि त्रीणि तु लोपयेत् ।
त्रयाणामन्तरस्थं यत्पदमेकात्मतां नयेत् ॥१४७॥
उपशोभं तु तं विद्धि कुर्यान्नीलाब्जभूषितम् ।
पञ्चकं पञ्चकं कोणाद्वीथौ नीत्वा लयं पुरा ॥१४८॥
शेषैः कोणं तु निर्वर्त्य सान्तरं च ततो बहिः ।
दद्यात्सूत्रत्रयं चैव मध्येऽथ कमलं लिखेत् ॥१४९॥
सचक्रमष्टपत्रं तु तस्य लक्षणमुच्यते ।
षट्त्रिंशत्कोष्ठमध्ये तु शङ्कुं संस्थाप्य यत्नतः ॥१५०॥
सूत्रभ्रमैस्तु सुसमं कुर्यान्मण्डलपञ्चकम् ।
तेष्वाद्यं मण्डलं मध्ये भवेद्वै कर्णिकास्पदम् ॥१५१॥
द्वितीयं मण्डलं त्रेधा भङ्क्त्वा सूत्रभ्रमैः पुनः ।
तेष्वाद्यं केसरस्थानं द्वितीयं दळमंडलम् ॥१५२॥
तृतीयं तत्पुनस्त्रेधा भक्तं नाभित्रयं चरेत् ।
नाभेर्बहिर्मण्डलयोः द्वादशाराणि कल्पयेत् ॥१५३॥
तद्बहिर्मण्डलं त्वेकं नेमिस्थानं प्रकल्पयेत् ।
कृत्वैवं वर्णकैः पूतैः पूरणीयं महोज्वलैः ॥१५४॥
उच्चाग्रवितता पीतां सबीजां विद्धि कर्णिकाम् ।

रेखान्वितानि पत्राणि सर्वाणि सुसितानि च ॥१५५॥
केसरत्रितयं कुर्यात्पत्रे पत्रेऽरुणप्रभम् ।
दळान्तराळमसितं श्वेतं पीतं च पाटलम् ॥१५६॥
नाभित्रयं क्रमेण स्याद्रक्तवर्णान्यराणि तु ।
नेमेस्तु पूर्वभागः स्यात्कृष्णवर्णः सितोऽन्तिमः ॥१५७॥
सितानि पीठकोणानि रक्तं तद्दिक्चतुष्टयम् ।
राजोपलप्रभा वीथी पत्रमाल्याद्यलंकृता ॥१५८॥
पश्चिमांशं विना सर्वद्वाराण्यम्बुजपत्रवत् ।
कृष्णानि सर्वशोभानि द्वारोद्देशस्थितानि च ॥१५९॥
तदर्धाकृतितुल्यानि उपशोभानि गर्भवत् ।
कोणानि केसराभानि सितशङ्खान्वितानि च ॥१६०॥
शोणहेमादिवर्णं च क्रमाद्रेखागणं बहिः ।
कृत्वैवमनुसन्धाय सर्वात्मत्वेन देहवत् ॥१६१॥
रजांसि विद्धि भूतानि सितपीतादिकानि च ।
तन्मात्राण्युपशोभानि शोभानि करणानि च ॥१६२॥
एवं सर्वाणि कोणानि सद्वाराणींद्रियाणि च ।
बहिरावरणं यद्वै सत्वाद्यं त्रितयं हि यत् ॥१६३॥
मनः सुवितता वीथी गर्वः पीठमुदाहृतम् ।
धीः पद्मं तदधिष्ठाता बीजात्मा चिन्मयः पुमान् ॥१६४॥
अमूर्त ईश्वरश्चात्र तिष्ठत्यानन्दलक्षणः ।
यस्य संदर्शनादेव शश्वद्भावः प्रसीदति ॥१६५॥
ससञ्ज्ञानामसञ्ज्ञानां वपुष्पाते कृते सति ।
प्रायशो मुक्तिभाजां च इह जन्मैकशेषिणाम् ॥१६६॥
देव आस्तेऽञ्जतां हित्वा बहिरन्तश्च कर्मिणाम् ।
अन्यथा दृष्टमात्राद्वै कथमाह्लादमेति वै ॥१६७॥

अन्तः संवेदनसमसत्तित्वप्रतिपादकम् ।
यद्यत्स्वलक्षणं तत्वं तत्तत्सर्वत्र सिद्धिगम् ॥१६८॥
वस्तुत्वेन गृहीत्वैवं मण्डलं पूर्वनिर्मितम् ।
नाम्नाब्जनाभभुवनं सर्वदुःखक्षयंकरम् ॥१६९॥
ततस्तस्मिन् विभोः प्राग्वदासनं परिकल्प्य च ।
तन्मध्ये देवदेवेशं समावाह्य यथाविधि ॥१७०॥
सन्निधिं सन्निरोधादि भोगयागावसानकम् ।
सर्वं च पूर्ववत्कृत्वा आसनाद्यैः पुरोदितैः ॥१७१॥
पूजयेज्जपयज्ञान्तं देवेशं मण्डले गुरुः ।
मण्डले कुम्भयागे च प्रोक्षणे स्नानमाचरेत् ॥१७२॥
ततस्तु मूर्तिपैः सार्धं गत्वा वै बिम्बसन्निधिम् ।
तत्र सम्पूजयेद्देवं महता विभवेन तु ॥१७३॥
ततः कुण्डसमीपं तु गत्वा देशिकसत्तमः ।
कुण्डं तत्रानलं चापि संस्कृत्य विधिवत्ततः ॥१७४॥
अग्नौ सन्तर्पणं कुर्याद्यथोक्तविधिना विभोः ।
समिद्भिश्चैव नित्याभिः काम्याभिश्च यथाक्रमम् ॥१७५॥
पूर्णाहुत्यादिकं सर्वं प्राग्वदेव समाचरेत् ।
नोत्सृजेत्परिधीन् दर्भान् देवान्नोद्वासयेत्ततः ॥१७६॥
प्रत्यहं धारयेदग्निं यावत्तीर्थदिनान्तिमम् ।
अहोरात्रं प्रतिदिनं जुहुयादुक्तवर्त्मना ॥१७७॥
ततो बिम्बान्तिकं गत्वा कृत्वा होमनिवेदनम् ।
सर्वं तु सम्प्रदानान्तं क्रमात्कृत्वा ततः परम् ॥१७८॥
विभवे सति वै कुर्याद्भूयः सम्पूजनं विभोः ।
ततो द्वारबलिं दद्याच्चतुर्दिक्षु यथाविधि ॥१७९॥
ततश्च यागगेहात्तु देवमन्तः प्रवेशयेत् ।

तत्र सम्पूज्य देवेशं रात्रिशेषं समापयेत् ॥१८०॥
अङ्कुरारोपणदिनात्पुष्पयागदिनान्तिमम् ।
व्रतं कुर्याद्देशिकेन्द्रो दिनद्वादशके क्रमात् ॥१८१॥
स्नानार्चनादिकं कृत्वा पीत्वा तच्चरणोदकम् ।
कुशोदकसमायुक्तं जपेदष्टाक्षरं मनुम् ॥१८२॥
नैवेद्यप्राशनं पूर्वं कुर्यान्नक्ताशनं द्विजाः ! ।
जपेत् द्वादशनामानि क्रमाद्वाच्यमनुस्मरन् ॥१८३॥
द्वितीये दिवसे प्राप्ते देशिको मन्त्रवित्तमः ।
स्नानादिनित्यनियमान् निर्वर्त्य सह मूर्तिपैः ॥१८४॥
नित्यार्चनं विभोः कृत्वा विशेषेण यजेत्ततः ।
प्रविश्य यागसदनं पूर्वोक्तविधिना गुरुः ॥१८५॥
कृत्वा द्वारार्चनान्तं तु गत्वा कुम्भस्य सान्निधिम् ।
कुम्भे च मण्डले चैव यजेद्देवं यथाविधि ॥१८६॥
कुम्भे च मण्डले चैव पूर्वं यत्रार्चनं कृतम् ।
अन्येद्युरपि तत्रैव पूजनं तु समाचरेत् ॥१८७॥
न पर्युषितदोषोस्ति तयोर्यस्मात् मुनीश्वराः ! ।
स्थले भस्मनिभे पूर्वे पूजनं निष्फलं भवेत् ॥१८८॥
योजयित्वा तु कुम्भस्थे वर्तयेन्मण्डलं ततः ।
सिताद्यैः पावनै रागैस्ततः कुम्भे समर्चयेत् ॥१८९॥
यथावद्देवदेवेशं पूजयेन्मण्डले ततः ।
एवं कुम्भेपि दोषाणां सम्भवे मुनिपुङ्गवाः ! ॥१९०॥
कुम्भं संशोध्य भूयोपि सम्पूज्य विमलोदकैः ।
तत्र स्थितं देवदेवं मण्डले योजयेद्गुरुः ॥१९१॥
पूर्ववत्समलंकृत्य तत्र सम्पूजयेद्विभुम् ।
अथ देवगृहं गत्वा पुण्डरीकाक्षमच्युतम् ॥१९२॥

अष्टाङ्गेन नमस्कृत्य पूजयेत्पुरुषोत्तमम् ।
अर्घ्यालभनमाल्यैश्च धूपैरङ्गादिसंयुतम् ॥१९३॥
तत्सर्वं योग्यमाहर्तुं पूजान्तरनिवेदितम् ।
पुष्पपूर्वं समादाय शिरसा चाभिनंद्य तत् ॥१९४॥
समर्प्य विष्वक्सेनस्य स्वमन्त्राभिमन्त्रितैः ।
सपीठं भगवद्बिम्बं निर्मलीकृत्य वारिभिः ॥१९५॥
प्रासादं शोधयित्वा तु देवदेवं समर्चयेत् ।
स्नानैस्तु क्षीरपूर्वैर्वा धात्रीफलपुरस्सरैः ॥१९६॥
यथाक्रमोपदिष्टैस्तु चान्यभोगैरकृत्रिमैः ।
प्रदक्षिणप्रणामान्तं विशेषोत्सवमाचरेत् ॥१९७॥
ततो यागगृहं गत्वा वह्नौ सन्तर्पयेद्विभुम् ।
पूर्वोक्तविधिना पश्चात्संस्कृतेनाथ वह्निना ॥१९८॥
चरुं संश्रापयेच्चुल्यां हृदा क्षीराज्यतण्डुलैः ।
समुद्धृत्याज्यपूतं तु विनिवेद्य यथाक्रमम् ॥१९९॥
कलशस्थलविम्बानामेकांशं जुहुयात्ततः ।
यद्वा यागसमारंभात्पूर्वं संसाध्य वै चरुम् ॥२००॥
कलशस्थलविम्बानां क्रमात् कृत्वा तु पूजनम् ।
सर्वं द्विजप्रदानान्तं वह्नौ सन्तर्पयेत्ततः ॥२०१॥
दत्वा पूर्णाहुतिं पश्चात्कुर्याद्द्वारबलिं तथा ।
गत्वा बिम्बसमीपं तु कृत्वा होमनिवेदनम् ॥२०२॥
बलिबिम्बमथादाय यानमारोप्य वै ततः ।
अलंकुर्याद्विशेषेण वस्त्राभरणमाल्यकैः ॥२०३॥
वहेयुर्ब्राह्मणा यानं ध्यायन्तो विहगेश्वरम् ।
प्रथमावृतिमारभ्य रथ्यावरणपश्चिमम् ॥२०४॥
प्रदक्षिणक्रमेणैव बलिदानपुरस्सरम् ।

भ्रामयित्वा तु देवेशं ततो ग्रामेऽपि पूर्ववत् ॥२०५॥
ग्रामस्यैन्द्रादियोगेन दिशासु विदिशासु च ।
मध्ये च कुमुदादीनां सगणानां क्रमेण तु ॥२०६॥
पीठिकासु बलिं दद्यान्निर्मितासु पुरैव तु ।
भूतले गोमयाद्येन लेपिते वा यथारुचि ॥२०७॥
दशानां कुमुदादीनां गणेशानां द्विजोत्तमाः ! ।
प्रणवाद्यैर्नमोन्तैस्तु स्वैः स्वैर्नामभिरेव च ॥२०८॥
अर्घ्यं गन्धं तथा माल्यं धूपं गन्धाम्बुपूर्वकम् ।
बलिं भूयो जलं चापि ताम्बूलं क्रमशो ददेत् ॥२०९॥
नृत्तगीतादिकं सर्वं पूर्ववत्परिकल्पयेत् ।
एवं ग्रामबलिं कृत्वा बलिबिम्बाग्रतो गुरुः ॥२१०॥
अनुक्तानां च सर्वेषां ग्राममध्ये मुनीश्वराः ! ।
नमः पारिषदेभ्यश्चेत्युक्त्वा शिष्टबलिं क्षिपेत् ॥२११॥
ततस्तु बलिबिम्बं तु प्रवेश्यान्तर्मुनीश्वराः ! ।
अभ्यर्च्य श्रमशान्त्यर्थं स्वस्थाने सन्निवेशयेत् ॥२१२॥
एवं कालद्वये कुर्याद्बलिं तीर्थदिनान्तिमम् ।
आरम्भदिवसे रात्रौ समाप्तिदिवसेऽहनि ॥२१३॥
बलिमेकं क्षिपेन्मध्यदिवसेषु बलिद्वयम् ।
एवं दिवा रजन्यां च नित्यपूजापुरस्सरम् ॥२१४॥
विशेषयजनं कुर्याद्बल्यन्तं देशिकोत्तमः ।
वाहनारोहणं रात्रौ दिवसे वा यथारुचि ॥२१५॥
बल्यन्ते देशिकः कुर्यात्तद्विधानमिहोच्यते ।
यात्राबिम्बगतं देवं देवीभ्यां सह वा विना ॥२१६॥
अलङ्कृत्य विशेषेण विचित्रवसनैस्तथा ।
विविधैर्भूषणैश्चापि माल्यैर्नानाविधैस्तथा ॥२१७॥

अलङ्कृतं विशेषेण यानं हेमादिनिर्मितम् ।
समानीय तु संप्रोक्ष्य ध्यात्वा गरुडरूपिणम् ॥२१८॥
तन्मन्त्रेण समभ्यर्च्य यानमर्घ्यादिभिस्ततः ।
कृत्वा पुण्याहघोषं च श्रुतिघोषसमन्वितम् ॥२१९॥
शङ्खतूर्यादिसंयुक्तं प्रादक्षिण्यक्रमेण तु ।
याने तत्र समारोप्य यात्रामूर्तिगतं विभुम् ॥२२०॥
दृढीकृत्य विशेषेण ह्यलङ्कुर्याज्जगत्प्रभुम ।
अर्घ्याद्यैरर्चयित्वा तु ताम्बूलादीन्निवेदयेत् ॥२२१॥
वहेयुर्ब्राह्मणा यानं ध्यायन्तो विहगेश्वरम् ।
अथ वा वैष्णवाः शूद्रा वहेयुर्भक्तिसंयुताः ॥२२२॥
ग्रामे वा नगरे वापि पट्टणे वा मुनीश्वराः ! ।
प्रदक्षिणक्रमेणैव परिभ्रमणमाचरेत् ॥२२३॥
ब्राह्मणैर्ध्रियमाणैश्च कञ्चुकोष्णीषधारिभिः ।
मौक्तिकैरातपत्रैश्च मायूरैश्च सुशोभनैः ॥२२४॥
हेमदण्डसमायुक्तैस्तालवृन्तैस्तथाविधैः ।
पट्टजैर्विविधैश्चापि चामरैश्च सितासितैः ॥२२५॥
केतुदण्डैश्च विविधैर्वैजयन्तीविभूषितैः ।
केवलै रत्नदण्डैश्च तथान्यैर्माङ्गलीयकैः ॥२२६॥
वन्दिवृन्दैश्च विविधैर्वीणावेणुस्वनैस्तथा ।
सुवर्णशृङ्गघोषैश्च तथान्यैर्मङ्गलस्वनैः ॥२२७॥
गणिकादेवदासीभिस्तथा नागरकैर्जनैः ।
विप्रैर्वेत्रलताहस्तैः कञ्चुकोष्णीषभूषितैः ॥२२८॥
सुमृष्टधूपपात्राणि वहद्भिः पार्श्वतस्तथा ।
अनेकशतसङ्ख्यातैर्दीपैरतिसमुज्ज्वलैः ॥२२९॥
पादुके रत्नखचिते पात्रे हेमादिनिर्मिते ।

विन्यस्य देवपुरतो वहद्भिः परिचारकैः ॥२३०॥
ऋग्यजुस्सामवेदांस्तु पठद्भिः पृष्ठतः स्थितैः ।
ब्राह्मणैर्दक्षिणे भागे तथा चैकायनीं श्रुतिम् ॥२३१॥
संहिताः सात्वताद्याश्च पठद्भिर्भक्तिसंयुतैः ।
वासुदेवस्य माहात्म्यं कथयद्भिश्च सन्ततम् ॥२३२॥
वासुदेवार्चनपरैः सात्विकैः पाञ्चरात्रिकैः ।
वामे तु सेतिहासानि पुराणानि स्तुतीरपि ॥२३३॥
नानाभाषाविरचिताः विष्णुपारम्यसूचकाः ।
पठद्भिर्ब्राह्मणैर्भक्तैस्त्वथ्यन्तार्थविचारिभिः ॥२३४॥
शाब्दिकैस्तार्किकैश्चैव तथा मौहूर्तिकादिभिः ।
तत्तच्छास्त्रप्रमेयं तु ब्रुवाणैर्विनयान्वितैः ॥२३५॥
गायद्भिरग्रे देवस्य द्रामिडीं श्रुतिमुत्तमाम् ।
तथा भाषाप्रबन्धांश्च गद्यपद्यात्मकानि च ॥२३६॥
तथा च वैष्णवीभक्त्या ब्रुवाणैर्वैष्णवोत्तमैः ।
ब्राह्मणैः क्षत्रियैर्वैश्यैः शूद्रैश्च भगवत्परैः ॥२३७॥
भगवद्दर्शनासक्तचित्तैः प्रणतिशालिभिः ।
सेनया सर्वतो दिक्षु चतुरङ्गबलाढ्यया ॥२३८॥
राजोचितैः परिकरैरन्यैश्च विविधैः सह ।
देवं ग्रामादिवीथीषु भ्रामयेत्तु प्रदक्षिणम् ॥२३९॥
यात्रायां वर्तमानयां देवदेवाय भक्तितः ।
मुखवासं सताम्बूलं बहुशो विनिवेदयेत् ॥२४०॥
चन्दनं श्रमशान्त्यर्थं कर्पूराद्यैः सुभावितम् ।
प्रदद्याद्देवदेवाय माल्यानि विविधान्यपि ॥२४१॥
शीतळं तर्पणजलं नाळिकेरजलान्वितम् ।
श्रमशान्तिनिमित्तानि अन्यान्यपि निवेदयेत् ॥२४२॥

दिगष्टके च ग्रामादेस्तन्मध्ये च विशेषतः ।
गीतकैर्विविधैर्नृत्तैस्तन्त्रीवाद्यसमन्वितैः ॥२४३॥
शङ्खभेरीमृदङ्गाद्यैर्देवेशं परितोषयेत् ।
एवं देवं परिभ्राम्य नयेद्वाह्ये तु मण्टपे ॥२४४॥
समारोप्य च सौवर्णे विष्टरे जगतांपतिम् ।
अर्घ्यं पाद्यं तथाचामं गन्धमाल्ये च दीपकम् ॥२४५॥
धूपं नीराजनं चैव समर्प्य च यथाविधि ।
अथार्हणजलं स्वच्छमपूपान् पृथुकानपि ॥२४६॥
तर्पणं नालिकेरोत्थरसमाचमनं तथा ।
मुखवाससमोपेतं ताम्बूलं च क्रमेण तु ॥२४७॥
निवेद्य देवदेवाय उपहारांस्तु दर्शयेत् ।
पूजाकाले तु सर्वत्र भूषामाल्याम्बरार्पणम् ॥२४८॥
विसर्जनं च तेषां वै तथा चाभ्यवहारिकैः ।
भोगैरभ्यर्चनं चैव इतरालक्ष्यमाचरेत् ॥२४९॥
तत्सिद्ध्यै देवमभितः स्तरेद्यवनिकापटम् ।
ततस्तु मण्टपात्तस्मान्मन्दिरान्तः प्रवेशयेत् ॥२५०॥
महापीठस्य पुरतो देवमर्घ्यादिभिर्यजेत् ।
अपूपानुपहारांश्च ताम्बूलादीन्निवेदयेत् ॥२५१॥
देवाग्रे चतुरो वेदान् पाठयेत्तदनन्तरम् ।
पाठयेद्द्राविडीं चापि स्तुतिं वैष्णवसत्तमैः ॥२५२॥
शङ्खमर्दळनादैश्च नृत्तगीतादिभिः सह ।
भ्रामयेद्देवदेवेशं प्रादक्षिण्येन मन्दिरम् ॥२५३॥
ततः प्रवेशयेन्मन्दं मन्दं सोपानमार्गतः ।
तदानीं देवदेवाय ताम्बूलादीन् समर्पयेत् ॥२५४॥
चामरैस्तालवृन्ताद्यैर्वीजयेच्छ्रमशान्तये ।

स्तोत्रैः स्तुवीत देवेशं संस्कृतैर्द्रामिडैस्तु वा ॥२५५॥
वीणावेणुमृदङ्गैश्च मङ्गलैस्ताळनिस्वनैः ।
द्रामिडस्तुतिगीतानि कुर्वद्भिर्वैष्णवोत्तमैः ॥२५६॥
तथा मङ्गळगानाभिर्गणिकाभिः पदे पदे ।
उच्चैरुद्घुष्यमाणैश्च वन्दिस्तोत्ररवैः सह ॥२५७॥
नानाविधोपचारैश्च देवमन्तः प्रवेशयेत् ।
प्रासादद्वारदेशे तु देवदेवस्य भक्तितः ॥२५८॥
अर्घ्यं पाद्यं तथाचामं गन्धं माल्यं च धूपकम् ।
निवेद्य देवदेवेशं स्वस्थाने सन्निवेशयेत् ॥२५९॥
वाहनारोहणं त्वेवं कुर्याद्देवस्य नित्यशः ।
प्रथमे शिबिकायानं द्वितीये शेषपीठिका ॥२६०॥
तृतीये चन्द्रबिम्बं च दिवा चेत्सूर्यमण्डलम् ।
चतुर्थे दिवसे प्राप्ते पुष्पमण्टपवाहनम् ॥२६१॥
पञ्चमे दिवसे प्राप्ते गरुडारोहणं भवेत् ।
षष्ठे दिने तु सम्प्राप्ते तन्निशायां दिवापि वा ॥२६२॥
बल्यन्तमर्चनं कृत्वा देवमास्थानमण्टपे ।
भद्रासने समारोप्य पुरतस्तस्य शोधिते ॥२६३॥
भूतले धान्यपीठे तु चूर्णकुम्भं च विन्यसेत् ।
प्रोक्ष्य पुण्याहतोयेन श्रियं तत्र समर्चयेत् ॥२६४॥
सदर्भवस्त्रेणाच्छाद्य चक्रं तत्र नियोजयेत् ।
रक्षार्थं च ततो देवमर्घ्याद्यैर्हविरन्तिमैः ॥२६५॥
समभ्यर्च्य च हारिद्रं चूर्णमादाय देशिकः ।
श्रीसूक्तमुच्चरन्देवं चूर्णैः समभिषेचयेत् ॥२६६॥
मण्टपस्यैकदेशे तु शालितण्डुलनिर्मिते ।
विष्टरे तु जलद्रोणीं सौवर्णीं वाथ राजतीम् ॥२६७॥

ताम्रजां वा यथालाभं चतुस्त्रिद्विकरायताम् ।
तदर्धविस्तृतामूर्ध्वे मूले तत्पादविस्तृताम् ॥२६८॥
वृत्तायतामधोभागे प्रणाळेन समन्विताम् ।
उन्मत्तकुसुमाकारसदृशीमथ वा द्विजाः ! ॥२६९॥
बिम्बमानानुरूपां तां सर्वलक्षणसंयुताम् ।
निवेश्य तां समापूर्य गालितेन जलेन तु ॥२७०॥
कुङ्कुमक्षोदयुक्तेन चन्दनेनान्वितेन च ।
कर्पूरचूर्णयुक्तेन कुसुमैर्वासितेन च ॥२७१॥
तत्पार्श्वे देवमानीय चार्घ्याद्यैः परिपूज्य च ।
भेरीपटहवादित्रशङ्खघोषसमन्वितम् ॥२७२॥
स्तुतिमङ्गळघोषैस्तु श्रुतिघोषसमन्वितम् ।
सूक्तेन पौरुषेणैव विभोः कृत्वावगाहनम् ॥२७३॥
याने देवं समारोप्य सह स्नानार्द्रवाससा ।
कुङ्कुमेन समालिप्य आपादान्मस्तकावधि ॥२७४॥
भ्रामयेत्प्राङ्गणं वीथीं प्रीतये वरुणस्य च ।
जनानामपि सर्वेषां पवित्रीकरणाय च ॥२७५॥
तत्काले देवदेवेशं भक्त्या पश्यन्ति ये द्विजाः ! ।
ते सर्वे धूतपाप्मानो भवन्ति निरुपद्रवाः ॥२७६॥
ततस्तु मण्टपे देवं विष्टरे विनिवेश्य च ।
स्नानवस्त्रादिसकलमाचार्यः स्वयमाहरेत् ॥२७७॥
ततो देवमलंकृत्य कुर्यात्सम्यग्गजोत्सवम् ।
सप्तमे दिवसे प्राप्ते कृत्वा बल्यन्तमर्चनम् ॥२७८॥
प्रतिष्ठितं रथं पूर्वं सर्वलक्षणसंयुतम् ।
मुक्ताप्रपावितानैश्च सौवर्णमञ्जरीगणैः ॥२७९॥
मुक्तादामसमोपेतैर्विचित्रैः पुष्पदामभिः ।

हैमेन च वितानेन प्रभया च विशेषतः ॥२८०॥
मध्यतो भद्रपीठेन सौवर्णेन तथैव च ।
ध्वजैश्च विविधै रम्यैः पताकाभिश्च सर्वतः ॥२८१॥
भूषयेद्रथयानं तु तथा गरुडकेतुना ।
सौवर्णकुम्भशिखरैः रथमेवमलंकृतम् ॥२८२॥
सम्प्रोक्ष्य पञ्चगव्येन तथा पुण्याहवारिभिः ।
रथस्य पादादूर्ध्वान्तं स्थितान् देवान् समर्चयेत् ॥२८३॥
प्रथमं पादचक्रेषु वह्न्यादीशानपश्चिमम् ।
सत्यं सुपर्णं गरुडं तार्क्ष्यं चैव यथाक्रमम् ॥२८४॥
तत्तन्मन्त्रैः समभ्यर्च्य अन्यत्र विहगेश्वरम् ।
चक्रदण्डद्वये मायां चक्रे च शशिभास्करौ ॥२८५॥
अनन्तं च तदाधारे भाराख्ये दण्डकद्वये ।
विश्वरूपधरो विष्णुः शक्तीशश्चाप्युभाविमौ ॥२८६॥
परितः पङ्क्तिकाजाले केशवादीननुक्रमात् ।
गात्रेषु गात्रपादेषु धर्माद्यं त्वष्टकं यजेत् ॥२८७॥
गात्राद्वाराभ्यन्तरे न्यस्येच्चक्राद्यायुधसञ्चयम् ।
रथप्रासादमूर्धान्ते स्थूपिकायां सदाहरिम् ॥२८८॥
कूटशालासु पूर्वोक्तवासुदेवादिकान्यजेत् ।
एकशृङ्गादिकान् न्यस्त्वा परितो वेदिकातले ॥२८९॥
कूर्मादीन्द्वादश तथा ग्रीवायां परितो यजेत् ।
शिखरे तु यजेत्पश्चादनन्तादीननुक्रमात् ॥२९०॥
सर्वेषामूर्ध्वतो विप्राः ! पद्मनाभं ध्रुवं यजेत् ।
अर्घ्यस्रगन्धधूपैश्च क्रमेणैतान् प्रपूज्य च ॥२९१॥
चण्डाद्यं च सुभद्रान्तं द्वौ द्वौ दिक्षु समर्चयेत् ।
कुमुदादिगणेशानान् लोकपालान्यथाक्रमम् ॥२९२॥

तत्तत्स्थानेषु सम्पूज्य रथं गरुडरूपिणम् ।
ध्यात्वाभ्यर्च्य ततोऽर्घ्याद्यैर्हविरन्तं ततो गुरुः ॥२९३॥
चण्डादीनां बलिं दत्वा रथस्य परितस्ततः ।
देवगेहं समासाद्य मूर्तिपैः सह देशिकः ॥२९४॥
यानमारोप्य देवेशं श्रीपुष्टिभ्यां समन्वितम् ।
आस्थानमण्टपं नीत्वा समारोप्य च विष्टरे ॥२९५॥
अर्घ्याद्यैर्देवमभ्यर्च्य विविधैरुपचारकैः ।
यात्रानिर्विघ्नसिद्ध्यर्थं वीजानि विविधानि च ॥२९६॥
फलानि च हिरण्यानि तथा दध्योदनं द्विजाः ! ।
देवस्य सन्निधौ दत्वा विप्रेभ्यो देशिकोत्तमः ॥२९७॥
सुमुहूर्ते सुलग्ने च दैवज्ञपरिचोदिते ।
रथस्यारोहणार्थं तु देवमभ्यर्च्य यत्नतः ॥२९८॥
पादुके विनिवेश्याथ यानमारोप्य पूर्ववत् ।
वेदघोषैस्तथा घण्टाघोषैर्मङ्गलनिस्वनैः ॥२९९॥
तथा जयजयारावैः काहलैः शङ्खनिस्वनैः ।
भेरीपटहवादित्रनृत्तगीतादिभिः सह ॥३००॥
छत्रचामरपूर्वैश्च यात्रोपकरणैः सह ।
प्रथमावृतिमारभ्य रथ्यावरणपश्चिमम् ॥३०१॥
प्रदक्षिणक्रमेणैव परिभ्राम्य च पूर्ववत् ।
रथं प्रदक्षिणीकृत्य सुमुहूर्ते सुलग्नके ॥३०२॥
रथमारोपयेद्देवं ब्राह्मणैः सुप्रयत्नतः ।
रथस्योर्ध्वतले देवं विष्टरे विनिवेश्य च ॥३०३
यात्रार्थं देवदेवाय अर्घ्यं पाद्यं तथैव च ।
आचामं गन्धमाल्ये च दीपं धूपं तथैव च ॥३०४॥
अर्हणं मधुपर्कं च नैवेद्यं विविधं तथा ।

पृथुकाद्यं पानकं च तर्पणाचमने तथा ॥३०५॥
ताम्बूलं विनिवेद्याथ मुखवाससमन्वितम् ।
तत्काले पुत्रकामानां स्त्रीणां चारोग्यमिच्छताम्॥३०६॥
नैवेद्यं कबलीकृत्य दद्याद्देवस्य सन्निधौ ।
आचार्यः साधकाश्चापि रथस्योर्ध्वतले स्थिताः ॥३०७॥
तस्याधस्तात् स्थले स्थाप्याः पश्चिमे छत्रधारकाः ।
तत्र तत्पार्श्वतः स्थाप्यौ मायूरच्छत्रधारिणौ ॥३०८॥
दक्षिणोत्तरपार्श्वस्थावग्रे चामरधारिणौ ।
सारथिस्तत्स्थले स्थाप्यस्त्वग्रतो मध्यदेशतः ॥३०९॥
ततस्तद्रथयानं तु भ्रामयेत्सर्ववीथिषु ।
प्रादक्षिण्येन वै ग्रामे नगरे पत्तनेऽपि वा ॥३१०॥
ततो रथात्तु देवेशमवरोप्य सुयत्नतः ।
यानान्तरे समारोप्य स्वस्थाने सन्निवेशयेत् ॥३११॥
अष्टमेह्नि तु तद्रात्रौ डोलारोहणपूर्वकम् ।
अश्वारोहं ततः कुर्यात् मृगयां चापि कारयेत् ॥३१२॥
भक्तसन्त्राणलीलां च ब्राह्मे नगरशोधनम् ।
प्रणयः कलहश्च स्याद्देव्योर्देवेन वै मिथः ॥३१३॥
सन्धानमुभयोः कुर्यात् क्षम्यतामिति चोच्चरेत् ।
नवमेऽवभृथं कुर्यात्तद्रात्रौ शिबिकोत्सवम्॥३१४॥
वाहनारोहणस्यैवं क्रमः सम्यङ्निरूपितः ।
अपूर्वाभरणैर्माल्यैरपूर्वैश्चाम्बरैस्तथा ॥३१५॥
अपूर्वोद्यानयानाद्यैर्यथा कौतूहलं भवेत् ।
तथा विशेषः कर्तव्यो यावत्तीर्थदिनावधि ॥३१६॥
अथावभृथकार्यस्य विधानं तूच्यते द्विजाः ! ।
आचार्यो मूर्तिपैस्सार्धं प्रविश्य भगवद्गृहम् ॥३१७॥

देवं प्रपूज्य विधिवद्बल्यन्तं सर्वमाचरेत् ।
आचार्यो यजमानेन साधकैश्च समन्वितः ॥३१८॥
प्रासादं सम्प्रविश्याथ मूलविम्बस्य पादयोः ।
प्रणम्य दण्डवत्तत्र तीर्थबिम्बं समानयेत् ॥३१९॥
तदभावे मुनिश्रेष्ठाः ! नित्यस्नपनकौतुकम् ।
अभावेप्यस्य विम्बस्य बलिविम्बं तु वा द्विजाः! ॥३२०॥
मूलविम्बस्य पुरतः संस्थाप्यावाह्य पूज्य च ।
तीर्थबिम्बं समुद्धृत्य वाद्यैर्घण्टारवैः सह ॥३२१॥
ध्वजपीठसमीपं तु समानीय यथाविधि ।
शोधितेऽलंकृते तत्र मण्टपे स्नानविष्टरे ॥३२२॥
निवेश्य स्नानबिम्बं तु मूलविम्बस्य सम्मुखम् ।
तदग्रतस्तु संस्थाप्य स्नपनं त्वधमाधमम् ॥३२३॥
पुरतः स्थण्डिलं कृत्वोलूखलं तत्र विन्यसेत् ।
मुसलानि चतुर्दिक्षु विन्यस्योलूखलोपरि ॥३२४॥
मुसलोलूखले गृह्य दूर्वाकाण्डानि बन्धयेत् ।
नववस्त्रेण संवेष्ट्य तत्र चूर्णं विनिक्षिपेत् ॥३२५॥
सौवर्णं रजनीचूर्णसंमिश्रं गन्धसंयुतम् ।
चतुर्भिर्वैष्णवैर्विप्रैर्वैष्णवीभिस्तु वा द्विजाः ! ॥३२६॥
कारयेदवघातं तु गीयमाने तु मङ्गले ।
स्थापितस्नपनाद्विप्राः ! प्राग्भागे वा तदुत्तरे ॥३२७॥
तण्डुलैः पीठिकां कृत्वा तत्र कुम्भं निवेश्य च ।
ससूत्रं तत्र निक्षिप्य चूर्णं वस्त्रेण वेष्ट्य च ॥३२८॥
अथ वा पञ्च नव वा कलशान् चूर्णपूरितान् ।
अर्चयित्वा तु मूलेन ततः संस्नापयेद्विभुम् ॥३२९॥
तैलेनाभ्यज्य देवेशं समुद्वर्त्य च पूर्ववत् ।

ततः संस्ताप्य विधिना पाद्याद्यैः कलशैः क्रमात् ॥३३०॥
अभ्यर्च्य देवमर्घ्याद्यैर्हेमचूर्णादिपूरितम् ।
आदाय कुम्भं तैश्चूर्णैः श्रीसूक्तेनाभिषेचयेत् ॥३३१॥
सहस्रधारया स्नानं कृत्वा संशुध्य वारिणा ।
अधरोत्तरवस्त्राभ्यां नवाभ्यां परिधाप्य च ॥३३२॥
अलंकृत्य विशेषेण समभ्यर्च्य यथाविधि ।
मुद्गान्नपायसान्नादीन् विनिवेद्य ततः परम् ॥३३३॥
शिबिकादौ समारोप्य तीर्थबिम्बमलंकृतम् ।
तथैव चौत्सवं बिम्बं श्रीपुष्टिभ्यां समन्वितम् ॥३३४॥
शिबिकादौ समारोप्य ह्यलंकृत्य विशेषतः ।
तीर्थबिम्बं पुरस्कृत्य यात्रामूर्तिगतं विभुम् ॥३३५॥
छत्रचामरशङ्खादिसर्वसाधनसंयुतम् ।
प्रदक्षिणं परिभ्राम्य सर्वेष्वावरणेष्वपि ॥३३६॥
तीर्थपार्श्वं समासाद्य तत्तीरे मण्डपेऽथ वा ।
प्रपायां देवदेवेशं विनिवेश्य च विष्टरे ॥३३७॥
यात्राबिम्बस्य पुरतः स्नानपीठं निधाय वै ।
निवेश्य तत्र तीर्थार्चां पञ्चविंशतिभिर्घटैः ॥३३८॥
यद्वा द्वादशभिः कुम्भैर्नवभिर्वाभिषेचयेत् ।
चूर्णस्नानं तु विधिवत्कृत्वा देवस्य देशिकः ॥३३९॥
अर्घ्याद्यैः पूजयित्वाथ बिम्बं तु परिमार्ज्य च ।
भुक्तावशिष्टं यच्चूर्णं भक्तानां मूर्ध्नि दापयेत् ॥३४०॥
गङ्गास्नानफलं चूर्णं सर्वपापप्रणाशनम् ।
क्रीडया वापि तच्चूर्णं शिरसा धारयेत्तु यः ॥३४१॥

---

१—प्रापयन् । इति—(पा)

तस्य देहगतं पापं तत्क्षणादेव नश्यति ।
कृत्वा पुण्याहघोषं तु तीर्थे सम्प्रोक्ष्य देशिकः ॥३४२॥
तत्तीर्थे सर्वतीर्थानि समावाह्य समर्चयेत् ।
ततश्च देशिकेन्द्रस्तु यात्रामूर्तिगतं विभुम् ॥३४३॥
समासाद्य तु तत्पादे प्रणम्य तदनुज्ञया ।
मुहूर्ते शोभने प्राप्ते रवौ मध्यन्दिनं गते ॥३४४॥
तीर्थबिम्बं समादाय घण्टाशङ्खरवैः सह ।
वामहस्ततले कुर्यात् क्ष्मांमण्डलगतः स्वयम् ॥३४५॥
विधृयान्मध्यभागे तु पाणिना दक्षिणेन तु ।
तीर्थतीरं समासाद्य देशिकेन्द्रः समाहितः ॥३४६॥
आशीर्वादं पुरा कृत्वा राजराष्ट्रादिकस्य च ।
जलमध्यं समासाद्य नाभिदघ्ने जले स्थितः ॥३४७॥
जपन् वै मूलमन्त्रं तु बिम्बेन सह देशिकः ।
निमज्जेद्भक्तिसंयुक्तो ध्यायमानोऽच्युतं हृदि ॥३४८॥
निमज्जेयुस्तदा सर्वे भक्ता भागवता अपि ।
देवेन सह तत्काले निमज्जन्ति च ये जनाः ॥३४९॥
विमुक्तकल्मषास्ते वै प्राप्नुयुः परमां गतिम् ।
स्वयं व्यक्तादिके स्थाने मध्याह्ने वापराह्णके ॥३५०॥
रजन्यां पूर्वभागे वा कुर्यादवभृथं विभोः ।
मुहूर्तातिक्रमप्राप्तदोषस्तत्र न विद्यते ॥३५१॥
ततस्तीरे समारोप्य तीर्थबिम्बं तु विष्टरे ।
शाटकद्वितयं दत्वा स्नानवस्त्रे विसृज्य च ॥३५२॥
देशिकः स्वयमादाय ते वस्त्रे मूर्ध्नि धारयेत् ।
अर्घ्याद्यैश्च समभ्यर्च्य अलङ्कृत्य विशेषतः ॥३५३॥

१—शीर्षस्योर्ध्वतलेऽथ वा । इति—(पा)

महाहविर्निवेद्याथ ब्राह्मणान् भोजयेत्ततः ।
प्रत्यहं भोजयेद्विप्रान् सहस्रं शतमेव वा ॥३५४॥
याने देवं समारोप्य ततो गेहं प्रवेशयेत् ।
तीर्थबिम्बगतां शक्तिं मूलबेरे विसर्जयेत् ॥३५५॥
सायङ्काले तु सम्प्राप्ते देवदेवं जगत्पतिम् ।
वस्त्राभरणमाल्याद्यैरलंकृत्य विशेषतः ॥३५६॥
शिबिकादौ समारोप्य देवीभ्यां सह देशिकः ।
शङ्खादिमङ्गलरवैः छत्रचामरकेतुभिः ॥३५७॥
राजचिह्नैः परिकरैर्गणिकादेवदासिभिः ।
सर्वैः परिजनैः सार्धं कृत्वा ग्रामं प्रदक्षिणम् ॥३५८॥
मन्दिरान्तः प्रवेश्याथ बलिपीठसमीपतः ।
मधुपर्कं निवेद्याथ अपूपादीन्निवेदयेत् ॥३५९॥
शीतलं तर्पणजलं ताम्बूलादीन्निवेदयेत् ।
देवागारं परिभ्राम्य महामण्टपमाश्रयेत् ॥३६०॥
निवेद्य विष्टरे तत्र देवमर्घ्यादिभिर्यजेत् ।
कृत्वा नीराजनान्तं तु देशिकेन्द्रः समाहितः ॥३६१॥
स्थानस्य राज्ञो राष्ट्रस्य यजमानस्य मन्त्रिणाम् ।
प्रजानां परिवाराणां वैष्णवानां विशेषतः ॥३६२॥
आशीर्वादं ततः कुर्याद्वीक्षमाणो विभोर्मुखम् ।
ओमित्येवं प्रतिब्रूयुः सर्वे देवस्य सन्निधौ ॥३६३॥
ततस्तु देवदेवेशं यागशालां प्रवेशयेत् ।
तत्र पश्चिमवेद्यां तु देवमारोप्य पूर्ववत् ३६४॥
कुम्भपूर्वं क्रमेणैव चतुःस्थानस्थितं विभुम् ।
यथाविधि समभ्यर्च्य प्रभूतान्नसमन्वितम् ॥३६५॥
ततो द्वाराधिदेवानां प्रदाप्य विधिना बलिम् ।

कुण्डस्थं मण्डलस्थं च देवं हृदि विसृज्य च ॥३६६॥
विसर्जयेद्यथावच्च तथा द्वाराधिदेवताः ।
वाहयन्नौत्सवं बिम्बं महाकुम्भपुरस्सरम् ॥३६७॥
करकास्त्रं समादाय आचार्यः स्वकरेण तु ।
अच्छिन्नधारया युक्तं कृत्वा गेहं प्रदक्षिणम् ॥३६८॥
प्रासादं तु समासाद्य मूलबिम्बस्य सम्मुखम् ।
निवेश्य चौत्सवं बिम्बं सम्पूज्यार्घ्यादिभिः क्रमात् ॥३६९॥
प्रोक्षयेत्कुम्भतोयेन मूलमूर्तिगतं विभुम् ।
पुंसूक्तमुच्चरन्पश्चाद्यात्राबिम्बं च सेचयेत् ॥३७०॥
महाकुम्भगतां शक्तिं मूलबेरे समर्पयेत् ।
करकास्त्रगतां शक्तिमायुधेषु समर्पयेत् ॥३७१॥
तथैव वासुदेवादीन् पीठोर्ध्वे योजयेत्क्रमात् ।
तत्काले तु विशेषेण गुरोः सम्मानमाचरेत् ॥३७२॥
वसनैश्च दुकूलाद्यैर्देवस्य प्राङ्निवेदितैः ।
विविधैः स्रग्वरैश्चापि सुगन्धैश्चन्दनादिकैः ॥३७३॥
आचार्योऽपि समादाय दुकूलाद्यमनुत्तमम् ।
बध्वा स्वोष्णीषवत्स्वस्मिन् शिरसि द्विजसत्तमाः ! ॥३७४॥
माल्यादींश्च यथायोगं धारयन् प्रणिपत्य च ।
पुष्पाञ्जलिं ततः कृत्वा प्रणम्य च मुहुर्मुहुः ॥३७५॥
सर्वं न्यूनातिरिक्तं च मया पूर्वं हि यत्कृतम् ।
तत्सर्वं देवदेवेश ! क्षन्तुमर्हसि नः प्रभो ! ॥३७६॥
इति विज्ञाप्य देवेशं करस्थमथ कौतुकम् ।
विसृज्य हृदयेनैव यात्रामूर्तिगतं विभुम् ॥३७७॥
स्वस्थाने सन्निवेश्याथ आर्घ्याद्यैः परिपूज्य च ।
अपूपानुपहारांश्च समर्प्य च विभोस्तदा ॥३७८॥

शय्यासनं समर्प्याथ रात्रिशेषं समापयेत् ।
तदन्येद्युः प्रभातायां कृतस्नानः कृताह्निकः ॥३७९॥
आचार्यो मूर्तिपैः सार्धं प्रासादं सम्प्रविश्य तु ।
कृत्वा नित्यार्चनान्तं तु देवदेवस्य देशिकः ॥३८०॥
ततस्तु वक्ष्यमाणं यत्स्नपनं चाधमोत्तमम् ।
तेन संस्नाप्य देवेशं हविरन्तं समर्चयेत् ॥३८१॥
सायङ्काले च सम्प्राप्ते नित्यपूजावसानतः ।
देवेशस्याग्रतः स्थित्वा विज्ञापनमथाचरेत् ॥३८२॥
भगवन् ! पुण्डरीकाक्ष ! शरणागतवत्सल ।
अङ्कुरार्पणमारभ्य उत्सवावभृथान्तिमम् ॥३८३॥
यन्मयानुष्ठितं कर्म तव सम्प्रीतये विभो ! ।
तथान्यैर्मदनुज्ञातैर्देशिकैश्चापि यत्कृतम् ॥३८४॥
साधकैश्च तथान्यैश्च विविधैः परिचारकैः ।
तत्तत्सम्पूरणार्थं च न्यूनाधिक्योपशान्तये ॥३८५॥
त्वामद्य वासरे यष्टुं पुष्पयागविधानतः ।
प्रवृत्तमनुजानीहि मदनुग्रहकाम्यया ॥३८६॥
इति विज्ञाप्य देवस्य तदनुज्ञामवाप्य च ।
देवमुत्सवबिम्बस्थं देवीभ्यां सह देशिकः ॥३८७॥
आस्थानमण्टपं नीत्वा सौवर्णे भद्रविष्टरे ।
तत्र देवं समारोप्य अलंकृत्य विशेषतः ॥३८८॥
ततस्तस्य पुरोभागे पुष्पमण्डलमालिखेत् ।
श्वेतैः पीतैस्तथा रक्तैः पाटलैश्च सितासितैः ॥३८९॥
पञ्चवर्णैस्तु पुष्पाद्यैः श्यामळैस्तुळसीदळैः ।
मण्डले पूरयित्वा तु यथालोचनसुप्रियम् ॥३९०॥
मण्डलेशानभागे तु महाकुम्भं च विन्यसेत् ।

मण्टपस्य चतुर्दिक्षु द्वारकुम्भाष्टकं न्यसेत् ॥३९१॥
मण्टपं समलङ्कृत्य वितानध्वजतोरणैः ।
पुष्पाङ्कुरं ततः कुर्याद्यथोक्तविधिना गुरुः ॥३९२॥
मण्डलस्योत्तरे भागे सूत्राण्यास्फाल्य पूर्ववत् ।
पालिकादीनि पात्राणि शालिपीठोपरि न्यसेत् ॥३९३॥
विभवेच्छानुसारेण केवलं पालिकास्तु वा ।
प्रक्षाल्य पालिकादीनि अलङ्कृत्य यथाविधि ॥३९४॥
कुशकाशतृणैस्तेषां विलमूलानि पूरयेत् ।
बिलानि तण्डुलैरेव पूरयेत्तु यथाविधि ॥३९५॥
प्रोक्ष्य पुण्याहतोयेन यजेत्पालाधिदेवताः ।
पूर्वोक्तक्रमयोगेन तेषु पुष्पाणि वापयेत् ॥३९६॥
सोमकुम्भार्चनं होमं वर्जयेदत्र देशिकः ।
रक्षाबन्धं ततः कुर्यान्मूलबिम्बादिषु क्रमात् ॥३९७॥
औत्सवं बिम्बमादाय मृद्वास्तरणशोभिते ।
पुष्पमण्डलमध्ये तु प्राङ्मुखं विनिवेश्य च ॥३९८॥
तस्य पार्श्वद्वये विप्राः ! श्रियं पुष्टिं च विन्यसेत् ।
कुम्भपार्श्वं समासाद्य प्राग्वद्देशिकसत्तमः ॥३९९॥
कृत्वा मानसयागान्तं द्वारयागं समाचरेत् ।
महाकुम्भे मूलबिम्बात्किञ्चिदावाह्य पूजयेत् ॥४००॥
करकाद्यार्चनं तु सर्वं प्राग्वत्समाचरेत् ।
बिम्बेऽथ पूजनं कुर्यात्प्राग्वन्नीराजनान्तिमम् ॥४०१॥
उपहारान्निवेद्याथ पुनः पूजां समाचरेत् ।
अर्घ्यं पाद्यं तथाचामं गन्धं माल्यं च दीपकम् ॥४०२॥
धूपं ततोऽर्हणजलमपूपान् पृथुकानपि ।
तर्पणं नालिकेरोत्थरसमाचमनं तथा ॥४०३॥

मुखवाससमोपेतं ताम्बूलं च समर्पयेत् ।
एवं द्वादशवारं तु कृत्वा पूजां जगत्प्रभोः ॥४०४॥
महाहविर्निवेद्याथ कुर्यात्पुष्पाधिवासनम् ।
सौवर्णे राजते वापि पात्रे पुष्पाणि पूरयेत् ॥४०५॥
तत्पात्रं देवपुरतः शालिपीठे निधाय वै ।
प्रोक्ष्य पुण्याहतोयेन पूजयेन्मूलमन्त्रतः ॥४०६॥
वस्त्रेणाच्छाद्य तत्पात्रं गत्वा यागनिकेतनम् ।
कुण्डमग्निं च संस्कृत्य तन्मध्ये देवमर्चयेत् ॥४०७॥
समिद्भिश्चैव नित्याभिः काम्याभिश्च यथाविधि ।
पूर्णाहुत्यादिकं कृत्वा देवादींस्तु विसर्जयेत् ॥४०८॥
सम्पाताज्यमथादाय गत्वा देवस्य सन्निधिम् ।
होमं समर्प्य देवाय देशिको मन्त्रवित्तमः ॥४०९॥
सम्पाताज्येन पुष्पाणि संसिच्य तदनन्तरम् ।
देवस्य पादयोः पुष्पं पुंसूक्तेन समर्पयेत् ॥४१०॥
अथाष्टाक्षरबीजानि हृदयादीनि च क्रमात् ।
भूषणानि च दिव्यानि किरीटादीन्यनुक्रमात् ॥४११॥
आयुधानि च दिव्यानि श्रियं पुष्टिं खगेश्वरम् ।
तथैव परिवारांश्च समुद्दिश्य यथाक्रमम् ॥४१२॥
देवस्य पादयोः पुष्पं दद्याद्देशिकसत्तमः ।
ततस्तु देवदेवेशं यानमारोप्य यत्नतः ॥४१३॥
अलङ्कृत्य विशेषेण वस्त्राभरणमाल्यकैः ।
सर्वमङ्गळसंयुक्तं प्रथमावरणादिषु ॥४१४॥
परिभ्राम्य च देवेशं तथा वै ग्रामवीथिषु ।
प्रवेश्य देवसदनं ध्वजपीठसमीपके ॥४१५॥
देवमर्घ्यादिनाभ्यर्च्य निवेद्य च हविस्ततः ।

ध्वजस्थानं समासाद्य पतत्रीशं समर्चयेत् ॥४१६॥
महाहविर्निवेद्याथ ध्वजस्थं विहगेश्वरम् ।
विसर्जयित्वा स्वहृदि ध्वजं समवरोपयेत् ॥४१७॥
ध्वजदण्डं ध्वजपटं तद्यष्टिं तत्प्रपां तथा ।
आचार्यः स्वयमादद्याद्यागोपकरणान्यपि ॥४१८॥
ततस्तु देवदेवेसं प्रथमावरणेऽपि वा ।
द्वितीयावरणे वापि मण्टपे भद्रविष्टरे ॥४१९॥
निवेश्य प्राङ्मुखं वापि ह्युत्तराभिमुखं तु वा ।
देवस्योत्सवसेवार्थं ये देवाः पूर्वमागताः ॥४२०॥
वैकुण्ठवासिनश्चैव कुमुदादिगणेश्वराः ।
ब्रह्मरुद्रादयश्चैव तथा देवर्षिसत्तमाः ॥४२१॥
तथा वै भगवद्भक्ताः देशान्तरनिवासिनः ।
देवदेवस्य कल्याणमनुसन्धातुमागताः ॥४२२॥
तेषां स्वदेशयानार्थं देवानुज्ञापुरस्सरम् ।
कृत्वा विसर्जनं पश्चाद्देवमन्तः प्रवेशयेत् ॥४२३॥
ततस्तु देवं देवीभ्यां मूलबिम्बस्य सम्मुखम् ।
निवेश्य चोभयोर्मध्ये महाकुम्भं तु विन्यसेत् ॥४२४॥
कुम्भप्रोक्षणपूर्वं तु कौतुकोत्सर्जनान्तिमम् ।
प्राग्वत्कृत्वा यथाशास्त्रं देवमन्तः प्रवेशयेत् ॥४२५॥
अर्घ्यगन्धादिनाभ्यर्च्य मूलबिम्बे विसर्जयेत् ।
शय्यासनं समर्प्याथ जागरेण नयेन्निशाम् ॥४२६॥
ब्राह्मे मुहूर्ते सम्प्राप्ते देशिको मन्त्रवित्तमः ।
उद्वासनबलिं दद्यान्मूकैः परिजनैः सह ॥४२७॥
ग्रामे चावाहितान् पूर्वं कुमुदादीन् गणान्वितान् ।
सन्तोष्य बलिदानेन सविशेषं विसर्जयेत् ॥४२८॥

महातटाके नद्यादौ देशिको मन्त्रवित्तमः ।
ऋत्विग्भिः परिचारैश्च सर्वैः परिजनैः सह ॥४२९॥
स्नानं कृत्वा तु विधिवद्गत्वा देवगृहं ततः ।
नित्यपूजादिकं सर्वं यथाविधि समाचरेत् ॥४३०॥
यजमानो गुरुं हैमैर्भूषणैः कटकादिभिः ।
वसनैर्गन्धपुष्पाद्यैरलङ्कृत्याभिपूज्य च ॥४३१॥
उत्तमां दक्षिणां दद्यात्स्वर्णनिष्कशतान्विताम् ।
ततोधिकां तु वा दद्याद्विभवस्यानुगुण्यतः ॥४३२॥
तदर्धं मध्यमां वापि तदर्धमधमां तु वा ।
यथावित्तानुरूपं तु यथाश्रद्धं तु वा ददेत् ॥४३३॥
तदर्धमृत्विजां दद्यात्तदर्धं परिचारिणाम् ।
वेदपाठकपूर्वांश्च तथा गायकसत्तमान् ॥४३४॥
अन्यांश्चैव यथाशक्ति दक्षिणाभिः प्रतोषयेत् ।
यागस्तु दक्षिणाहीनो निष्फलः स्यान्न संशयः ॥४३५॥
तस्माद्वित्तानुगुण्येन देया स्वल्पापि दक्षिणा ।
तत्काले यजमानस्तु अलङ्कृत्य तु देशिकम् ॥४३६॥
वस्त्रस्रक्चन्दनाद्यैश्च समारोप्य च यानके ।
शङ्खकाहळवादित्रभेरीपटहसंयुतम् ॥४३७॥
छत्रदीपसमायुक्तं गायकादिसमन्वितम् ।
देशिकं देववत् स्मृत्वा स्वगृहे सम्प्रवेशयेत् ॥४३८॥
एवं हि देवदेवस्य उत्सवं कारयेत्तु यः ।
इह लोके सुखं प्राप्य परलोके महीयते ॥४३९॥
एवं निगदितः सम्यङ्महोत्सवविधिर्द्विजाः ! ।

इति श्रीपाञ्चरात्रे ईश्वरसंहितायां
महोत्सवविधिर्नाम
एकादशोऽध्यायः

## अथ द्वादशोऽध्यायः ।

नारदः ।

अतः परं प्रवक्ष्यामि पक्षमासोत्सवादिकान् ।
तथा वसन्तोत्सवादीन् शृणुध्वं मुनिपुङ्गवाः ! ॥१॥
पक्षे पक्षे च द्वादश्यां मासे मासे तथैव च ।
अमावास्यां पौर्णमास्यां श्रवणे चोत्तरे दिने ॥२॥
अवतारदिनेष्वेवं देवदेवस्य वै द्विजाः ! ।
यजमानादिजन्मर्क्षे चैत्रादिविपुवद्वये ॥३॥
अयनद्वितये चापि तथा सङ्क्रान्तिपु द्विजाः ! ।
आचरेद्देवदेवस्य विशेषयजनं गुरुः ॥४॥
नक्षत्रभेदे सम्प्राप्ते पूर्वमेव फलप्रदम् ।
परेद्युर्दशनाडी चेत्परमेव शुभं भवेत् ॥५॥
तिथिभेदे तथा प्राप्ते परमेव फलप्रदम् ।
एकादश्याममावास्यां द्वादश्यादिपु वा द्विजाः ! ॥६॥
परेद्युश्चेत्कलामात्रं तदेव शुभदं भवेत् ।
उत्तरायणपूर्वेपु पट्सु सङ्क्रान्तिपु द्विजाः ! ॥७॥
पश्चात् पोडशनाडीनामन्तरे देवमर्चयेत् ।
दक्षिणायनपूर्वेपु पट्सु सङ्क्रमणेपु च ॥८॥
प्रागेवाभ्यर्चयेद्देवं नाडीपोडशकान्तरे ।
अनुकल्पे तु तत्कुर्यात पश्चात् पोडशकान्तरे ॥९॥
एवमृक्षादिकं ज्ञात्वा कुर्यात्तत्तद्दिनेऽर्चनम् ।
द्वादश्यादिपु कर्तव्यं उत्सवं त्वधुनोच्यते ॥१०॥
पुरा नित्यार्चनं कृत्वा देवदेवस्य सत्तमाः ! ।

संस्नाप्य विधिवद्देवं मूलमूर्तिगतं विभुम् ॥११॥
यात्रामूर्तिगतं वापि यद्वा स्नपनकौतुकम् ।
अलङ्कारासनं नीत्वा समभ्यर्च्य विधानतः ॥१२॥
महाहविर्निवेद्याथ होमान्तं वा जपान्तिमम् ।
सर्वं कुर्याद्विशेषेण मूलादुत्सवकौतुके ॥१३॥
किञ्चिदावाह्य तदनु यात्रामूर्तिगतं विभुम् ।
यानमारोप्य सौवर्णं सपुष्पप्रभयान्वितम् ॥१४॥
अलङ्कृत्य विशेषेण पूर्वोक्तविभवैः सह ।
उत्सवभ्रमणं कृत्वा सम्यग्ग्रामप्रदक्षिणम् ॥१५॥
भगवन्मन्दिराग्रे वा बलिपीठाग्रतोपि वा ।
देवस्य श्रमशान्त्यर्थं कुर्यादभ्यर्चनं गुरुः ॥१६॥
अर्घ्यं पाद्यं तथाचामं गन्धं माल्यं च दीपकम् ।
धूपं तथार्हणजलं अपूपान्पृथुकानपि ॥१७॥
तर्पणं नाळिकेरोत्थरसमाचमनं तथा ।
मुखवाससमोपेतं ताम्बूलं च निवेदयेत् ॥१८॥
विविधैर्नृत्तगीताद्यैस्तदा सन्तोषयेत्प्रभुम् ।
गणिका देवदास्यश्च तथा वै वाद्यकोविदाः ॥१९॥
वन्दिनश्च तथान्येपि सर्वे भक्तिसमन्विताः ।
देवं प्रदक्षिणीकृत्य बलिपीठेन वै सह ॥२०॥
द्विवारं वा चतुर्वारं प्रणमेयुश्च भक्तितः ।
ततस्तु देवदेवेशं मन्दिरान्तः प्रवेशयेत् ॥२१॥
यानात्समवरोप्याथ पादुके विनिवेद्य च ।
अग्रमण्टपभूभागे भद्रपीठे निवेश्य च ॥२२॥
अर्घ्याद्यैः प्राग्वदभ्यर्च्य स्वस्थाने सन्निवेशयेत् ।
आदौ नियोजितां शक्तिं मूलबिम्बे नियोजयेत् ॥२३॥

द्वादश्यादिपु कर्तव्यमुत्सवं त्वेदमीरितम् ।
मधुमाधवमासे तु शुक्लपक्षे विशेषतः ॥२४॥
कलयापि चतुर्दश्या ह्यपृष्टे पर्वणि द्विजाः ! ।
जलक्रीडां तु देवस्य कुर्याद्देशिकसत्तमः ॥२५॥
जलक्रीडानुसारेण सप्ताहं वा नवाहकम् ।
पञ्चाहं वा त्र्यहं वापि एकाहं वोत्सवं चरेत् ॥२६॥
उत्सवारम्भदिवसात्पूर्वेद्युर्निशि देशिकः ।
अङ्कुरारोपणं कृत्वा रक्षाबन्धं यथाविधि ॥२७॥
उत्सवारम्भदिवसादारभ्य प्रतिवासरम् ।
चतुःस्थानार्चनं कुर्यात्सायम्प्रातर्यथाविधि ॥२८॥
बलिं नित्योक्तविधिना कुर्यात्कालद्वयेपि च ।
मध्याह्ने बलिदानान्ते यात्रामूर्तिगतं विभुम् ॥२९॥
शिविकायां समारोप्य श्रीपुष्टिभ्यां सह द्विजाः! ।
नीत्वा महामण्टपं तु तत्र वै भद्रविष्टरे ॥३०॥
समारोप्य च देवस्य पुरतो धान्यविष्टरे ।
चूर्णाधिवासनं प्राग्वत्कृत्वा देशिकसत्तमः ॥३१॥
अर्घ्याद्यैर्देवमभ्यर्च्य हविरन्तं यथाविधि ।
श्रीसूक्तेन ततो देवं श्रियं पुष्टिं च देशिकः ॥३२॥
अभिषिच्य च चूर्णेन हारिद्रेण यथाविधि ।
देवीभ्यां सह देवेशं भ्रामयेद्ग्रामवीथिषु ॥३३॥
प्रादक्षिण्येन पूर्वोक्तयात्रोपकरणैः सह ।
तदा देवस्य देव्योश्च युद्धक्रीडां च कारयेत् ॥३४॥
प्रथमे गन्धयुद्धं तु द्वितीये पुष्पयुद्धकम् ।
तृतीये चूर्णयुद्धं च चतुर्थे तैलयुद्धकम् ॥३५॥
पञ्चमे क्षीरयुद्धं स्यात् षष्ठे कर्पूरकुङ्कुमैः ।

नारिकेळजलैर्युद्धं सप्तमे तु समाचरेत् ॥३६॥
गन्धाम्भसाष्टमे युद्धं नवमे जलयुद्धकम् ।
गेहादिग्राममध्यान्तं भक्तैर्भागवतैः सह ॥३७॥
गणिकादेवदासीभिः कार्यं युद्धं विनोदतः ।
युद्धक्रीडां तु कृत्वैवं देवमन्तः प्रवेशयेत् ॥३८॥
सप्ताहमुत्सवे कुर्यात् चूर्णयुद्धादिसप्तकम् ।
पञ्चाहमुत्सवे कुर्यात् क्षीरयुद्धादिपञ्चकम् ॥३९॥
त्र्यहोत्सवे नाळिकेररसयुद्धादिकं भवेत् ।
केवलं जलयुद्धं तु कुर्यादेकाह उत्सवे ॥४०॥
जलक्रीडाविधानं तु शृणुध्वं मुनिपुङ्गवाः ! ।
तृतीयावरणादौ वा यद्वा गोपुरबाह्यतः ॥४१॥
खात्वा पुरुषमात्रं तु क्षितौ वै मुनिसत्तमाः ! ।
शिलाभिरिष्टकाभिर्वा दृढीकृत्य समन्ततः ॥४२॥
सोपानपङ्क्तिभिर्युक्तां जलद्रोणीं प्रकल्पयेत् ।
चतुःस्तम्भसमायुक्तं मण्टपं वा प्रपां तु वा ॥४३॥
कृत्वोपरिष्टात्तद्रोणीं पूरयेच्छुद्धवारिभिः ।
प्राग्वत्कटाहं वापूर्य कस्तूरीकुङ्कुमादिभिः ॥४४॥
सुरभीकृत्य तदनु प्रसूनैर्विकिरेच्छुभैः ।
पृथक्चूर्णाधिवासं तु कृत्वा यागगृहे गुरुः ॥४५॥
कुण्डे वा स्थण्डिले वाग्नौ श्रियमावाह्य मन्त्रवित् ।
तत्र सन्तर्प्य विधिवत्सम्पाताज्येन सेचयेत् ॥४६॥
तच्चूर्णपात्रमादाय वाद्यघोषपुरस्सरम् ।
जलद्रोणीं समासाद्य पुण्याहोक्तिपुरस्सरम् ॥४७॥
तत्र चूर्णं विनिक्षिप्य वसन्तं तत्र पूजयेत् ।
परितो लोकपालांश्च समभ्यर्च्य विशेषतः ॥४८॥

बलिं दद्यादष्टदिक्षु गेयवाद्यपुरस्सरम् ।
जलद्रोण्यां तु संस्कारस्त्वेवमुक्तो मुनीश्वराः! ॥४९॥
देवीभ्यां सह देवेशं मण्टपे प्राग्वदर्चयेत् ।
कृत्वा चूर्णाभिषेकान्तं जलद्रोणीसमीपतः ॥५०॥
देवमानीय देवीभ्यामर्घ्याद्यैः परिपूज्य च ।
भेरीपटहवादित्रशङ्खघोषसमन्वितम् ॥५१॥
स्तुतिमङ्गळघोषैश्च वेदघोषसमन्वितम् ।
पौरुषेणैव सूक्तेन कुर्यात्तत्रावगाहनम् ॥५२॥
यद्वा कूर्चे पादुकायां देवमावाह्य मन्त्रवित् ।
तत्रावगाहयेद्विप्राः! तदानीं देशिकोत्तमः ॥५३॥
यजमानो मूर्तिपाश्च भूसुरा वैष्णवोत्तमाः ।
यतयो ब्रह्मनिष्ठाश्च सिञ्चेयुर्मङ्गळाम्भसा ॥५४॥
चातुर्वर्ण्यभवाः सर्वे पुरुषाश्च स्त्रियोपि च ।
गणिका देवदास्यश्च तथान्ये वाद्यवादकाः ॥५५॥
परस्परं च सिञ्चेयुः सर्वे मङ्गळवारिभिः ।
गङ्गास्नानफलं प्राप्य विष्णुसायुज्यमाप्नुयुः ॥५६॥
याने देवं समारोप्य सह स्नानार्द्रवाससा ।
जलक्रीडापुरस्कं तु यात्रोपकरणैः सह ॥५७॥
भ्रामयेद्ग्रामवीथीषु प्रीतये वरुणस्य च ।
प्रजानामपि सर्वेषां पवित्रीकरणाय च ॥५८॥
ततस्तु देवदेवेशं मन्दिरान्तः प्रवेशयेत् ।
तत्र देवं यथाशास्त्रं पञ्चविंशतिभिर्घटैः ॥५९॥
अभिषिच्य विशेषेण हविरन्तं समर्चयेत् ।
प्रत्यहं चापि युद्धान्ते स्नपनं त्वेवमाचरेत् ॥६०॥
तद्रात्रौ पूर्ववत्कुर्यात्कुम्भसम्प्रोक्षणान्तिमम् ।

आचार्यं पूजयेत्पश्चाद्वस्त्रहेमाङ्गुळीयकैः ॥६१॥
मूर्तिपादीन्यथान्यायं तोषयेद्द्रविणैस्तथा ।
इति सङ्क्षेपतः प्रोक्तो वसन्तोत्सव उत्तमः ॥६२॥
चैत्रे तु शुक्लद्वादश्यां कुर्याद्दमनिकोत्सवम् ।
पवित्रारोहवत्कुर्याच्चतुःस्थानार्चनादिकम् ॥६३॥
भूषणान्युत्तमादीनि कुर्याद्दमनिकैस्तथा ।
तत्तु सङ्ख्याविरचितं यथा शोभानुरूपतः ॥६४॥
पञ्चविंशतिकुम्भांस्तु स्थापयित्वाभिषेचयेत् ।
एक एव नारायण इति प्राक्कलशेन तु ॥६५॥
तस्य ध्यानान्तःस्थस्येति द्वितीयकलशेन तु ।
अथ पुनरेव नारायण इति तु तृतीयतः ॥६६॥
अथ पुनरेव नारायण इति चतुर्थतः ।
सहस्रशीर्षा पुरुष इति पञ्चमकुम्भतः ॥६७॥
पतिं विश्वस्यात्मेश्वरमिति वै पष्ठकुम्भतः ।
नारायणपरं ब्रह्म इति वै सप्तमेन तु ॥६८॥
यच्च किञ्चिज्जगत्यस्मिन्निति ह्यष्टमकुम्भतः ।
अनन्तमव्ययं कविमिति नवमेनाभिचयेत् ॥६९॥
अथो निष्ट्या वितस्त्यां तु इति स्याद्दशमेन वै ।
सन्ततं सिराभिस्तु इत्येकादशमेन तु ॥७०॥
तस्य मध्ये महानग्निरिति द्वादशमेन वै ।
सन्तापयति स्वं देहमिति त्रयोदशमेन वै ॥७१॥
नीलतोयदमध्यस्था इति चतुर्दशमेन वै ।
तस्याः शिखाया मध्य इति पञ्चदशेन वै ॥७२॥
सर्वस्य वशिनमिति षोडशमेन तु ।

१—अथ पुरुषो नारायणः । इति—(पा)

बहिरावरणस्थैस्तु कलशैरभिषेचयेत् ॥७३॥
बहिरावरणे नास्ति इति प्राक्संस्थितेन तु ।
यन्नाभिपद्मादभवदिति वह्निगतेन तु ॥७४॥
धृतोर्ध्वपुण्ड्रः परमेति याम्यदिक्संस्थितेन तु ।
दक्षिणे तु भुजे विप्र इति यातुगतेन तु ॥७५॥
विष्णुनात्तमश्नन्तीति वारुणीसंस्थितेन तु ।
पुम्प्रधानेश्वरो विष्णुरिति वायुगतेन तु ॥७६॥
इमां महोपनिषदमिति सोमगतेन तु ।
ओमिति प्रथमं नाम इतीशानगतेन तु ॥७७॥
पुरुषो ह वै वासुदेव इति मध्यगतेन तु ।
यद्वा पुरुषसूक्तीयैर्मन्त्रैः षोडशभिः क्रमात् ॥७८॥
बहिरावरणस्थैस्तु कलशैरभिषिच्य च ।
पूर्वोक्तैर्ब्रह्मसूक्तस्थैर्मन्त्रैर्द्विद्विकसंख्यया ॥७९॥
अन्तरावरणस्थैस्तु संस्नाप्य कलशैः क्रमात् ।
अवशिष्टैस्त्रिभिश्चान्ते मध्यकुम्भेन सेचयेत् ॥८०॥
रजनीचूर्णसंमिश्रान् संस्थाप्य नवकुम्भकान् ।
अर्घ्याद्यैरर्चयित्वा तु चक्ररश्मिसमप्रभान् ॥८१॥
रजनीचूर्णनिचयान् ध्यात्वा तैरभिषेचयेत् ।
सर्वविघ्ननिरासार्थं सर्वसम्पूरणाय च ॥८२॥
दक्षिणे तु भुजे विप्र इति प्राक्संस्थितेन तु ।
निचिक्षेप सुपर्णमिति वह्निगतेन तु ॥८३॥
प्रते विष्णो ! अब्जचक्रे इति याम्यगतेन तु ।
एभिर्वयमुरुक्रमस्येति यातुगतेन तु ॥८४॥
धृतोर्ध्वपुण्ड्रः कृतचक्रेति पश्चिमगेन तु ।
पवित्रमित्यभिरिति वायुकोणगतेन तु ॥८५॥

चरणं पवित्रं विततमिति सोमगतेन तु ।
लोकस्य द्वारमर्चिमदिति रुद्रगतेन तु ॥८६॥
मन्त्रैरेतैस्तु चाष्टाभिरन्यैः सौदर्शनैस्तथा ।
संस्नाप्य मध्यकुम्भेन शुद्धोदैरभिपिच्य च ॥८७॥
महोपनिषदन्तस्थैर्ब्रह्मसूक्तैः पुरोदितैः ।
मन्त्रैश्चतुर्भिः पुंसूक्तमन्त्रैः पोडशभिस्तथा ॥८८॥
वासुदेवद्विपट्कार्णब्राह्मणद्वितयेन तु ।
ओङ्कारादिपवित्रान्तैश्चतुर्भिर्व्यापकैस्तथा ॥८९॥
सहस्रधारया देवं स्नापयेद्विधिपूर्वकम् ।
यद्वाष्टाक्षरमन्त्रेण सर्वं स्नपनमाचरेत् ॥९०॥
ततोन्यैः सकलैर्भोगैः प्राग्वदिष्ट्वा क्रमेण तु ।
सर्वैः पुरोदितैर्मन्त्रैर्मूलमन्त्रेण वा द्विजाः ॥९१॥
होमं कृत्वा विशेषेण समिद्भिस्त्रिमधुप्लुतैः ।
ततो दमनिकारोपमाचरेत्तु यथाविधि ॥९२॥
अत्रानुक्तं तु सकलं पवित्रारोहवद्भवेत् ।
अतः परं प्रवक्ष्यामि विशाखोत्सवमुत्तमम् ॥९३॥
वृषभस्थे दिनकरे पौर्णमासी तु या भवेत् ।
विशाखाऋक्षयुक्ता वा ह्ययुक्ता वा द्विजोत्तमाः ! ॥९४॥
चतुर्दश्या ह्यविद्धायां तस्यामुत्सवमाचरेत् ।
सहकारफलादीनि नालिकेरफलान्यपि ॥९५॥
द्राक्षाखर्जूरकादीनि मातुलङ्गफलान्यपि ॥।
अन्यानि चैव योग्यानि यथालब्धानि वा द्विजाः ! ॥९६॥
आहृत्य सर्वाण्येकत्र न्यस्य पात्रेषु च द्विजाः ! ।
तानि पात्राणि विन्यस्य परिचारकमूर्धसु ॥९७॥
विष्वक्सेनं पुरस्कृत्य वाद्यघोपसमन्वितम् ।

ग्रामं प्रदक्षिणीकृत्य मन्दिरान्तः प्रवेशयेत् ॥९८॥
महानसादौ निक्षिप्य फलपात्राण्यतः परम् ।
वैष्णवैर्ब्राह्मणैः शुद्धैर्महाहर्षसमन्वितैः ॥९९॥
वस्त्रेण पिहितास्यैश्च जिह्वाचापल्यवर्जितैः ।
निस्त्वक्करणयोग्यानि तथा निस्त्वञ्चि कारयेत् ॥१००॥
यथावस्थितरूपेण शोधनार्हाणि शोधयेत् ।
तथैव क्षाळनार्हाणि क्षाळयेच्छुद्धवारिभिः ॥१०१॥
फलानि सहकाराणां क्षीरेण गुडमिश्रितम् ।
पाचयेन्नाळिकेराणां खण्डैश्चैव मरीचिभिः ॥१०२॥
एलाकर्पूरचूर्णैश्च मिश्रयेदेवमेव हि ।
महाहविः पायसादीनपूपांश्च प्रकल्पयेत् ॥१०३॥
दिवापि वा रजन्यां वा नित्यपूजावसानतः ।
मन्त्रासनपुरस्कं तु देवं स्नानासनं नयेत् ॥१०४॥
पञ्चविंशतिभिः कुम्भैः संस्नाप्य पुरुषोत्तमम् ।
अलङ्कारासनेऽभ्यर्च्य ततो भोज्यासनं नयेत् ॥१०५॥
महाहविः पायसाद्यं सहकारफलादिकम् ।
निवेद्य देवदेवाय ताम्बूलादीन्निवेदयेत् ॥१०६॥
कारिभ्यो वैष्णवेभ्यश्च तत्प्रसादं प्रदापयेत् ।
ततस्तु चौत्सवं बिम्बं श्रीपुष्टिभ्यां समन्वितम् ॥१०७॥
यानमारोप्य वस्त्राद्यैरलङ्कृत्य विशेषतः ।
सर्वमङ्गळसंयुक्तं नीत्वा ग्रामं प्रदक्षिणम् ॥१०८॥
मन्दिरान्तः प्रवेश्याथ स्वस्थाने सन्निवेशयेत् ।
यजमानोऽथ गुर्वादीन् तोषयेद्दक्षिणादिभिः ॥१०९॥
एवं विशाखोत्सवस्य विधानं सम्प्रकीर्तितम् ।
अथ प्लवोत्सवविधिं शृणुध्वं मुनिपुङ्गवाः ! ॥११०॥

शिशिराद्येषु ऋतुषु त्रिष्वेकस्मिन् समाचरेत् ।
शुक्लपक्षेऽथ वा कृष्णे देवेशस्य प्लवोत्सवम् ॥१११॥
यजमानस्य जन्मर्क्षे देवजन्मर्क्षकेपि वा ।
प्लवाधिरोहणं कुर्याद्राजराष्ट्राभिवृद्धिदम् ॥११२॥
तन्नक्षत्रानुसारेण सप्ताहं वा नवाहकम् ।
पञ्चाहं वा त्र्यहं वापि एकाहं वोत्सवं भवेत् ॥११३॥
उत्सवारम्भपूर्वेद्युरङ्कुरार्पणमाचरेत् ।
रक्षाबन्धं च विधिवत्कृत्वा देशिकसत्तमः ॥११४॥
आरम्भदिनमारभ्य प्रत्यहं कालयोर्द्वयोः ।
चतुस्स्थानार्चनं कुर्याद्बलिदानसमन्वितम् ॥११५॥
आदावन्ते च देवेशमधमोत्तममार्गतः ।
संस्नापयेत्प्रतिदिनं वाहनारोहणं भवेत् ॥११६॥
अन्तिमे तु दिने कार्यमुडुपस्याभिरोहणम् ।
प्रत्यहं चापि मध्याह्ने देवं देवीसमन्वितम् ॥११७॥
यानमारोप्य वस्त्राद्यैरलंकृत्य विशेषतः ।
ग्रामं प्रदक्षिणीकृत्य सरस्तीरं समानयेत् ॥११८॥
तत्र प्रकल्पिते दिव्ये मण्टपे सुमनोहरे ।
भद्रासने देवदेवं समारोप्य विशेषतः ॥११९॥
अर्घ्याद्यैस्तु समभ्यर्च्य महता हविषा तथा ।
ततस्तु देवदेवेशं मन्दिरान्तः प्रवेशयेत् ॥१२०॥
उडुपारोहणदिनेप्येवं देवं सरस्तटे ।
समाराध्य विशेषेण हविरन्तं जगत्प्रभुम् ॥१२१॥
स्वस्तिके चतुरश्रे वा वृत्ते वापि सरोवरे ।
परितः कृतसोपाने चतुर्द्वारोपशोभिते ॥१२२॥
चतुर्दिक्षु महोत्तुङ्गगोपुरैश्चोपशोभिते ।

समध्यमण्टपे दिव्ये विमलोदकपूरिते ॥१२३॥
प्रकल्पितं प्लवं दिव्यं फलकाभिर्दृढीकृतम् ।
अनेकस्तम्भसंयुक्तं लोहकीलैर्दृढीकृतम् ॥१२४॥
विमानसदृशाकारं मण्टपाकृतिमेव वा ।
द्वितलं त्रितलं वापि चतुःपञ्चतलान्वितम् ॥१२५॥
अलङ्कृतं च विविधैर्वितानैः पुष्पमाल्यकैः ।
दर्पणैश्चामरैश्चैव ध्वजैश्च विविधैरपि ॥१२६॥
नाळिकेरैः पूगफलस्तवकैः कदळीफलैः ।
ह्रीवेरैश्चैव घण्टाभिः परितः समलंकृतम् ॥१२७
प्रोक्ष्य पुण्याहतोयेन सरस्तोयं च देशिकः ।
दहनाप्यायनाभ्यां च संशोध्य विमलोदके ॥१२८॥
क्षीरार्णवं समावाह्य सम्पूज्यार्घ्यादिभिर्द्विजाः ! ।
प्लवे फणीन्द्रमावाह्य परितः कुमुदादिकान् ॥१२९॥
समभ्यर्च्यार्घ्यगन्धाद्यैः कुम्भे चावाह्य पूजयेत् ।
अग्रावनन्तमन्त्रेण हुत्वा चैव यथाविधि ॥१३०॥
प्लवं तत्कुम्भतोयेन प्रोक्षयेद्देशिकोत्तमः ।
एवं प्लवं तु संस्कृत्य मुहूर्ते तु सुशोभने ॥ १३१ ॥
देवीभ्यां सह देवेशं प्लवमारोपयेद्गुरुः ।
आचार्यः साधकश्चैव दीक्षिताः परिचारकाः ॥१३२॥
सेवापरास्तथान्ये च वैष्णवा वेदपाठकाः ।
तिष्ठेयुः परितो देवमन्येषां तु पृथक्प्लवः ॥१३३॥
अन्ये तु न स्पृशेयुस्तं यस्तु शेषात्मकः प्लवः ।
वन्दिनो वारवनिताः ये चान्ये वाद्यवादकाः ॥१३४॥
ते ते पृथक्प्लवारूढाः कुर्युर्नृत्तादिकं तथा ।
शङ्खभेर्यादिनिनदैर्वेदघोषैः समन्ततः ॥१३५॥

पुष्पवर्षैर्विनोदैश्च देवं सन्तोपयेत्तदा ।
प्रदक्षिणत्रयं कुर्यात्पञ्चकं सप्तकं तु वा ॥१३६॥
ततः सरोमध्यभागमण्टपे देवमानयेत् ।
तत्र देवं समभ्यर्च्य अर्घ्याद्यैर्देशिकोत्तमः ॥१३७॥
अर्हणं पृथुकापूपनाळिकेररसं तथा ।
तर्पणं चैव ताम्बूलं मुखवाससमन्वितम् ॥१३८॥
निवेद्य देवदेवाय ताम्बूलाद्यैस्ततः परम् ।
सेवाजनांश्च सन्तोष्य यावदस्तमयं रवेः ॥१३९॥
नानाविनोदैः सन्तोष्य देवं नीत्वा पुनः प्लवम् ।
तीरमासाद्य देवेशमवरोप्य प्लवात्ततः ॥१४०॥
ग्रामप्रदक्षिणं देवं मन्दिरान्तः प्रवेशयेत् ।
नित्यार्चनं पुरा कृत्वा विशेपयजनं तथा ॥१४१॥
प्रागवत्कुम्भप्रोक्षणान्तं सर्वं कुर्याद्यथाविधि ।
यजमानो गुरुं चैव तोपयेद्दक्षिणादिभिः ॥१४ ॥
एवं प्लवोत्सवविधिः प्रोक्तः सङ्क्षेपतो द्विजाः ! ।
अथ चाग्रयणाख्यस्य विधानं किञ्चिदुच्यते ॥१४३॥
आषाढे पूर्वफल्गुन्यां पुष्ये चैव विशेपतः ।
माघमासे तु पञ्चम्यां सप्तम्यामथ वा द्विजाः! ॥१४४॥
मुहूर्ते शोभने प्राप्ते कुर्याद्धान्यस्य सङ्ग्रहम् ।
सेनाधिपं मदर्थं तु तार्क्ष्यं वा मारुतिं तु वा ॥१४५॥
आरोप्य शिबिकायानं सर्वैः परिजनैः सह ।
आचार्यो यजमानश्च वाद्यघोषपुरस्सरम् ॥१४६॥
क्षेत्रदेशं समासाद्य पुण्याहं वाचयेद्गुरुः ।
क्षेत्रमर्घ्यादिनाभ्यर्च्य भूमन्त्रेणैव मन्त्रवित् ॥१४७॥
लवित्रं चापि सम्प्रोक्ष्य मूलमन्त्रेण पूजयेत् ।

ततस्तु क्षेत्रपालेभ्यो बलिं दद्यात्समन्ततः ॥१४८॥
दध्योदनं पायसं वा देशिकः क्षेत्रवृद्धये।
सुमुहूर्ते मौनयुक्तो देशिको मूलमन्त्रतः ॥१४९॥
धान्यानां लवनं कुर्यात्ततश्चैवं कृषीवलैः।
कारयित्वा धान्यभारान् विविधानि फलानि च ॥१५०॥
सङ्गृह्य वाहयन् पश्चाद्देववाद्यरवैः सह।
विष्वक्सेनपुरस्कं तु कृत्वा ग्रामप्रदक्षिणम् ॥१५१॥
देवगेहं समासाद्य प्रासादान्तः प्रविश्य च।
देवस्य दक्षिणे हस्ते धान्यं किञ्चित्प्रदर्शयेत् ॥१५२॥
आतपे शोषयेत्पश्चादनवातं समाचरेत्।
तत्स्थाने गोमयाम्भोभिः समालिप्य समन्ततः ॥१५३॥
सुधाचूर्णैरलंकृत्य मुसलं तदुलूखलम्।
क्षाळयित्वा शुद्धजलैरर्घ्यगन्धादिनार्चयेत् ॥१५४॥
धान्यान्युलूखले न्यस्य सुमुहूर्तेवघातयेत्।
सार्धं मङ्गळगानैश्च सर्ववाद्यरवैः सह ॥१५५॥
सधवब्राह्मणस्त्रीभिर्देवदासीगणैस्तु वा।
तुषानपोह्य शूर्पेण क्षाळयेच्छुद्धवारिणा ॥१५६॥
शोधयित्वा पुनः सर्वान् गुडपाकेन मिश्रितान्।
मरीचिजीरकैर्युक्तान् नाळिकेरफलान्वितान् ॥१५७॥
विधाय मूलबिम्बादीनभ्यर्च्य च विशेषतः।
निवेद्य तानि तदनु वह्नौ सन्तर्पयेद्विभुम् ॥१५८॥
होमान्ते सप्त समिधां तण्डुलैर्जुहुयात्ततः।
पश्चान्निवेदितं सर्वं गुर्वादिभ्यः प्रदापयेत् ॥१५९॥
एवमाग्रयणाख्यं हि अश्वमेधसहस्रतः।
उत्तमं देवदेवस्य कारयेत्प्रतिवत्सरम् ॥१६०॥

अथ डोलोत्सवविधिं शृणुध्वं मुनिपुङ्गवाः ।
उत्तरायणकाले वा दक्षिणायन एव च ॥१६१॥
शुक्लपक्षे विशेषेण पञ्चमीं सप्तमीं तु वा ।
एकादशीं वा दशमीं द्वादशीं पूर्णिमां तु वा ॥१६२॥
समारभ्योत्सवं कुर्यात्सप्ताहं वा नवाहकम् ।
पञ्चाहं वा त्र्यहं वापि विभवेच्छानुसारतः ॥१६३॥
उत्सवारम्भपूर्वेद्युर्निशायामङ्कुरार्पणम् ।
रक्षाबन्धं च विधिवत्कुर्याद्देशिकसत्तमः ॥१६४॥
प्रथमावरणे वापि द्वितीयावरणादिके ।
बहिर्वा गोपुरद्वारात्कुत्रचित्सुमनोहरे ॥१६५॥
देशे डोलोत्सवार्थं तु मण्टपं परिकल्पयेत् ।
द्वात्रिंशत्स्तम्भसंयुक्तं चतुर्विंशतिभिस्तु वा ॥१६६॥
षोडशस्तम्भयुक्तं वा चतुर्द्वारसमन्वितम् ।
मण्टपं समलङ्कुर्यान्नानावर्णवितानकैः ॥१६७॥
विचित्रक्षौमवस्त्रैश्च मुक्तादामभिरेव च ।
नानाकुसुममाल्यैश्च दर्पणैश्चामरादिभिः ॥१६८॥
ध्वजैश्च विविधै रम्यैः प्रसूनस्तबकैस्तथा ।
घण्टाभिः फलभारैश्च प्रदीपावळिभिस्तथा ॥१६९॥
मण्टपाभ्यन्तरभुवं कस्तूरीकुङ्कुमादिभिः ।
कर्पूरैश्च समालिप्य सुधाचूर्णादिभिर्भुवम् ॥१७०॥
अलंकृत्य विशेषेण कुसुमैरक्षतैः शुभैः ।
विकीर्य दिव्यधूपैश्च धूपयित्वा समन्ततः ॥१७१॥
सौवर्णीं राजतीं ताम्रीं दारुजां वा यथा रुचि ।
यथोक्तलक्षणां डोलां वृत्तां वा चतुरश्रकाम् ॥१७२॥
विमानसदृशीं वापि यथेष्टतलशोभिताम् ।

चतुःस्तम्भसमायुक्तां यद्वा स्तम्भद्वयान्विताम् ॥१७३॥
वितानैर्विविधैर्माल्यैर्दर्पणैः केतुभिस्तथा ।
अलंकृत्य विशेषेण लम्बयेन्मण्टपान्तरे ॥१७४॥
रज्जुभिर्लोहक्लृप्ताभिः क्षौमकार्पासतन्तुभिः ।
कृताभिर्वा यथायोगं ततो देशिकसत्तमः ॥१७५॥
पुण्याहं वाचयित्वा तु डोलां सम्प्रोक्ष्य मन्त्रवित् ।
डोलायाः फलकामध्ये अनन्तं परिपूजयेत् ॥१७६॥
पादेषु चैव धर्माद्यमष्टकं वा चतुष्टयम् ।
स्तम्भेषु गरुडव्यूहमभ्यर्च्य क्रमयोगतः ॥१७७॥
तथैव चतुरो वेदान् रज्जुषु क्रमशोऽर्चयेत् ।
इतिहासपुराणानि वेदाङ्गानि तथैव च ॥१७८॥
फलकायामष्टदिक्षु पूजयेन्मुनिसत्तमाः ! ।
व्यापकांस्तु चतुर्मन्त्रान् पादेषु परिपूजयेत् ॥१७९॥
इष्ट्वा ध्वजेषु सावित्रीं छत्रेषु व्याहृतीस्तथा ।
प्रणवं तु पताकासु तोरणेषु स्वरांस्तथा ॥१८०॥
व्यञ्जनानि च सम्पूज्य डोलां कृत्वा तु वाङ्मयीम् ।
डोलायाः परितो दिक्षु इन्द्रादीन् परिपूजयेत् ॥१८१॥
डोलायास्तु पुरोभागे यद्वान्यत्र यथाविधि ।
धान्यपीठे महाकुम्भमुपकुम्भाष्टकान्वितम् ॥१८२॥
विन्यस्य तत्र डोलोक्तान् देवानावाह्य पूजयेत् ।
उपकुम्भाष्टके चैव इन्द्रादीन् परिपूजयेत् ॥१८३॥
कुण्डे वा स्थण्डिले वापि वह्निं संस्कृत्य पूर्ववत् ।
तान् देवांस्तत्र चावाह्य तत्तन्मन्त्रैरनुक्रमात् ॥१८४॥
पृथगष्टाहुतीर्हुत्वा घृताद्यैर्देशिकोत्तमः ।
पूर्णाहुत्यादिकं कृत्वा विसृज्याग्निं ततो गुरुः ॥१८५॥

सम्पाताज्यने तां डोलां संसिच्य सुमुहूर्तके ।
कुम्भतोयेन सम्प्रोक्ष्य पूजयेच्च विशेषतः ॥१८६॥
डोलायाः परितो दिक्षु इन्द्रादिभ्यो बलिं ददेत् ।
एवं डोलां तु संस्कृत्य कुर्याड्डोलोत्सवं विभोः ॥१८
चतुःस्थानार्चनयुतं बलिदानसमन्वितम् ।
आरम्भे चावसाने च पूर्वोक्तस्नपनान्वितम् ॥१८८॥
सायं नित्यार्चनं कृत्वा विशेषयजनं तथा ।
देवं याने समारोप्य श्रीपुष्टिभ्यां समन्वितम् ॥१८९॥
धाम प्रदक्षिणीकृत्य डोलापार्श्वे समानयेत् ।
शङ्खभेरीनिनादैश्च तूर्यमङ्गलनिस्वनैः ॥१९०॥
सुमुहूर्ते सुलग्ने च डोलामारोपयेद्विभुम् ।
तत्रार्चयेज्जगन्नाथमलङ्कारासनोदितैः ॥१९१॥
भोगैर्नीराजनान्तं च ततो भोज्यासने विभुम् ।
नीत्वा महाहविर्दिव्यमपूपानुपहारकान् ॥१९२॥
निवेद्य तर्पणादीनि ताम्बूलान्तं निवेदयेत् ।
डोलारज्जून् चतुर्दिक्षु गृहीत्वा द्विजसत्तमाः ॥१९३॥
मन्दं मन्दं चालयेयुस्तदानीं देशिकोत्तमः ।
पुंसूक्ताद्यैर्देवदेवं स्तुवन्नुच्चरवैस्तदा ॥१९४॥
कस्तूरीकुङ्कुमाद्यैश्च कर्पूरैः परिभावितम् ।
दिव्यगन्धं तु देवाय समर्प्य च विशेषतः ॥१९५॥
वीजयेयुस्तौलवृन्तैश्चामरैश्च विशेषतः ।
विचित्रकुसुमस्रग्भिर्हेमरत्नसरादिभिः ॥१९६॥
अलङ्कुर्याद्देवदेवं तत्काले द्विजसत्तमाः! ।
विविधानुपहारांश्च पुनराचमनं तथा ॥१९७॥
मुखवाससमोपेतं ताम्बूलं च निवेदयेत् ।

विविधानि च नृत्तानि कुर्युर्वाराङ्गनास्तदा ॥ १९८ ॥
वीणावेणुनिनादैश्च गीतैश्च विविधैस्तदा ।
तोषयेद्देवदेवेशं स्तोत्रैश्च विविधैस्तथा ॥ १९९ ॥
स्तुवन्तु वन्दिनः सर्वे भगवद्भक्तिबृंहिताः ।
एवमन्यैश्च विविधैरुपचारैश्च तोषयेत् ॥ २०० ॥
डोलाचालनवेळायां ये पश्यन्ति श्रियः पतिम् ।
इह ते प्राप्य चाभीष्टान् प्राप्नुवन्ति परां गतिम् ॥२०१॥
ततस्तु देवं देवीभ्यां यानमारोप्य देशिकः ।
धाम प्रदक्षिणं कृत्वा प्रासादान्तः प्रवेशयेत् ॥ २०२॥
सकृत् त्र्यहं वा पञ्चाहं सप्ताहं वा नवाहकम् ।
कृत्वैवमुत्सवं नित्यं सायङ्काले यथाविधि ॥२०३॥
प्राग्वत्कुर्यादुत्सवान्ते कुम्भसम्प्रोक्षणान्तिमम् ।
आचार्यं पूजयेत्प्राग्वद्यजमानस्तु पूर्ववत् ॥२०४॥

इति डोलोत्सवविधिः सङ्क्षेपेण प्रदर्शितः ।
आषाढशुक्लद्वादश्यां स्वापोत्सवमथाचरेत् ॥२०५॥
तदादि कौमुदाख्यस्य यावन्मासस्य तद्दिनम् ।
तपसा योगनिद्रायाः सन्तुष्टो जगदीश्वरः ॥२०६॥
योगनिद्रां प्रभजति लोकरक्षणहेतुना ।
नैमित्तिकान्मासिमासि तथा संवत्सरोत्सवान् ॥२०७॥
विशेषयागसंयुक्तान् सर्वसम्पूरणादृते ।
नान्यं नैमित्तिकं काम्यं कुर्यान्मासचतुष्टये ॥२०८॥
अभीष्टव्रतमाश्रित्य नेतव्यं तच्चतुष्टयम् ।
भगवद्भक्तिनिष्णातैः कार्यं तत्रेदमुच्यते ॥२०९॥
प्रासादस्य पुरोभागे यद्वान्यत्र मुनीश्वराः ।
कल्पयेच्छयनागारं सर्वालङ्कारसंयुतम् ॥२१०॥

सर्वोपकरणैर्युक्तं पर्यङ्काद्युपशोभितम् ।
यद्वा गर्भगृहे विष्णोर्मूलमूर्तेस्तु दक्षिणे ॥२११॥
शयनं कल्पयेद्विप्राः ! सर्वोपकरणैः सह ।
संगृह्य सर्वसम्भारान् दशम्यां द्विजसत्तमाः ! ॥२१२॥
एकादश्यां निशि विभुं चतुस्स्थानेषु पूजयेत् ।
यागमण्टपमासाद्य जागरेण नयेन्निशाम् ॥२१३॥
ब्राह्मे मुहूर्ते सम्प्राप्ते कृतस्नानः कृताह्निकः ।
नित्यार्चनं पुरा कृत्वा चतुस्स्थानार्चनं तथा ॥२१४॥
ततो विसृज्य देवेशं कुम्भमण्डलकुण्डगम् ।
अर्घ्येण गन्धपुष्पाभ्यां धूपेन सुशुभेन च ॥२१५॥
मूलमूर्तिं समभ्यर्च्य तस्माच्छयनकौतुके ।
कूर्चे वा देवमावाह्य श्रीभूमिभ्यां समन्वितम् ॥२१६॥
संस्थाप्य समलंकृत्य अभ्यर्च्य हविरान्तिमम् ।
निशामुखे प्रवृत्ते तु कृत्वा नित्यार्चनं विभोः ॥२१७॥
ततस्तु शयनागारं नीत्वा शयनकौतुकम् ।
ततः शयनदेशे तु पश्चिमे हेमविष्टरे ॥२१८॥
निवेश्य प्राङ्मुखं देवं हविरन्तं समर्चयेत् ।
होमं विधाय विधिवत्कृत्वा होमसमर्पणम् ॥२१९॥
पर्यङ्केनन्तमावाह्य तस्मिन् देवं यथाविधि ।
शाययित्वाथ तस्याग्रे नियमान् शास्त्रचोदितान् ॥२२०॥
सङ्कल्प्य चतुरो मासान् देवस्योत्थापनावधि ।
व्रतानुष्ठाननिरतः प्रत्यहं देवमर्चयेत् ॥२२१॥
सर्वेपि वैष्णवाः कुर्युस्तदादि व्रतमुत्तमम् ।
शयनाङ्गोपचारैश्च प्रत्यहं तोषयेद्विभुम् ॥२२२॥
एवं मासद्वये याते मासि भाद्रपदे द्विजाः ! ।

द्वादश्यां शुक्लपक्षस्य देशिकेन्द्रो निशामुखे ॥२२३॥
विशेषयागपूर्वं तु परिवर्तनमाचरेत् ।
प्रबोधनं ततः कुर्यात् शयनस्थस्य वै विभोः ॥२२४॥
द्वादश्यां शुक्लपक्षस्य कार्तिके मासि तु द्विजाः ! ।
दशम्यां पूर्ववत्सर्वसम्भारान् समुपार्ज्य च ॥२२५॥
एकादश्यां निशायां तु चतुःस्थानस्थितं विभुम् ।
समभ्यर्च्य विशेषेण जागरेण नयेन्निशाम् ॥२२६॥
ब्राह्मे मुहूर्ते द्वादश्यां मन्त्रमूर्तिं प्रबोधयेत् ।
नित्यार्चनं पुरा कृत्वा चतुःस्थानार्चनं तथा ॥२२७॥
ततः शयनमूर्तिं च समभ्यर्च्य विशेषतः ।
स्नानादिहविरन्तं तु गर्भगेहे प्रवेशयेत् ॥२२८॥
विसर्जयेन्मूलमूर्तौ मन्त्रं शयनमूर्तिगम् ।
ततस्तु चौत्सवं बिम्बं देवीभ्यां समलंकृतम् ॥२२९॥
रथादिके समारोप्य यात्रोपकरणैः सह ।
ग्रामप्रदक्षिणं कृत्वा स्वस्थाने सन्निवेशयेत् ॥२३०॥
ततो विसर्जयेद्देवं कुम्भमण्डलकुण्डगम् ।
तदा चाश्रमिणः सर्वे कुर्युर्व्रतविसर्जनम् ॥२३१॥
यजमानोथ गुर्वादीन साधकान् ब्राह्मणानपि ।
हिरण्यैस्तोषयेत्सर्वान् यथाशक्ति द्विजोत्तमाः ! ॥२३२॥
इत्येवमुक्तं देवस्य शयनं च प्रबोधनम् ।
शयनस्थे जगन्नाथे चातुर्मास्यस्य मध्यतः ॥२३३॥
पवित्रारोहणं कुर्यादनन्तस्यातितुष्टिदम् ।

इति श्रीपाञ्चरात्रे ईश्वरसंहितायां
पक्षोत्सवविधिर्नाम
द्वादशोऽध्यायः ॥

## अथ त्रयोदशोऽध्यायः ।

नारदः ।

जन्मोत्सवं च कृष्णस्य शृणुध्वं मुनिपुङ्गवाः ! ।
कृष्णजन्मदिनं त्वेतद्द्विविधं परिकीर्तितम् ॥१॥
जन्माष्टमी जयन्तीति तयोर्भेदस्तु कथ्यते ।
चन्द्रोदयेऽष्टमीयुक्ता सप्तमीकलया विना ॥२॥
रोहिणीरहिता वापि सा हि जन्माष्टमी स्मृता ।
सिंहं गतेर्के सा मुख्या यद्वा श्रावणमासगा ॥३॥
तस्यामभ्यर्चनं विष्णोर्धर्मकामार्थसिद्धिदम् ।
निष्कामो यदि कैवल्यफलदं भवति ध्रुवम् ॥४॥
सूर्योदयेपि सप्तम्या तथा कृत्तिकयापि च ।
कलयापि ह्यविद्धा या रोहिणी द्विजपुङ्गवाः ! ॥५॥
अष्टमीसहिता वापि अष्टमीरहितापि वा ।
तथैव बुधवारेण सहिता रहितापि वा ॥६॥
जयन्ती नाम सा प्रोक्ता जयत्यशुभमित्यसौ ।
अष्टम्यां वा नवम्यां वा दशम्यां वापि रोहिणी ॥७॥
अविद्धा यदि लभ्येत कलामात्रापि वैष्णवैः ।
ग्राह्या कदापि विद्धा तु न ग्राह्या वैष्णवोत्तमैः ॥८॥
मृगशीर्षं तु वा ग्राह्यं शुद्धर्क्षस्य ह्यभावतः ।
सिंहभाद्रपदे मुख्या जयन्ती सिंहगापि वा ॥९॥
तस्मिन् मासे मुनिश्रेष्ठाः ! यदा ऋक्षद्वयं भवेत् ।
परत्रैवोत्सवं कुर्यान्महापातकनाशनम् ॥१०॥
पश्चाच्चेद्रोहिणी विद्धा पूर्वस्यैव समाचरेत् ।
एवमेव हि सङ्क्रान्तिनेभत्यागोऽपि शस्यते ॥११॥

दिवा सङ्क्रान्तियोगश्चेज्जयन्तीं पूर्वतस्त्यजेत् ।
परतो निशि योगे तु त्यजेद्योगान्वितामपि ॥१२॥
उभयोः क्रान्तिवेधश्चेज्जयन्त्योर्मुनिसत्तमाः ! ।
उत्सवं मृगशीर्षे वा पूर्वमेव समाचरेत् ॥१३॥
एवं जयन्त्यां रामस्य नरसिंहवराहयोः ।
वामनादिजयन्त्यामप्येवमेव विनिर्णयः ॥१४॥
जयन्त्यां तत्र कृष्णस्य दिवोपोष्य विशेषतः ।
रात्रावभ्यर्चनं कुर्यात्तद्विधानमिहोच्यते ॥१५॥
नित्यकर्माणि निर्वर्त्य सायं देशिकसत्तमः ।
भगवद्गृहमासाद्य कृत्वा नित्यार्चनं पुरा ॥१६॥
प्रासादस्य पुरोभागे मण्टपं परिकल्पयेत् ।
क्लप्तं वा मण्टपं पूर्वमलङ्कुर्याद्विशेषतः ॥१७॥
चतुर्द्वारसमायुक्तं ध्वजतोरणभूषितम् ।
वितानैर्विविधैश्चित्रैः सर्वतः परिशोभितम् ॥१८॥
परितश्चित्रकौशेयमहायवनिकान्वितम् ।
मुक्तासरैश्च विविधपुष्पमाल्यैर्विराजितम् ॥१९॥
कदलीजम्बुजम्बीरनाळिकेरफलादिभिः ।
रम्भास्तम्भैः पूगफलस्तवकैः समलङ्कृतम् ॥२०॥
दर्पणैर्दीपमालाभिः शोभितं धूपधूपितम् ।
कुङ्कुमागरुकस्तूरीसमालिप्तमहीतलम् ॥२१॥
सुधाचूर्णादिभिश्चित्रैः परितः समलंकृतम् ।
मध्ये प्रविलसद्दिव्यरत्नविष्टरशोभितम् ॥२२॥
एवं पूर्वमलंकृत्य मण्टपं तु ततः परम् ।
कृष्णबिम्बं समानीय विन्यसेद्भद्रविष्टरे ॥२३॥
अर्घ्यादिभिः समभ्यर्च्य ततस्तु तदनुज्ञया ।

पुष्पाङ्कुरं निधायाथ रक्षाबन्धं समाचरेत्॥२४॥
देवस्यैशानभागे तु महाकुम्भं तु विन्यसेत् ।
मण्डलं तु पुरोभागे समालिख्य यथाविधि ॥२५॥
मण्टपस्य पुरोभागे कुण्डं तु परिकल्पयेत् ।
एवं सर्वं समापाद्य यावच्चन्द्रोदयं गुरुः ॥२६॥
देवस्य दक्षिणे पार्श्वे जपन्नष्टाक्षरं मनुम् ।
गापयन् कृष्णमाहात्म्यं तथान्या वैष्णवीः कथाः॥२७॥
गानैर्नृत्तैर्विनोदैश्च तोषयेज्जगतां पतिम् ।
उदिते तु निशानाथे जन्मकाले जगत्पतेः ॥२८॥
कुम्भे च मण्डले कृष्णं यथोक्तविधिना यजेत् ।
ततो बिम्बे समभ्यर्च्य देवं मन्त्रासन्नान्तिमम् ॥२९॥
एकाशीतिघटैर्देवं स्नापयेद्धोमपूर्वकम् ।
पञ्चविंशतिकुम्भैर्वा स्नापयेत्तु यथाविधि ॥३०॥
अलङ्कारासनं नीत्वा समभ्यर्च्य विशेषतः ।
कृत्वा नीराजनान्तं च ततो भोज्यासनं नयेत् ॥३१॥
अर्घ्यादिभिः समभ्यर्च्य अर्हणं च समर्पयेत् ।
मधुपर्कं निवेद्याथ नवनीतं च शर्कराम् ॥३२॥
गोक्षीरं घृतसंयुक्तं फलानि विविधानि च ।
पृथुकादींश्चोपहारान् गुडखण्डान्वितानपि ॥३३॥
माषैर्मुद्गैस्तिलयवैर्दधिमध्वाज्यदुग्धकैः ।
हरिद्राजीरकैलाद्यैर्योजितानि विशेषतः ॥३४॥
विविधानि च भक्ष्याणि गोघृतैः पाचितानि च ।
क्रमादष्टविधान्नानि सुशृतं क्षीरमुत्तमम् ॥३५॥
शीतलं तर्पणजलं पानकं च विशेषतः ।
भक्ष्यं भोज्यं तथा लेह्यं पेयं चापि ह्यनेकशः ॥३६॥

निवेद्य देवदेवाय मात्रान्तं देशिकोत्तमः ।
मुखवाससमोपेतं ताम्बूलं विनिवेद्य च ॥३७॥
कृत्वाथ जपयज्ञान्तं गत्वा कुण्डसमीपकम् ।
तत्र प्रतिष्ठिताग्नौ तु योगपीठं प्रकल्पयेत् ॥३८॥
तन्मध्ये कृष्णमावाह्य सकलीकृत्य मन्त्रवित् ।
कृत्वा सप्तसमिद्धोमं ततः पूर्णां निवेदयेत् ॥३९॥
ततो देवं विसृज्याग्नेरग्निं च विसृजेद्गुरुः ।
ततस्तु देवदेवाय कृत्वा होमसमर्पणम् ॥४०॥
अर्घ्यदानं विशेषेण कुर्यात्सर्वफलप्रदम् ।
तद्विधानं प्रवक्ष्यामि देवस्य पुरतो भुवि ॥४१॥
गोमयेनोपलिप्याथ वृत्ताकारं सुशोभनम् ।
सुधाचूर्णैरलंकृत्य गन्धपुष्पाक्षतैः फलैः ॥४२॥
तन्मण्डले तु रोहिण्या सह चन्द्रं समर्चयेत् ।
ततस्तस्मै नमस्कुर्यान्मन्त्रेणानेन वै द्विजाः! ॥४३॥
ज्योत्स्नांपते ! नमस्तुभ्यं नमस्ते ज्योतिषां पते ! ।
नमस्ते रोहिणीकान्त ! सुधाकुम्भ ! नमोस्तु ते ॥४४॥
इति चन्द्रं नमस्कृत्य दद्यादर्घ्यं ततः परम् ।
शङ्खे तोयं समापूर्य गोक्षीरेण विमिश्रितम् ॥४५॥
शङ्खाग्रे चन्द्रमभ्यर्च्य तन्मूले कृष्णमर्चयेत् ।
हस्ताभ्यां शङ्खमादाय सपुष्पफलचन्दनम् ॥४६॥
जानुभ्यामवनिं स्पृष्ट्वा चन्द्रायार्घ्यं निवेदयेत् ।
क्षीरोदार्णवसम्भूत ! अत्रिनेत्रसमुद्भव ! ॥४७॥
गृहाणार्घ्यं शशाङ्केदं रोहिण्या सहितो मम ।
इति चन्द्रायार्घ्यदानं कृष्णसन्तोषकारणम् ॥४८॥
प्रीणनं सर्वदेवानां सर्वसस्यविवृद्धिदम् ।

कृष्णायार्घ्यं ततो दद्यान्मन्त्रेणानेन वै द्विजाः ! ॥४९॥
जातः कंसवधार्थाय भूभारोत्तारणाय च ।
पाण्डवानां हितार्थाय धर्मसंस्थापनाय च ॥५०॥
कौरवाणां विनाशाय दैत्यानां निधनाय च ।
गृहाणार्घ्यं मया दत्तं देवक्या सहितो हरे ! ॥५१॥
इति कृष्णायार्घ्यदानं राजराष्ट्राभिवृद्धिदम् ।
सर्वसम्पत्करं चैव सर्वलोकहितार्थकृत् ॥५२॥
यजमानोपि वा दद्यादर्घ्यमेवं जगत्प्रभोः ।
इह सर्वाभीष्टसिद्ध्यै परत्र च सुखाप्तये ॥५३॥
तत्काले देशिकादिभ्यो गोभूस्वर्णान्यनेकशः ।
दद्याद्देवस्य सन्तुष्ट्यै यजमानो विशेषतः ॥५४॥
अथोपहारैर्विविधैस्ताम्बूलाद्यैश्च देशिकः ।
जपस्तोत्रादिभिश्चैव तोषयेत्तु श्रियः पतिम् ॥५५॥
निवेदितान्नभक्ष्यादीन् चतुर्धा विभजेत्ततः ।
आचार्यः स्वयमादद्यादेकांशं तु ततस्त्रिभिः ॥५६॥
मूर्तिपान् वैष्णवानन्यान् भक्तान् भागवतोत्तमान् ।
तोषयित्वा ततः सर्वांस्ताम्बूलाद्यैश्च तोषयेत् ॥५७॥
कुम्भस्थं मण्डलस्थं च प्राग्वद्देवं विसर्जयेत् ।
ततस्तु देवदेवस्य शयनं कारयेद्गुरुः ॥५८॥
रम्ये तु मण्टपे डोलां कृत्वा मणिमयीं शुभाम् ।
मृदूपधानतूलाढ्यां स्वर्णरज्जुविलम्बिताम् ॥५९॥
सौवर्णकिङ्किणीयुक्तां मुक्तादामाविलम्बिताम् ।
कस्तूरीकुङ्कुमाद्यैश्च वासितां धूपधूपिताम् ॥६०॥
तत्रानन्तं समभ्यर्च्य देवमारोपयेद्गुरुः ।
शयनासनभोगैस्तु देवं तत्र समर्चयेत् ॥६१॥

एवं हि शयनान्तं तु कृत्वा चैकदिनोत्सवम्।
अनुयागं ततः कुर्यादाचार्यो वैष्णवैः सह ॥६२॥
वैष्णवानामुत्सवान्ते पारणं विहितं द्विजाः!।
यद्वा फलेच्छया कार्यं पारणं तु परेहनि ॥६३॥
ततोऽवशिष्टयामिन्यामाचार्यो देवसन्निधौ ।
भक्तैर्भागवतैः सार्धं गापयन् वैष्णवीः कथाः ॥६४॥
गानैर्नृत्तैस्तथा हास्यैर्जागरेण नयेन्निशाम्।
ततः प्रभाते त्वाचार्यः कृतस्नानः कृताह्निकः ॥६५॥
देवमुत्थाप्य विधिवन्नित्यपूजां समाचरेत् ।
विशेषेणार्चयेद्देवं स्नानाद्यैर्हविरान्तिमैः ॥६६॥
ततः कृष्णमलंकृत्य विविधैर्वस्त्रभूषणैः ।
दिव्ये तु कुञ्जरे वाश्वे शिबिकायां रथेपि वा ॥६७॥
समारोप्य दृढीकृत्य ह्यलंकृत्य विशेषतः।
उत्सवं देवदेवस्य कुर्याद्ग्रामप्रदक्षिणम् ॥६८॥
विचित्रैर्दारुरचितैश्चतुस्स्तम्भैर्मनोहरैः ।
चित्रवस्त्रवितानाढ्यैः फलपल्लवसंयुतैः ॥६९॥
मध्यालम्बिक्षीरघटैर्नवनीतघटान्वितैः ।
दधिभाण्डान्वितैश्चैव तोरणैर्विविधैस्तदा ॥७०॥
चित्रध्वजपताकाभिः पुष्पमालाशतान्वितैः ।
वितानैः फलभारैश्च रम्भास्तम्भादिभिस्तथा ॥७१॥
अलङ्कृतासु सिक्तासु दिव्यकुङ्कुमवारिभिः।
सुधाचूर्णालंकृतासु कीर्णासु कुसुमाक्षतैः ॥७२॥
दिव्यधूपैर्धूपितासु वीथीषु द्विजसत्तमाः!।
शनैः शनैर्देवदेवं सविलासं नयेत्तदा ॥७३॥
छत्रध्वजपताकाभिर्वन्दिभिर्गणिकादिभिः।

वाद्यघोषैर्वेदघोषैर्भक्तैर्भागवतोत्तमैः ॥७४॥
तैलं च रजनीचूर्णं विकिरद्भिः परस्परम् ।
नवनीतं च दधि च क्षीरं च कुसुमादिकम् ॥७५॥
क्षिपद्भिश्च हसद्भिश्च भक्षयद्भिश्च कैश्चन ।
अर्थीन् सन्तोषयद्भिश्च नवनीतघृतादिकैः ॥७६॥
ताम्बूलं रजनीचूर्णं ददद्भिः पौरयोषिताम् ।
विकिरद्भिः पुष्पगन्धैः कुङ्कुमैः कृष्णमव्ययम् ॥७७॥
हस्तमुद्धृत्य कूजद्भिस्तथा गोपालबालकैः ।
दध्यादिभाण्डान् भिन्दद्भिः कृष्णस्य पुरतो भुवि ॥७८॥
पिबद्भिः क्षीरदध्यादीन् किरद्भिश्च परस्परम् ।
आस्वाद्य नवनीतं च क्षिपद्भिर्बहुधा मिथः ॥७९॥
रोहद्भिस्तोरणस्तम्भान् नृत्यद्भिर्गर्जितैर्मुहुः ।
आभीरकुलजैर्युक्तैः कृष्णानुचरभावतः ॥८०॥
यन्त्रस्थभाण्डान् दण्डेन ताडयद्भिर्मुहुर्मुहुः ।
तत्र भाण्डस्रुतां धारां पिबद्भिश्च पदे पदे ॥८१॥
एवं क्रीडारतैर्भक्तैर्विनोदैरेवमादिभिः ।
ग्रामप्रदक्षिणं कृत्वा मन्दिरान्तः प्रवेशयेत् ॥८२॥
आस्थानमण्टपं नीत्वा देवं वै हेमविष्टरे ।
समारोप्य समभ्यर्च्य विविधैरुपहारकैः ॥८३॥
ताम्बूलाद्युपचारैश्च देवमन्तः प्रवेशयेत् ।
सकृत् त्र्यहं वा पञ्चाहं सप्ताहं वा नवाहकम् ॥८४॥
पक्षं मासं तु वा चैवमुत्सवैस्तोषयेद्विभुम् ।
स्वतन्त्रं परतन्त्रं वा कृष्णमेवं समर्चयेत् ॥८५॥
अभावे कृष्णबिम्बस्य तत्तत्प्रासादसंस्थितम् ।
देवमेवार्चयेद्भक्त्या जयन्त्यां तु विशेषतः ॥८६॥

एवं नृसिंहं रामं च वराहं वामनादिकान्।
तत्तज्जन्मदिने सम्यग्विशेषस्नपनेन तु ॥८७॥
महता हविषा चैव चतुःस्थानेषु पूजयेत्।
कुम्भे च मण्डले बिम्बे वह्नौ च यजनं विभोः ॥८८॥
मुख्ये कल्पे प्रकुर्वीत ह्यनुकल्पे तु मण्डलम्।
विना कुम्भादिषु यजेद्बिम्बवह्न्योस्तु वा यजेत् ॥८९॥
इत्थं यः कारयेद्भक्त्या जयन्त्युत्सवमुत्तमम्।
इहेप्सितार्थान् सम्पाद्य सायुज्यं पदमाप्नुयात् ॥९०॥
अथ चाश्वयुजे मासि कर्तव्यं सर्वसिद्धिदम्।
श्रीलक्ष्म्युत्सवविधिं वक्ष्यामि मुनिसत्तमाः! ॥९१॥
तस्मिन् मासि सिते पक्षे ह्यष्टमीकलयापि वा।
अविद्धायां नवम्यां तु श्रीदेव्युत्सवमाचरेत् ॥९२॥
तद्वासरानुसारेण नवाहोत्सवमाचरेत्।
तिथिलोपे ह्यमावास्यां आरभ्योत्सवमाचरेत् ॥९३॥
वृद्धौ द्वितीयामारभ्य नवाहोत्सवमाचरेत।
सप्ताहं वापि पञ्चाहं त्र्यहमेकाहमेव वा ॥९४॥
आचरेदुत्सवं लक्ष्म्याः फलकामनया द्विजाः!।
नवाहं वैष्णवं प्रोक्तं सप्ताहं त्वार्षकं भवेत् ॥९५॥
पञ्चाहं त्वैन्द्रकं प्रोक्तं त्रियहं शैवमुच्यते।
एकाहमुत्सवं ब्राह्मं पञ्चधैवं प्रकीर्तितम् ॥९६॥
ब्राह्मं वै ब्रह्मसिद्ध्यर्थं शैवं रोगविनाशनम्।
ऐन्द्रं दुर्भिक्षनाशार्थमार्षं राष्ट्राभिवृद्धिदम् ॥९७॥
वैष्णवं तूत्सवं प्रोक्तं भक्तिमुक्तिफलप्रदम्।

१— भुक्ति—इति—(पा)

उत्सवारम्भपूर्वेद्युर्निशायामङ्कुरार्पणम् ॥९८॥
रक्षाबन्धं च विधिवत्कुर्याद्देशिकसत्तमः ।
आरम्भे चावसाने च अधमोत्तममार्गतः ॥९९॥
संस्थापयेच्छ्रियं देवीं श्रीमन्त्रेणैव देशिकः ।
प्रत्यहं नित्यपूजान्ते विशेषार्चनमाचरेत् ॥१००॥
कुम्भे च मण्डले बिम्बे वह्नौ चापि यथाविधि ।
तत्र तत्र विशेषो यः कथ्यते सम्प्रति द्विजाः! ॥१०१॥
कुम्भार्चने श्रियं देवीं मध्यकुम्भे समर्चयेत् ।
सुदर्शनं तु वर्धन्यां प्राग्वदेव समर्चयेत् ॥१०२॥
लक्ष्मीः कीर्तिर्जया माया उपकुम्भाष्टके द्विजाः! ।
प्रभवाप्यययोगेन पूज्याः प्रागादिषु क्रमात् ॥१०३॥
तत्र द्वारार्चनविधिं शृणुध्वं मुनिपुङ्गवाः! ।
वास्त्वीशक्षेत्रपालौ द्वौ सर्वद्वारेषु पूजयेत् ॥१०४॥
लक्ष्मीः कीर्तिर्जया माया द्वारेपूर्ध्वस्थिताः क्रमात् ।
सृष्टिर्लज्जा जया माया साविली च क्षमा तथा ॥१०५॥
शुद्धाऽशुद्धा तथा द्वे द्वे प्रागादिद्वारशाखयोः ।
तथाऽऽदिद्वार[1]कुम्भेषु ज्येष्ठाविध्योस्तथैव च ॥१०६॥
श्रद्धाकान्त्योः क्रियासृष्ट्योः क्षमामूर्तिजयाख्ययोः ।
क्रमाद्द्वन्द्वप्रयोगेण पूजनं तु समाचरेत् ॥१०७॥
चण्डीं चैव प्रचण्डीं च पूर्वद्वारे प्रपूजयेत् ।
दक्षिणोत्तरयोगेन तोरणस्तम्भमूलयोः ॥१०८॥
बलाकिनीं दक्षिणे तु यजेच्च वनमालिनीम् ।
विभीषिकां शाङ्करीं च पश्चिमे सम्प्रपूजयेत् ॥१०९॥

---

१— दिग्द्वार—इति —(पा)

तथैव चोत्तरद्वारे शङ्खपद्मनिधी यजेत् ।
सत्यादींश्च पताकासु इन्द्रादींश्च यथाक्रमम् ॥११०॥
प्राग्वदेवार्चयेद्विप्राः ! अयं द्वारार्चनक्रमः ।
प्रातर्विशेषयागान्ते उत्सवं च समाचरेत् ॥१११॥
सौवर्णशिविकायाने अथ वा पुष्पमण्टपे ।
श्रियं देवीं समारोप्य ह्यलङ्कृत्य विशेषतः ॥११२॥
सर्वैर्यात्रोपकरणैर्नयेद्ग्रामप्रदक्षिणम् ।
एवं कृत्वोत्सवं पश्चाद्देवीमास्थानमण्टपे ॥११३॥
हेमपीठे समारोप्य ह्यलङ्कारासनोदितैः ।
भोगैः क्रमेण सम्पूज्य नयेद्भोज्यासनं ततः ॥११४॥
अर्घ्यादीनर्हणं चापि मधुपर्कं समर्पयेत् ।
मुद्गान्नपायसादीनि भक्ष्याणि विविधानि च ॥११५॥
पृथुकादींश्चोपहारान् श्रियै देव्यै निवेदयेत् ।
शीतलं तर्पणं चैव नाळिकेररसं तथा ॥११६॥
समर्प्य दद्यात्ताम्बूलं मुखवाससमन्वितम् ।
जपयज्ञं ततः कुर्याल्लक्ष्मीमन्त्रेण मन्त्रवित् ॥११७॥
निवेदितं तु यद्द्रव्यं चतुर्धा विभजेत्ततः ।
तेष्वेकांशं समादाय आचार्याय प्रदापयेत् ॥११८॥
शिष्टानंशांस्तथा सर्वान् भक्तेभ्यश्च प्रदापयेत् ।
स्तोत्रैश्च विविधैर्नृत्तैः गीतैर्वाद्यरवैः सह ॥११९॥
तदा सन्तोषयेल्लक्ष्मीं सर्वाभीष्टफलप्रदाम् ।
एवं कृत्वा ततो लक्ष्मीं प्रासादान्तः प्रवेशयेत् ॥१२०॥
एवं प्रतिदिनं कुर्यान्नवम्यन्तं महोत्सवम् ।
सायं प्रातश्चतुःस्नानपूजनेन समन्वितम् ॥१२१॥
नवमीदिवसे प्राप्ते प्राग्वत्कृत्वोत्सवादिकम् ।

रात्रौ विशेषयागान्ते कुण्डमण्डलमध्यगाम् ॥१२२॥
श्रियं विसृज्य हृदये कुम्भं देव्यास्तु सन्निधिम् ।
समानीय समभ्यर्च्य श्रियं श्रीसूक्तमुच्चरन् ॥१२३॥
कुम्भतोयेन सम्प्रोक्ष्य कौतुकं च विसृज्य च ।
हविरन्तं समभ्यर्च्य प्रणिपत्य क्षमापयेत् ॥१२४॥
यजमानो दक्षिणाभिराचार्यादीन् प्रतोषयेत् ।
एवं यः कारयेद्भक्त्या महानवमिकोत्सवम् ॥१२५॥
आयुष्यारोग्यमैश्वर्यं तेजः कीर्तिं च सन्ततिम् ।
सर्वाभीष्टांश्च सम्प्राप्य ब्रह्मसायुज्यमाप्नुयात् ॥१२६॥
तदन्येद्युर्दशम्यां तु देवस्य मृगयोत्सवम् ।
वक्ष्यमाणेन विधिना कुर्याद्राष्ट्राभिवृद्धिदम् ॥१२७॥
नवम्यामेव देवस्य तुरगं च विशेषतः ।
अलङ्कृतं तथास्त्रौघं देवस्य धनुरादिकम् ॥१२८॥
वाहयंस्तु नदीतीरं सरस्तीरमथापि वा ।
समानीयाथ संस्थाप्य तुरगं चायुधादिकम् ॥१२९॥
अलङ्कृत्य विशेषेण माल्यैर्वस्त्रादिकैस्तथा ।
छत्रध्वजपताकाद्यैर्नृत्तवाद्यरवैः सह ॥१३०॥
ग्रामप्रदक्षिणं नीत्वा आलयं सम्प्रवेशयेत् ।
तत्र देवस्य तुरगं तार्क्ष्यमन्त्रेण मन्त्रवित् ॥१३१॥
समभ्यर्च्यार्घ्यगन्धाद्यैर्हविरन्तं समर्चयेत् ।
आयुधान्यर्चयेत्तद्वत्तत्तन्मन्त्रेण देशिकः ॥१३२॥
दशम्यां देवदेवस्य कृत्वा नित्यार्चनं पुरा ।
यात्रामूर्तिगतं देवं नयेदास्थानमण्टपम् ॥१३३॥
तं देवं तत्र संस्थाप्य पञ्चविंशतिभिर्घटैः ।
अलङ्कारासनेऽभ्यर्च्य निवेद्य च महाहविः ॥१३४॥

देवमश्वे समारोप्य ततस्तु मृगयोचितैः ।
अलङ्कारैरलङ्कृत्य यात्रोपकरणैः सह ॥१३५॥
भक्तैर्भागवतैः सार्धं सन्नद्धैः सायुधैर्भटैः ।
महावनं समानीय तत्र तत्र विशेषतः ॥१३६॥
वानप्रस्थैस्तापसाद्यैरर्पितानि च भक्तितः ।
कन्दमूलफलादीनि विविधाः कुसुमस्रजः ॥१३७॥
समर्प्य देवदेवाय वह्निवृक्षसमीपतः ।
नीत्वा प्रदक्षिणीकृत्य देवं तत्र प्रपादिके ॥१३८॥
भद्रासने समावेश्य वह्निवृक्षस्य मूलतः ।
आयुधानि समभ्यर्च्य पुण्याहोक्तिपुरस्सरम् ॥१३९॥
शमीपत्रं तु सङ्गृह्य मूलमन्त्रेण देशिकः ।
दत्वा देवस्य शिरसि अर्घ्याद्यैः सम्प्रपूज्य च ॥१४०॥
ताम्बूलं विनिवेद्याथ देशिकस्तदनुज्ञया ।
धनुर्बाणान् समादाय सर्वदिग्विजयाय च ॥१४१॥
सर्वशत्रुविनाशाय राजराष्ट्राभिवृद्धये ।
चतुर्दिक्षु चतुर्बाणान् ऊर्ध्वेऽधश्च शरद्वयम् ॥१४२॥
प्रयुञ्जेदस्त्रमन्त्रेण धन्वनागेति वा ऋचा ।
ततोऽर्चयेद्देवदेवं विविधैरुपहारकैः ॥१४३॥
सायङ्काले तु सम्प्राप्ते आरोप्याश्वे जगत्प्रभुम् ।
प्रदीपशतसंयुक्तं नानावाद्यसमन्वितम् ॥१४४॥
ग्रामप्रदक्षिणं देवं मन्दिरान्तः प्रवेशयेत् ।
देवेशं नवभिः कुम्भैः स्नाप्यालंकृत्य देशिकः ॥१४५॥
श्रीपुष्टिभ्यां सह विभुं हविरन्तं समर्चयेत् ।
एवं दशम्यां कर्तव्यमुत्सवं च प्रकीर्तितम् ॥१४६॥
अतः परं प्रवक्ष्यामि दीपोत्सवमनुत्तमम् ।

वृश्चिकस्थे दिनकरे पौर्णमासी तु या द्विजाः ! ॥१४७॥
चतुर्दश्या भरण्याश्च कलयाप्यरुणोदये ।
अविद्धा कृत्तिकायुक्ता ह्ययुक्ता वा मुनीश्वराः! ॥१४८॥
तस्यां वृषभकाले तु दीपारोपणमाचरेत् ।
द्वयोरह्नोः सङ्गतिश्चेत्पर्वणस्त्वन्तिमे दिने ॥१४९॥
आद्यं पर्व कालामात्रमपि दीपोत्सवादिके ।
दीपं कुर्यात्प्रतिपदि त्वलब्धौ शुद्धपर्वणः ॥१५०॥
पर्वद्वये तु सम्प्राप्ते तस्मिन्मासे द्विजोत्तमाः! ।
दीपोत्सवं तु मासान्तपर्वण्येव समाचरेत् ॥१५१॥
तस्मिन् सङ्क्रान्तिदुष्टे तु पूर्वमेव समाचरेत् ।
उभयत्रापि सङ्क्रान्तौ कृत्तिकाभिः समन्विते ॥१५२॥
पर्वण्येव मुनिश्रेष्ठाः ! दीपारोपणमाचरेत् ।
पर्वद्वयं कृत्तिकाभिरयुक्तं चेत्तदा द्विजाः ! ॥१५३॥
रोहिण्या वापि संयुक्ते पर्वण्युत्सवमाचरेत् ।
रोहिण्या अप्ययोगे तु तदा मासान्तपर्वणि ॥१५४॥
सङ्क्रान्तियोगदुष्टेपि दीपारोपणमाचरेत् ।
अथ चन्द्रोपरागेण दुष्टं पर्व यदि द्विजाः ! ॥१५५॥
प्राक्पश्चादुपरागस्य सन्त्यक्त्वा सप्त नाडिकाः ।
दीपं रात्र्यन्तरे कुर्याद्राजराष्ट्रसुखावहम् ॥१५६॥
एवं सम्यग्विचार्याथ कुर्याद्दीपोत्सवं बुधः ।
तद्विधानं विस्तरेण वक्ष्यामि मुनिसत्तमाः ! ॥१५७॥
तद्दिने देवदेवस्य मन्दिरं सर्वतो द्विजाः ! ।
प्रासादभागमारभ्य बहिरावणान्तिमम् ॥१५८॥
संक्षाळयेच्छुद्धतोयैर्ब्राह्मणैः परिचारकैः ।
शलाकासहितैर्दर्भैः सहदेवीविमिश्रितैः ॥१५९॥

मार्जयेत्सर्वतस्तत्रालेपयेद्गोमयाम्बुभिः ।
अस्त्रेण प्रोक्षयेत्पश्चात्पञ्चगव्यकुशाम्बुभिः ॥१६०॥
सुधाचूर्णैरलङ्कृत्य विकिरेदक्षतैर्भुवम् ।
वितानैः पुष्पमालाभिरलङ्कृत्य च सर्वतः ॥१६१॥
चन्दनागरुकर्पूरधूपैः सर्वत्र धूपयेत् ।
ततोपराह्ने सम्प्राप्ते देशिको मूर्तिपैः सह ॥१६२॥
प्रासादं सम्प्रविश्याथ मूलबिम्बगतं विभुम् ।
समभ्यर्च्यार्घ्यगन्धाद्यैस्तस्मादुत्सवकौतुके ॥१६३॥
समावाह्य समभ्यर्च्य श्रीपुष्टिभ्यां समन्वितम् ।
यात्राबिम्बं भद्रपीठे निवेश्यास्थानमण्टपे ॥१६४॥
पुष्पाङ्कुरं ततः कृत्वा मूलबिम्बादिषु द्विजाः! ।
रक्षाबन्धं च विधिवत्कृत्वा देशिकसत्तमः ॥१६५॥
चतुस्स्थानार्चनं कुर्याद्यथोक्तविधिना ततः ।
संस्नापयेत्तदा देवं पञ्चविंशतिभिर्घटैः ॥१६६॥
महता हविषा चैव अपूपैरुपहारकैः ।
अभ्यर्च्य देवदेवेशं कुर्याद्दीपाधिवासनम् ॥१६७॥
मूलबिम्बस्य पुरतो धान्यपीठं प्रकल्पयेत् ।
सौवर्णं राजतं वापि ताम्रं मृण्मयमेव वा ॥१६८॥
दीपपात्रं समादाय तस्मिन्नाढकसम्मितम् ।
गव्यमाज्यं समापूर्य वर्तिं तन्मध्यतो न्यसेत् ॥१६९॥
नूतनैर्वस्त्रखण्डैर्वा कृतां कार्पासतन्तुभिः ।
तत्पात्रं धान्यपीठोर्ध्वे विन्यस्य मुनिपुङ्गवाः! ॥१७०॥
तत्पात्रपरितश्चाष्टौ शरावान् घृतपूरितान् ।
सवर्तिकान् न्यसेत्तत्र प्रागादिषु यथाक्रमम् ॥१७१॥
पुण्याहं वाचयित्वा तु प्रोक्षयेदस्त्रवारिणा ।

प्रदोषे दीपपात्राणि वाहयन् दीक्षितैर्द्विजैः ॥१७२॥
गत्वा कुण्डसमीपं तु तत्र कुण्डस्थवह्निना ।
दीपान् प्रज्वाल्य नेत्रेण वाहयन् ब्राह्मणैस्तदा ॥१७३॥
वेदघोषैर्वाद्यघोषैः साकं धामप्रदक्षिणम् ।
कृत्वा देवस्य पुरतः प्राग्वत्पीठे तु विन्यसेत् ॥१७४॥
नेत्रेण वाग्निमन्त्रेण दीपमर्घ्यादिभिर्यजेत् ।
ततः शुभे मुहूर्ते तु वृषलग्ने गुरूत्तमः ॥१७५॥
देवमर्घ्यादिनाभ्यर्च्य दीपपात्रं समुज्वलम् ।
आदाय नेत्रमन्त्रेण उद्दीप्यस्वेति वा ऋचा ॥१७६॥
प्रदर्श्य देवदेवाय सर्वमङ्गळसंयुतम् ।
परिचारकहस्ते तद्दीपं दत्वा ततो गुरुः ॥१७७॥
तेन द्वारेषु सर्वेषु मण्टपावरणेषु च ।
विन्यस्ता दीपिकाः सर्वा दीपयेद्द्विजपुङ्गवाः ! ॥१७८॥
तदानींमौत्सवं विम्बं श्रीपुष्टिभ्यां समन्वितम् ।
यानमारोप्य वस्त्राद्यैरलंकृत्य विशेषतः ॥१७९॥
यात्रोपकरणैः सार्धं प्रदीपानां सहस्रकैः ।
अधीयानैर्द्विजश्रेष्ठैर्मन्त्राननलदेवतान् ॥१८०॥
प्रथमावरणाद्येषु सर्वेष्वावरणेष्वपि ।
भ्रामयेद्देवदेवेशं प्रादक्षिण्येन वै द्विजाः ! ॥१८१॥
देवस्योत्सववेळायां सर्वत्रावरणादिषु ।
दीपा नानाविधाकाराः कल्पनीयाः समन्ततः ॥१८२॥
तथा प्रासाददिग्भागे मण्टपे गोपुरेषु च ।
श्रियादीनां मन्दिरेषु परिवारालयेषु च ॥१८३॥
धनधान्यादिगेहेषु तथा पुष्पालयादिके ।
दीपारोपं तदा कुर्याद्यात्राबिम्बस्य सन्निधौ ॥१८४॥

ततस्तु देवदेवेशं गोपुरद्वारमानयेत् ।
तत्र द्विजाः ! वक्ष्यमाणं विष्णुदीपं प्रकल्पयेत् ॥१८५॥
शैलजं लोहजं वापि दारुजं वा यथारुचि ।
प्रासादोच्छ्रयमानं वा शततालमथापि वा ॥१८६॥
तदर्धं वा तदर्धं वा दीपस्तम्भं समाचरेत् ।
चतुर्धा विभजेत् स्तम्भं एकांशं चतुरश्रकम् ॥१८७॥
त्र्यंशं तूर्ध्वे षोडशाश्रमष्टाश्रं वृत्तमेव वा ।
एकहस्तं द्विहस्तं वा त्रिहस्तं वा घनं तथा ॥१८८॥
स्तम्भाग्रे चतुरश्रं च पीठं कुर्यात्सपद्मकम् ।
तथा स्तम्भमलंकृत्य पत्रपुष्पलताचयैः ॥१८९॥
आहृत्यैवंविधं स्तम्भं बहिर्द्वारस्य बाह्यतः ।
संस्थापयेदन्तरालं स्तम्भगोपुरयोर्भवेत् ॥१९०॥
द्वात्रिंशद्धस्तमानं वा चतुर्विंशत्करं तु वा ।
रथयात्राऽविरोधेन ततोऽप्यधिकमेव वा ॥१९१॥
यद्वा स्तम्भं गोपुरान्तः स्थापयेन्मुनिपुङ्गवाः ! ।
पीठगोपुरयोर्मध्ये यद्वा स्तम्भं प्रकल्पयेत् ॥१९२॥
स्तम्भमूले चतुर्हस्तं त्रिहस्तं वायतं द्विजाः ! ।
तावन्मानेन विस्तीर्णं द्वित्रिहस्तोच्छ्रितं द्विजाः ! ॥१९३॥
सार्धहस्तोच्छ्रितं वापि चतुरश्रं तु पीठकम् ।
शिलाभिरिष्टिकाभिर्वा कल्पयेन्मुनिपुङ्गवाः ! ॥१९४॥
स्तम्भाधस्तात्पूर्वभागे सिंहं दक्षे तु मारुतिम् ।
पश्चिमे वैनतेयं चाप्युत्तरे हंसमालिखेत् ॥१९५॥
एवं कृते दीपदण्डे यथाशास्त्रं सुशोभने ।
मुहूर्ते तार्क्ष्यमन्त्रेण पूर्वमेव प्रतिष्ठिते ॥१९६॥
तदा पूर्वोदितं दीपपात्रमारोपयेद्द्विजैः ।

इत्येव विष्णुदीपस्य विधानं सम्प्रकीर्तितम् ॥१९७॥
एवं कृत्वा ततो देवं नयेद्ग्रामप्रदक्षिणम् ।
तत्र तत्र ग्रामवीथ्यां दीपारोपणमाचरेत् ॥१९८॥
तीर्थतीरेषु चोद्याने कूपतीरादिषु द्विजाः ! ।
चत्वरेषु च सर्वत्र दीपारोपणमाचरेत् ॥१९९॥
गृहे गृहे तथा कुर्याद्भ्रमयन् सर्ववीथिकाः ।
ततस्तु देवदेवेशं मन्दिरान्तः प्रवेशयेत् ॥२००॥
आस्थानमण्टपे भद्रविष्टरे सन्निवेश्य तु ।
अर्घ्यादिभिः समभ्यर्च्य अपूपानुपहारकान् ॥२०१॥
पायसादीन् तथा लाजान्, ताम्बूलादीन्निवेदयेत् ।
अग्नौ सन्तर्पयेद्देवं प्रायश्चित्ताहुतीस्तथा ॥२०२॥
घृतेनाष्टोत्तरशतं जुहुयाद्देशिकोत्तमः ।
ततो विसर्जयेद्देवं कुण्डमण्डलमध्यगम् ॥२०३॥
कुम्भसम्प्रोक्षणादींस्तु प्राग्वदेव समाचरेत् ।
ततस्तु चौत्सवं बिम्बं प्रासादान्तः प्रवेशयेत् ॥२०४॥
तत्र चावाहितां शक्तिं पुनर्मूले नियोजयेत् ।
यजमानो दक्षिणाभिराचार्यादीन् प्रतोपयेत् ॥२०५॥
एवं यः कारयेद्भक्त्या दीपोत्सवमनुत्तमम् ।
इह लोके सुखं प्राप्य परलोके महीयते ॥२०६॥
कार्तिक्यां पौर्णमास्यां हि कर्तव्यमिदमुत्सवम् ।
तोपकृद्देवदेवस्य विस्तरेण प्रकीर्तितम् ॥२०७॥
कार्तिके मासि विप्रेन्द्राः! शुक्लैकादशिका तु या ।
तस्यामुपोष्य रात्र्यां तु जागरेण जगत्पतिम् ॥२०८॥
तत्कालोचितरागोत्थैस्तोपयित्वा तु गीतकैः ।
ब्राह्मे मुहूर्ते सम्प्राप्ते विशेषेण यजेद्विभुम् ॥२०९॥

संश्रावयेद्गीतकानि स्तोत्राणि विविधाः कथाः ।
होमावसानं सर्वं तु सविशेषं समाचरेत् ॥२१०॥
तत्काले ये च गायन्ति तच्च शृण्वन्ति ये जनाः ।
तेषां पुण्यफलावाप्तिं कः शक्नोत्यभिवर्णितुम् ॥२११॥
अतः परं प्रवक्ष्यामि मार्गशीर्षोत्सवं परम् ।
कोदण्डस्थे दिनकरे तत्काले सङ्क्रमे द्विजाः ! ॥२१२॥
संस्नाप्य देवदेवेशमधमोत्तममार्गतः ।
अलङ्कारासनं नीत्वा ह्यर्घ्याद्यैः परिपूज्य च ॥२१३॥
वासोभिर्भूषणैर्माल्यैर्गन्धैः कस्तूरिकादिभिः ।
अलंकृत्य च देवेशं विष्वक्सेनादिकांस्तथा ॥२१४॥
तथैव भक्तबिम्बांश्च संस्नाप्य नवभिर्घटैः ।
अलंकृत्य विशेषेण यजेदर्घ्यादिभिः क्रमात् ॥२१५॥
ततस्तु देवदेवेशं नीत्वा भोज्यासनं शुभम् ।
मुद्गान्नं पायसान्नं च शर्कराघृतसंयुतम् ॥२१६॥
नानाविधानि भक्ष्याणि विविधानि फलानि च ।
ताम्बूलं मुखवासं च विनिवेद्य यथाविधि ॥२१७॥
निवेदितान्नभक्ष्यादीन् विष्वक्सेनादिकस्य च ।
भक्तानां च निवेद्याथ देवदेवं श्रियः पतिम् ॥२१८॥
प्रदक्षिणीकृत्य तदा प्रणम्य च यथाविधि ।
तोषयेद्वैष्णवैर्देवं स्तोत्रैर्नानाविधैस्तदा ॥२१९॥
संस्कृतैर्द्राविडैर्वापि देवपारम्यसूचकैः ।
मानसं ध्यानमित्युक्तं कायिकं कर्मचोच्यते ॥२२०॥
वाचिकं स्तोत्रमित्युक्तं त्रिविधैस्तोषयेत्प्रभुम् ।
ततस्तु वैष्णवाग्र्याणां वैष्णवस्तुतिगायिनाम् ॥२२१॥
तीर्थं निवेदितान्नादीन् दद्याद्देवस्य सन्निधौ ।

वैष्णवा भगवद्भक्ता गृहीत्वा विनयान्विताः ॥२२२॥
पीत्वा तीर्थं प्रसादं च भक्षेयुर्देवसन्निधौ ।
आरभ्य सङ्क्रमादेवं मासान्तं मुनिपुङ्गवाः ! ॥२२३॥
अरुणस्योदयात्पूर्वं समाराध्य यथाविधि ।
मुद्गान्नपायसान्नादीन् भक्ष्याणि विविधानि च ॥२२४॥
निवेदयेच्च देवाय भक्तेभ्यश्च दिने दिने ।
भक्तप्रणीतगाथाभिः स्तुवीत पुरुषोत्तमम् ॥२२५॥
तस्मिन् मासे विशेषेण देवदेवस्य सन्निधौ ।
सर्पिषा तिलतैलैर्वा दीपारोपणमाचरेत् ॥२२६॥
त्रिंशद्दिने विशेषेण दीपमारोपयेत्तु यः ।
इह भुक्त्वाखिलान् भोगान् विष्णुलोकं स गच्छति ॥२२७
एवं त्रिंशद्दिनं कुर्यादर्चनं त्वरुणोदये ।
तस्मिन्नन्त्ये दशदिने विशेषोत्सवमाचरेत् ॥२२८॥
उत्सवारम्भपूर्वेद्युर्निशायामङ्कुरार्पणम् ।
रक्षाबन्धं च विधिवत्कृत्वा देशिकसत्तमः ॥२२९॥
उत्सवारम्भदिवसादारभ्यान्त्यदिनावधि ।
चतुस्स्थानार्चनं कुर्यात्सायम्प्रातर्यथाविधि ॥२३०॥
आरम्भे चावसाने च स्नपनं प्राग्वदाचरेत् ।
द्वितीयावरणादौ वा गोपुराद्बहिरेव वा ॥२३१॥
कल्पयेद्देवदेवस्य महामण्टपमुत्तमम् ।
वितानैः फलपुष्पैश्च दर्पणैश्चामरादिभिः ॥२३२॥
अलङ्कुर्याद्विशेषेण यथालोचनसुप्रियम् ।
मध्याह्ने देवदेवेशं श्रीपुष्टिभ्यां समन्वितम् ॥२३३॥
शिबिकायां समारोप्य ह्यलंकृत्य विशेषतः ।
विष्वक्सेनादिभिश्चैव भक्तबिम्बादिभिः सह ॥२३४॥

यात्रोपकरणैः सार्धं कृत्वा ग्रामप्रदक्षिणम् ।
महामण्टपमानीय तत्र वै सिंहविष्टरे ॥२३५॥
देवमारोप्य देवीभ्यां विष्वक्सेनादिकानपि ।
देवस्याभिमुखं स्थाप्य ह्यलङ्कारासनोदितैः २३६॥
भोगैर्देवं समभ्यर्च्य भक्तविम्बांश्च देशिकः ।
सदागमादिकान्वेदांस्तथा दिव्याश्च संहिताः ॥२३७॥
इतिहासपुराणानि स्तोत्रं दैवं च मानुषम् ।
वेदोपबृंहणंचान्यत्संस्कृतं प्राकृतं तु वा ॥२३८॥
भाषान्तरगतं वापि तदा संश्रावयेद्विभुम् ।
ततस्त्वष्टविधान्नानि भक्ष्याणि विविधानि च ॥२३९॥
पृथुकान्नाळिकेरेक्षुकदळीचणकादिकान् ।
नाळिकेरोदकादीनि ताम्बूलमुपहारकान् ॥२४०॥
निवेद्य देवदेवाय भक्तेभ्यश्च यथाक्रमम् ।
निवेदितान्नभक्ष्यादीन् वैष्णवेभ्यः प्रदापयेत् ॥२४१॥
ततस्तु देवदेवेशं श्रीपुष्टिभ्यां समन्वितम् ।
शिबिकायां समारोप्य भक्तबिम्बादिभिः सह ॥२४२॥
सविलासं नयेत्तत्र मण्टपे द्विजसत्तमाः ! ।
तत्काले भक्तविम्बानां सन्मानं च समाचरेत् ॥४३॥
वेदघोषैः स्तोत्रघोषैर्गद्यपद्यात्मकैः स्तवैः ।
वीणावेणुरवैश्चैव नृत्तगीतादिभिः सह ॥२४४॥
मण्टपं द्विः परिभ्राम्य पुनः सिंहासने विभुम् ।
समारोप्य समभ्यर्च्य सायङ्काले विशेषतः ॥२४५॥
चतुःसहस्रिकामाद्यां द्रामिडीं स्तुतिमुत्तमाम् ।
गापयेद्वैष्णवैस्तत्र नैवेद्यान्ते दिने दिने ॥२४६॥
ततस्तु देवदेवेशं पूर्वोक्तविधिना द्विजाः ! ।

धामप्रदक्षिणं नीत्वा मन्दिरान्तः प्रवेशयेत् ॥२४७॥
आस्थानमण्टपं नीत्वा कृत्वा नित्यार्चनं विभोः ।
चतुःस्थानार्चनं चापि कृत्वा स्वस्थानमानयेत् ॥२४८॥
एवं दशदिनं कुर्यादुत्सवं मुनिसत्तमाः ! ।
उत्सवान्ते तु कुम्भादिगतं देवं यथाविधि ॥२४९॥
विसर्जयेत्ततो देवं प्रणिपत्य क्षमापयेत् ।
यजमानो दक्षिणाभिराचार्यादीन् प्रतोषयेत् ॥२५०॥
मार्गशीर्षोत्सवविधिरित्येवं सम्प्रकीर्तितः ।
मकरस्थे दिनकरे तत्काले सङ्क्रमे द्विजाः ! ॥२५१॥
संस्नाप्य देवदेवेशं पञ्चविंशतिभिर्घटैः ।
अलंकृत्य विशेषेण हविरादीन्निवेदयेत् ॥२५२॥
तत्काले यजमानश्च गोभूस्वर्णादिकांस्तथा ।
कूश्माण्डव्रीहिदानं च कुर्याद्देवस्य तुष्टये ॥२५३॥
तदन्येद्युर्देवदेवं समभ्यर्च्य विशेषतः ।
अश्वरत्ने समारोप्य देवमुत्सवविम्वगम् ॥२५४॥
पूर्वोक्तविधिना कुर्यान्मृगयोत्सवमुत्तमम् ।
वने वने समानीय सविलासं जगत्पतिम् ॥२५५॥
तत्र तत्र विशेषेण समभ्यर्च्य यथाविधि ।
मृगयां कारयेत्पश्चात्सविनोदं मुनीश्वराः ! ॥२५६॥
वराहवारणव्याघ्रकृष्णसारशशादिकान् ।
मध्ये कृत्वा तु परितः सेनां विन्यस्य सायुधाम् ॥२५७॥
अतिशूरभटास्तत्र मध्ये संविश्य यत्नतः ।
जीवग्राहं मृगान् बध्वा नयेयुर्देवसन्निधिम् ॥२५८॥
ततो विमोचयेत्सर्वान्मृगानेकैकशः क्रमात् ।
हतानां वा मृगाणां च भवेत्पुण्यगतिर्ध्रुवम् ॥२५९

ततस्तु देवदेवेशं मण्टपे वा प्रपादिके ।
भद्रासने समारोप्य समभ्यर्च्य विशेषतः ॥२६०
सायङ्काले तु सम्प्राप्ते पूर्वोक्तविभवैः सह ।
ग्रामप्रदक्षिणं नीत्वा मन्दिरान्तः प्रवेशयेत् ॥२६१॥
संस्थाप्य देवदेवेशमलंकृत्य यथाविधि ।
श्रीपुष्टिभ्यां सह विभुं हविरन्तं समर्चयेत् ॥२६२॥
एवं हि देवदेवस्य मृगयोत्सव ईरितः ।
प्रतिसंवत्सरं त्वेवं देवस्य सकलोत्सवान् ॥२६३॥
यः कारयति विप्रेन्द्राः ! स तु साम्राज्यसंयुतः ।
इह लोके सुखं भुक्त्वा चिरं भोगान् यथेप्सितान् ॥२६४॥
देहसन्यासकाले तु प्राप्नोति भगवत्पदम् ।
इति सङ्कीर्तिताः सम्यग्देवस्य सकलोत्सवाः ॥२६५॥
इतोऽन्यच्छ्रोतुमिच्छा चेत्कथ्यतां मुनिपुङ्गवाः! ।

इति श्रीपाञ्चरात्रे ईश्वरसंहितायां
पक्षोत्सवादिविधिर्नाम
त्रयोदशोऽध्यायः ।

---

## अथ चतुर्दशोऽध्यायः ।

मुनयः ।

शयनस्थे जगन्नाथे चातुर्मास्यस्य मध्यतः ।
पवित्रारोपणं कार्यमित्युक्तं भवता पुरा ॥१॥
तद्विधानं विस्तरेण वदस्व वदतां वर ! ।

नारदः ।

वक्ष्ये लोकहितार्थाय पवित्रारोपणक्रमम् ॥२॥

शृणुध्वं सावधानेन चेतसा मुनिपुङ्गवाः ! ।
लोपबुद्धिं विना यस्य भोगानामप्यसम्भवः ॥३॥
सामर्थ्येन विना यस्य कृच्छ्रादीनां परिच्युतिः ।
ज्वरादिव्याधिदोषेण जातो यस्याह्निकक्षयः ॥४॥
चातुर्मास्यस्य वाऽप्राप्तिर्यस्य स्वातन्त्र्यतो विना ।
तस्य तस्य महाबुद्धे ! शृणु यद्विहितं हितम् ॥५॥
सांस्पर्शिकानां भोगानां मात्राविन्तं हि पूरणम् ।
हृदयङ्गमसंज्ञानामन्नं च हविषाऽऽप्लुतम् ॥६॥
औपचारिकभोगानां बीजानि विहितानि वै ।
कृच्छ्रचान्द्रायणादीनां व्रतानां परिपूरकः ॥७॥
विशेषार्चनसंयुक्तश्चातुर्मास्यस्य संयमः ।
सौत्रं प्रतिसरं चित्रं मुक्ताहारोपमं शुभम् ॥८॥
शमं नयति भक्तानां सर्वदा लोपमाह्निकम् ।
तच्च मासचतुष्कस्य मध्ये कुर्याच्छुभे दिने ॥९॥
आषाढपञ्चदश्यास्तु यावद्वै कार्तिकस्य च ।
सम्पूर्णं चन्द्रदिवसं तं कालं चान्द्रमन्तिमम् ॥१०॥
आकर्कटकसङ्क्रान्तेस्तुलाभागक्षयावधि ।
कालं तमष्टपक्षं च सौरं मध्यमसंज्ञितम् ॥११॥
एकादश्यां दिनान्तो यश्चातुर्मास्योपलक्षितः ।
कालं तं वैष्णवं विद्धि तूत्तमं सर्वसिद्धिदम् ॥१२॥
अप्राप्तेरस्य कालस्य त्वन्तरायेण केनचित् ।
निर्वाहणीयोऽप्यपरः कालश्चान्द्रायणादिना ॥१३॥
सम्पाद्यश्चैव तन्मध्ये विधिवद्यागपूर्वकम् ।
प्रासादस्याग्रतः कुर्यात्तदर्थं मण्टपं द्विजाः ! ॥१४॥
प्रथमावरणे चापि द्वितीयावरणेपि वा ।

तृतीयावरणे याथ चतुर्थे पञ्चमेपि वा ॥१५॥
अग्रयालाभे तदन्यत्र यथा वाञ्छितदिग्गतम् ।
चतुरश्रं समं वापि प्राक्पश्चिमदिगायतम् ॥१६॥
सौम्ययाम्यायतं वापि कर्तुरिच्छानुरूपतः ।
तथा प्रागाननं यद्वा यथाभिमतदिङ्मुखम् ॥१७॥
द्वाविंशतिधनुर्मानं मण्टपं चोत्तमं भवेत् ।
अष्टादशधनुर्मानं मण्टपं मध्यमं भवेत् ॥१८॥
अधमं द्वादशधनुर्मानं स्यादथ वा द्विजाः ! ।
पञ्चहस्तात्समारभ्य द्विद्विहस्तप्रवर्धनात् ॥१९॥
त्रिसप्तकरपर्यन्तं मानैर्नवविधं भवेत् ।
यद्वोत्तमं दशकरं मध्यमं चाष्टहस्तकम् ॥२०॥
षड्ढस्तं त्वधमं विद्यात् क्षुद्रं हस्तत्रयायतम् ।
त्रिंशत्करावसानं वा षट्करात्पञ्चविंशतिः ॥२१॥
एकं सङ्गृह्य मानेषु ह्येषु वित्तानुरूपतः ।
सोपपीठमधिष्ठानं केवलं वा मसूरकम् ॥२२॥
अधिष्ठानोपरि स्तम्भं प्रस्तरं च त्रिवर्गकम् ।
कपोतप्रतिसंयुक्तं यद्वोक्ताकृतिवर्जितम् ॥२३॥
एकत्रिपञ्चसप्तादिभित्तिभेदैः समावृतम् ।
प्रत्यङ्गोक्तैरलङ्कारैर्युक्तं वा तद्विवर्जितम् ॥२४॥
शिलयेष्टकया वापि पक्वया वाप्यपक्वया ।
एकद्वारं चतुर्द्वारं यद्वा द्वारद्वयान्वितम् ॥२५॥
भित्तियुक्तमयुक्तं वा कोणभित्तियुतं तु वा ।
केवलं वा प्रपामात्रमुक्तलक्षणवर्जितम् ॥२६॥
क्षिप्रकर्मप्रसिद्ध्यर्थं शरकाष्ठमयं शुभम् ।
गवाक्षकान्वितं चैव द्वारैस्तु परिभूषितम् ॥२७॥

छत्रं वितानकेनोर्ध्वे प्रासादं परिकल्पयेत् ।
क्षेत्रसङ्कोचविस्तारौ कर्तुरिच्छानुसारतः ॥२८॥
शिल्पशास्त्रानुसारेण कृत्वैवं मण्टपं द्विजाः ! ।
यागार्थं सुशुभं विप्रास्तन्मध्येथ प्रकल्पयेत् ॥२९॥
मसूरकमधिष्ठानं वास्त्वाधारं धरातलम् ।
दृढां समां तदाकारामीषत्प्रागुत्तरप्लवाम् ॥३०॥
प्रोच्छ्रितां च विशेषेण स्थलीं दर्पणसन्निभाम् ।
सामान्या न भवेद्येन मेदिनी मण्टपस्य तु ॥३१॥
द्विद्विकेनाङ्गुळानां तु प्रोन्नतेर्यावदष्टकम् ।
एकवृध्याल्पमानानां यागानां तु स्थलाङ्कणम् ॥३२॥
नवाङ्गुळोन्नतेस्तावद्यावत्पञ्चदशाङ्गुळम् ।
प्रोन्नतत्वं स्थलानां च मध्यमानं मितात्मनाम् ॥३३॥
चतुर्विंशत्यङ्गुळान्तमुच्छ्रायं षोडशाङ्गुळात् ।
प्रागुक्तवृध्या कर्तव्यं ज्येष्ठमानं मितात्मनाम् ॥३४॥
एवमुच्छ्रायमानं च कथितं च स्थलीषु हि ।
पादमर्धं तु हस्तं वा विस्तारात्सर्वदिक्षु वै ॥३५॥
स्थलीनामिष्टकाद्यैश्च चिन्वीयात्प्रथमं ततः ।
मृदा सम्पूर्य तन्मध्यमीषद्वालुकयान्वितम् ॥३६॥
परीक्ष्य केशकीटादीनाकोश्य तदनन्तरम् ।
यावद्भवति पूर्वोक्तलक्षणं वा विशेषतः ॥३७॥
स्थलीं मध्योन्नतां रम्यां सप्ताहं सम्परीक्ष्य सा ।
न ददाति यदा भेदं यागयोग्या भवेत्तदा ॥३८॥
तदूर्ध्वे वेदिकां कुर्यादनेकचरणान्विताम् ।
तोरणैश्च समायुक्तां विभवेच्छानुसारतः ॥३९॥
पावनैर्यज्ञकाष्ठैश्च सुदृढैः सरलैः समैः ।

यथालक्षणयुक्तानि तोरणानि चतुर्दिशि ॥४०॥
द्वाराणां बाह्यतो विप्रास्तदन्तर्वा नियोजयेत् ।
त्रीणि त्रीण्यथ वा सम्यगेकैकस्यां न्यसेद्दिशि ॥४१॥
बुध्वा मण्टपविस्तारं पञ्चकं सप्तकं तु वा ।
एतानि हेमरत्नाद्यैश्चित्रयेद्विभवे सति ॥४२॥
श्रीवृक्षोदुम्बरवटप्लक्षोत्थैरथ वा द्विजाः ! ।
पूर्वाद्युत्तरपर्यन्तं तोरणानां चतुष्टयम् ॥४३॥
चतुष्टयं चतुर्दिक्षु ह्येषामेकैकमेव वा ।
तोरणानां समुच्छ्रायः स्तम्भायामसमः स्मृतः ॥४४॥
स्तम्भद्वयान्तरस्थेन मानेन स्यात्तु विस्तृतिः ।
स्तम्भमस्तकमानेन साधिकेन सदैव हि ॥४५॥
तद्दण्डान् विन्यसेद्भूमौ स्तम्भाभ्यन्तरगा स्थितिः ।
सदैव हक्स्वरूपाणां कार्या वेदविदां वराः! ॥४६॥
द्वाराणां बाह्यतो विप्रास्तोरणानां यदा स्थितिः ।
तलाच्छिखरपर्यन्तं मानमुच्छ्रायतस्तदा ॥४७॥
सार्धं समं वा द्विगुणं तद्दण्डेषु च भूगतम् ।
चक्रद्वितयमध्यस्थं पक्षमण्डलमण्डितम् ॥४८॥
तोरणे तोरणे कुर्याद्गरुडं चोर्ध्वसंस्थितम् ।
तत्पार्श्वयोश्चक्रचिह्नौ नानावर्णध्वजौ न्यसेत् ॥४९॥
सितरक्तादिभेदेन प्रागादौ तु ध्वजाष्टकम् ।
निवेश्य मध्यवेद्यां तु प्रभवाप्यययोगतः ॥५०॥
मत्स्यादीनवतारांश्च प्रादुर्भावाननेकशः ।
चित्रोदितेन विधिना चतुर्दिक्षु समालिखेत् ॥५१॥
मुनिसिद्धामरव्रातैरनेकाद्भुतदर्शिभिः ।
द्वीपाचलवनोद्यानैर्बहुभिर्मृगयूथपैः ॥५२॥

सरस्सारसकह्लारजलक्रीडापरान्वितैः ।
खेचरैरङ्गनायुक्तैर्नृपैर्विद्याधराधिपैः ॥५३॥
प्रशान्तमानसैर्विप्रैरात्मध्यानपरायणैः ।
एवमाद्यैरनन्तैश्च व्यापारैश्चित्रसम्भवैः ॥५४॥
तद्यागवेश्म सकलं रञ्जनीयं प्रयत्नतः ।
कुर्यात्सुधावलिप्तं वा भूषयेत्तदनन्तरम् ॥५५॥
दर्पणैश्चामरैर्वस्त्रैर्दुकूलैर्विविधोज्वलैः ।
घण्टाभिरर्धचन्द्राद्यैरातपत्रैर्मनोहरैः ॥५६॥
प्रोच्छ्रितैः कदळीपूगैः द्रुमाङ्गैः पावनैर्दृढैः ।
मध्वाज्यदधिसत्क्षीरसम्पूर्णैः कांस्यभाजनैः ॥५७॥
शालितण्डुलपात्रैश्च सहिरण्यैः फलैः शुभैः ।
लाजसिद्धार्थकैर्बीजभाजनैः पडूसान्वितैः ॥५८॥
सत्सुगन्धैस्त्वगेलाद्यैः पर्णैः पूगफलैस्तथा ।
मधूकवदरद्राक्षाइक्षुभिस्त्रिफलैः फलैः ॥५९॥
यथर्तुप्रभवैः पुष्पैः वहुभिः प्रकरीयकैः ।
इत्येवमाद्यैर्विविधैर्भोगपूगैस्तु पावनैः ॥६०॥
पवित्रेण वितानेन सुसितेनोज्वलेनवा ।
चक्राम्बुरुहचिह्नेन भूषयेच्च तदूर्ध्वतः ॥६१॥
स्तम्भान् संवेष्टयेत्पश्चाद्दुकूलैर्विविधैः पृथक् ।
प्रागुत्तरादिदिग्भागाद्यावत्कोणं च मारुतम् ॥६२॥
सितादिवर्णभेदोत्थाः पताकास्तत्र योजयेत् ।
एवं रागविभागेन प्रत्यग्भागाच्च वै पुनः ॥६३॥
दक्षिणाशावधिर्यावद्द्वितीयं च चतुष्टयम् ।
एकैव स्वर्ण(सर्व)वर्णा च नाभौ कार्या वितानके ॥६४॥
बाह्यतो वेदिकायास्तु मण्टपस्य दिगष्टके ।

वह्निकोणात्समारभ्य यावत्कोणं तु शाङ्करम् ॥६५॥
सितारुणं च पीतं च कृष्णं कुर्याच्चतुष्टयम् ।
भूयश्चोत्तरदिग्भागाद्यावत्पश्चिमदिक् द्विजाः ! ॥६६॥
तथाविधं चतुष्कं तु ध्वजानां परिकीर्तितम् ।
राजपाषाणवर्णाभं चक्रपक्षीश्वरोपगम् ॥६७॥
वैजयन्तीत्रयं कुर्यात्तोरणे पूर्वदिक्स्थिते ।
दक्षिणे स्फटिकाभं तु आप्ये सिन्दूरवर्चसम् ॥६८॥
हेमाभं चोत्तरे कुर्यात्तोरणे ध्वजकत्रयम् ।
चतुष्केणपताकानां युक्तं श्वेतादिकेन च ॥६९॥
एकैकं तोरणं वात्र तृतयं पञ्चकं तु वा ।
अर्धेन तोरणायामात्पताकानां च दीर्घता ॥७०॥
एवं त्वभिनवं कृत्वा यागार्थं मण्टपं द्विजाः ! ।
स्नपनाद्युत्सवान्तस्य वैशेषिकगणस्य च ॥७१॥
पुरा प्रकल्पितं वाथ मण्टपं भूषयेत्तदा ।
एवं कृते ततः पश्चाद्वेदिकां तोरणैः सह ॥७२॥
विलिप्य चन्दनाद्यैस्तु गन्धवर्णोज्वलैः क्रमात् ।
चन्दनेन समालभ्य वेदिकां केवलेन च ॥७३॥
बाह्लीकभावितेनैव तेनैवाद्यं च तोरणम् ।
लिप्तं मृगमदेनैव कुर्याद्दक्षिणदिग्गतम् ॥७४॥
तुषारधूलीधवळं पश्चिमं कारयेत्ततः ।
कुङ्कुमेन समालभ्यं केवलेनोत्तरे स्थितम् ॥७५॥
क्षीरेण चन्दनेनैव कुङ्कुमेन कृतां स्थलीम् ।
रजनीचूर्णयुक्तेन ह्रीबेरेणाम्बुना सह ॥७६॥
पुण्यगन्धौषधीभिस्तु द्वाराणां मण्टपावनिम् ।
ततस्तु विविधैर्धूपैर्बहुभिर्धूपयेद्द्विजाः! ॥७७॥

ततस्तिरस्करिण्या तद्वेष्टयेत्सर्वतो बहिः ।
मण्टपस्योत्तरे भागे कुर्यात्कुण्डं पुरैव तु ॥७८॥
यद्वा द्विजास्ततोऽन्यत्र यागाग्रस्था च वर्ज्यदिक् ।
दिक्त्रयेऽभिमता या दिक्कुर्यादनलमण्टपम् ॥७९॥
धूमनिर्गमनोपेतं नानाकुण्डविभूषितम् ।
सांद्रैश्च सुपलाशैश्च संयुक्तं तोरणादिकैः ॥८०॥
यद्वा पचनगेहे तु कुण्डं कुर्यात्सलक्षणम् ।
अन्यन्नैमित्तिकार्थं तु पुरा क्लृप्तं तु वा भवेत् ॥८१॥
यागमण्टपविन्यासं सर्वत्रैवं समाचरेत् ।
एवं कृते ततः कुर्यात्सम्भारग्रहणं द्विजाः ! ॥८२॥
तत्र तावत्पवित्राणां निर्माणमधुनोच्यते ।
तेषां तु द्विविधं रूपं सूक्ष्मस्थूलविभेदतः ॥८३॥
सर्वभावेन भक्तानां यत्पालयति सर्वदा ।
मनोवाक्चित्तजं कृत्स्नं व्यापारं शुभलक्षणम् ॥८४॥
परिज्ञेयमतस्तस्मात्स्वरूपं तस्य यादृशम् ।
फलमेति च वै येन भक्तानां तत्समापनात् ॥८५॥
यदच्छिन्नं जगद्योनेरनन्तप्रसरं सितम् ।
विच्छेदमकृतज्ञानामेति नानात्मना स्वयम् ॥८६॥
जगत्सूत्रं तु तद्विद्धि हेमसूत्रादिना तु वै ।
षाड्गुण्यमहिमानं यद्धत्ते प्रतिसरात्मना ॥८७॥
ज्ञानरागोपरक्तं तु युक्तं कार्यैस्तु वीर्यजैः ।
तैजसैराद्यतं मन्त्रैर्बलेनावासितं परि ॥८८॥
ऐश्वर्यनुपचारं तु सम्पत्तौ शक्तितोऽव्ययम् ।
एवं पवित्रकं तावत्परिज्ञेयं जगत्प्रभोः ॥८९॥
ब्रह्मण्याधिपतौ विष्णौ तदाकारे प्रतिष्ठिते ।

भक्त्या च विधिवद्दत्तं ददाति भगवत्पदम् ॥९०॥
स्थूलस्य व्यतिरिक्तस्य व्यवहारपदे स्थितैः।
पदार्थैः कल्पनीयं च तद्विधानमिहोच्यते ॥९१॥
सूक्ष्मं दृढं सितं श्लक्ष्णं सूत्रं ब्रह्मप्रसूतया।
विनिर्मितं कुमार्या वा वृद्धया वा विनीतया ॥९२॥
शुद्धया वा विधवया सम्पादितमथापि वा।
क्षौमं वा पट्टजं वापि केशरोमादिवर्जितम् ॥९३॥
यथालब्धं समादाय सम्यक्प्रक्षाल्य वारिणा।
तस्य शुद्धिं पुरा कृत्वा दहनाप्यायनेन च ॥९४॥
अवलोक्य स्मरन्मूलं विनिष्पाद्य चतुर्गुणम्।
चातुरात्म्यव्यपेक्षायामथ वाष्टगुणं द्विजाः! ॥९५॥
प्रभवाप्ययबुध्या तु भेदभिन्नोपलक्षितम्।
केशवादिष्वधिष्ठातृभावेन त्रिचतुर्गुणम् ॥९६॥
तन्तुभिर्विषमैर्विष्णोः समस्य परिवर्जयेत्।
पावित्रिकी क्रिया यस्माद्विषमा सा न कस्य चित् ॥९७॥
पवित्रकाणि कार्याणि तन्तुभिस्तैः सितासितैः।
मूलमन्त्रादिसर्वेषां मन्त्राणां मुनिसत्तमाः! ॥९८॥
कुम्भस्थमन्त्रमूर्तेः प्राक्कल्पयेद्भूषणं द्विजाः!।
अध्यर्धशतजैर्व्यासाद्धाराकारैश्च तन्तुभिः ॥९९॥
शतेनाष्टोत्तरेणाद्यं द्विगुणेन द्वितीयकम्।
त्रिगुणेन तृतीयं तु व्यासमेवं तु तन्नयेत् ॥१००॥
षट्त्रिंशद्ग्रन्थिकं चाद्यं द्वितीयं द्विगुणं स्मृतम्।
तृतीयं त्रिगुणं कुर्यादेवमेव महामतिः ॥१०१॥
मण्डलस्थस्य च विभोस्तथा वह्निगतस्य च।
बिम्बस्थस्य पवित्राणां विशेषोऽप्यवधार्यताम् ॥१०२॥

मालाकृतिं तु शिरसि यथेच्छग्रन्थिपूर्वकम् ।
द्वितीयमंसयोर्यावल्लम्बितं जानुमण्डले ॥१०३॥
मूर्ध्नः पादावधिर्यावत्तृतीयमिति विश्रुतम् ।
आमूर्ध्नः पीठपर्यन्तं वनमालापवित्रकम् ॥१०४॥
पृथक्पीठस्य वै कुर्यात्स्वप्रमाणेन शोभनम् ।
बिम्बप्रतिसराणां च व्यासश्चानियतः स्मृतः ॥१०५॥
सूत्रमानं च पूर्वोक्तं द्विगुणं सति सम्भवे ।
त्रिगुणं वा मुनिश्रेष्ठाः ! वनमालाख्यभूषणम् ॥१०६॥
अष्टोत्तरेण सूत्राणां सहस्रेण समन्वितम् ।
यद्वा तदर्धं पादं वा कुर्याद्वित्तानुरूपतः ॥१०७॥
लेपभित्तिपटस्थे तु मूलबिम्बे यदा द्विजाः ! ।
कुर्यादुत्सवबिम्बस्य भूषणानां तु पञ्चकम् ॥१०८॥
तदापि मूलबिम्बस्य भूषणान्यपि पूर्ववत् ।
कल्पयेदाद्यपूर्वाणि बिम्बप्रतिसरेषु तु ॥१०९॥
विभवे देवदेवेशे हारपञ्चकसंयुतम् ।
नानाकाराणि तन्तूनि मुक्ताहारसमन्वितम् ॥११०॥
त्र्यङ्गुळान्तरिता देयाः सर्वेषां ग्रन्थयः समाः ।
सङ्ख्यानेन विना सम्यङ्मातुलुङ्गोपमाः शुभाः ॥१११॥
अष्टोत्तरशतग्रन्थिसंयुक्ता वनमालिका ।
चतुःस्थानावतीर्णस्य विभोरामन्त्रणाय च ॥११२॥
पवित्रमाद्यसदृशमेकैकं वा द्वयं द्वयम् ।
सर्वेषां कर्मबिम्बानां तथा वै गोपुरादिषु ॥११३॥
स्थितानां मन्त्रबिम्बानां भजतां सान्निधिं सदा ।
उत्तमादीनि कर्माणि कुर्याद्वै मुख्यकल्पने ॥११४॥
प्रकल्पयेत्तत्सदृशं मध्यमेनोत्तमेन वा ।

द्वितयं द्वितयं वापि ह्येकैकं वानुकल्पने ॥११५॥
अङ्गानां भूषणानां च लाञ्छनानां तथैव च ।
शक्तीनां विहगेशस्य पवित्रं कल्पयेत्तथा ॥११६॥
प्राग्वत्त्रीण्यथ वा द्वे द्वे एकैकं वाथ वा द्विजाः! ।
यथेच्छामानसंख्योत्थैः सूत्रैस्तु परिकल्पयेत् ॥११७॥
सूत्रभ्रमसमोपेतैर्गर्भैर्भूषणसञ्चयम् ।
अन्येषां मण्डलाङ्गानां देवानां विभवे सति ॥११८॥
पवित्रकगणं कुर्याद्यथेच्छाग्रन्थितन्तुभिः ।
तथैव विष्वक्सेनादेः परिवारगणस्य च ॥११९॥
मन्त्रास्त्रकुम्भयोर्द्वे वै ह्येकं वै मण्डलस्य च ।
द्वयं च कुण्डानलयोः शास्तृपीठस्य च द्वयम् ॥१२०॥
लिपेर्वाक्त्वभूतस्य शब्दतत्त्वस्य च प्रभोः ।
घण्टाक्षसूत्रपूर्वाणां क्रियाङ्गानां महात्मनाम् ॥१२१॥
बलिपीठाधिदेवानां देशान्तरनिवासिनाम् ।
गुर्वादीनां चतुर्णां तु हरिलिप्साप्रलापिनाम् ॥१२२॥
द्विजोत्तमादिवर्णानां नित्यमच्युतभाविनाम् ।
गृहस्थब्रह्मचारिणां यतीनां वनवासिनाम् ॥१२३॥
वृद्धानां जनकादीनां भगवत्तत्त्ववेदिनाम् ।
बन्धूनां भ्रातृपुत्राणां नारायणरतात्मनाम् ॥१२४॥
जायाया भक्तिनम्राया रताया अर्चने हरेः ।
सम्बन्धिनां च मित्राणां भगवद्धामवासिनाम् ॥१२५॥
तदुत्तरसहायानां चातुरात्म्याभिलाषिणाम् ।
भृत्यानां स्वानुकूलानां पुरुषोत्तमयाजिनाम् ॥१२६॥

---

१—सेविनाम्—इति—(पा)

वृद्धये योग्यतायै च पवित्रीकरणाय च ।
यथाभिमतमानैस्तु तन्तुभिर्ग्रन्थिभिस्तथा ॥१२७॥
कुर्यात्पवित्रनिचयमथ वा मुनिसत्तमाः ! ।
गुर्वादीनां चतुर्णां तु यतीनां च कुटुम्बिनाम् ॥१२८॥
क्रमाच्चतुर्विंशतिभिः सूत्रैः षोडशभिस्तथा ।
ततो द्वादशिभिश्चैव अष्टभिः पट्लिभिस्तथा ॥१२९॥
पवित्रकाणि कार्याणि ग्रन्थयः सूत्रसंख्यया ।
आराधकस्य च गुरोः कुर्याद्वै भूषणद्वयम् ॥१३०॥
स्थूलकल्पमिदं प्रोक्तं सूक्ष्मकल्पमिहोच्यते ।
शिरःप्रमाणेनार्चाया भूषणं प्रथमं स्मृतम् ॥१३१॥
चतुःशतेन सूत्राणां द्वात्रिंशद्भिस्तथाधिकैः ।
सूत्रावर्तैश्च सुसमैः परिकल्प्य च शोभनम् ॥१३२॥
सप्तविंशत्प्रमाणेन दत्वास्मिन् ग्रन्थिसञ्चयम् ।
कर्णादूर्ध्वगतं नाभिप्रमाणेन पवित्रकम् ॥१३३॥
परिकल्प्य द्वितीयं च सूत्राणां मुनिसत्तमाः ! ।
शतत्रयेण च तथा चतुर्विंशद्भिरेव च ॥१३४॥
द्विगुणैर्ग्रन्थिनिचयैरनुगर्भं तु तत्स्मृतम् ।
स्कन्धदेशात्समारभ्य यावत्पादद्वयावधि ॥१३५॥
नेत्रसूत्रैस्त्रिभागोनैः सूत्रग्रामैश्च कल्पयेत् ।
त्रिगुणैर्ग्रन्थिनिचयैस्ततोन्यद्द्विजसत्तमाः ! ॥१३६॥
अष्टोत्तरेण सूत्राणां शतेन ग्रन्थिभिस्तथा ।
शिरःपूर्वावतारादौ यावत्पीठं तु वैष्णवम् ॥१३७॥
सूत्रैर्ग्रन्थिगणैश्चैव गर्भैस्तु विविधैस्ततः ।
मण्डलस्य प्रमाणेन कुर्याच्चान्यच्चतुष्टयम् ॥१३८॥
प्रथमं पद्ममानेन नाभिमानं द्वितीयकम् ।

अरतुल्यं तृतीयं स्यात् चतुर्थं नेमिभिः समम् ॥१३९॥
एकाशीतिभिरावर्तैः सूत्राणां द्विजसत्तमाः! ।
अग्नेः कुण्डप्रमाणेन ग्रन्थिभिस्तावदेव हि ॥१४०॥
भूषणत्रितयं कुर्याद्यथायोगं महामतिः ।
अष्टोत्तरशतार्धैस्सूत्रैस्तद्ग्रन्थिभिस्तथा ॥१४१॥
भूषणं सुसमं चैव सुशुभं परिकल्पयेत् ।
द्विजेन्द्रा द्विजमुख्यानां ब्राह्मणानां तदर्धतः ॥१४२॥
मुख्यमेतत्स्मृतं कल्पमनुकल्पोधुनोच्यते ।
अष्टाधिकेन सूत्रेण शतेन प्रथमं त्विदम् ॥१४३॥
चतुर्भागोनमपरं तदर्धेन तृतीयकम् ।
आद्याच्चतुर्थभागेन चतुर्थं कल्पयेत्ततः ॥१४४॥
त्रिभागोनं चतुर्थात्तु अग्नेः कुर्यात्तु भूषणम् ।
द्विजेन्द्राणां प्रकुर्वीत सप्तविंशतितन्तुजम् ॥१४५॥
ब्राह्मणानां प्रकुर्वीत तन्तुभिर्नवभिर्द्विजाः! ।
स्तनादूर्ध्वमधो नाभेर्न कर्तव्यं कदाचन ॥१४६॥
सूत्रत्रयेण चान्येषां भक्तानां तु जगद्गुरोः ।
सूक्ष्मकल्पमिदं प्रोक्तं परकल्पमिहोच्यते ॥१४७॥
चतुःस्थानावतीर्णस्य मुख्यमन्त्रस्य वै विभोः ।
शतेनाष्टोत्तरेणैव ह्यर्धेनांशेन वा द्विजाः ! ॥१४८॥
तन्तूनां भूषणं कुर्यादेकैकं वा त्रयं त्रयम् ।
जपहोमादिका संख्या पूर्णा रिक्ता महात्मनाम् ॥१४९॥
समीकरोति भक्तानां मन्त्रिणामत एव हि ।
कुर्यात्तद्ग्रन्थिनिचयं सूत्रसंख्योपलक्षितम् ॥१५०॥
यदृच्छया ततोन्येषां याज्यानां परिकल्प्य च ।
सूत्रभ्रमसमोपेतैर्गर्भैर्भूषणसञ्चयम् ॥१५१॥

ततस्तु देवदेवस्य चतुःस्थानास्थितस्य यत् ।
पवित्रकगणं विप्राः ! प्रोक्तमाद्यपुरस्सरम् ॥१५२॥
कुर्यात्तु गर्भरचनां तस्य सर्वस्य सत्तमाः ! ।
हेमसद्रत्नकर्पूरमलयक्षोदकुङ्कुमैः ॥१५३॥
सर्वौपधिसमोपेतैस्त्वगेलादिविमिश्रितैः ।
पावनैर्विविधैर्द्रव्यैर्नीव्या सपिचुना सह ॥१५४॥
बीजपूरसमाकारमाम्रामलकशङ्खवत् ।
तदन्तराळानि पुनस्त्वच्छिन्नेन तु तन्तुना ॥१५५॥
विभागप्रतिपत्त्यर्थं ग्रथनीयान्यदूरतः ।
अन्येषां सर्वबिम्बानां यथावित्तानुरूपतः ॥१५६॥
कल्पयेद्गर्भरचनां पूर्वोक्तैर्द्रव्यसञ्चयैः ।
आराधकस्य च गुरोः सगर्भं भूषणद्वयम् ॥१५७॥
विहितं भगवन्मन्त्रन्यासाचादात्म्यभावनात् ।
अतोन्येषामगर्भं च रचनीयं यथाक्रमम् ॥१५८॥
अन्तराळगणं गार्भं कुर्याद्धाहीकरञ्जितम् ।
अलंकृत्य च सौवर्णैरुपरिष्टाच्च रूप्यकैः ॥१५९॥
पवित्रच्छेदसंमूलं जातरूपमयैस्तु वा ।
शङ्खपद्मगदाचक्रमालाश्रीवत्सपूर्वकैः ॥१६०॥
एकस्यैव बहूनां वा यथावित्तानुसारतः ।
एवं कृत्वा पवित्राणि क्रमेण द्विजसत्तमाः ! ॥१६१॥
धातुजे वितते भाण्डे वस्त्रच्छन्ने निधाय च ।
अथ वा वैदळे भाण्डे मृण्मये वा सुशोभने ॥१६२॥
पालाशे वापि चैकस्मिन् मान्त्रं भूषणसञ्चयम् ।
अन्यास्मिन् लौकिकं स्थाप्य समस्तं द्विजसत्तमाः ! ॥१६३॥
आच्छाद्य वाससा पश्चात् सुसितेनाऽहतेन च ।

बन्धयित्वा तु सूत्रेण दृढेन सुसितेन च ॥१६४॥
मध्ये तु यागद्रव्याणां ते भाण्डे विनिवेशयेत् ।
एवं हि सर्वसम्भारान् सम्पाद्य द्विजसत्तमाः ! ॥१६५॥
चातुर्मास्ये त्वन्यतमे मासे वै शुक्लपक्षके ।
द्वादश्यां देवदेवस्य पवित्रारोपमाचरेत् ॥१६६॥
पूर्वं दशम्येकादश्योः कुर्यात् कर्माधिवासनम् ।
एकादश्यां वानुकल्पे अधिवासनमाचरेत् ॥१६७॥
सद्योधिवासं द्वादश्यां कुर्याद्वा शक्त्यभावतः ।
अधिवासदिनात्पूर्वदिने कृत्वाङ्कुरार्पणम् ॥१६८॥
अधिवासदिने कुर्याद्रक्षाबन्धं च देशिकः ।
अधिवासादिकं सर्वं शृणुध्वं मुनिपुङ्गवाः ! ॥१६९॥
आचार्यो मूर्तिपैः सार्धं दशम्यां तु निशामुखे ।
मन्त्रेशसन्निधिं गत्वा प्रपूज्यार्घ्यादिभिः क्रमात् ॥१७०॥
तस्मादनुज्ञामादाय प्रासादाग्रस्थितं शुभम् ।
यागमण्टपमासाद्य द्वारार्चनपुरस्सरम् ॥१७१॥
पूर्ववत्पूजनं कुर्यात्कलशे मण्डलक्षितौ ।
सम्प्रविश्य ततः प्राग्वन्मूलमूर्तौ तु पूजनम् ॥१७२॥
प्रदक्षिणप्रणामान्तं सविशेषं समाचरेत् ।
लेपभित्तिपटस्थं तु मूलबिम्बं यदा द्विजाः ! ॥१७३॥
तदा नैमित्तिके बिम्बे सर्वं कुर्याद्विशेषतः ।
एतस्य सन्निधौ विप्राः ! कृत्वा स्नपनमात्रकम् ॥१७४॥
स्नपनाधिकृते बिम्बे नित्यनैमित्तिकेपि वा ।
सर्वमन्यत्पवित्रान्तं मूलबिम्बे समाचरेत् ॥१७५॥
नित्योत्सवार्थं बिम्बे तु तदा कुर्यात्तदुत्सवम् ।
तेषामसन्निधौ विप्राः ! दर्पणे तत्समीपगे ॥१७६॥

कुर्यात्स्नपनमात्रं तु तदा कुर्यात्तदुत्सवम् ।
दर्भमञ्जरिजे कूर्चे चक्रे वा कुम्भकेपि वा ॥१७७॥
प्राग्वदन्यत्समस्तं तु मूलबिम्बे समाचरेत् ।
ततो होमगृहं गत्वा कुण्डं संस्कृत्य पूर्ववत् ॥१७८॥
तत्रानलं च संस्कृत्य कुर्याद्वै मन्त्रतर्पणम् ।
प्रासादं सम्प्रविश्याथ कृत्वा होमसमर्पणम् ॥१७९॥
प्रणम्य देवदेवेशं ततस्त्वेकं पवित्रकम् ।
दहनाप्यायसंशुद्धं प्रोक्षितं चार्घ्यवारिणा ॥१८०॥
वासितं गन्धधूपाभ्यां चतुस्थानस्थितस्य च ।
निवेद्य च क्रमेणैव धूपं दत्वार्घ्यपूर्वकम् ॥१८१॥
निजानन्दमयैर्भोगैर्नित्यतृप्तस्त्वमव्ययः ।
तथापि भक्त्या तृप्तोहं त्वां यजाम्यात्मसिद्धये ॥१८२॥
इति विज्ञाप्य देवस्य ततोस्त्रेणार्घ्यवारिणा ।
सर्वं भूषणपूर्वं तु सम्प्रोक्ष्य द्रव्यसञ्चयम् ॥१८३॥
अथ पाणिद्वयेनैव अग्नीषोमात्मकेन तु ।
योग्यतापदवीं नीत्वा सर्वं भूषणसञ्चयम् ॥१८४॥
मूलमन्त्रेण सम्प्रोक्ष्य संस्पृश्याथ निरीक्ष्य च ।
कुम्भयोग्यानि चैकस्मिन् मण्डलीयानि चापरे ॥१८५॥
बिम्बयोग्यानि चैकस्मिन्नग्नियोग्यानि चापरे ।
अन्यानि मन्त्रयोग्यानि एकस्मिन् द्विजसत्तमाः ! ॥१८
पात्रे पात्रे पृथक् स्थाप्य पात्रलाभानुरूपतः ।
आच्छाद्य वाससा पश्चात्सुसितेनाऽहतेन तु ॥१८७
तानि भूषणपात्राणि क्रमेण च पृथक् पृथक् ।
बन्धनीयानि सूत्रेण दृढेन सुसितेन च ॥१८८॥
शालिभिस्तण्डुलैर्वापि तिलैर्वा त्रितयेन वा ।

चतुस्त्र्येकभारैर्वा कृते पीठेथ वा स्थले ॥१८९॥
तानि भूषणपात्राणि संस्थाप्य पुरतो विभोः ।
प्रणवेनार्चयित्वा तु वर्मणा स्थगयेत्पुनः ॥१९०॥
देवागारं बहिश्चान्तः मन्दिरं यागसंज्ञितम् ।
संवेष्ट्य सितसूत्रेण चतुर्धा तद्गुणेन तु ॥१९१॥
ततोऽभ्यर्थ्य समूहं तु पञ्चकालपरायणम् ।
षट्कर्मनिरतं चापि यतिवृन्दं तु वैष्णवम् ॥१९२॥
समक्षं भवतां भक्त्या श्वः प्रभुं पूजयाम्यहम् ।
सन्निधानमतः कार्यं मदनुग्रहकाम्यया ॥१९३॥
एवमभ्यर्थ्य तेभ्यस्तु ह्यनुज्ञां प्रतिगृह्य च ।
सन्निधौ देवदेवस्य जागरेण नयेन्निशाम् ॥१९४॥
एकादश्यां प्रभातेथ कृतस्नानः कृताह्निकः ।
आचार्यो ब्राह्मणैः सार्धं यतिभिर्वैष्णवोत्तमैः ॥१९५॥
स्वधर्मनिरतैश्चैव विष्णुभक्तैर्दृढव्रतैः ।
प्रविश्य भगवद्गेहं कृत्वा नित्यार्चनं विभोः ॥१९६॥
चतुःस्थानार्चनं चापि सविशेषं समाचरेत् ।
तथैव रात्रावपि च सविशेषं समाचरेत् ॥१९७॥
हवनान्तं क्रियाकाण्डं जपस्तुतिपरस्ततः ।
आराध्यस्याग्रतः स्थित्वा जागरेण नयेन्निशाम् ॥१९८॥
स्नात्वा ब्राह्मे मुहूर्तेथ देशिको वैष्णवैः सह ।
प्रविश्य देवसदनं कृत्वा नित्यार्चनं विभोः ॥१९९॥
चतुःस्थानस्थितं देवं समभ्यर्च्य यथाविधि ।
ततस्तु चौत्सवं बिम्बं श्रीपुष्टिभ्यां समन्वितम् ॥२००॥
यानमारोप्य वस्त्राद्यैरलङ्कृत्य विशेषतः ।
मण्टपं तु समानीय विनिवेश्य च विष्टरे ॥२०१॥

पाठयेच्चतुरो वेदान् चतुर्दिक्षु यथाविधि !
अथ भूषणपात्रस्य गत्वा वै सन्निधिं द्विजाः! ॥२०
पूजयित्वा समुद्घाट्य पात्रं प्रतिसरीयकम् ।
अवलोक्य समादाय ध्यायेदाद्येखिलं द्विजा:! ॥२०३
सांवत्सरं तु यत्कर्म आप्रभातान्निशान्तिमम् ।
ध्यानोत्थं निष्कलं सम्यगपवर्गप्रदं तु यत् ॥२०४॥
संस्मृत्य निष्कलं मन्त्रं शुद्धोच्चारक्रमेण तु ।
मन्त्रे सन्धाय तत्सूत्रं सूत्रे मन्त्रं तथैव च ॥२०५
एकीकृत्यात्मना सार्धं दद्याद्वै मन्त्रमूर्धनि ।
समादायापरं सूत्रं तस्मिन् सकलनिष्कलम् ॥२०६॥
ध्यानकर्मस्वरूपं तु कर्म ध्यायेच्च वात्सरम् ।
स्मृत्वा चोभयरूपं तु मन्त्रं कलशपूजितम् ॥२०७
पूर्ववच्चानुसन्धानं कृत्वा दद्यात्पवित्रकम् ।
ततः प्रतिसरं विप्राः ! तृतीयं च समाचरेत् ॥२०८
बाह्यं सांवत्सरं कर्म सकलं चाखिलं स्मरेत् ।
पूजयन्तं स्वमात्मानं आधाराच्च परावधिम् ॥२०९॥
लयभोगाधिकाराख्यक्रमेण सकलात्मना ।
सकलं मन्त्रनाथं तु लयभोगादि विग्रहम् ॥२१०॥
स्मृत्वा कृत्वा च सन्धानं दद्यात्प्रतिसरं ततः ।
अर्घ्यपुष्पैस्तथा गन्धैर्माल्यैर्धूपैस्तथा द्विजाः ! ॥२११॥
पूजया सम्पुटीकुर्याद्भूषणानि पृथक् पृथक् ।
अन्तरान्तरयोगेन घण्टाशब्दसमन्विता ॥२१२॥
समस्तरत्नसद्धातुपुष्पाक्षतफलान्विता ।
सत्सुगन्धार्घ्यदर्भाढ्या लाजसिद्धार्थकैर्युता ॥२१३॥
प्रक्षेप्तव्या तु बहुशो वृष्टिः करगतैर्मुदा ।

केवलांपुष्पवृष्टिर्वा शङ्खादीनपि नादयेत् ॥२१४॥
दत्त्वैवं कलशस्थस्य पुरा विप्राः ! पवित्रकम् ।
अनेन विधिना दद्यान्मण्डलस्थस्य वै पुरा ॥२१५॥
पवित्रकत्रयं शुभ्रं भोगस्थाने च नारद! ।
दद्यात्समस्तमन्त्राणां त्रीण्येकं वा यथेच्छया ॥२१६॥
बिम्बस्थं तु समभ्यर्च्य प्रदद्याद्भूषणानि तु ।
कलशोक्तक्रमेणैव वनमालाख्यभूषणे ॥२१७॥
पूर्ववच्चानुसन्धानं सर्वं कृत्वा निवेदयेत् ।
पृथङ्न्यासो यदा प्रोक्तः किरीटाद्यं चतुष्टयम् ॥२१८॥
क्रमेणावाहयेद्विप्रा भूषणानां चतुष्टये ।
किरीटाख्य ! सुरेशस्य भानुतुल्यप्रभान्वित! ॥२१९॥
परिवारयुतस्तिष्ठ त्वमस्मिन् शीर्षभूषणे ।
श्रीवत्सागच्छपूर्णेन्दु समाने ! भगवत्प्रिय! ॥२२०॥
वक्षःस्थले जगद्योनेर्भूषणं कल्पितं मया ।
कौस्तुभागच्छ रत्नानामीश ! त्वं भगवत्प्रिय! ॥२२१॥
वक्षःस्थले जगद्यानेर्भूषणं कल्पितं मया ।
धातुपुष्पसमाकीर्णे प्रवाळमणिभूषिते ॥२२२॥
वनमाले ! समागच्छ देवदेवप्रिये ! शुभे ।
चतुर्भिरेतैर्मन्त्रैस्तु क्रमेणावाहयेद्द्विजाः ! ॥२२३॥
अस्त्रानां भूषणानां च लाञ्छनानां तथैव च ।
शक्तीनां विहगेशस्य तथैव मुनिसत्तमाः ! ॥२२४॥
पीठस्य च पवित्राणि प्रदद्यात्क्रमशस्ततः ।
एवमेव विभोर्दद्यान्मूलबिम्बगतस्य च ॥२२५॥
सर्वेषां मूलबिम्बानां लक्ष्म्यादीनां तथैव । .
अन्येषामङ्गबिम्बानां परिवारगणस्य च ॥२२६॥

शास्तृपीठस्य च लिपेः शब्दतत्वस्य च प्रभोः ।
घण्टाक्षसूत्रपूर्वाणां अर्घ्यपात्रादिकस्य च ॥२२७॥
छत्रचामरपूर्वाणां सर्वोपकरणस्य च ।
द्वारावरणदेवानां सर्वेषां च द्विजोत्तमाः ! ॥२२८॥
क्रमेण भूषणं दत्वा यायादग्निनिकेतनम् ।
अग्निस्थस्य विभोर्दद्याद्भूषणानि तु पूर्ववत् ॥२२९॥
अग्नौ निवेदयेद्विप्राः ! भूषणं न तु होमयेत् ।
यस्मात्सन्यासमूर्ध्वे तु विहितं भूषणस्य च ॥२३०॥
नाहर्तुं युज्यते दग्धं दोपमाभरणं विना ।
तथैव स्रुक्स्रुवादीनां दद्यात्प्रतिसरं तदा ॥२३१॥
देशिकस्य हृदारोप्य पूजितस्य च देववत् ।
स्वं स्वं चारोप्य चान्येषां देशिकानां तथैव च ॥२३२॥
साधकानां ततो दद्याद्यागाज्ञानामपि क्रमात् ।
मूलबिम्बे यदा कुर्यात्पवित्रारोपणं द्विजाः ! ॥२३३॥
तदा तु मूलबेरस्य दत्वा प्रतिसरं पुरा ।
नैवेद्यान्तं समभ्यर्च्य पश्चादुत्सवकौतुके ॥२३४॥
यागमण्टपमानीय अथ वास्थानमण्टपे ।
भद्रासने समारोप्य पूर्वोक्तविधिना ततः ॥२३५॥
चतुःस्थानस्थितस्यापि दद्यात्प्रतिसरं द्विजाः! ।
एवं हि देवदेवस्य चतुःस्थानास्थितस्य च ॥२३६॥
अलङ्कारासने मूलमन्त्रेण प्रणवेन वा ।
आमूर्ध्नः क्रमशो दत्वा भूषणानि यथाविधि ॥२३७॥
भोज्यासनं ततो नीत्वा विविधाभ्यवहारिकैः ।
भोगैरभ्यर्च्य देवेशं ब्रूयाद्बद्धाञ्जलिस्त्विदम् ॥२३८॥
नावलेपान्न मोहाच्च कर्मत्यागो मया कृतः ।

त्वमेव सर्वं जानासि सर्वेश! हृदये स्थितः ॥२३९॥
यथाशक्त्या त्वनिच्छातस्तत्रापि परमेश्वर।!
तन्निमित्तमिदं कर्म कृतं त्वत्प्रीतये मया ॥२४०॥
एवमुक्त्वा समभ्यर्च्य चतुरः पाञ्चरात्रिकान्।
भगवत्प्रतिपत्त्या तु शक्त्या प्रावरणैर्धनैः ॥२४१॥
तथा प्रतिसरान्तैस्तु ब्रह्मचारीन् यतीन् गुरून्।
तर्पयित्वाथ चान्नेन पूतेन विविधेन तु ॥२४२॥
पश्चादुत्सवबिम्बं तु यानमारोप्य देशिकः।
महोत्सवविधिप्रोक्तसर्वमङ्गलसंयुतम् ॥२४३॥
प्रदक्षिणक्रमेणैव प्रासादं तु प्रवेशयेत्।
देशिकस्त्वथ नैवेद्यपूर्वं कुर्याच्च भोजनम् ॥२४४॥
बन्धुभ्रातृसमोपेतः सविशेषं द्विजोत्तमाः!।
सायम्प्रातः प्रतिदिनं भूषणोत्सर्जनावधि ॥२४५॥
चतुःस्थानस्थितं देवं समभ्यर्च्य यथाविधि।
मण्टपे चौत्सवं बिम्बं सविशेषं समर्चयेत् ॥२४६॥
उत्सवं देवदेवस्य कुर्यात्कालद्वयेपि च।
वाहनारोहणं रात्रौ दिवसे वाचरेद्द्विजाः! ॥२४७॥
समाप्तिदिवसे प्रातर्विशेषयजनं ततः।
चतुःस्थानस्थितस्यापि मध्ये मध्येऽर्चनैः सह ॥२४८॥
अवरोप्य पवित्राणि रात्रौ मण्डलवाह्निगम्।
विसृज्य विधिवत्कुर्यात्कुम्भसम्प्रोक्षणादिकम् ॥२४९॥
एकरात्रं त्रिरात्रं वा पञ्च वा सप्तरात्रकम्।
पवित्रकं स्थापयित्वा ततः सन्यासमाचरेत् ॥२५०॥
अथ वार्चागतं विप्राः! तावत्संस्थाप्य भूषणम्।
यावदेकादशी शुक्ला संवृत्ता कार्तिकस्य तु ॥२५१॥

अपनीय च माल्यादीन् प्रदद्याद्वा दिने दिने ।
नो याति म्लानतां यावत्सम्प्राप्ते कालवासरे ॥२५२॥
अपनीय गुरोर्भक्त्या निवेद्य ब्राह्मणस्य वा ।
पञ्चकालप्रसक्तस्य तदभावात्तु नारद ! ॥२५३॥
षट्कर्मसम्प्रवृत्तस्य विष्णुभक्तस्य तत्वतः ।
विशेषयागहोमान्ते कृत्वाचार्यप्रपूजनम् ॥२५४॥
वैष्णवाः पूर्ववत्पूज्याः दद्यादाच्छादनं ततः ।
तेषां चैव यथाशक्ति अभावादथ नारद ! ॥२५५॥
युग्ममेकं तु वा वस्त्रमेकस्यावश्यमेव हि ।
उपवीतानि चान्येषां सोत्तरीयाणि योजयेत् ॥२५६॥
प्रार्थना च ततः कार्या यतीनां संयतात्मनाम् ।
युष्मत्प्रसादसामर्थ्यान्ममास्तु परिपूर्णता ॥२५७॥
क्रियाङ्गानां च सर्वेषां मा मेस्तु समयच्युतिः ।
एवमस्त्विति वक्तव्यं सर्वैस्तालसमन्वितम् ॥२५८॥
संवत्सरकृताकृत्यदोषः समयपूर्वकः ।
नाशमायाति वै क्षिप्रं पवित्रारोपणात्ततु ॥२५९॥
पाति यस्मात्सदोषं हि पतनात्परिरक्षति ।
विशेषेण द्विजास्त्राति पूर्णं कर्म करोति च ॥२६०॥
साधके च क्रियाहीने तस्मादुक्तो मया महान् ।
याग एष पवित्राख्य उक्तलक्षणलक्षितः ॥२६१॥
वक्ष्यते सूक्ष्मरूपोन्यः प्रकारो मुनिपुङ्गवाः ! ।
केवले बिम्बके वापि यागमन्दिरसंस्थिते ॥२६२॥
प्रासादसंस्थिते वापि दशम्यामधिवासिते ।
कल्पयेद्भूषणारोपं विना कलशमण्डले ॥२६३॥
अग्निस्थेपि तदा कुर्यात्तत्प्राग्वदधिवासिते ।

एकं द्वे त्रीणि वा, दद्यात्पवित्राणि तदा विभोः ॥२६४॥
समानीयोत्तमाद्येन भेदेन तु कृतानि वा ।
द्रव्याभावे द्विजश्रेष्ठा अशक्तिर्यदि वा भवेत् ॥२६५॥
सद्योधिवासं द्वादश्यां कृत्वा शक्त्या तु कारयेत् ।
सोपवासं द्विजश्रेष्ठा, अर्चायां भूषणं विभोः ॥२६६॥
यथेच्छाकल्पितैः सूत्रैर्ग्रन्थिभिस्तु यथेच्छया ।
निशारोचनया वापि पवित्राणां च धातुना ॥२६७॥
केनचिद्गन्धयो विप्रा विधिवत्परिरञ्जयेत् ।
पुष्पपूर्णानि गर्भाणि कृत्वा वा केवलान्यतः ॥२६८॥
प्रपूज्य पूर्ववद्विप्रा बिम्बसन्निहितं विभुम् ।
निवेद्य भूषणं दद्याद्वाणीमुच्चारयेदिमाम् ॥२६९॥
यन्मया ब्रह्मसूत्रं च कल्पितं ग्राहयस्व च ।
कर्मणां पूरणार्थाय यथा दोषो न मे भवेत् ॥२७०॥
इत्युक्त्वा च ततो दद्यात्पूज्योपरि पवित्रकम् ।
स्तुत्वा च देवदेवेशं क्षितौ येह्नि प्रयत्नतः ॥२७१॥
पूजयित्वाथ देवेशं कुर्यात्तदुपसंहृतिम् ।
गृहे पवित्रयागे तु विशेषोयमथोच्यते ॥२७२॥
बिम्बस्थे मण्डलस्थे वा चतुःस्थानस्थितेपि वा ।
पवित्राणां त्रयं दद्यादेकैकं वा यथेच्छया ॥२७३॥
इत्युक्तं योगिनां श्रेष्ठाः ! पवित्रारोहणं परम् ।
एवं कृते सति तदा सिद्धिर्भवति शाश्वती ॥२७४॥
सर्वार्थाः साधकानां च चेतसाभीप्सितं तदा ।
तपोदानव्रतानां च विहितस्याह्निकस्य च ॥२७५॥
निश्शेषयागभोगानां कृत्वा सम्पूरणक्रियाम् ।
अपरेऽहनि वै कुर्याच्चतुर्थे सप्तमेपि वा ॥२७६॥

स्नपनं पूज्यमन्त्रस्य तीर्थोद्देशेऽथ सङ्क्रमे ।
नद्यां समुद्रगामिन्यां देवखाते ह्रदे तु वा ॥२७७॥
प्रीतये परमेशस्य त्वात्मनो दुःखहानये ।
अह्लादायामराणां च पितॄणां तृप्तये तु वै ॥२७८॥
आप्यायनार्थं भूतानां भुवनानां च भूतये ।
देशदोषप्रशान्त्यर्थं गोब्राह्मणहिताय वै ॥२७९॥
यथावत्स्नपनं कुर्यात्तीर्थबिम्बे विशेषतः ।
नित्यस्नपनबिम्बे तु कुर्यात्तत्तदसन्निधौ ॥२८०॥
नित्योत्सवपरे बिम्बे ह्याचरेत्तदसन्निधौ ।
तदभावे पवित्रे तु दर्भमञ्जरिजे शुभे ॥२८१॥
विधानमत्र मे सम्यक् शृणुध्वं सुसमाहिताः ।
बहुशाखमभग्नाग्रं समूलं यदपुष्पितम् ॥२८२॥
प्राङ्मुखो दर्भमादाय प्रणवेन पुरा क्षितेः ।
ततस्तेनैव तन्मूलं प्राग्वत्कुर्यादधिष्ठितम् ॥२८३॥
तस्य मध्यमनाळं यन्न्यग्भूतमवातिष्ठते ।
आराध्य मन्त्रनाथेन स्मरेद्व्यासं महात्मना ॥२८४॥
विवर्तं परमात्मीयमध्यक्षाख्यं च विद्धि तम् ।
अनेकदर्भमुचं यत्काण्डं काण्डेषु चोत्तमम् ॥२८५॥
अणिमादिगुणैर्युक्तं पुंस्त्वं तेन कल्प्यते ।
वाचकं तस्य योक्तव्यं हंसयुक्तं द्विलक्षणम् ॥२८६॥
बहिः काण्डचतुष्केण चित्तपूर्वं चतुष्टयम् ।
प्रथनीयमथोवक्तमव्यक्तान्तं स्वकैः पदैः ॥२८७॥
प्रणवादिनमोन्तैस्तु व्यापकं सूक्ष्मलक्षणम् ।
एवं श्रोत्रादिकान् पञ्च स्वनाम्ना प्रथयेत्तदा ॥२८८॥
कर्मेन्द्रियाणि तदनु ततस्तन्मात्रपञ्चकम् ।

पञ्चकं त्वथ भूतानां बध्वा वै क्ष्मावसानिकम् ॥२८९॥
अवशिष्टैस्तु तत्काण्डैर्बध्नीयात्तु करण्डवत्।
विना शिखासमूहेन समुत्थानावधेरथ ॥२९०॥
किञ्चित्तदूर्ध्वदेशाच्च यथा नो याति वै पुनः।
बहुधा काण्डसङ्घस्तु कल्पितस्तत्त्वसङ्ख्यया ॥२९१॥
विभिन्नानां च काण्डानां भङ्गादेकरतस्य च।
उत्पद्यतेन्यथात्वं च तस्मात्तद्ग्रथयेत् दृढम् ॥२९२॥
दर्भमञ्जरिजं त्वेवं सम्पाद्यादौ पवित्रकम्।
अनुसन्धीयते तत्र मात्राध्यानं यथास्थितम् ॥२९३॥
पूजयित्वार्घ्यपुष्पाद्यैरलङ्कृत्य पठेदिदम्।
त्वमेव तीर्थं भगवन्! त्वमेवायतनं परम् ॥२९४॥
त्वयैवाधिष्ठितं सर्वमिदं जानामि तत्वतः।
तत्रापि च त्वयाऽऽदिष्टं क्रियाकाण्डं शुभप्रदम् ॥२९५॥
यत्तन्निर्वाहयाम्यद्य त्वदनुग्रहकाम्यया।
एवं विज्ञाप्य भगवन्मन्त्रमूर्तिं परात्परम् ॥२९६॥
तत्पात्रपात्रगं कृत्वा ब्रह्मयानगतं तु वा।
वेदगेयध्वनीशङ्खशब्दमङ्गळपूर्वकम् ॥२९७॥
नीत्वा तीर्थान्तिकं तत्र नीरदेशे निधाय च।
पूर्वामुखं च तद्यानमादाय च पवित्रकम् ॥२९८॥
वामहस्ततले कुर्यात् क्ष्मामण्डलगतं त्विव।
विधृयान्मध्यभागे च पाणिना दक्षिणेन तु ॥२९९॥
अवतीर्याम्भसो मध्यं निमज्जेत्सह तेन वै।
सान्निधिं तत्र तत्कालं प्रकुर्वंत्यचिरात्तु वै ॥३००॥
अशेषाणि च तीर्थानि लोकत्रयगतानि च।
मन्त्रात्मा यत्र रक्षार्थं क्षणमास्ते जलाशये ॥३०१॥
तत्रायतनतीर्थानां सर्वेषां स्यात्समागमः।

किं पुनर्यत्र भगवान् मन्त्रमूर्तिरधोक्षजः॥ ३०२॥
साधकाभ्यर्थितः स्नायात्सर्वानुग्रहया धिया ।
विद्वान् योनेन विधिना तीर्थमासाद्य तत्त्ववित् ॥३०३॥
स्नापयेद्बान्धवादीनां प्राप्नुवन्त्यचिराच्च ते ।
तैर्थं फलमनायासान्मन्त्रमूर्तेः प्रसादतः ॥३०४॥
किं तु तद्यानवादित्रवर्जितस्तु भवेद्विधिः ।
इमं विद्यान्महाबुद्धिर्विशेषं चात्र कर्मणि ॥३०५॥
सामान्यमविनाशं यच्चिन्मयं रूपवर्जितम् ।
विशेषज्ञानसम्बन्धं जीवहंसं विभाव्य तम् ॥३०६॥
पवित्रकं तदाकारं स्मृत्वा प्लाव्यं ततोम्भसा ।
एवं तेनैव चान्येषां बहूनां बहुभिस्तु वा ॥३०७॥
सम्पाद्य विष्टरे स्नानं दूरस्थानां सदैव हि ।
सम्पन्ने स्नपने त्वेवं द्वितीयेह्नि महामतिः ॥३०८॥
रथे कृत्वार्चिते तं वै प्रपूज्य च यथाविधि ।
यात्राख्यमुत्सवं कुर्यादन्नदानपुरस्सरम् ॥३०९॥
सनृत्तगेयवादित्रं जागरेण समन्वितम् ।
एकरात्रं द्विरात्रं वा त्रिरात्रं भक्तिपूर्वकम् ॥३१०॥
सकृत्संवत्सरस्यान्ते तूत्सवं स्नपनादिकम् ।
कुर्याद्वै मन्त्रनाथस्य स सिद्धिं लभते पराम्॥३११॥
अथ वा मन्दिरे देवमुत्तमोत्तममार्गतः ।
संस्नाप्य समलंकृत्य रथादौ जगतां पतिम् ॥३१२॥
समारोप्य विशेषेण यात्रोत्सवमथाचरेत् ।
इति पावित्रकं सम्यग्विधानं परिकीर्तितम् ॥३१३॥
इतः परं च श्रोतव्यमस्ति चेत्कथ्यतां द्विजाः! ।

इति श्रीपाञ्चरात्रे ईश्वरसंहितायां
पवित्रोत्सवादिविधिर्नाम
चतुर्दशोऽध्यायः ।

## अथ पञ्चदशोऽध्यायः ।

मुनयः ।

स्नपनानां विधिं सम्यक्समाख्याहि मुनीश्वर ! ।
यद्ज्ञानात्सकलाः पूर्णा नित्यनैमित्तिकाः क्रियाः ॥१॥

नारदः ।

शृणुध्वं मुनयः ! सर्वे सावधानेन चेतसा ।
विधानं स्नपनानां तु बहुभेदविनिर्मितम् ॥२॥
प्रासादस्याग्रतः कुर्यान्मण्टपं तु तदर्थतः ।
प्रथमावरणे वापि द्वितीयावरणेपि वा ॥३॥
तृतीयावरणे वापि चतुर्थे पञ्चमेपि वा ।
आग्नेय्यां दक्षिणस्यां वा नैर्ऋत्यां पश्चिमे तु वा ॥४॥
वायव्यामुत्तरस्यां वा ऐशान्यां वा यथारुचि ।
कुर्यान्मानादिकं सर्वं यागमण्टपवद्द्विजाः ! ॥५॥
विना यागस्थलं मध्ये वेदीं चापि तदूर्ध्वतः ।
अधिवासश्च कुम्भानां स्थापनं स्नपनं तथा ॥६॥
युज्यते वै यथैकस्मिन् तथाभ्यूह्य समाचरेत् ।
आचार्यांश्चतुरो विप्राः ! षडष्टौ द्वादशापि वा ॥७॥
यजमानस्तु वरयेच्छास्त्रज्ञान् गुरुणा सह ।
प्रवीणांश्च बहुत्वे तु तत्संख्यानियतिः कृता ॥८॥
तेषां यथोक्तसंख्यानामभिज्ञानामसन्निधौ ।
तादृशान् वरयेद्विप्रांश्चतुस्त्र्येकमेव वा ॥९॥
साधकांश्चतुरः षड्वा ह्यष्टौ द्वादश षोडश ।
वरयेच्छास्त्रकुशलान् प्रवीणानुक्तकर्मसु ॥१०॥
एवं सर्वेषु यागेषु नित्यनैमित्तिकात्मसु ।
आचार्याणां साधकानां सङ्ख्यानियम ईरितः ॥११॥

सङ्ख्याहीनं न गृह्णीयादापद्यपि कदाचन।
मोहेन यदि गृह्णीयाद्भयं स्याद्राजराष्ट्रयोः ॥१२॥
प्राङ्मुखे मण्टपे भागे तृतीये पश्चिमे स्थिते।
मध्यसूत्रं समाश्रित्य स्नानपीठं प्रकल्पयेत् ॥१३॥
प्रागगतं प्रत्यगास्ये तु सौम्यास्ये दक्षिणागतम्।
तदास्ये चोत्तरासंस्थं यथालक्षणलक्षितम् ॥१४॥
यदा स्नपनविम्बादौ विम्बे स्नपनमाचरेत्।
एवं तदा प्रकुर्वीत मण्टपं द्विजसत्तमाः! ॥१५॥
मूलविम्बे यदा कुर्यात्तदग्रे मण्टपं तदा।
तदानीं न तु कुर्वीत स्नानपीठं द्विजोत्तमाः! ॥१६॥
सप्तमे पञ्चमे वापि पूर्वे स्नपनवासरात्।
तृतीये वा मुनिश्रेष्ठास्तस्मिन्नहनि वा द्विजाः! ॥१७॥
अङ्कुरानर्पयित्वा तु ततः स्नपनमारभेत्।
यदा पूर्वदिने कुर्यात्कुम्भानामधिवासनम् ॥१८॥
तदानीं पूर्वरात्रौ तु कुर्यात्कौतुकबन्धनम्।
पूर्वेद्युर्विघ्निते पश्चात्तस्मिन्नहनि चाचरेत् ॥१९॥
यदा कर्मदिने विप्राः! कुर्यात्कुम्भाधिवासनम्।
तदानीं तु दिने तस्मिन् कुर्यात्कौतुकबन्धनम् ॥२०॥
ततः प्रभात आचार्यः कृतस्नानः प्रसन्नधीः।
प्रविश्य मण्टपं सार्धं परिचर्यापरैर्जनैः ॥२१॥
शलाकासहितैर्दर्भैः सहदेवीविमिश्रितैः।
मार्जयेत्सर्वतो विप्राः! प्राङ्मुखो वाप्युदङ्मुखः ॥२२॥
आलेपयेद्गोमयेन पूर्वादीशानपश्चिमम्।
नूतनेनाम्बरेणैव गालितेन जलेन तु ॥२३॥
प्रोक्षयेत्सर्वदिग्विप्राः! पञ्चगव्यकुशाम्बुभिः।
एको द्वौ बहवो वापि देशिकाः स्नपने स्मृताः ॥२४॥

नववस्त्रधराः सर्वे सर्वालङ्कारसंयुताः ।
नववस्त्रोत्तरीयाश्च सोष्णीषा गुरुसम्मताः ॥२५॥
नियमस्थास्तु वहवस्तथैव परिचारकाः ।
यद्यद्योग्यं भवेद्विप्राः! स्नपने यत्र यत्र तु ॥२६॥
तत्समस्तं समाहृत्य मण्टपे सम्प्रवेश्य च ।
स्नपनं प्रारभेत्पश्चाद्देशिकः शास्त्रपारगः ॥२७॥
स्नपनं द्विविधं विद्धि परापरविभेदतः ।
परं तु दशधा प्रोक्तं प्रधानादिविभेदतः ॥२८॥
प्रधानं प्रथमं विद्धि द्वितीयं तु परं स्मृतम् ।
तृतीयं परसूक्ष्मं स्यात्परस्थूलं चतुर्थकम् ॥२९॥
पञ्चमं स्यात्सूक्ष्मपरं सूक्ष्मसूक्ष्मं तु षष्ठकम् ।
सूक्ष्मस्थूलं सप्तमं स्यात् स्थूलं स्यात्परमष्टमम् ॥३०॥
स्थूलसूक्ष्मं तु नवमं स्थूलस्थूलं तदुत्तरम् ।
उत्तमादिविभेदेन त्वपरं नवधा स्थितम् ॥३१॥
परापरविभेदानामेषां साधारणं स्मृतम् ।
अनन्तकलशं नाम्ना स्नपनं सर्वपूरकम् ॥३२॥
एषां प्रधानपूर्वाणां सूत्रपातपुरस्सरम् ।
सर्वमुद्धारपर्यन्तं क्रमेण शृणुत द्विजाः ! ॥३३॥
लोहजं दारुजं वापि मृण्मयं वा सुशोभनम् ।
मण्टपेशानदिग्भागे संस्थाप्य जलभाजनम् ॥३४॥
वेदिं प्रक्षाल्य तोयेन वस्त्रैः संवेष्ट्य नूतनैः ।
सूत्रपातं ततः कुर्यात्कुम्भसंख्यानुरूपतः ॥३५॥
यथोक्तमानविस्तीर्णं क्षेत्रमण्टपमध्यतः ।
मण्टपस्य तु विप्रेन्द्राः ! प्राग्भागमवलम्ब्य वा ॥३६॥
स्वीकृत्य पश्चात्प्राक्प्रत्यग्दद्यात्सूत्रचतुष्टयम् ।

दक्षिणोत्तरगं सूत्रपञ्चकं विनिवेशयेत् ॥३७॥
एवं कृते भवन्त्यत्र पदानि द्वादश द्विजाः! ।
एकैकस्य तु विस्तारं तालं प्रादेशमेव वा ॥३८॥
हस्तं वारत्निमात्रं वा मण्टपस्यानुरूपतः ।
महत्त्वस्य च कुम्भानामेवं सर्वत्र चोर्ध्वतः ॥३९॥
पिष्टचूर्णैरलंकृत्य चतुर्दिक्षु समन्ततः ।
कोष्ठेषु पीठिकां कुर्यात्तण्डुलैर्व्रीहिभिस्तु वा ॥४०॥
तासां हि प्रतिकोष्ठं तु कुर्यादाढकसम्मितैः ।
अर्धाधिकैस्त्रिभिः प्रस्थैरथवा केवलैस्त्रिभिः ॥४१॥
अर्धोत्तरेण वा विप्राः ! कुर्यात्प्रस्थद्वयेन वा ।
यद्वा प्रस्थद्वयेनैव प्रस्थेनार्धोत्तरेण वा ॥४२॥
प्रस्थेन वा तदर्धेन तत्पादेनाथ वा द्विजाः ! ।
तुर्याश्रामथ वा वृत्तां कृत्वैवं पीठिकां ततः ॥४३॥
सौवर्णा राजता ब्राह्मास्ताम्रा वा भेदवर्जिताः ।
श्लक्ष्णा असुपिराः कुम्भाश्चतुर्विंशाङ्गुळोन्नताः ॥४४॥
विस्तृतेर्मध्यतस्तद्वत्तद्गलं त्र्यङ्गुळोन्नतम् ।
ततमङ्गुळिषट्केन तत्रास्यं त्र्यङ्गुळं स्मृतम् ॥४५॥
मेखला परितो ज्ञेया त्र्यङ्गुळा द्विजसत्तमाः! ।
यद्वा तदर्धमानं तु सर्वमुच्छ्रायपूर्वकम् ॥४६॥
यद्वोत्तमोत्तमा विप्राः! द्रोणमानोदपूरकाः ।
तदष्टमांशतो न्यूनाः क्रमात्प्रस्थद्वयावधि ॥४७॥
अधमाधमकुम्भास्तु प्रस्थमात्रोदपूरकाः ।
एवं लक्षणयुक्तास्तु कार्या वित्तानुसारतः ॥४८॥
चक्राधारोपरिस्थास्तु विततः कमठोदराः ।
पाञ्चजन्यवलिग्रीवाः शतपत्रमुखाननाः ॥४९॥
ऊर्ध्वाधः कौमुदीमालामण्डलालङ्कृता द्विजाः! ।

मकराननशेपाभिरमृताम्बुप्रवाहकाः ॥५०॥
नदीसमुद्रश्रीवृक्षनानामाल्यैः परिष्कृताः ।
चक्राधारादिभिर्यद्वा रहिताः सत्यसम्भवे ॥५१॥
मृण्मया वानुकल्पे तु भेदाच्छिद्रविवर्जिताः ।
न द्वितप्ताः सुतप्ताश्च ह्येकवर्णास्तु सुस्वराः ॥५२॥
सङ्गृह्य क्षाळयेत्सम्यक् शुद्धतोयैश्च सर्वतः ।
सूत्रेण वेष्टयेद्यत्नादङ्गुळाङ्गुळमन्तरम् ॥५३॥
पश्चिमे कलशस्थानात्कलशानधिवासयेत् ।
शालिभिः स्थण्डिलं कृत्वा केवले स्थण्डिले तु वा ॥५४॥
पूर्वाग्रानुत्तराग्रांश्च कुशांस्तत्र परिस्तरेत् ।
तारेण तत्र कलशान् न्यस्य पुष्पेण पूजयेत् ॥५५॥
अधोमुखांस्तु तानेव न्यस्य पङ्क्तिक्रमेण तु ।
कुशानुपरि संस्तीर्य प्राङ्मुखं परमेष्ठिना ॥५६॥
दर्भमुद्रां प्रदर्श्याथ गन्धतोयेन सर्वतः ।
सम्प्रोक्ष्य पुंसा विश्वेन विकिरेदक्षतानि च ॥५७॥
निवृत्या चोन्मुखीकृत्य सर्वेण मुनिपुङ्गवाः ! ।
पृथगुद्धृत्य कलशान् स्वस्थानेषु क्रमान्न्यसेत् ॥५८॥
कुम्भन्यासादिकं सर्वं मूलमन्त्रेण वाचरेत् ।
निरीक्षणादिसंशुद्धान् कृत्वा सहृदयेन तु ॥५९॥
अष्टाक्षरेण मन्त्रेण मन्त्रयेत्तान् सकृत्सकृत् ।
तेनैव पूजयेत्पश्चादर्घ्यस्रक्चन्दनादिना ॥६०॥
तदाहरणहोमं तु यथाशक्ति समाचरेत् ।
पूर्णान्तमथ सम्पूर्य क्रमाद्द्रव्यैर्नियोजयेत् ॥६१॥
पङ्क्तित्रये पश्चिमादि पूर्वान्तं च चतुश्चतुः ।
तत्र दक्षिणदिक्पङ्क्तौ कलशे पश्चिमस्थिते ॥६२॥

धात्रीफलोदकं चैव लोध्रतोयमनन्तरम् ।
रक्तचन्दनतोयं च रजनीनीरमुत्तमम् ॥६३॥
ततस्तु मध्यपङ्क्तौ तु तथैव विनिवेशयेत् ।
ग्रन्थिपल्लववार्येव ततस्तु तगरोदकम् ॥६४॥
प्रियङ्गुवारि तदनु मांसीजलमतः परम् ।
तथैवोत्तरपङ्क्तौ तु भवेदेतच्चतुष्टयम् ॥६५॥
सिद्धार्थकोदकं चैव सर्वौषधिजलं ततः ।
सर्वरत्नोदकं चैव शुद्धोदकमतः परम् ॥६६॥
न्यसेत्कूर्चं कुशं दार्भमुदग्रं षोडशाङ्गुळम् ।
अङ्गुळं ग्रन्थिमानं तु मूलं वै द्वादशाङ्गुळम् ॥६७॥
शेषमग्रं विजानीयादित्येतत्कूर्चलक्षणम् ।
अथ वार्धाङ्गुळा ग्रन्थिरग्रं वै द्व्यङ्गुळं भवेत् ॥६८॥
मूलं कुर्यात्तु विप्रेन्द्राः! द्वादशाङ्गुळसम्मितम् ।
ब्राह्मणस्य चतुर्दर्भं त्रिदर्भं क्षत्रियस्य तु ॥६९॥
द्विदर्भं तु विशां कूर्चं स्त्रीशूद्राणां तथा भवेत् ।
सर्वेषामथ वा कूर्चं चतुःसप्तकृतं तु वा ॥७०॥
मूलमन्त्रेण तदनु पूजयेत्कलशान् क्रमात् ।
अर्घ्यालभनपुष्पैश्च धूपेन मुनिपुङ्गवाः! ॥७१॥
अपिधाय क्रमेणैव पिधानैः सूत्रवेष्टितैः ।
प्रतिकुम्भं तु वसनैर्वेष्टयेद्विभवे सति ॥७२॥
आच्छाद्य नववस्त्रेण सर्वतः प्रागुदङ्मुखः ।
पूर्ववत्पूजयित्वा तु ततो होमं समारभेत् ॥७३॥
अष्टोत्तरशतं हुत्वा समिदादीन् पृथक् पृथक् ।
पूर्णाहुतिं ततो हुत्वा कलशानभिमन्त्रयेत् ॥७४॥
मूलमन्त्रेण सर्वेषां स्नपनं विहितं द्विजाः! ।
अन्तरान्तरयोगेन कुम्भैः शुद्धोदपूरितैः ॥७५॥

स्नपनं चार्घ्यदानं च द्रव्याणां तु समाचरेत्।
द्रव्यन्यासक्रमेणैव तदुद्धारः प्रकीर्तितः ॥७६॥
प्रधानमेतत्कथितं द्विपट्ककलशात्मकम्।
सर्वेषां कारणमिदं कार्याण्यन्यानि सत्तमाः! ॥७७॥
अम्बुना पञ्चगव्येन क्षीरेण तदनन्तरम्।
दध्ना घृतेन मधुना सर्वौषधिजलेन तु ॥७८॥
बीजाम्बुफलतोयेन गन्धपुष्पाम्बुना ततः।
हेमरत्नोदकेनाथ पूरितं तु यथाक्रमम् ॥७९॥
कलशानां द्विपट्कं यत्परमेतदुदाहृतम्।
पञ्चगव्यदधिक्षीरघृतमध्विक्षुवारिणा ॥८०॥
सर्वौषधीगन्धरत्नफलपुष्पजलैस्तथा।
केवलेनोदकेनापि क्रमेण परिपूरितम् ॥८१॥
द्विपट्कमेतत्कुम्भानां परसूक्ष्ममुदाहृतम्।
सूत्रपातादिकं चास्मिन् क्षितयेऽपि प्रधानवत् ॥८२॥
पाद्यमर्घ्यं तथाचामं सर्वौषधिजलं तथा।
दधि क्षीरं मधु घृतं तथा शुद्धोदकं द्विजाः! ॥८३॥
कुम्भानां नवकं त्वेतत्परस्थूलमुदाहृतम्।
सूत्रपातादिकं चास्य प्रागेव परिकीर्तितम् ॥८४॥
पञ्चधा भाजिते क्षेत्रे भागाः स्युः पञ्चविंशतिः।
बहिः प्रागादियोगेन कलशानां द्विरष्टके ॥८५॥
क्षीरं दधि घृतं चैव मधु वै रसमैक्षवम्।
धात्रीफलादिदशकं सर्वौषध्यन्तमेव हि ॥८६॥
पत्रोदकं ततः पश्चात्तदन्तः कलशाष्टके।
प्रागादि पुष्पतोयं च फलबीजोदके त्वथ ॥८७॥
गन्धोदकं च तदनु हेमरत्नजले तथा।

पुण्यतीर्थसरित्तोये मध्ये शुद्धोदकं न्यसेत् ॥८८॥
द्रव्यन्यासक्रमेणैव तदुद्धार उदाहृतः ।
एवं क्रमाद्द्रव्ययुक्तकलशैर्द्विजसत्तमाः ! ॥८९॥
स्नपनं पञ्चविंशद्भिरेतत्सूक्ष्मपरं स्मृतम् ।
पञ्चविंशत्तु कोष्ठानि कल्पयित्वा तु पूर्ववत ॥९०॥
मध्ये शुद्धोदकं न्यस्य बहिरिन्द्रादियोगतः ।
पूर्वं क्षीराम्भसा पूर्णं परं शुद्धेन वारिणा ॥९१॥
तृतीयं रत्नतोयेन हेमतोयेन चापरम् ।
गन्धांबुमिश्रितं चान्ये फलपुष्पोदकान्विते ॥९२॥
शालिबीजाम्भसा पूर्णमष्टमं परिकीर्तितम् ।
कुम्भाष्टकं तु तद्बाह्यदिगष्टकसमाश्रितम् ॥९३॥
धात्रीफलोदकं पूर्वे पथ्यातोयं ततोपरे ।
गुळूचीक्षोदमन्यस्मिन् विभीतकजलं परे ॥९४॥
कुमारीकथितं तोयं व्याघ्रीसलिलमेव च ।
नागरोदकमन्यस्मिन् तथान्यस्मिन् मधूदकम् ॥९५॥
विहितोत्र समुद्धारो द्रव्यन्यासक्रमेण तु ।
नृसिंहमन्त्रैर्जप्तेन केवलेनोदकेन तु ॥९६॥
सत्याद्यैः पञ्चभिर्मन्त्रैस्त्रिभिःसिंहादिभिः क्रमात् ।
अन्तरावरणस्थानां कलशानां मुनीश्वराः! ॥९७॥
एकैकं सप्तधामन्त्र्य प्रागादौ तद्बहिःस्थितान् ।
कलशांश्चक्रमन्त्रेण हृदाद्येनाभिमन्त्रयेत् ॥९८॥
गायत्र्यान्तर्गतैर्विप्राः ! कलशैः स्नापयेत्क्रमात् ।
द्वितीयावरणस्थैस्तु उपचारा हृदा मताः ! ॥९९॥
केवलेनोदकेनाथ अस्त्रजप्तेन सेचयेत् ।
यद्वा प्रागुदितेनैव वर्त्मना सर्वमाचरेत् ॥१००॥

दशभिः सप्तभिः कुम्भैः सूक्ष्मसूक्ष्ममिदं स्मृतम् ।
चतुर्हस्तं त्रिहस्तं वा क्षेत्रं सार्धद्विहस्तकम् ॥१०१॥
द्विहस्तं वा समापाद्य तदर्धं तु द्विधा भवेत् ।
एकेन कर्णिकां कुर्याद्द्वितीयेन द्विरष्टकम् ॥१०२॥
दळानां तु ततो विप्राः! कर्णिकोपरि विन्यसेत् ।
कलशानां चतुष्कं तु दिक्चतुष्कसमाश्रितम् ॥१०३॥
पूर्वं तु पञ्चगव्येन ततश्चैव मृदम्बुना ।
सर्वौषध्युदकेनैव केवलेनाम्भसाऽथ च ॥१०४॥
पूर्वपत्रात्समारभ्य यावदीशानगोचरम् ।
षोडशान्यान् प्रतिष्ठाप्य तत्रैव कलशान् क्रमात् ॥१०५॥
प्रथमं पञ्चगव्येन केवलेन तु पूरयेत् ।
गोमूत्रेण द्वितीयं तु तृतीयं गोमयाम्बुना ॥१०६॥
त्रेताग्निभूतिना विप्राः! चतुर्थं सोदकेन तु ।
गजगोवृषभशृङ्गवल्मीकाख्यमृदा परम् ॥१०७॥
शालिक्षेत्रान्नदीमध्यात्पद्मषण्डाच्च पर्वतात् ।
मृद्भिः षष्ठं तु कलशं पूरणीयं ततो द्विजाः! ॥१०८॥
सप्तमं सर्षपाम्भोभिः सर्वौषधिभिरष्टमम् ।
क्षीरेण नवमं विद्धि दध्ना दशममुच्यते ॥१०९॥
घृतेन चैकादशमं मधुना द्वादशं द्विजाः! ।
सर्वैस्त्रयोदशं बीजैः फलैः सर्वैश्चतुर्दशम् ॥११०॥
समस्तधान्यैरपरं सर्वगन्धैस्तु षोडशम् ।
विहितोत्र समुद्धारो द्रव्यन्यासक्रमेण तु ॥१११॥
हृदाभिमन्त्रितं कृत्वा एकैकं कलशं पुरा ।
स्नापयेन्मूलमन्त्रेण एकैकेन ततः क्रमात् ॥११२॥
इति विंशतिभिः कुम्भैरन्वितं द्विजसत्तमाः! ।

सूक्ष्मस्थूलमिदं प्रोक्तं ततोन्यत्कथ्यते द्विजाः! ॥११३॥
प्राक्प्रत्यगायतं सूत्रपञ्चकं विनिवेश्य च ।
दक्षिणोत्तरसूत्राणामेकादश विनिक्षिपेत् ॥११४॥
एवं कृते तु कोष्ठानि चत्वारिंशद्भवन्ति हि ।
तत्र पश्चिमदिक्पङ्क्तेरारभ्य क्रमयोगतः ॥११५॥
दक्षिणादुत्तरान्तं च कलशानां श्चतुश्चतुः ।
विन्यस्य पूरयेत्तांस्तु क्रमाद्द्रव्यैर्निबोधत ॥११६॥
पाद्यार्घ्याचमनीयार्थद्रव्यैः पूर्वोदितैस्त्रयम् ।
नगादाद्यन्तमध्येभ्यो नदीमृत्तीरसम्भवा ॥११७॥
ह्रदाद्वल्मीकशिखराद्गजदन्तक्षतीकृतात् ।
हलोत्था गोवृषशृङ्गशालीनां तु समुद्भवा ॥११८॥
तथा च पद्मपण्डोत्था त्वेकस्मिन्गोमयं परे ।
वनदाहसमुद्भूतं तथैव च महानसात् ॥११९॥
त्रेताग्निभस्म त्वपरे विनिवेश्य घटान्तरे ।
अन्यस्मिन् पञ्चगव्यं तु कुशोदकसमन्वितम् ॥१२०॥
सघृतं तैलकुम्भं तु चमसीवारिपूरितम् ।
पलाशखादिराश्वत्थशमीलोहितचन्दनम् ॥१२१॥
कषायोदकमन्यस्मिन् परे तु त्रिफलोदकम् ।
वचा शतावरी कन्या व्याघ्री सिंही कृताञ्जलिः ॥१२२॥
गोलोमी सिंहलोमी च कुष्ठं भूम्यञ्जनं तथा ।
महागरुडवेगा च कलशेन्यत्र सत्तमाः! ॥१२३॥
महानीला गुडूची च सहदेवी शतावरी ।
विष्णुक्रान्ता च कार्कोटा साहा वह्निशिखा परे ॥१२४॥
यष्टी वराहकर्णी चाप्यन्यस्मिन् गजपिप्पली ।
श्रीफलाद्यानि चान्यस्मिन् पावनानि फलानि च ॥१२५॥

दधिक्षीराज्यकुम्भांश्च द्वौ मध्विक्षुरसान्वितौ ।
मूलान्यम्भोरुहाणां च तान्यन्यस्मिन् द्वये न्यसेत् ॥१२६॥
द्रुमाणां पावनानां तु सक्षीराणां विशेषतः ।
पत्रपुष्पफलोपेतमेकस्मिन मञ्जरीगणम् ॥१२७॥
जात्यादिकमथैकस्मिन् कौसुमीयं लताचयम् ।
रोचनारजनीयुग्मं मुला गोटाथ पञ्चकम् ॥१२८॥
इति पञ्चकमन्यस्मिन् दर्भदूर्वाङ्कुराणि च ।
सास्यं शाल्यंकुरचयं कलशे ह्यपरे तु वै ॥१२९॥
सिद्धार्थकान् सितायांस्तु प्रियङ्गुं गन्धसंज्ञितम् ।
अपरस्मिन् न्यसेत्कुम्भे सह वै नागकेसरैः ॥१३०॥
ग्राम्याश्चौषधयः सप्त ससारण्या घटद्वये ।
वाह्लीकं चन्दनं चैव रसं कर्पूरमेव च ॥१३१॥
चतुष्कमेतदपरे त्वन्यस्मिन् धातवः शुभाः ।
ताम्रजाम्बूनदाद्यास्तु परे रत्नचयं महत् ॥१३२॥
न्यसेद्विद्रुमजालं च द्वयोर्मुक्ताफलानि च ।
अर्घ्योदकमथैकस्मिन् नदीतीर्थोदकं द्वये ॥१३३॥
सर्वौषधिघटं चैव सुशीताम्भोघटं ततः ।
सुगन्धपुष्पकलशं चत्वारिंशत्तमी स्मृताः ॥१३४॥
द्रव्यन्यासक्रमोद्धार इदं स्थूलपरं स्मृतम् ।
शीताम्बुपूरितानां च घटानां केवलं द्विजाः ! ॥१३५॥
चत्वारिंशत्समायुक्तं स्थूलसूक्ष्मं प्रकाशितम् ।
गन्धोदकेन पूर्णानां चत्वारिंशद्भिरेव च ॥१३६॥
समन्वितं घटानां तु स्थूलस्थूलं प्रकीर्तितम् ।
सूत्रपातविधानं च कुम्भन्यासक्रमं तथा ॥१३७॥
उद्धारं चानयोः कुर्यात् स्थूलाद्यसदृशं द्विजाः ! ।

भक्तिश्रद्धावशाच्चापि विभवानुगुणं तु वा ॥१३८॥
त्रिविधं स्थूलभेदं तु द्विगुणं तु समाचरेत् ।
अनुकल्पे तदर्धं वा पादमष्टांशमेव वा ॥१३९॥
चतुष्टयं वा कुम्भानां प्रत्येकं वा द्वयं द्वयम् ।
एकैकं वापि विप्रेन्द्राः ! सर्वद्रव्यमयं घटम् ॥१४०॥
नवानां परिपूर्णानामुक्तादन्यदपेक्षितम् ।
कुर्यादभ्यूह्य तत्सर्वं प्रधानोदितवर्त्मना ॥१४१॥
एवं तु दशधा विप्राः! परभेदाः प्रकीर्तिताः ।
अपरस्य विभेदांस्तु क्रमेण शृणुत द्विजाः! ॥१४२॥
चतुरश्रीकृते क्षेत्रे ह्येकत्रिंशद्विभाजिते ।
कोष्ठकानां नवशतमेकषष्टिस्तथैव च ॥१४३॥
मध्ये पङ्क्तित्रयं स्थाप्य मार्जयेत्तद्बहिर्द्वयम् ।
वीथ्यर्थं तद्बहिर्भूयः स्थाप्य पङ्क्तिलयं पुनः ॥१४४॥
द्वयं विसृज्य वीथ्यर्थं स्थापयेत्सप्तकं पुनः ।
विभज्य वा त्रिनवधा ह्येकैकं विसृजेद्द्विजाः ! ॥१४५॥
वीथ्यर्थं सङ्कटे देशे कलशानां तु पूर्ववत् ।
क्रमेण तेषु कोष्ठेषु कलशान् पूर्ववन्न्यसेत् ॥१४६॥
घृतमुष्णोदकं चैव रत्नवारि फलोदकम् ।
लोहाम्भो मार्जनाम्भश्च गन्धाम्भोक्षतवारि च ॥१४७॥
यवोदकमथेशान्तं मध्यादारभ्य मध्यमे ।
पाद्यमर्घ्यं तथाचामं पञ्चगव्यं क्रमेण तु ॥१४८॥
द्विचतुष्कोणसंवीतनवकानां तु मध्यमे ।
ऐन्द्राद्युत्तरपर्यन्तं विदिक्स्थानां तु मध्यमे ॥१४९॥
दधि क्षीरं मधु तथा कषायं वह्निदिक्क्रमात् ।
एवं सप्तदश प्रोक्ताः प्रधानद्रव्यसंयुताः ॥१५०॥

शेषाश्चान्ये चतुष्पष्टिः शुद्धोदकसमन्विताः।
इत्येकाशीतिकलशा मध्यतः संस्थिता द्विजाः! ॥१५१॥
ततस्त्वेकोनपञ्चाशत्कलशास्तद्दिगष्टके।
तत्र मध्यमकुम्भेषु दिक्स्थितानां तु सेचयेत् ॥१५२॥
गुडोदकं चेक्षुरसं नाळिकेररसं तथा।
शान्तिवारि मुनिश्रेष्ठाः! पूर्वादिक्रमयोगतः ॥१५३॥
विदिक्स्थब्रह्मकुम्भेषु सेचयेन्मङ्गळोदकम्।
आग्नेयादीशपर्यन्तं शिष्टमन्यच्छतत्रयम् ॥१५४॥
अशीतियुक्तं कुम्भानां तथैव चतुरुत्तरम्।
सुगन्धैः शीतलैस्तोयैः सम्पूर्णं द्विजसत्तमाः! ॥१५५॥
पश्चान्मध्यस्थनवके मध्यादीशानपश्चिमम्।
वासुदेवाद्वराहान्तं मूर्तीनां नवकं यजेत् ॥१५६॥
अर्घ्यालभनमाल्यैश्च धूपेन च यथाक्रमम्।
तद्बहिर्नवकानां तु ब्रह्मकुम्भेषु पूजयेत् ॥१५७॥
केशवाद्वामनान्तं च द्विचतुः पूर्वदिक्क्रमात्।
तत एकोनपञ्चाशत्कलशानां मुनीश्वराः! ॥१५८॥
पूजयेद्ब्रह्मकुम्भेषु श्रीधराद्यं चतुष्टयम्।
पूर्वाद्युत्तरपर्यन्तं वह्न्यादीशानपश्चिमम् ॥१५९॥
नराद्यं कृष्णपर्यन्तं चतुष्कं पूजयेद्द्विजाः!।
प्राग्वत्कूर्चानि विन्यस्य चक्रिकाभिः पिधाय च ॥१६०॥
ततः प्रच्छादयेद्वस्त्रैः नूतनैस्तु पृथक् पृथक्।
तत ऊर्ध्वं यजेद्देवं वासुदेवं जगत्पतिम् ॥१६१॥
पाद्यान्द्यैर्मङ्गळान्तैस्तु कुम्भैः संस्नापयेद्विभुम्।
अष्टाक्षरेण मन्त्रेण द्विषट्काक्षरतोऽपि वा ॥१६२॥
विष्णुगायत्रिया वापि तन्मूर्तिमनुनाऽपि वा।

स्नपनं सर्वकलशैर्विहितं त्वथवा द्विजाः ! ॥१६३॥
देवं वैष्णवगायत्र्या स्नापयेत्पाद्यवारिणा ।
तद्विष्णोरितिमन्त्रेण स्नापयेदर्घ्यवारिणा ॥१६४॥
प्रतेविष्णो इति ऋचा स्नानमाचमनेन तु ।
विष्णोः कर्मेति मन्त्रेण स्नानं स्यात्पञ्चगव्यकैः ॥१६५॥
दधिक्राविष्णमन्त्रेण दध्ना संस्नापयेद्विभुम् ।
आप्यायस्वेति मन्त्रेण गोक्षीरेणाभिषेचयेत् ॥१६६॥
मधुवातेति मन्त्रेण मधुना स्नपनं विभोः ।
ओषध्य इति मन्त्रेण कषायैः स्नपनं भवेत् ॥१६७॥
त्वं विष्णुरिति मन्त्रेण स्नपनं तूष्णवारिणा ।
फलिनीत्यादि मन्त्रेण स्नापयेत्फलवारिणा ॥१६८॥
शन्नो देवीति मन्त्रेण स्नपनं मार्जनाम्बुभिः ।
सावित्र्याक्षततोयेन अग्न आयाहि मन्त्रतः ॥१६९॥
रत्नोदकैरपित्वेति लोहतोयेन सेचयत् ।
गन्धद्वारेति मन्त्रेण स्नपनं यववारिणा ॥१७०॥
शतधारेति मन्त्रेण स्नपनं गन्धवारिणा ।
घृतेन स्नापयेद्देवं ततः शुक्रमसीत्यृचा ॥१७१॥
अथ वा पाद्यपूर्वं तु यावत्तोयावसानकम् ।
ऋग्भिः पुरुषसूक्तस्य ततः शुक्रमसीत्यृचा ॥१७२॥
आज्यं च गुडतोयाद्यं चतुष्कं शान्तिपश्चिमम् ।
त्वं विष्णुरिति मन्त्रेण विष्णोर्नुकमिति द्विजाः ! ॥१७३॥
स्नापयेन्मङ्गलाख्येन तोयेन मुनिपुङ्गवाः ! ।
येनाभिषिञ्चेद्देवेशं प्रधानकलशेन तु ॥१७४॥
तच्छुद्धवारिकलशैस्तन्मत्रेणाभिषेचयेत् ।
प्रतिद्रव्यं तु मन्त्रेण ह्यर्घ्यालभनमाल्यकैः ॥१७५॥

धूपेन च समभ्यर्च्य ततस्तेनाभिषेचयेत् ।
यद्वार्घ्यं पाद्यमाचामं गन्धस्रग्धूपदीपकम् ॥१७६॥
दद्याद्यथाक्रमं सर्वं केवलं चार्घ्यमेव वा ।
युक्तं शतचतुष्केण सप्तत्या च त्रयेण च ॥१७७॥
कुम्भानां स्नपनं ह्येतदुत्तमोत्तममुच्यते ।
हीनमष्टाष्टसङ्ख्यातैरन्तः शुद्धोदवारिभिः ॥१७८॥
कलशैः स्नपनं यत्तु तत्स्यादुत्तममध्यमम्।
तथा पङ्क्तिचतुष्कं तु हीनं स्यात्पूर्वनिश्चितात् ॥१७९॥
यदेतत् स्नपनं युक्तमेकाशीत्या च मध्यतः ।
दिक्षु चैकोनपञ्चाशच्चतुष्केण विदिक्षु च ॥१८०॥
त्रांशदैविकभागस्थैः कलशैरन्वितं द्विजाः! ।
शेषैः षष्ट्युत्तरशतसङ्ख्यातैः शुद्धवारिभिः ॥१८१॥
विहीनं कलशैर्विप्रास्तद्भवेदुत्तमाधमम् ।
शतद्वयेन कुम्भानां चतुर्दिक्संस्थितेन च ॥१८२॥
चतुर्हीनेन वै विप्रा ह्येकाशीत्या च मध्यतः ।
संयुक्तं स्नपनं प्राग्वत्तद्भवेन्मध्यमोत्तमम् ॥१८३॥
अष्टाष्टपरिसंख्यातैरन्तः शुद्धोदवारिभिः ।
कलशैर्यद्भवेद्धीनं तत्स्यान्मध्यममध्यमम् ॥१८४॥
एकाशीत्या च कुम्भानां मध्यतस्तु समन्वितम् ।
दिक्षु चैकोनपञ्चाशन्मध्यस्थनवसंयुतम् ॥१८५॥
शेषैः शुद्धोदकलशैर्विहीनं मध्यमाधमम् ।
पङ्क्तीनामष्टकेनात्र हीनक्षेत्रं तु कल्पयेत् ॥१८६॥
एकाशीत्या च कुम्भानां केवलं पूर्ववद्द्विजाः! ।
अधमोत्तममेतत्तु स्नपनं परिकीर्तितम् ॥१८७॥
द्वात्रिंशद्भिस्तु कलशैः कोणस्थैः शुद्धवारिभिः ।

विहीनं स्नपनं यत्तद्धवेदधममध्यमम् ॥१८८॥
यच्चतुःषष्टिकलशैर्विहीनं सर्वदिक्स्थितैः ।
शुद्धोदकैर्द्विजश्रेष्ठास्तद्धवेदधमाधमम् ॥१८९॥
नवधा सप्तधा वात्र क्षेत्रं कृत्वा तु पीडयेत् ।
द्वयं चतुष्कं वा शिष्टं कुम्भानां स्थापनार्थतः ॥१९०॥
इत्येवमपरं प्रोक्तं नवधा मुनिसत्तमाः! ।
कुम्भाधिवासपूर्वं तु सर्वं पूर्ववदाचरेत् ॥१९१॥
आज्यस्य दैवतं देवो वासुदेवः परः स्मृतः ।
उष्णाम्भसः सङ्कर्षणः प्रद्युम्नो रत्नवारिणः ॥१९२॥
फलाम्भसोऽनिरुद्धस्तु भगवान् दैवतं द्विजाः! ।
नारायणस्तु मन्त्रात्मा लोहतोयस्य दैवतम् ॥१९३॥
मार्जनस्य हयग्रीवो विष्णुः स्याद्गन्धवारिणः ।
नृसिंहोक्षततोयस्य वराहो यववारिणः ॥१९४॥
पाद्यस्य केशवो देवोऽर्घ्यस्य नारायणः स्मृतः ।
देव आचमनीयस्य माधवस्त्वधिदेवता ॥१९५॥
गोविन्दः पञ्चगव्यस्य विष्णुस्तु दधिदैवतम् ।
मधुसूदनसंज्ञस्तु पयसो देवता स्मृता ॥१९६॥
त्रिविक्रमाख्यो मधुनः कषायस्य च वामनः ।
भगवान् श्रीधराख्यस्तु गुडतोयस्य देवता ॥१९७॥
देवदेवो हृषीकेश इक्षुसारस्य दैवतम् ।
दामोदरोऽधिदैवं तु नाळिकेराम्भसो द्विजाः! ॥१९८॥
पद्मनाभस्तु भगवान् शान्तितोयस्य देवता ।
नरो नारायणश्चैव हरिः कृष्णस्तथैव च ॥१९९॥
आग्नेयादीशपर्यन्तं देवता मङ्गळाम्भसः ।
एकाशीतिस्थितानां तु शुद्धोदानां च दैवतम् ॥२००॥

कान्त्याद्युन्नतिपर्यन्तमष्टकं प्रतिदिक्क्रमात् ।
वहिरेकोनपञ्चाशच्छुद्धतोयेषु च क्रमात् ॥२०१॥
स्वधादिगायत्र्यन्तास्तु शक्तयो ह्यधिदेवताः ।
अष्टावष्टौ तु पूर्वादिदिक्ष्वग्न्यादिविदिक्षु च ॥२०२॥
कलशानां तु गरुडः शेषः सूत्रस्य दैवतम् ।
कूर्चानां तु परं ब्रह्म चक्रिकाणां तु चक्रराट् २०३॥
वाससां वासुदेवस्तु सर्वेषां च स एव वा ।
मार्जनं प्रोक्षणं चैव शकृदा चानुलेपनम् ॥२०४॥
सूत्रपातमलङ्कारं पिष्टचूर्णैः समन्ततः ।
अष्टाक्षरादिमन्त्रेण कारयेत्पञ्च मन्त्रवित् ॥२०५॥
पञ्चोपनिषदा मन्त्री कलशानधिवासयेत् ।
विष्णुगायत्रिया तत्र कोष्टेषु कलशान्न्यसेत् ॥२०६॥
तत्र द्रव्याधिदेवानां वाचकैः पूरयेत्क्रमात् ।
कूर्चांस्तु प्रक्षिपेत्तेषु द्विषट्कब्रह्मविद्यया ॥२०७॥
तत्तद्द्रव्याधिदेवांस्तु तत्तद्द्रव्येषु पूजयेत् ।
चक्रिकाः स्थापयेत्पश्चाच्चक्रमन्त्रेण साधकः ॥२०८॥
वासोभिश्छादयेत्पश्चाद्द्विषट्कार्णेण मन्त्रवित् ।
वस्त्रापनयनं कुर्यान्मूलमन्त्रेण मन्त्रवित् ॥२०९॥
प्रणवेन तु सूत्राणि छित्वा तेनाभिवन्द्य च ।
उद्धृत्य विष्णुगायत्र्या दद्याद्धस्ते गुरोस्तथा ॥२१०॥
यस्मिन्यस्मिन्न मन्त्रोक्त विहितः कर्मणि द्विजाः! ।
अष्टाक्षरेण मन्त्रेण तत्तत्कुर्याद्विचक्षणः ॥२११॥
अथ वा सर्वकर्माणि मूलेनैव समाचरेत् ।
पूर्वोक्तः परभेदानां स्नपनानां द्विजोत्तमाः! ॥२१२॥
अर्घ्यादिद्रव्यनिचय इतरेषां तु कथ्यते ।

विष्णुपर्णी च दूर्वा च पद्मं श्यामाकमेव च ॥२१३॥
एतानि पाद्यस्याङ्गानि चत्वारि द्विजपुङ्गवाः! ।
गन्धपुष्पाक्षतफले यवसिद्धार्थकं तिलम् ॥२१४॥
कुशाग्रमर्घ्यस्याङ्गानि ह्येतान्यष्टौ भवन्ति हि ।
लवङ्गजातितक्कोलमङ्गमाचमनीयके ॥२१५॥
शकृद्रसं च गोमूत्रं क्षीरं दधि घृतं तथा ।
अङ्गानि पञ्चगव्यस्य पञ्चैतानि च सर्वतः ॥२१६॥
शम्युदुम्बरबिल्वानां पलाशवटयोस्तथा ।
खदिराश्वत्थयोश्चापि विकङ्कततरोस्तथा ॥२१७॥
त्वक्सारं तु कषायं स्यात्सर्वपापापनोदनम् ।
कदलीबिम्बचूताश्च पनसं मातुलुङ्गकम् ॥२१८॥
नाळिकेरं चामलकं बीजपूरं फलाम्भसः ।
अङ्गान्येतानि चैवाष्टौ फलानि कथितानि वै ॥२१९॥
सहदेवी शिरीषं च रजनी सूर्यवर्तिनी ।
सदाभद्रा कुशाग्राणि मार्जनाङ्गानि षट् द्विजाः! ॥२२०॥
सूर्यकान्तं पद्मरागमिन्दुकान्तं तथैव च ।
वैडूर्यं चाप्ययस्कान्तमिन्द्रनीलप्रवाळकौ ॥२२१॥
गारुडं पुष्यरागं च स्फटिकब्रह्मरागकौ ।
वज्रं मौक्तिकमङ्गानि रत्नोदस्याथ वा द्विजाः! ॥२२२॥
मणिर्मुक्ताफलं वज्रं प्रवाळं पुष्यकं तथा ।
रत्नोदकाङ्गान्येतानि पञ्चैवं मुनिपुङ्गवाः! ॥२२३॥
बाह्लीकं चन्दनं चैव कर्पूरमगरुं तथा ।
गन्धाङ्गानि च चत्वारि त्वथ वा मुनिपुङ्गवाः! ॥२२४॥
चन्दनं कुङ्कुमं मांसी हरिबेरं मुरं तथा ।
उशीरं कुष्ठमगरुर्गन्धाम्भोङ्गं तु चाष्टकम् ॥२२५॥

रुक्मं रूप्यं च ताम्रं चाप्ययस्त्रपुकमेव च ।
अङ्गानि कथितान्येव पञ्च वै लोहवारिणः ॥२२६॥
तिलसिद्धार्थनीवारयववेणुयवानि च ।
तुळसीपत्रयुक्तानि शान्त्यम्भोङ्गानि चैव षट् ॥२२७॥
इन्द्रवल्ल्यङ्कुरं पद्ममश्वत्थाङ्कुरमेव च ।
एकपद्मं च चत्वार्यङ्गानि मङ्गळवारिणः ॥२२८॥
शुद्धोदकलशाः सर्वे चन्दनैकाङ्गसंयुताः ।
इत्युक्तोपरभेदानां स्नपनानां यथाक्रमम् ॥२२९॥
द्रव्याणां निचयश्चाथ सर्वौषध्यादि चोच्यते ।
कुष्ठं मांसी हरिद्रे द्वे मुराशैलेयचम्पकाः ॥२३०॥
वचाकचोरमुस्ताश्च सर्वौषध्यः प्रकीर्तिताः ।
पलाशबिल्ववकुळकदम्बाम्रशिरीषजाः ॥२३१॥
न्यग्रोधाश्वत्थजाश्चापि पल्लवाः पत्रवारिणः ।
केतकीमल्लिकाजातिनन्द्यावर्तोत्पलोद्भवाः ॥२३२॥
पद्मचम्पककुन्दोत्थाः कुसुमाः पुष्पवारिणः ।
यवगोधूमकव्रीहिशालिमुद्गप्रियङ्गुकाः ॥२३३॥
माषनीवारकौ चाङ्गं कथितं बीजवारिणः ।
अथ चानन्तकलशं नाम्ना सकलपूरकम् ॥२३४॥
यदेतस्य विधानं तु शृणुध्वं मुनिसत्तमाः ! ।
पूर्ववन्मण्टपं कुर्याच्चत्वारिंशत्करायतम् ॥२३५॥
द्वात्रिंशत्करविस्तारं चतुर्द्वारादिसंयुतम् ।
ध्वजाद्यैरप्यलङ्कारैः पूर्ववत्सुविभूषितम् ॥२३६॥
आपाद्य वा प्रपामात्रं यथाभिमतदेशगम् ।
यागार्थं मण्टपं प्राग्वत्कल्पयेत्तत्समीपतः ॥२३७॥
उक्ते दिनेङ्कुरारोपं कृत्वा कर्मदिनात्पुरा ।

तदर्थान् सर्वसम्भारान् संभृत्य सुसमाहितः ॥२३८॥
देशिकेन्द्रस्तु पूर्वेद्युः सुस्नातश्च कृताह्निकः ।
भूषणैर्विविधैर्वस्त्रैर्नूतनैश्च विभूषितः ॥२३९॥
सितोष्णीषोत्तरीयश्च चित्रैर्माल्यैरलङ्कृतः ।
चतुर्भिरष्टभिर्वार्यैस्तादृशैरपि साधकैः ॥२४०॥
तत्सङ्ख्यैः शास्त्रकुशलैः कञ्चुकादिविभूषितैः ।
अन्यैश्च सुसितैर्वस्त्रैः स्थगिताननासिकैः ॥२४१॥
तत्तत्प्रयोगकुशलैरनेकैः परिचारकैः ।
प्राप्तेऽपराह्णसमये कृत्वा द्वार्स्थार्चनं विशेत् ॥२४२॥
यागार्थं मण्टपं तत्र देवं कुम्भादिके यजेत् ।
तत्रैव वा यजेद्बिम्बं वह्नौ सन्तर्प्य पूर्ववत् ॥२४३॥
ततोऽनुज्ञां समादाय क्रमेण मुनिपुङ्गवाः ! ।
अनुकल्पविधाने तु प्रासादं सम्प्रविश्य च ॥२४४॥
मूलबिम्बं तु सम्पूज्य अर्घ्यालभनमाल्यकैः ।
धूपेन च ततोनुज्ञां समादायारभेत्ततः ॥२४५॥
द्वार्स्थाभ्यर्चनपूर्वं तु विशेत्स्नपनमण्टपम् ।
प्रोक्षयेत्पञ्चगव्येन मूलमन्त्रेण सर्वतः ॥२४६॥
नानाविधानि पुष्पाणि विकिरेत्सर्वदिक्षु च ।
सिद्धार्थकांश्च बीजानि ततो मण्टपमध्यतः ॥२४७॥
सार्धद्वाविंशतिकरं भजेत् क्षेत्रं तु पञ्चधा ।
एकैकं नवधा भूयश्चत्वारिंशच्च पञ्च च ॥२४८॥
पङ्क्तयश्चापि कोष्ठानां पञ्चविंशोत्तरं भवेत् ।
द्विसहस्रं ततो मध्ये कलशस्थापनार्थतः ॥२४९॥
एकाशीतिं च कोष्ठानि संस्थाप्य परिमार्जयेत् ।
परितो वीथयः पङ्क्तिद्वितयं तद्बहिः पुनः ॥२५०॥

पूर्वादिदिक्चतुष्के तु एकाशीतिपदानि च ।
कल्पयेत्पार्श्वतो वीथ्यै पुनः पङ्क्तिद्वयं भवेत् ॥२५१॥
चतुर्षु कोणेष्वेकोनपञ्चाशत्कोष्ठकानि च ।
कल्पयेत्तत्र चाप्येकाशीतिमध्यानुसारतः ॥२५२॥
मध्यतो नवकं स्थाप्य पङ्क्त्येकां लोपयेत्परि ।
वहिः पङ्क्तिद्वये दिक्षु षट्कं षट्कं विदिक्षु च ॥२५३॥
चतुश्चतुश्च संस्थाप्य शेषाणि परिमार्जयेत् ।
तद्बहिः परितो वीथ्यै लुम्पेत्पङ्क्तिद्वयं ततः ॥२५४॥
कोणानि कल्पयेद्यत्नात्पदषोडशकानि तु ।
तत्पार्श्वे लोपयेत्पङ्क्तिमेकैकां दिक्चतुष्टये ॥२५५॥
पङ्क्तिद्वये तु द्वाराणामन्तर्भागास्त्रयो वहिः ।
पञ्च पार्श्वे तु शोभार्थं चतुरं तद्बहिर्द्वयम ॥२५६॥
तदन्तः पङ्क्तित्रितये त्रयस्त्रिंशत्पदानि तु ।
वीथ्या सहैकतां नीत्वा ह्येकैकं स्थापयेद्बहिः ॥२५७॥
द्वाराणामपि कोणानां मध्ये षोडशसङ्ख्यया ।
पञ्चविंशतिकोष्ठानि स्थापयित्वा तु पार्श्वतः ॥२५८॥
अन्योन्यं लोपयेत्पङ्क्तिमेकैकां तु मुनीश्वराः! ।
एवमापाद्य कुम्भानां पदानि स्थापनार्थतः ॥२५९॥
ततः सुगन्धरजसा सितेन सुसमा द्विजाः! ।
अङ्गुष्ठविस्तरोत्सेधा ऋज्वी रेखास्तु कल्पयेत् ॥२६०॥
विकीर्य कोष्ठेषु रजः पश्चाद्द्वाराणि पूरयेत् ।
तेनैव शोभां पीतेन विचित्रैः कुसुमान्वितैः ॥२६१॥
लतावृन्दैर्मुनिश्रेष्ठाः ! वीथीः सर्वत्र भूषयेत् ।
ततः सङ्गृह्य कलशान् सर्वलक्षणलक्षितान् ॥२६२॥
अष्टोत्तरशतं हुत्वा मूलमन्त्रेण वै घृतम् ।

गायत्र्या वा ततो द्वारचतुष्के पूर्वदिक्क्रमात् ॥२६३॥
द्वौ द्वौ संस्थाप्य कलशौ कुमुदादीन्प्रपूज्य च ।
पुष्पैरभ्यर्च्य कोष्ठानि विचित्रैर्मन्त्रमन्त्रितैः ॥२६४॥
सर्वधान्यैः प्रयत्नेन कल्पयित्वा तु वीथिकाः ।
तासु द्वौ द्वौ कुशाग्रौ च निक्षिपेन्मूलमन्त्रतः ॥२६५॥
सूत्रेण वेष्टितान् कृत्वा कलशान् पूर्ववद्द्विजाः ! ।
गायत्र्या क्षाळयित्वा तान् कोष्ठेपु न्यस्य तानतः ॥२६६॥
अधोमुखान् न्यसेत्पृष्ठे परमेष्ठ्यात्मना कुशान् ।
ततः सम्प्रोक्षयेत्पुंसा पञ्चगव्येन तान् कुशैः ॥२६७॥
विश्वेन विकिरेत्सिक्तान् अक्षतांश्च तदूर्ध्वतः ।
उत्तानयेन्निवृत्त्या तान् क्रमाद्यत्नेन वै ततः ॥२६८॥
गाळितेन तु तोयेन सुगन्धैश्चन्दनादिकैः ।
वासितेन तु तान् विप्राः ! सर्वेणापूरयेत्क्रमात् ॥२६९॥
मध्यैकाशीतिमध्यस्थनवके मध्यकुम्भके ।
सूर्यकान्तं पद्मरागं वैडूर्यं चन्द्रकान्तकम् ॥२७०॥
अयस्कान्तं चेन्द्रनीलं प्रवाळं गारुडं तथा ।
पुष्यरागं स्फाटिकं च ब्रह्मरागं च मेचकम् ॥२७१॥
वज्रं च रजतं चैव मौक्तिकं ताम्रमेव च ।
सर्वाण्येतानि निक्षिप्य तद्बहिर्नवकाष्टके ॥२७२॥
पूर्वादीशानपर्यन्तं मध्यकुम्भेषु वै क्रमात् ।
द्रव्याणि षोडशैतानि द्वन्द्वयोगेन विन्यसेत् ॥२७३॥
द्विसप्ततिकसंख्येपु न्यसेच्छेषेपु मौक्तिकम् ।
पूर्वैकाशीतिमध्यस्थनवके मध्यगोचरे ॥२७४॥
कदळीपनसाम्राणां क्षीरिकाबदराख्ययोः ।
मातुलुङ्गकेसरयोर्भव्यजम्बीरयोरपि ॥२७५॥

फलानि निक्षिपेत्पश्चात्तद्बहिर्नवकाष्टके ।
प्रागादीशानपर्यन्तं मातुलुङ्गं च दाडिमम् ॥२७६॥
नारङ्गं चापि जम्बीरं तक्कोलं बदरीं तथा ।
क्षीरिकामलके चैव द्राक्षाखर्जूरके तथा ॥२७७॥
आम्रं च सहकारं च पनसस्य फलं तथा ।
क्षुद्रपूर्वं च पनसं कदळीमोचके तथा ॥२७८॥
क्रमाद्वन्द्वप्रयोगेण मध्यकुम्भेषु विन्यसेत् ।
नवकाष्टककुम्भेषु बदराणि विनिक्षिपेत् ॥२७९॥
उशीरं कुङ्कुमं चैव मांसीं मलयजं तथा ।
मुरं च हरिवेरं च कुष्ठं चागरुमेव च ॥२८०॥
एकाशीतिपदे याम्ये विश्वान्येतानि निक्षिपेत् ।
मध्ये मध्यस्थकलशे पूर्वादिक्रमयोगतः ॥२८१॥
शेषेषु मध्यकुम्भेषु न्यसेदेकैकजं पलम् ।
विनिक्षिपेन्मलयजमेतेषामष्टकेषु च ॥२८२॥
समुद्रवापीकूपानां तटाकानां ह्रदस्य च ।
वृष्टेर्नदीहिमानां च तोयानि प्रतिपादयेत् ॥२८३॥
वारुणे मध्यमे कुम्भे एकैकं शेषमध्यमे ।
शेषेषु चाष्टवर्गेषु शुद्धोदानि विनिक्षिपेत् ॥२८४॥
यवगोधूमकव्रीहिशालिमुद्गप्रियङ्गुकान् ।
माषनीवारकौ चापि नवमे मध्यमे घटे ॥२८५॥
शेषेषु धान्यमेकैकं मध्यकुम्भेषु च क्रमात् ।
अष्टकेषु च शुद्धानि तोयानि प्रतिपादयेत् ॥२८६॥
आग्नेयैकोनपञ्चाशन्नवके पूरयेद्घृतम् ।
षट्केष्विन्द्रादियोगेन गोमूत्रं गोमयं तथा ॥२८७॥
क्षीरं दधि विनिक्षिप्य कोणपूर्णोदकं न्यसेत् ।
नैर्ऋते मध्यनवके तैलं विन्यस्य तद्बहिः ॥२८८॥

शेषेषु चत्वारिंशत्सु कलशेषु गुडोदकम् ।
वायव्यनवके मध्ये न्यसेत्तैलं तु सार्षपम् ॥२८९॥
कलशेषु च शेषेषु विन्यसेदैक्षवं रसम् ।
ईशानैकोनपञ्चाशन्नवके मधु विन्यसेत् ॥२९०॥
शेषेषु नाळिकेराम्भस्तत्क्षीरं वापि विन्यसेत् ।
ऐन्द्रादिपञ्चविंशत्सु प्रथमे मध्यमे घटे ॥२९१॥
क्षेत्रतीर्थाब्धिशैलेभ्यः सूकराख्यविलाद्गजात् ।
वल्मीकाद्वृषशृङ्गाच मृदमादाय पूरयेत् ॥२९२॥
शेषेष्वष्टसु चैकैकं षोडशे गन्धवारि च ।
सहदेवी वचा चैव शतमूली शतावरी ॥२९३॥
कुमारी च गुळूची च सिंही व्याघ्री तथैव च ।
द्वितीये मध्यमे कुम्भे विन्यसेद्बहिरष्टके ॥२९४॥
एकैकं प्राक्क्रमेणैव षोडशे पूर्ववद्भवेत् ।
न्यग्रोधोदुम्बराश्वत्थजम्बुविल्वपलाशजैः ॥२९५॥
शिरीषमधुकोत्थैश्च त्वग्रसैर्मध्यमं घटम् ।
तृतीये पूरयित्वाष्टौ व्यस्तैः षोडश पूर्ववत् ॥२९६॥
पलाशविल्ववकुळकदम्बाम्रशिरीषजान् ।
न्यग्रोधाश्वत्थजान् क्षिप्त्वा चतुर्थे पल्लवान् घटे ॥२९७॥
मध्यमेऽष्टासु च व्यस्तान् प्राग्वत् षोडश विन्यसेत् ।
मल्लिकाजातिवकुळनन्द्यावर्तप्रियङ्गुजैः ॥२९८॥
पद्मचम्पककुन्दैश्च पुष्पैरापूर्य मध्यमम् ।
कलशं पञ्चमे व्यस्तैरष्टौ शेषांश्च पूर्ववत् ॥२९९॥
सिद्धार्थं सर्षपं माषं रोचनां गोसमुद्भवाम् ।
इन्द्रयवं वेणुयवं शमीश्यामाकबीजके ॥३००॥
षष्ठे मध्यस्थिते कुम्भे न्यसेदष्टासु च क्रमात् ।

व्यस्तानि तानि द्रव्याणि प्राग्वच्छेषांश्च षोडश ॥३०१॥
तिलं वनतिलं चैव जीरकं कृष्णजीरकम् ।
अतसीं शतपुष्पां च कुठारच्छिन्नमेव च ॥३०२॥
ऋषिबीजं च विन्यस्य मध्यकुम्भे तु सप्तमे ।
एकैकं बहिरष्टासु प्राग्वत् षोडशसु द्विजाः ! ॥३०३॥
षष्टीश्यामाकशालीनां नीवारस्य च तण्डुलम् ।
दूर्वाकुशेन्द्रवल्लीनामङ्कुरान् पिप्पलस्य च ॥३०४॥
न्यसेन्मध्येऽष्टमेऽष्टासु व्यस्तानन्येषु पूर्ववत् ।
कुशोदीच्येक्षुकाशानामुशीरशरपुङ्खयोः ॥३०५॥
अगर्वपामार्गयोश्च मूलानि नवमे न्यसेत् ।
कुम्भे मध्यस्थितेऽष्टासु व्यस्तानन्येषु पूर्ववत् ॥३०६॥
तुलस्याः कृष्णतुलस्या ग्रन्थिवेणोरपि च्छदाः ।
भृङ्गराजस्य बिल्वस्य शम्याः केतकिजातयोः ॥३०७॥
दशमे मध्यमेऽष्टासु व्यस्तान् शेषेषु पूर्ववत् ।
मुस्तानागरमुस्ताख्यकन्दे कुवलयस्य च ॥३०८॥
कुमुदोत्पलयोश्चापि शीतळीयककन्दकम् ।
कल्हारस्य कशेरोश्च कन्दे एकादशे क्षिपेत् ॥३०९॥
मध्यकुम्भेषु चैतानि क्रमादन्येषु पूर्ववत् ।
मुद्गमाषकनिष्पावशिम्बिव्रीहियवाङ्कुरान् ॥३१०॥
आढकानां कुलुत्थानामङ्कुरान् द्वादशे क्षिपेत् ।
मध्यकुम्भेऽष्टके व्यस्तान् प्राग्वत् षोडशसु द्विजाः ! ॥३११॥
शङ्खपुष्पी सदाभद्रा विष्णुक्रान्तैकपत्रयोः ।
बलायाः स्वरमञ्जर्याः सहायाश्च तथैव च ॥३१२॥
अङ्कुरान् सहदेव्याश्च मध्ये कुम्भे त्रयोदशे ।
विन्यस्याऽष्टासु च व्यस्तानन्येषु प्राग्वदाचरेत् ॥३१३॥

श्वेतार्कं ब्रह्मदण्डीं च तथा ब्रह्मसुवर्चलाम् ।
सरक्तां च विरक्तां च पृश्निपर्णीं स्थिरां तथा ॥३१४॥
एरण्डं चापि विन्यस्य मध्ये कुम्भे चतुर्दशे ।
अष्टासु तानि व्यस्तानि प्राग्वदन्येषु विन्यसेत् ॥३१५॥
सुरभिं पद्मकिञ्जल्कं नागकेसरमेव च ।
पत्रमेलात्वचं चैव लतां कस्तूरिकां तथा ॥३१६॥
जातीफलं च वै पञ्चदशमे मध्यसंस्थिते ।
कुम्भे न्यस्याष्टके व्यस्तं शेषं पूर्ववदाचरेत् ॥३१७॥
सुवर्णं रजतं ताम्रमायसं त्रपु सीसकम् ।
आरं कांस्यं च विन्यस्य षोडशे मध्यसंस्थिते ॥३१८॥
कलशेऽष्टासु च व्यस्तं प्राग्वत् षोडशसु द्विजाः ! ।
एवं द्रव्याणि विन्यस्य क्रमेण सुसमाहितः ॥३१९॥
तत आग्नेयकोणे तु देवस्याराधनार्थतः ।
अर्घ्यादिद्रव्यनिचयं मधुपर्कं च विन्यसेत् ॥३२०॥
ततो नैर्ऋतकोणे तु हरिद्राशालिपिष्टके ।
दूर्वामश्वत्थपत्रं च सिद्धार्थं च तथाक्षतम् ॥३२१॥
माल्यानि पूर्णकुम्भं च न्यसेन्नीराजनार्थतः ।
तथा चोद्वर्तनार्थं च चूर्णं गोधूमशलिजम् ॥३२२॥
रजनीचूर्णसम्मिश्रमीपत्पद्मकभावितम् ।
चमसीं च खळीं चैव तथैव मुनिपुङ्गवाः ! ॥३२३॥
चन्दनं मुखलेपार्थं घृष्टकर्पूरभावितम् ।
चम्पकैर्मुरमांसीभ्यां हरिबेरैः समन्वितम् ॥३२४॥
पिष्टमामलकं चैव शिरःस्नानार्थकं न्यसेत् ।
पृथक् पृथक् च पात्रेषु ततो वायव्यकोणके ॥३२५॥
धौतवस्त्रं करण्डं च पुष्पमाल्यादिभाजनम् ।

तत ईशानकोणे तु शलाकान्यायसानि तु ॥३२६॥
आयसा गुळिकाश्चैव तथा सन्दंशनं द्विजाः! ।
अन्यद्यदुपयोगि स्यात् स्थापयेत्तद्यथारुचि ॥३२७॥
एतदुक्तं समस्तं वा यथाभिमतकोणगम् ।
मध्यैकाशीतिमध्यस्थनवके मध्यसंस्थिते ॥३२८॥
कुम्भे यजेद्वासुदेवं ततः प्रागादियोगतः ।
दिक्स्थानां नवकानां तु मध्येषु प्रभवक्रमात् ॥३२९॥
चतुरो वासुदेवादीन् विदिक्स्थानां तु मध्यतः ।
ईशादिवह्निपर्यन्तं तानेवाप्ययये।गतः ॥३३०॥
मध्यशुद्धोदकुम्भेषु सत्वं सर्वेषु पूजयेत् ।
बहिर्दिङ्नवकानां तु शुद्धोदेषु च दिक्क्रमात् ॥३३१॥
सुपर्णं गरुडं चैव तार्क्ष्यं च विहगेश्वरम् ।
वह्न्यादीशानपर्यन्तं नवकानां चतुष्टये ॥३३२॥
शुद्धोदेषु च तानेव क्रमेण परिपूजयेत् ।
एकाशीतिषु दिक्स्थेषु पूर्वादिक्रमयोगतः ॥३३३॥
मध्यकुम्भेषु षट्त्रिंशत्संख्यातेषु यथाक्रमम् ।
पद्मनाभादयो विप्राः ! देवा वेदविदन्तिमाः ॥३३४॥
पूज्या नवकयुक्त्या तु मध्यादीशानपश्चिमम् ।
मध्यशुद्धोदकुम्भेषु यजेत्कल्किस्वरूपिणम् ॥३३५॥
बहिर्नवकशुद्धोदकलशेषु यजेद्विभुम् ।
पाताळशयनाख्यं तु पश्चादग्निदिगादितः ॥३३६॥
चतुर्षु कोणेष्वेकोनपञ्चाशन्नवकेषु च ।
मध्येषु केशवादीनां क्रमात्त्रिकचतुष्टये ॥३३७॥
आद्यान् दिक्स्थेषु कुम्भेषु द्वितीयांस्तु चतुर्ष्वपि ।
विदिक्स्थेषु तृतीयांश्च षट्कषोडशके क्रमात् ॥३३८॥

चक्रादिवज्रपर्यन्तमस्त्रषोडशकं यजेत् ।
कोणस्थेषु चतुष्केषु न्यसेच्छक्तिं ततः परम् ॥३३९॥
ऐन्द्रीदक्षिणतः पञ्चविंशतौ प्रथमे यजेत् ।
सर्वसम्पत्प्रदां लक्ष्मीं मध्यकुम्भेषु तद्बहिः ॥३४०॥
अष्टासु पुष्टिं तद्बाह्ये कान्तिं षोडशके द्विजाः ।
एवमाद्येषु चान्येषु पञ्चविंशतिषु क्रमात् ॥३४१॥
प्रभादीनां च शक्तीनां त्रितयं त्रितयं यजेत् ।
तत्रापि पञ्चदशमे बहिः षोडशके न्यसेत् ३४२॥
किरीटमन्तिमे पञ्चविंशतौ त्रितयं यजेत् ।
श्रीवत्सं कौस्तुभं चापि वनमालां तथैव च ॥३४३॥
वासुदेवादिमन्त्रैस्तु वनमालान्तिमैः क्रमात ।
अष्टाविंशतिसंख्यं तु हुत्वाज्यं वै यथारुचि ॥३४४॥
पूर्णां दत्वा ततः कुम्भान् सम्पातविधिना स्पृशन्।
पिधाय चक्रिकाभिस्तु सर्वानुक्तक्रमेण तु ॥३४५॥
वासोभिः छादयेत्पश्चान्नूतनैस्तु पृथक् पृथक् ।
भूयः पूर्णाहुतिं दत्वा दिक्षु भूतबलिं हरेत् ॥३४६॥
मृदादि सर्वरत्नान्तमुद्धारक्रम इष्यते ।
पूर्वं विष्णोर्नुकमिति मन्त्रेण च मुनीश्वराः ! ॥३४७॥
पूर्वादीशानपर्यन्तं मृत्कुम्भैरभिषिच्य च ।
सर्वमृत्कलशेनैव मध्यस्थेन ततो बहिः ॥३४८॥
कुम्भैः षोडशभिर्विप्राः ! प्रागादिक्रमयोगतः ।
एवमेव क्रमः सर्वपञ्चविंशतिषु द्विजाः ! ॥३४९॥
प्रतद्विष्णुरित्यनेन मूलाद्भिरभिषेचयेत् ।
प्रतद्वे विष्णुवास इति कषायैरन्वितामबुभिः ॥३५०॥
यस्य त्रिपूर्णेत्येतेन कलशैः पल्लवान्वितैः ।

तदस्येति च मन्त्रेण पुष्पैरापूरितैर्घटैः ॥३५१॥
तावामिति च मन्त्रेण सिद्धार्थादिसमन्वितैः।
प्रवः पान्तमित्यनेन तिलाद्यन्वितवारिभिः ॥३५२॥
परोमात्रेतिमन्त्रेण षष्ट्यादिद्रव्यवारिभिः।
नते विष्णोरित्यनेन कुशमूलान्विताम्बुभिः ॥३५३॥
इरावतीति मन्त्रेण तुलस्यादिजलैस्ततः।
अतो देवेति मन्त्रेण मुस्ताकन्दादिसंयुतैः ॥३५४॥
इदं विष्णुरित्येतेन मुद्गाद्यङ्कुरपूरितैः।
त्रीणि पदेति मन्त्रेण शङ्खपुष्प्यादिवारिभिः ॥३५५॥
विष्णोः कर्माणीत्यनेन श्वेतार्काद्यम्बुभिस्ततः।
तद्विष्णोरिति मन्त्रेण सुरभ्यादिजलैस्ततः ॥३५६॥
तद्विप्रास इत्यनेन स्नापयेल्लोहवारिभिः।
प्रागेकाशीतिकलशैः स्नापयेत्क्रमयोगतः ॥३५७॥
पूर्वादिमध्यपर्यन्तनवकस्नपने क्रमः।
ऐन्द्रेण नवकेनादौ पुरूयज्ञाय इत्यृचा ॥३५८॥
इन्द्राविष्णु दृंहितेति वह्निदिक्संस्थितेन च।
यं मनीषेति याम्येन नवकेनाभिषेचयेत् ॥३५९॥
वषट्ते विष्णुवासेति नैर्ऋतेन ततः परम्।
तिस्रोवाच इत्यनेन वारुणेन मुनीश्वराः! ॥३६०॥
योवर्द्धओषधिमन्त्रेण वायव्यनवकेन तु।
स्तरीरतुक्तं भवतीति सौम्येन नवकेन तु ॥३६१॥
ईशानदिक्स्थितेनैव यस्मिन्विश्वेनचेत्यृचा।
इदंवचः पर्जन्यायेति स्नापयेन्मध्यमेन तु ॥३६२॥
याम्यैकाशीतिकलशैस्ततः संस्नापयेद्विभुम्।
सहस्रशीर्षं देवमिति मन्त्रपुरस्सरैः ॥३६३॥

सन्ततं सिराभिरिति पर्यन्तैश्च क्रमेण तु ।
अष्टमन्त्रैर्मुनिश्रेष्ठाः ! प्रागादिनवकाष्टकैः ॥३६४॥
एतैरेव समस्तैस्तु स्नापयेन्मध्यमेन तु ।
एकाशीत्या तु वारुण्या कलशैरभिषेचयेत् ॥३६५॥
समुद्रज्येष्ठा इत्यनेन पूर्वादिनवकेन तु ।
वापीकूपतटाकोत्थैः ह्रदवृष्टिसमुद्भवैः ॥३६६॥
या आपो दिव्या इति मन्त्रेणैवाभिषेचयेत् ।
नद्यम्भसा स्नापयित्वा यासां राजेत्यृचा ततः ॥३६७॥
यासु राजेतिमन्त्रेण हिमतोयेन वै ततः ।
समुद्रज्येष्ठपूर्वैस्तु चतुर्भिर्मध्यमेन तु ॥३६८॥
ततोऽभिषिञ्चेत्सौम्यैकाशीतिकुम्भैः क्रमेण तु ।
यदिमा इति मन्त्रेण शाक्रेण नवकेन तु ॥३६९॥
यस्यौषधीरित्येतेन वह्निदिक्संस्थितेन तु ।
साकंयक्ष्मेति याम्येन अन्यावो इति नैर्ऋते ॥३७०॥
याः फलिनीरिति मन्त्रेण वारुण्यां नवकेन तु ।
मुञ्चन्तु मा शपथ्यादिति वायुदिङ्नवकेन तु॥३७१॥
अवपतन्तीरित्यनेन सोमदिक्संस्थितेन च ।
या ओषधीः सोमराज्ञीरिति मन्त्रेणैशानकेन तु ॥३७२॥
या ओषधीः सोमराज्ञीर्विष्ठिता इति मध्यतः ।
ततोऽन्यैकोनपञ्चाशत्कलशैरभिषेचयेत ॥३७३॥
गायत्र्या चैन्द्रपट्केण गन्धद्वारेति याम्यतः ।
पयस्वतीरोषधयः इति पट्केण पश्चिमे ॥३७४॥
दधिक्राव्ण्ण इत्यृचा सौम्यपट्केण तत्परम् ।
सम्यक्स्रवन्तिसरितस्सूक्तेनैव घृतेन च ॥३७५॥
नैर्ऋतैकोनपञ्चाशत्कलशैरभिषेचयेत् ।

तेजोसीत्यादियजुषा तैलेन स्नापयेत्ततः ॥३७६॥
द्वादशाक्षरमन्त्रेण प्राक्क्रमेण गुडोदकैः ।
तेजोसीत्यादिमन्त्रेण वायौ तैलैस्तु सार्षपैः ॥३७७॥
द्वादशार्णाख्यमन्त्रेण सर्वैरिक्षुरसैस्ततः ।
मधुवातादिभिर्मन्त्रैः कलशैर्मधुपूरितैः ॥३७८॥
पूर्वोदितेन मन्त्रेण नाळिकेरजलैः क्रमात् ।
तेनैवोष्णजलैः पश्चाद्वह्न्यादीशानपश्चिमम् ॥३७९॥
सुतप्तायोगुळक्षेपात्सञ्जातोष्णैस्तदैव तु ।
उद्वर्तयेत्ततो देवं द्रुपदादिति मन्त्रतः ॥३८०॥
शिरस्यामलकं दद्यान्मानस्तोकेति मन्त्रतः ।
प्रक्षाळ्य शुद्धतोयैश्च बहुभिश्च सुगन्धिभिः ॥३८१॥
मध्यैकाशीतिकलशैस्ततः संस्नापयेत्क्रमात् ।
सहस्रशीर्षेत्यनया ऋचैन्द्रीनवकैर्घटैः॥ ३८२॥
अष्टाभिरष्टदिक्संस्थैर्मध्यमेन द्वितीयया ।
द्वाभ्यां द्वाभ्यां तथा ऋग्भ्यां क्रमान्नवकसप्तकैः ॥३८३॥
पौरुषेण तु सूक्तेन समस्तेन शनैः शनैः ।
स्नापयेद्देवदेवेशं मध्यस्थनवकेन तु ॥३८४॥
यद्वा सर्वस्य वशिनमित्याद्यैर्मनुभिः क्रमात् ।
महोपनिषदन्तःस्थैर्दिक्स्थितैः कलशाष्टकैः ॥३८५॥
एक एव नारायण इति मध्यगतेन तु ।
यद्वाष्टाक्षरमन्त्रेण सर्वकुम्भैः क्रमेण तु ॥३८६॥
मृदादि सर्वरत्नान्तं स्नापयेद्द्विजसत्तमाः! ।
उद्धार एवं कथितः कर्मक्रम इहोच्यते ॥३८७॥
प्रभाते तु कृतस्नानः कृतकौतुकमङ्गळः ।
देशिकेन्द्रस्तथा चान्यैर्देशिकैश्च समान्वितः ॥३८८॥

प्रासादं सम्प्रविश्याथ नित्यं निर्वर्त्य पूर्ववत् ।
यागमण्टपमासाद्य रजोभिः पूर्य मण्डलम् ॥३८९॥
कुम्भमण्डलयोरिष्ट्वा प्रासादं सम्प्रविश्य च ।
ततस्त्वर्घ्यादिभिर्भोगैर्मूलबिम्बं तु पूजयेत् ॥३९०॥
तस्मात् स्नपनबिम्बे तु समावाह्य तथैव च ।
इष्ट्वालङ्कृत्य विविधैर्वस्त्रैर्माल्यैश्च भूषणैः ॥३९१॥
शिबिकादौ समारोप्य सर्वालङ्कारसंयुतम् ।
पूर्वोक्तविधिना विप्राः ! निनयेत्स्नानमण्टपम् ॥३९२॥
स्नानपीठे समारोप्य पूर्वोदितविधानतः ।
यथाक्रमं समभ्यर्च्य यावदात्मनिवेदनम् ॥३९३॥
ततस्तु देवदेवस्य कुर्यात्कौतुकबन्धनम् ।
कुम्भानां विहितं कर्म न कृतं यदि वै पुरा ॥३९४॥
कया त्वनुपपत्त्या तु तदा तत्सर्वमाचरेत् ।
स्नानासनोदितैर्भोगैर्मुखलेपान्तिमैः क्रमात् ॥३९५॥
पूजयित्वा ततः कुम्भैः स्नापयेदुक्तवर्त्मना ।
सर्वेषामपि कुम्भानां स्नानशेषं तु पूरयेत् ॥३९६॥
घटान्तरं तु द्रव्याणामन्तरान्तरयोगतः ।
शुद्धाम्भसा स्नापयित्वा वस्त्रेणार्घ्यादिभिर्यजेत् ॥३९७॥
एवं संस्नाप्य विधिवद्रजनीचूर्णपूरितैः ।
अलङ्कृते धान्यपीठे पुरस्तादधिवासितैः ॥३९८॥
पञ्चविंशतिभिः कुम्भैर्नवभिः पञ्चभिस्तु वा ।
एकेन वापि तच्चूर्णं श्रीसूक्तेन द्विजोत्तमाः ! ॥३९९॥
प्रदद्यान्मूर्ध्नि देवस्य भूयश्चार्घ्यादिभिर्यजेत् ।
सर्वाङ्गं परिमृज्याथ भक्तानां मूर्ध्नि दापयेत् ॥४००॥
विष्वक्सेनस्य दत्त्वा तु तन्मन्त्रेण ततो द्विजाः ! ।

सहस्रधारास्नपनमाचरेच्छुद्धवारिभिः ॥४०१॥
सचन्दनादिकं दत्वा ततः पीठन्ततः प्रभुम् ।
अलङ्कारासनं नीत्वा आसनादिक्रमाद्यजेत् ॥४०२॥
भोगैः सांस्पर्शिकैः प्राग्वद्विविधैरौपचारिकैः ।
हृदयङ्गमसंज्ञैश्च विचित्रैश्च मनोहरैः ॥४०३॥
एवं द्विजप्रदानान्तं होमान्तं वा प्रपूज्य च ।
शिबिकादौ समारोप्य पूर्ववत्सम्प्रवेशयेत् ॥४०४॥
प्रदक्षिणक्रमेणैव प्रासादाभ्यन्तरं ततः ।
तत्रावरोप्य तद्बिम्बं स्वस्थाने सन्निवेश्य च ॥४०५॥
इष्ट्वा चार्घ्यादिभिर्भोगैर्मूलबिम्बं तथैव च ।
समर्प्य च कृतं कर्म कुर्याच्चैव विसर्जनम् ॥४०६॥
मृण्मयादौ मूलबिम्बे विधिरेवं प्रकीर्तितः ।
शिलामयादिके मूले स्नपनार्हे मुनीश्वराः ! ॥४०७॥
तमेव स्नाप्य पूर्वोक्तविधिना कौतुकादिमम् ।
हविरन्तैः समभ्यर्च्य होमान्तं सर्वमाचरेत ॥४०८॥
ततस्तु चौत्सवं बिम्बं विचित्रैर्वसनैस्तथा ।
अनेकैर्भूषणै रम्यैर्माल्यैश्च सुसुगन्धिभिः ॥४०९॥
अलंकृत्य समारोप्य शिबिकां सम्प्रवेशयेत् ।
आस्थानमण्टपं सम्यगुत्सवोदितवर्त्मना ॥४१०॥
तत्रावरोप्य यानाच्च सौवर्णे वितते शुभे ।
भद्रासनेथ वा विप्राः ! विचित्रास्तरणान्विते ॥४११॥
यथाक्रमोदितेनैव वर्त्मना सम्प्रपूजयेत् ।
सांस्पर्शिकादिकैर्भोगैर्विविधैस्तु विशेषतः ॥४१२॥
महाहविर्निवेद्याथ कृत्वा सर्वं क्रमेण तु ।
द्विजप्रदानपर्यन्तमग्नौ सन्तर्पयेत्क्रमात् ॥४१३॥

समर्पणादिकं सर्वं कृत्वा देवं जगत्पतिम् ।
समारोप्य च यानादौ सर्वमङ्गळसंयुतम् ॥४१४॥
प्रवेशयेत्तु प्रासादं यानादेरवरोप्य च ।
स्वस्थाने सन्निवेश्याथ अर्घ्यगन्धादिभिर्यजेत् ॥४१५॥
मूलबिम्बं तथाभ्यर्च्य कृतं कर्म समर्पयेत् ।
स्नानशेषेण तोयेन कुम्भस्थेन क्रमेण तु ॥४१६॥
द्वारस्थान् सकलान् देवान् तथा चावरणस्थितान् ।
बलिदानक्रमेणैव सम्प्रोक्ष्य परिपूज्य च ॥४१७॥
बलिं च दत्वा शेषेण गणेशमभिषिच्य च ।
पूजयेदर्घ्यगन्धाद्यैरथ वा ह्यनुकल्पके ॥४१८॥
पूजावसाने देवस्य स्नपनव्यक्तिगस्य च ।
प्रोक्षणं देवतानां च गणेशस्याभिषेचनम् ॥४१९॥
आचरेत्क्रमयोगेन यजमानस्ततो द्विजाः! ।
आचार्यान् साधकांश्चैव तोषयेद्विविधैर्धनैः ॥४२०॥
अन्यांश्च वैष्णवान् सर्वान् यथाशक्ति च तोषयेत् ।
अनिवारितमन्नाद्यं सार्वजन्यं तु कारयेत् ॥४२१॥
एवमेव हि सर्वेषु स्नपनेषु क्रियाक्रमः ।
प्रोक्षणं परिवाराणां बलिदानं च वर्जयेत् ॥४२२॥
महाहविर्विधानं च विभवे सति कल्पयेत् ।
प्रधानादिक्रमेणैव स्नपनानां तु पञ्चकम् ॥४२३॥
कुर्यान्नित्ये विधौ विप्राः ! तथा नैमित्तिकेषु च ।
ततस्तु सूक्ष्मसूक्ष्मादिस्थूलस्थूलान्तपञ्चकम् ॥४२४॥
चातुरात्म्यादिदेवानां कार्यं स्नापनकर्मणि ।
अयने विषुवे चैव ग्रहणे चन्द्रसूर्ययोः ॥४२५॥
स्नपनं मुख्यकल्पे तु ह्याचरेदुत्तमोत्तमम् ।

अनुकल्पे तु तन्मध्यं तन्न्यूनादिचतुष्टयम् ॥४२६॥
अयनद्वयमध्यस्थसङ्क्रान्तिद्विचतुष्टये ।
आवृतिक्रमयोगेन कल्पयेन्मुनिपुङ्गवाः ! ॥४२७॥
उत्सवारम्भदिवसे तदन्ते च समारभेत् ।
अथमोत्तमसंज्ञं तु तन्मध्यं वानुकल्पके ॥४२८॥
महाहविर्विधाने तु तन्न्यूनं तु समाचरेत् ।
प्रायश्चित्तेपु कार्येपु सर्वाण्येतानि कल्पयेत् ॥४२९॥
तेपां स्नपनभेदं तु वक्ष्याम्युपरि विस्तृतम् ।
स्नपनानां विधानं तु दिव्यशास्त्रोक्तवर्त्मना ॥४३०॥
यथावत्कथितं सम्यक् किमन्यच्छ्रोतुमिच्छथ ।

इति श्रीपाञ्चरात्रे ईश्वरसंहितायां
स्नपनविधिर्नाम
पञ्चदशोऽध्यायः ।

---

## अथ पोडशोऽध्यायः ।

मुनयः ।
भगवन्मुनिशार्दूल ! सर्वज्ञ ! वदतां वर ! ।
प्रतिष्ठा मन्त्रविम्वस्य कथं कार्या ? नरोत्तमैः ॥१॥
प्रासादस्य च विम्वस्य पीठादेर्लक्षणं कथम् ? ।
तत्सर्वं विस्तरेणैव वदस्व कृपयाधुना ॥२॥

नारदः ।
शृणुध्वं मुनयः! सर्वे सावधानेन चेतसा ।
मन्त्रविम्वप्रतिष्ठाया विधानं लक्षणादिकम् ॥३॥

तत्सर्वं देवदेवेन सात्वतादिषु कीर्तितम् ।
तेषां सारं समुद्धृत्य प्रवक्ष्यामि समासतः ॥४॥
ब्राह्मणः क्षत्रियो वैश्यः शूद्रो वा भगवन्मयः।
श्रद्धाभक्तिसमायुक्तः सम्पन्नः शान्तमानसः ॥५॥
आस्तिकः सत्यसन्धश्च सदाचारसमन्वितः।
आचार्यं वरयेत्पूर्वं भगवच्छास्त्रकोविदम् ॥६॥
तत्वज्ञं भगवद्भक्तं भगवद्वंशसम्भवम् ।
आचार्यो यजमानश्च सह सम्मन्त्र्य शिल्पिभिः ॥७॥
पुण्ये देशेऽनुकूले च मनोज्ञे साधुसेविते ।
मृद्वारिफलपुष्पाढ्ये कुशेन्धनसमन्विते ॥८॥
गोसस्यशालिसुभगे क्षुद्रप्राणिविवर्जिते ।
पर्वताग्रे च तन्मध्ये सानुदेशे द्विजोचिते ॥९॥
भूगते तु वने रम्ये पादपौपधिसङ्कुले ।
भद्रे चोपवने ह्यच प्रशस्ते कमलान्विते ॥१०॥
कूलेषु निम्नगानां च तासामपि च सङ्गमे ।
समीपे पुण्यतीर्थानां सुस्थिरे सारसङ्कुले ॥११॥
दुष्टप्राणिविनिर्मुक्ते चोरातङ्कभयोज्झिते ।
सर्वदोषविनिर्मुक्ते देशे दिव्ये मनोहरे ॥१२॥
भुवं परीक्ष्य तत्रादौ शास्त्रदृष्टेन वर्त्मना ।
ततः परं द्विजश्रेष्ठाः ! क्ष्मापरिग्रहमाचरेत् ॥१३॥
क्ष्मापरिग्रहपूर्वाणामारम्भे सर्वकर्मणाम् ।
द्वादशाक्षरपूर्वैस्तु मन्त्रैः सर्वेश्वरः पुरा ॥१४॥
आराध्यो भगवान्भक्त्या वेद्यां वा कलशे स्थले ।
सन्तर्प्याज्यादिकैर्भक्त्या मन्त्रैः श्रुतिमयैस्ततः ॥१५॥
भगवान् विश्वकर्मात्मा सगणेशं तु याजयेत् ।

विविधैरुपचारैस्तु पुष्पधूपानुलेपनैः ॥१६॥
विसर्जने कृते विष्णोः सानले कमलोद्भव ! ।
शिल्पिनो यत्र ये दक्षाः मान्यास्ते तदनन्तरम् ॥१७॥
यथा प्रसन्नबुद्ध्या तु शश्वन्निर्वर्तयन्ति च ।
तैरपि प्रयतैः स्नातैस्तर्पणीयः स्वकः पतिः॥१८॥
ततः परिगृहीतव्यं क्षेत्रं त्वभिमतं द्विजाः! ।
अभुक्तमथवा भुक्तं वसुधागुणलक्षितम् ॥१९॥
निश्शल्यमनुकूलं च स्थपतीनां च सम्मतम् ।
समादाय प्रतिष्ठार्थं यथाभिमतविस्तृतम् ॥२०॥
गहेन्द्रोपांपतिर्वायुर्वित्तपेशानदिक्षु च ।
पदमासाद्य वै कुर्याद्दिव्याद्यायतनाश्रितम्र ॥२१॥
पञ्चायतनपूर्वं तु शुभं देवगृहं महत् ।
सिद्ध्ये तत्स्वमार्गात्तु विमार्गात्तदसिद्धये ॥२२॥
एतावदर्थनान्मुक्तमतोन्येषां तु दोषकृत् ।
स्वमार्गं परमार्गं वा येषां सर्वगतो हरिः ॥२३॥
स्फुरत्यविरतं बुद्धौ गुरुं तं शास्त्रतः स्वयम् ।
शुभेनुकूले नक्षत्रे नमस्कृत्याच्युतं विभुम् ॥२४॥
निर्वर्त्य नित्यं विघ्नेशपूर्वमर्चापयेद्विजाः! ।
सह चैकायनैश्चान्यैः ऋग्यजुस्सामपाठकैः ॥२५॥
सालङ्कारैश्च सोष्णीषैः सिताम्बरधरैस्तथा ।
समालभनमाल्यैश्च भूषितैः साङ्गुलीयकैः ॥२६॥
शङ्खवादित्रनिर्घोषैर्गीतिभिर्माङ्गळीयकैः ।
फलपुष्पाक्षतकरो लाजसिद्धार्थकादिकम् ॥२७॥
समादाय शुचिः कर्ता देशिकेन सह द्विजाः!
स्थानमासाद्य सर्वेषां वासुदेवं हृदि स्मरन् ॥२८॥

पुण्याहं वाचयित्वा तु पूर्वोक्तविधिना ततः ।
जपन्नष्टाक्षरं तिष्ठन् कर्त्तास्ते देशिकस्ततः ॥२९॥
बहिः क्षेत्रस्य चैशान्यां प्राच्यां वा मुनिपुङ्गवाः! ।
ततां पर्णकुटीं कृत्वा वातवृष्टिक्षमां शुभाम् ॥३०॥
तत्र पुष्पार्घ्यधूपाद्यं कृत्वा वै भद्रपीठगम् ।
पञ्चगव्यं समापाद्य सार्धं मन्त्रैर्विलक्षणैः ॥३१॥
नारायणमपां मूर्तिं हेमाद्ये कुतपे शुभे ।
सन्निधीकृत्य सम्पूज्य सरित्तीर्थाम्बुपूरिते ॥३२॥
हेमसर्वौषधीरत्नदर्भवर्गास्त्रगन्विते ।
मन्त्रास्त्रकलशाभ्यां तु सम्पाद्य रचनां ततः ॥३३॥
साधारमासनं ताभ्यां ध्यात्वा कुर्यात्तदर्चनम् ।
हृदि मन्त्रेश्वरं सास्त्रं पूजयित्वा यथाविधि ॥३४॥
न्यस्तव्यमासने कौम्भे प्रणवं नमसा सह ।
सौम्यनाडीपथा चैव ततो ह्यस्त्रं समन्त्रराट् ॥३५॥
दक्षिणेन तु मार्गेण त्वपसव्यघटे विभोः ।
अवतार्य ज्वलद्रूपं दहन्तं विघ्नसञ्चयान् ॥३६॥
मन्त्रत्रयं तु सामान्यं सर्वत्र विहितं द्विजाः! ।
षडष्टाक्षरमन्त्रं यत्तथा वै द्वादशाक्षरम् ॥३७॥
हेतीशं यत्सहस्रारं परिज्ञेयं तथायुधम् ।
कृतदीक्षेण यल्लब्धं सुप्रसन्नाच्च वै गुरोः ॥३८॥
अस्त्रं तदङ्गमापाद्यं सविशेषमिदं शुभम् ।
साङ्गं समर्चयित्वा तु भोगैर्मात्रावसानकैः ॥३९॥
सत्सूक्तैर्यजुभिः सामैर्यथावसरंलक्षणैः ।
व्यञ्जकैरथ सर्वेशमथ होमं समाचरेत् ॥४०॥
सहस्रशतसङ्ख्यं यत्पूर्णान्तं साक्षतैस्तिलैः ।
कुण्डे मन्त्रास्त्रदिक्पूते एवं कुर्यात्तु देशिकः ॥४१॥

स्थलेषु वालुकाद्येषु प्रागादौ विनिवेश्य च।
चत्वारश्चातुरात्मीयाः मन्त्रज्ञाः कृतमण्डनाः ॥४२॥
ऋग्वेदाद्याश्चतस्रो ये ईशाद्वायुपश्चावधि।
भक्त्यानया परा योज्या होमार्थं क्षेत्रसङ्ग्रहे ॥४३॥
होतव्यं भूमिलिङ्गैस्तैर्मन्त्रैराज्यादिकं बहु।
चतुर्भिश्चातुरात्मीयैर्द्विपट्कार्णपुरस्सरैः ॥४४॥
होतव्यमपरैर्विप्रैः स्मरन् सर्वेश्वरं हरिम्।
उपद्रष्टा चतुष्कोणे एकैकं विनियोज्य च ॥४५॥
होमार्थं सर्वकुण्डेषु मन्त्रविन्यस्तविग्रहम्।
शुचयः संयता दक्षा वास्तुशास्त्रकृतश्रमान् ॥४६॥
विश्वकर्मकुलोद्भूतानाहूयाग्रे निवेश्य च।
पञ्चगव्यादिनाभ्युक्ष्य सिताम्बरधरांस्तु वै ॥४७॥
माल्यचन्दनसूर्णीपैः भूपितानङ्गुलीयकैः।
संवीक्ष्य पावनीकृत्य ह्यादाय घटिकान्वितम् ॥४८॥
कार्पासं सुदृढं सूत्रं सहस्राराभिमन्त्रितम्।
स्थपतीनां करे दद्यात्सह चैकशलाकया ॥४९॥
प्रोक्षितान् पञ्चगव्येन सहस्राराभिमन्त्रितान्।
विकीर्य लाजसम्मिश्रान् बीजान् सिद्धार्थकान्वितान् ॥५०॥
जपन्नस्त्रं सचक्रं च त्रिधा कुर्यात्प्रदक्षिणम्।
प्राक्पदात्तत्पदं यावत्सह घण्टारवैः शुभैः ॥५१॥
क्षेत्रमानमथादाय करैरभिमतैस्ततः।
शिष्यदेशिककर्तृस्थैर्विश्वकर्मांशजैस्तु वा ॥५२॥
ईशकोणादि तत्सूत्रं चतुर्दिक्षु प्रसार्य च।
शङ्कुभिर्यज्ञदारूत्थैर्मुद्रयेच्च दिशाष्टकम् ॥५३॥
ततो भूतबलिं दद्यात्प्रादक्षिण्येन बुद्धिमान्।

तिलपिष्टं निशाचूर्णं सलाजं दधिसक्तुकम् ॥५४॥
भूतकूरमिति प्रोक्तं तेन भूतबलिं हरेत् ।
भूतानि राक्षसा वापि यत्र तिष्ठन्ति के चन ॥५५॥
ते सर्वेंचापगच्छन्तु स्थानं कुर्यामिमं हरेः ।
शलवेत्रलताचर्मपुञ्जाद्यैर्प्रथितान् द्रुमान् ॥५६॥
मृदंगोर्वासमाकारान् पाण्डुमृद्ग्रहणक्षमान् ।
न चाङ्गहोमाः स्युस्तीक्ष्णान् कुद्दालाख्यान् खनित्रकान् ॥५७॥
सुदृढान् यज्ञकाष्ठोत्थान् हस्तिपादांश्च पूजयेत् ।
क्षेत्रब्रह्मपदे स्थित्वा यथाभिमतदिङ्मुखः ॥५८॥
संस्मृत्य द्वादशार्णेन भगवान् भूतभावनः ।
अधिभूताधिदैवाख्यं स्मरेदध्यात्मलक्षणम् ॥५९॥
सप्तद्वीपवतीं तत्र समुद्रादिसमन्विताम् ।
सप्तपाताळसहितां भूतैर्युक्तां नरादिकैः ॥६०॥
शक्तिभिः शब्दनिष्ठाभिः सर्वगाभिः समावृताम् ।
ब्रह्मबीजसमेतेन लकारेण सबिन्दुना ॥६१॥
स्वयं ज्ञाननियुक्तेन मानयित्वा पुरा ततः ।
भावयित्वाधिभूतत्वमधिदैवमतः स्मरेत् ॥६२॥
सामर्थ्यं यद्भगवतो विष्णोः सर्वेश्वरस्य च ।
परमध्यात्मरूपं च वाराहं वैष्णवं महत् ॥६३॥
एतावदुक्तं सामान्यं ध्यानं क्षितिपरिग्रहे ।
देवालयवशादन्यद्विशेषं चात्र संस्मरेत् ॥६४॥
चतुरश्रे चतुर्मूर्तिंव्यक्तिव्यूहं विचिन्त्य च ।
चतुरश्रायते ध्यायेद्दिव्यं त्रिधागमाभिधम् ॥६५॥
वृत्ते शान्तोदितं चक्रं संवृतावयवं स्मरेत् ।
अनन्तशयनं देवं ध्यायेद् वृत्तायते गृहे ॥६६॥

पुर्यष्टकं यदमलं कालपुष्करदेहभृत् ।
नाभिरन्ध्रोद्भवं विष्णोः स्थितमष्टदिगात्मनाम् ॥६७॥
देवालये तथाष्टाश्रे सार्तव्यं वसुधागृहम् ।
ध्यात्वैवं द्वादशार्णेन मन्त्रेणैव पुनः पुनः ॥६८॥
षडक्षरेण संरोध्य मुद्रां बध्वा तथाच्युतम् ।
अभिध्यानसमाधानाद्यावत्कलशसन्निधिम् ॥६९॥
प्राग्वद्विलक्षणैर्भोगैः अथाष्टार्णेन पूजयेत् ।
सह विप्रैः स्वयं दद्यादग्नौ पूर्णाहुतिं पुनः ॥७०॥
सर्वकर्मसमाप्त्यर्थं क्षेत्रे क्षेत्रीकृते सति ।
कुर्यात्पादप्रतिष्ठां वै सुशुभे दिवसेऽपरे ॥७१॥
अथ कर्मकरा दक्षाः नियोक्तव्याः क्रमेण तु ।
सन्तोष्य चान्नपानाद्यैस्तोषमायान्ति वै यथा ॥७२॥
एवं परिगृहीते तु क्ष्मांशे शल्योज्झिते सति ।
आघृष्टे सोपला बाला वसुधा वसुभूमिदा ॥७३॥
शुद्धिं सापेक्षते किञ्चित्कृत्रिमामुदपासर ।
यावन्नोपवनस्तां तु चिररूढैर्महाद्रुमैः ॥७४॥
सङ्कीर्णा तत्प्रसूतैश्च मूलैर्व्याप्ता निरन्तरैः ।
ज्ञातं तस्यापि बालत्वं शुद्धिर्वै भाविनी स्मृता ॥७५॥
त्यक्ता सरित्प्रवाहैर्न नगरग्रामदेशिका ।
महान्तं प्रेक्षते शुद्धिं भुक्ता सा बहुशो यतः ॥७६॥
खात्वा वैभवमुद्धृत्य दायादभ्येति मृच्छुभाम् ।
सितामशर्करां स्निग्धां जलान्तं निखनेत वा ॥७७॥
दृष्ट्वा जलं समभ्यर्च्य तर्पयेद्यादसां पतिम् ।
नागनाथसमोपेतं सुरसङ्घमतः स्थितम् ॥७८॥
स्थित्यर्थमुपलैः सर्वैः सह सम्पूर्यते मृदा ।

मृदोपलैश्च सम्पूर्य जातिपु स्निग्धया तया ॥७९॥
आकोट्य पौनःपुन्येन बालार्द्रे वारिसेचनात् ।
समीकृत्योपलिप्याथ गोगणांस्तत्र वासयेत् ॥८०॥
बालवत्ससमेतं च वृक्षेन्द्रगणसंयुतम् ।
सतोयाः शालयश्चैव प्रभूततृणसञ्चयम् ॥८१॥
विकीर्य सलिलं तत्र सन्त्यक्ते गोमयादिके ।
अपास्य गोगणं तत्र त्रिदिनान्ते पुनर्महीम् ॥८२॥
शोधयित्वा चतुर्थेऽह्नि लाङ्गलैः परिवर्तितम् ।
प्रदीप्तेनेष्टकेनाथ स्पर्शनीया च सर्वशः ॥८३॥
ततः काञ्चनजं रेणुं ताम्रंतारमयं त्वपि ।
रत्नजं गन्धमाल्याढ्यं सस्यशालिफलान्वितम् ॥८४॥
सपुष्पाक्षतलाजाढ्यं सिद्धार्थैश्च तिलैर्युतम् ।
श्रीकरं पञ्चगव्येन भूमौ सर्वत्र सेचयेत् ॥८५॥
अकृते वा कृते खाते शुद्धिमेति च तत्क्षणात् ।
यस्मात्तस्मादिदं सम्यग्यत्रकुत्र समाचरेत् ॥८६॥
ततो भुवं समीकृत्य गोमयेनोपलिप्य च ।
समर्चयित्वा विधिवत्ततो दिक्सिद्धिमाचरेत् ॥८७॥
शास्त्रदृष्टेन मार्गेण शङ्कुसंस्थापनादिकम् ।
कृत्वा यथोक्तविधिना प्रासादं कर्तुमारभेत् ॥८८॥
आरभ्यमाणे प्रासादे ये वै प्रत्यूहकारिणः ।
भूतदानवयक्षाश्च राक्षसास्तत्प्रशान्तये ॥८९॥
बालालये देवदेवं प्रतिष्ठाप्य यथाविधि ।
अर्चयेद्विविधैर्भोगैर्यावद्वै मूलमन्दिरे ॥९०॥
स्थापनं देवदेवस्य तदन्ते बालबिम्बगाम् ।
शक्तिं कुम्भे समावाह्य मूलबिम्बे समर्पयेत् ॥९१॥

एवं बालगृहे विष्णौ पूजिते मुनिपुङ्गवाः ! ।
प्रत्यूहकारिणः सर्वे प्रणश्यन्ति ततो गुरुः ॥९२॥
शुभे दिनेनुकूले च नक्षत्रे पूजितग्रहे ।
लग्ने स्थिरे स्थिरांशे च दृक्शुद्धे चोत्तरायणे ॥९३॥
दिव्याद्युत्पातसंशुद्धे सितपक्षेऽमलेऽम्बरे ।
आजलान्तं कृते खाते पूर्ववत्सम्प्रपूरिते ॥९४॥
विमुक्तदोषे भूभागे सर्वलक्षणलक्षिते ।
पूरणादंशशेषे तु सूपलिप्ते धरातले ॥९५॥
चतुष्षष्टिपदे भूते प्राग्वत्सूत्रेण सर्वदिक् ।
स्नातः शुक्लाम्बरः स्रग्वी कृतन्यासः सुशान्तधीः ॥९६॥
सर्वसाधनसंयुक्तश्चार्घ्यपात्रसमन्वितः ।
मङ्गल्यकुम्भमादाय ध्यायमानोऽच्युतं हृदि ॥९७॥
सह चैकायनैर्विप्रैः ! सदागमपरायणैः ।
तथा ऋङ्मयपूर्वैस्तु आमूलाद्भगवन्मयैः ॥९८॥
विशेत्प्रासादभूभागं मध्ये कुम्भं निधाय तम् ।
कुर्यान्निरीक्षणं भूमेस्ताडनं प्रोक्षणं तथा ॥९९॥
सेचनं पञ्चगव्येन सह चास्त्रोदकेन तु ।
ओङ्काराद्यं पवित्रान्तं मन्त्राणां प्राक्चतुष्टयम् ॥१००॥
पाठयेच्च सपुण्याहं ब्राह्मणान् कृतमङ्गलान् ।
बह्वृचान् शाकुनं सूक्तं ततो भद्रं यजुर्मयान् ॥१०१॥
इडामयेति सामज्ञान् शान्ताद्यैरित्यथर्वणान् ।
ईशकोणात्समारभ्य प्रागादौ प्रतिपङ्क्तिषु ॥१०२॥
द्वादशाक्षरमन्त्रेण स्वनाम्ना तु पदे पदे ।
नतिप्रणवगर्भेण दैवतं देहलक्षणम् ॥१०३॥
यष्टव्यो वास्तुपुरुषो दधिस्रक्चन्दनादिना ।

सात्विकेनोपहारेण अग्नौ सन्तर्पयेत्ततः ॥१०४॥
यद्वा विध्यन्तरं भूयः शृणुध्वं मुनिपुङ्गवाः! ।
सर्वदिक्षु समैर्भागैर्नवधा संविभज्य च ॥१०५॥
सूत्रैः सुधावलिप्तैश्च यागागारवसुन्धराम् ।
एकाशीतिपदोपेतां कृत्वैतां सम्प्रयत्नतः ॥१०६॥
प्रत्येकस्मिन् पदे कुर्याच्चतुर्यांशेन चाम्बुजम् ।
दळाष्टकयुतं चैव कर्णिकाकेसरान्वितम् ॥१०७॥
अग्नीशरक्षोवायव्यवह्निःकोणपदेषु च ।
चतुष्टयं यत्पद्मानां केवलं तच्चतुर्दुळम् ॥१०८॥
ईशानपदपद्मात्तु समारभ्य प्रपूजयेत् ।
बाह्यपङ्क्तिषु पद्मेषु क्रमाद्देवासुरान् ऋषीन् ॥१०९॥
वृषाङ्कपदपद्मे तु ब्रह्माणं कर्णिकान्तरे ।
ईश्वरं तपनं चैव दितिं चैव तथाऽदितिम् ॥११०॥
पूर्वपत्रं समारभ्य विन्यसेद्यावदुत्तरम् ।
एवं तस्मिन् पदाब्जे तु पूजयित्वा तु पञ्चकम् ॥१११॥
यष्टव्यं च ततः सम्यग्विवुधानां च सप्तकम् ।
क्रमात्सप्तपदस्थानां पद्मानां कर्णिकोपरि ॥११२॥
वाय्वाख्यं चापवत्सं च जयेन्द्रः समरीयकः ।
रविः सत्यात्मदेवौ च ततो वह्निपदाम्बुजे ॥११३॥
भूयः पितामहं मध्ये पूर्वपत्रे न्यसेद्भृगुम् ।
गगनं हि विभुं पूषा दक्षिणे पश्चिमोत्तरे ॥११४॥
इष्ट्वैवं कोणपद्मेषु पत्रस्थं च चतुष्टयम् ।
यजेद्राक्षसकोणान्तमम्बुजेष्वथ सप्तकम् ॥११५॥
सावित्राख्यश्च सावित्रः ससैन्यश्च गृहक्षमः ।
विवस्वान् धर्मदेवस्तु गन्धर्वाधिपतिः स्मृतः ॥११६॥

पद्मे नैर्ऋतकोणस्थे भूयो ब्रह्माणमन्तरे ।
भृङ्गाख्यो भृङ्गराट् चैव ततः पितृगणाधिपः ॥११७॥
देवदौवारिकाख्यश्च प्राक्पत्रादौ चतुष्टयम् ।
ततोऽष्टपत्रपद्मेषु देवतासप्तकं क्रमात् ॥११८॥
कर्णिकान्तर्गतं न्यस्य यावद्वायुपदावधि ।
इन्द्रश्चेन्द्रपदाख्यश्च सुग्रीवः कुसुमद्विजः ॥११९॥
मित्राख्यो वरुणश्चैव त्वसुराधिपतिः पुनः ।
वायव्यपदपद्मे तु मध्ये चैव प्रजापतिम् ॥१२०॥
प्राक्पूर्वेषु च पत्रेषु शेषश्चाधर्म एव च ।
यन्मयाधिपतिश्चैव नागेन्द्रस्तदनन्तरम् ॥१२१॥
सप्तकं देवतानां च पूर्ववत्पूजयेत्ततः ।
पूर्वाख्यो रुद्रदासश्च मुख्यौ भल्लकसोमकौ ॥१२२॥
धाराधरश्च मत्संज्ञ इत्येतद्देवतागणम् ।
पूजयित्वा ततः पश्चादेकैकस्मिंस्तु पङ्कजे ॥१२३॥
स्वनाम्ना वास्तुनाथं तु पत्रमध्ये स्थितं यजेत् ।
कोणभागस्थपद्मानां केसराधो यजेच्च तम् ॥१२४॥
प्रणवं वास्तुनाथाय नमश्चान्ते प्रपूजयेत् ।
पूजयित्वा विधानेन पुष्पधूपादिकेन च ॥१२५॥
दधिक्षीरोदकेनैव भक्ष्यैः सफलमूलकैः ।
इष्ट्वैवं विबुधव्रातं बाह्ये त्वावरणे पुरा ॥१२६॥
तदन्तरपदाब्जानामीशकोणादितः पुनः ।
यावन्मध्यपदाब्जं तु पूर्य वर्णाष्टकेन तु ॥१२७॥
मातृकावर्णभेदेन अकारादिक्रमेण तु ।
यावद्धकारवर्णं तु ततोऽब्जेऽब्जदळेषु च ॥१२८॥
तेनैव क्रमयोगेन पूजयेद्देवतागणम् ।

द्वितीयावरणे चैव अन्तरीये निबोधत ॥१२९॥
धाता याता ध्रुवः कालः कामः कर्ता जयन्तकः ।
जीवः प्राणस्तरो यज्ञो रविश्च मृगयाम्यकौ ॥१३०॥
लोकनाथो विधाता वै भृगुः स्रष्टा नियामकः ।
मनोजवश्च कल्याणः पर्जन्यो द्रविणस्ततः ॥१३१॥
सष्टारो विश्वकर्मा च इत्येता मुनिपुङ्गवः! ।
देवताश्चान्तरे पूज्याश्चतुर्विंशतिसंख्यया ॥१३२॥
एतेषामन्तरे भूयस्तृतीयावरणे तथा ।
षोडशानां ततः सम्यग्देवतानां गणं क्रमात् ॥१३३॥
समुद्रा मातरो द्वीपा मासा नद्यश्च तारकाः ।
विश्वे देवाश्चाप्सरसो मनवो ऋषयस्तथा ॥१३४॥
वसवो मरुतः सिद्धा नागाः साध्या ग्रहाः क्रमात् ।
इन्द्रादिलोकपालांस्तु चतुर्थावरणे न्यसेत् ॥१३५॥
तत्पादादौ तु चेशान्तं पद्मानां पत्रमध्यतः ।
मध्यपद्मे तु पद्मस्थं विश्वरूपं यजेत्प्रभुम् ॥१३६॥
यस्यैवं देवताचक्रं वाहनास्त्रानुयायिभिः ।
संयुक्तं तिष्ठते देहे सकलस्य महात्मनः ॥१३७॥
प्रणवेन स्वनाम्ना च नमस्कारयुतेन तु ।
एकैकं पूजयेद्देवं तथैकैकमिहाक्षरम् ॥१३८॥
इष्ट्वैवं देवताः प्राग्वदग्नौ सन्तर्पयेत्ततः ।
कुर्यात्कुम्भप्रतिष्ठानं यथा तदवधार्यताम् ॥१३९॥
पूर्ववत्तोरणाद्यैस्तु भूभागमुपशोभयेत् ।
निर्णिक्तालयवक्त्रस्य अग्रतस्तत्क्षितेर्बहिः ॥१४०॥
पूर्वोपकरणोपेतं कुर्यान्मण्डलमुत्तमम् ।
कुण्डाष्टकान्तरस्थं च स्थलं तत्राष्टहस्तकम् ॥१४१॥

सपिण्डिका द्विहस्तास्तु कुण्डाः पूर्वोक्तलक्षणाः ।
त्रिहस्तपरिता वीथी स्यादेवं द्विनवः शमः ॥१४२॥
पूर्ववत्प्रतिकुण्डे तु विनिवेश्य च साधनम् ।
आत्मनश्चोत्तरे कुर्यात्कुण्डं चाथ समस्थले ॥१४३॥
दक्षिणे पूर्ववद्देवमवतार्य यजेत्क्रमात् ।
स्थलायां स्थण्डिलस्योर्ध्वे उन्नतायां च पूर्ववत् ॥१४४॥
तर्पयित्वा यथाकाममुद्धृत्याग्निगणं ततः ।
दिक्कुण्डेषु विनिक्षिप्य संस्कृतेषु च पूर्ववत्॥ १४५॥
तथैव च विदिक्स्थेषु उद्धृत्याभ्यर्च्य वै क्रमात् ।
ततः प्रभवयोगेन चतुर्दिक्षु निवेशयेत् ॥१४६॥
चतुरो वासुदेवादीन् नाम्ना एकायनान् द्विजान् ।
स्वाभिः स्वाभिरसंख्यं तु तैः कार्यमभिधाय च ॥१४७॥
कर्मावसानं हवनं साज्यैस्तु तिलतण्डुलैः ।
एवमप्यययोगेन वाय्वादीशानगोचरम् ॥१४८॥
ऋग्वेदाद्यांस्तु चतुरः संस्कृत्यादौ तथा न्यसेत् ।
तैरप्यच्युतलिङ्गैस्तु स्वशाखोक्तैश्च पावनैः ॥१४९॥
हवनं विधिवत्कार्यं भक्तियुक्तेन चेतसा ।
अथेशकोणमासाद्य ब्राह्मणैरपरैः सह ॥१५०॥
प्राङ्निर्दिष्टं न्यसेत्तत्र स्नानोपकरणं तु यत् ।
दशार्धगव्यपूर्वं तु कलशेषु पृथक् पृथक् ॥१५१॥
तानर्च्यार्घ्यादिना पश्चाद्विपट्केनाभिमन्त्र्य च ।
समानीय शिलोपेतान् कलशान् पूर्वसम्भृतान् ॥१५२॥
उत्कृष्टधातुसम्भूतान् नव शैलमयांस्तु वा ।
समान् सुपकान् सुघनान् मृण्मयांस्तदभावतः ॥१५३॥
द्वादशाङ्गुळविस्तीर्णान् तन्मानेन तु चोन्नतान् ।

द्विगुणान् सति सामर्थ्ये नृपाणां हेमजान् हितान् ॥१५४॥
तत्संख्यं चतुरश्रं तु द्वादशाङ्गुळविस्तृतम् ।
तत्त्र्यंशतुल्यं बाहुल्याच्छिलावृन्दं समाहरेत् ॥१५५॥
संस्थाप्य विधिवत्कुम्भान् पूर्वोक्तेन क्रमेण तु ।
कन्चुतुल्यमथैकं वा तत्कण्ठं त्र्यङ्गुळोन्नतम् ॥१५६॥
तद्द्गुणैरपि विस्तीर्णं तत्खातोऽष्टाङ्गुळः स्मृतः ।
परितः कर्णवर्जं तु शङ्खो वा सुसितो महान् ॥१५७॥
विहितो हत नासस्तु अन्तः शुद्धस्तु साक्षतः ।
एवं हि सान्तराद्बाह्यात्समालभ्याधिवास्य च ॥१५८॥
फलैर्हेमादिकै रत्नैः सर्वौषधिमयैस्ततः ।
गन्धैर्बीजैस्तथा धान्यैर्विद्रुमाद्यैस्तु मौक्तिकैः ॥१५९॥
नेत्रवस्त्रैरलङ्कारैर्भूषयेत्स्रग्वरैः शुभैः ।
द्वादशाक्षरमन्त्रेण एकैकस्य समाचरेत् ॥१६०॥
मूर्तिसंसिद्धये न्यासं प्रणवैस्ताश्चिदात्मनाम् ।
ततश्चार्घ्यादिकैर्भोगैर्बल्यन्तैर्विविधैर्यजेत् ॥१६१॥
शिलास्वेवं कृतेः पश्चान्नियेत्कुण्डसन्निधिम् ।
साशिलं कुम्भवृन्दं तु आधारेपूपरि न्यसेत् ॥१६२॥
तदाधारशिलां पश्चात्तत्र वा मण्टपाद्बहिः ।
एवमेव च संस्कृत्य भावयेत्प्रणवेन तु ॥१६३॥
ज्वलन्तीं गोसहस्रेण खचितां सूर्यबिम्बवत् ।
ततश्चाराध्य मन्त्रं तु सन्तर्प्य शतसङ्ख्यया ॥१६४॥
मध्ये तत्कलशं न्यस्य साङ्गं सपरिवारकम् ।
निश्शेषशक्तिगर्भं तु व्यापकं ब्रह्मतत्ववित् ॥१६५॥
अत उर्ध्वे तिर्यगाभिर्वागाद्याभिश्च शक्तिभिः ।
व्रतमूर्तिसमेताभिरभिन्नाभिस्तु तत्वतः ॥१६६॥

पाठयेद्ब्राह्मणान् तत्र आत्मव्यूहं तु मन्त्रराट् ।
तथैवात्मानुवादं च प्रणवाद्यन्तगन्तु वै ॥१६७॥
तमर्चयित्वा विधिवत्तर्पयित्वा त्वनन्तरम् ।
दिक्शिलानां च कुम्भानां वासुदेवादिकान् न्यसेत् ॥१६८॥
पूर्ववच्चानिरुद्धाद्यान् विदिक्संस्थापितेषु च ।
पाठयेच्चातुरात्मीयं संज्ञामन्त्रचतुष्टयम् ॥१६९॥
प्रभवाप्ययोगेन ततः सूक्तं तु पौरुषम् ।
ऋग्वेदान पाठयेद्भक्त्या युञ्जतेत्यपरान् यजुः ॥१७०॥
रथन्तराख्यं यत्साम सामज्ञान् भगवन्मयान् ।
सहस्रशिरसं चेति मन्त्रं चाथर्वणं ततः ॥१७१॥
एकस्मिन् वा मुनिश्रेष्ठाः! सर्वोक्तं कलशे हितम् ।
तथैव हवनं कुण्डे मध्यमे विहितं स्वयम् ॥१७२॥
किं तु क्रमेण वै मन्त्रान् पाठयेच्च यथास्थितान् ।
एवं सम्पातहोमं तु कृत्वा पूर्णान्तिकं ततः ॥१७३॥
महाशक्तिसमूहस्तु परः सामर्थ्यलक्षणः ।
अभेदेन च मन्त्रादिमूर्तीनां यः स्थितः स्फुटम् ॥१७४॥
ससन्धेयः शिलानां च स्वनाम्ना प्रणवेन तु ।
ज्ञानभासा निवसति तथा नन्दवला प्रभा ॥१७५॥
सर्वगा ब्रह्मवदना द्योतकी सत्यविक्रमा ।
सम्पूर्णा चेति कथिताः शक्तयो विश्वधारिकाः ॥१७६॥
या शिला कलशाधारसंज्ञा तां विद्धि सर्वगाम् ।
सामर्थ्यशक्तिसामान्यां निष्कलां पारमेश्वरीम् ॥१७७॥
सन्तर्प्य मूलमन्त्राच्च शिखामन्त्रेण लाङ्गलिन्! ।
अजस्यनाभावध्येकमन्त्रैर्णैकायनैस्ततः ॥१७८॥
तादर्थ्येन तु होतव्यं मृण्मयैस्तु तथैव हि ।

होतव्यमस्य वाग्मीयं गायत्रीभिरतोपरैः ॥१७९॥
होतव्यं ब्राह्मणैः सम्यक्तव्याप्तेरुपलक्षकैः ।
दत्वा पूर्णां स्वयं कृत्वा स्थलस्थस्यार्चनं पुनः ॥१८०॥
बलिदानं च भूतानां समाचम्य ततो व्रजेत् ।
प्रासादब्रह्मभूभागं न्यसेत्तत्र महाशिलाम् ॥१८१॥
संस्मरंश्चक्रमन्त्रं तु सानन्तं प्रणवेन वै ।
बीजभूतं तदन्तःस्थमध्वषट्कं स्मरन् यजेत् ॥१८२॥
निश्शेषमन्त्रवृन्देन तामर्घ्यादेरनन्तरम् ।
द्वारादिग्वीक्षमाणं तु मध्ये मन्त्रघटं न्यसेत् ॥१८३॥
स्वदिक्ष्वन्यान्यथावस्थान् स्वैः स्वैर्मन्त्रैर्निवेशयेत् ।
ततः स्वशक्तिपापाणैरेकैकं स्थगयेद्घटम् ॥१८४॥
पूरयेदस्त्रमन्त्रेण घटानामन्तरं ततः ।
मृदुमृद्वालुकाभिस्तु सुधयाऽचलसिद्धये ॥१८५॥
संवेष्ट्य नेत्रवस्त्रैस्तु ऋग्वेदान् पाठयेत्ततः ।
आत्वा हार्येति सूक्तं तु प्रतिष्ठासाम सामगान् ॥१८६॥
द्वादशाक्षरसंयुक्तं बलमन्त्रं पुनः पुनः ।
वक्तव्यं ब्रह्मनिष्ठैस्तु प्रणवान्तं सुभावितैः ॥१८७॥
तदेकतनुतां यातं संस्मरेत्प्रणवेन तु ।
मूर्त्यादिशक्तिनिष्ठं यन्नामरूपक्रियात्मकम् ॥१८८॥
द्वादशाक्षरमन्त्रेण भूयः सहृदयक्रमैः ।
मन्त्राराध्यं स्वमूर्तिं तु संस्मरेत्तेजसां निधिम् ॥१८९॥
ततस्त्वोम्भगवन्भोगैः पाठयेत्पाञ्चरात्रिकान् ।
अर्चामितेति ऋग्वेदान् अर्चासाम च तद्विदः ॥१९०॥
ततः परिगृहीते तु क्षेत्रे देवगृहीयके ।
द्वादशाङ्गुलमानं तु दिग्विदिक्ष्वष्टकं न्यसेत् ॥१९१॥

स्नापितं पूजितं सम्यक् शिष्याणां शुभलक्षणम् ।
तदन्तः सन्निरोद्धव्यो बुद्धिधर्मगुणः क्रमात् ॥१९२॥
धर्माद्याश्चाग्निकोणात्तु यावदीशपदं पुनः ।
प्रागादावुत्तरान्तं च अधर्माद्यं चतुष्टयम् ॥१९३॥
शिलानामन्तरे भूमौ षट्कं षट्कं क्रमेण तु ।
न्यस्तव्यं पूर्ववर्णाद्य वर्णानां सावसानकम् ॥१९४॥
शब्दब्रह्मानुविद्धां च कृत्वैवं बुद्धिवागुराम् ।
सूत्रभूतां न्यसेत्सम्यक् प्रासादतलसंस्थिताम् ॥१९५॥
न्यसेत्प्राङ्गणभित्त्यर्थं तथैव हि शिलाष्टकम् ।
तासु संरोधयेत्सम्यक् प्रागुक्तांस्तु दिगीश्वरान् ॥१९६॥
चक्रं तदन्तभूमीनां भ्रमद्वह्निस्फुलिङ्गवत् ।
क्षार्णेन चिन्तयेद्व्याप्तं भूभागं चाङ्कणीयकम् ॥१९७॥
आभोगं तदधः शेषं तदूर्ध्वे गगनेश्वरम् ।
बहिः प्राङ्गणभित्तीनां सास्त्रं सपरिवारकम् ॥१९८॥
प्रागादावीशकोणान्तमिन्द्राद्यं चाष्टकं न्यसेत् ।
तथाविधेषूपलेषु अन्तर्भूमिगतेषु च ॥१९९॥
तत्स्वनाम्नाऽर्चयित्वा तु ऋग्वेदान् पाठयेत्ततः ।
क्षीबो न विद्वानिति वै ये देवास्तु यजुर्मयान् ॥२००॥
देवव्रतं च सामज्ञान् प्रविश्याभ्यन्तरं ततः ।
स्थित्वाग्रतो मन्त्रमूर्तेरध्वव्याप्तिमनुस्मरेत् ॥२०१॥
बीजतश्चाङ्कुरीभूता पुरस्ताद्व्यक्तिमेति सा ।
प्रासादपीठपर्यन्तं कुम्भाधारोपलात्तु वै ॥२०२॥
भुवनाध्वा यथावस्थो भावनीयस्तु सर्वदा ।
गर्भोच्छ्रयावधिर्यावत्पदाध्वानं विलोकयेत ॥२०३॥
मन्त्राध्वा शुकनासान्तं तत्त्वाध्वा वेदिकावधि ।

कालाध्वा तु गळान्तं च वर्णाध्वा तु तदूर्ध्वतः ॥२०४॥
समीकृत्य पुरा सर्वं प्रासादं प्रारभेत्ततः ।
प्रासादस्थैर्यसिध्यर्थं देवसान्निध्यसिद्धये ॥२०५॥
सर्वदोषप्रशान्त्यर्थं सर्वसम्पत्तिसिद्धये ।
गर्भन्यासं पुरा कुर्याद्गर्भगेहे यथाविधि ॥२०६॥
रत्नैर्लोहैस्तथा बीजैः कन्दैर्मुद्गैश्च पूरिताम् ।
सौवर्णीं राजतीं वाऽथ ताम्रजां वा स्वशक्तितः ॥२०७॥
नवगर्तसमायुक्तां मञ्जूषां सापिधानकाम् ।
सम्प्रोक्ष्य चास्त्रतोयेन वस्त्रयुग्मेन वेष्टयेत् ॥२०८॥
धान्यराशौ तु विन्यस्य मूलमन्त्रेण देशिकः ।
अर्घ्यगन्धादिनाभ्यर्च्य कुण्डे वा स्थण्डिलेपि वा ॥२०९॥
देवमभ्यर्च्य विधिवत्समिद्भिः सप्तभिः क्रमात् ।
हुत्वा पूर्णाहुतिं पश्चादाचार्यः समुपोषितः ॥२१०॥
शुभ्रवस्त्रोत्तरीयश्च भूषणैरपि भूषितः ।
गन्धमाल्यालङ्कृताङ्गः रात्रौ लग्ने सुशोभने ॥२११॥
भाजनं तत्समादाय वेदघोषैश्च मङ्गळैः ।
वाद्यघोषैश्च सहितः कृत्वा गेहं प्रदक्षिणम् ॥२१२॥
प्रविश्य गर्भभूभागं तत्र द्वारस्य दक्षिणे ।
कृतं श्वभ्रं पञ्चगव्यैः सेचयित्वा समन्ततः ॥२१३॥
तत्र भूमिं तु चार्घ्याद्यैः समभ्यर्च्य ततस्तु ताम् ।
परिचिन्त्य ऋतुस्नातामात्मानं च हरिं स्मरन् ॥२१४॥
सर्वभूतधरे ! कान्ते ! पर्वतस्तनमण्डिते ।
समुद्रपरिधानीये! देवि! गर्भं समाश्रय ॥२१५॥
इत्युक्त्वा भाजनं श्वभ्रे निधाय सुधया ततः ।
दृढीकृत्य ततः श्वभ्रं मृदापूर्यं समन्ततः ॥२१६॥

त्रिचतुः पञ्चरात्रं वा रक्षां कुर्यान्मुनीश्वराः! ।
गर्भन्यासस्त्वयं विप्राः! देवधाम्नोश्च वृद्धिदः ॥२१७॥
अकृते गर्भविन्यासे प्रत्यवायो महान् स्मृतः ।
तस्मात्सर्वप्रयत्नेन गर्भन्यासं समाचरेत् ॥२१८॥
प्रासादस्याथ वक्ष्यामि लक्षणं मुनिपुङ्गवाः! ।
तलादूनाधिकाश्चैव साङ्गुलैरुचितैः करैः ॥२१९॥
द्विद्वादशकरं यावत्तलेनोनाधिकेन तु ।
शुभाय सिद्धये विद्धिगर्भं देवगृहस्य च ॥२२०॥
कृत्वा क्षेत्रांगुळानां च कराणां वा घनं पुरा ।
त्यजेत्तदष्टभिः सम्यग्यच्छेषं तद्विचार्य च ॥२२१॥
एकाद्यष्टमपर्यन्ता ध्वजधूममृगेश्वराः ।
श्वा च गोखरमातङ्गवायसास्तु ततः शुभाः ॥२२२॥
एकत्रिपञ्चसप्ताख्याः सर्वत्रैव विधीयते ।
एवमन्तर्भ्रमेणैव सह भित्तिगणेन तु ॥२२३॥
गर्भद्विगुणविस्तीर्णं क्षेत्रं देवगृहस्य च ।
मन्दिरे त्वेकभित्तीये क्षेत्रमानं विधीयते ॥२२४॥
गर्भोक्तं तत्त्रिभागेन युक्तं युक्तेन वर्त्मना ।
तत्रापि ह्रासवृद्ध्या तु आयशुद्धिं विचारयेत् ॥२२५॥
एवं निर्जगतीकं च भागपीठं विवर्जितम् ।
प्रासादक्षेत्रमानं च तद्युक्तमवधार्यताम् ॥२२६॥
षड्भागेनाथ पादेन त्रिभागेनोभयात्मिका ।
अधिकार्धं चतुर्दिक्षु तत्पञ्चांशैस्तु वै त्रिभिः ॥२२७॥
तृतीयांशेन वै मध्ये निर्गमस्तु विधीयते ।
कोणात्कोणात्तु वै शेषं भागं भागं प्रवेशयेत् ॥२२८॥
उच्चं गर्भसमं पीठं तत्पीठेन दळेन वा ।

पीठोक्तालयपीठस्य लक्ष्मस्थित्यंशकल्पना ॥२२९॥
चतुर्दिक्षु विधेया वै बहुधानन्तपूर्विका ।
अथोच्छ्रायं तु वै क्षेत्रात् त्रिकोणं मन्दिरस्य च ॥२३॥
कुर्याद्व्यर्धगुणं चैव द्विगुणं वा यथेच्छया ।
द्विरेकादशधा कुर्यात्तं च भागैः समं पुरा ॥२३१॥
विधेयं पीठवत्पश्चादेकांशेन मसूरकम् ।
तदूर्ध्वे विहिता जङ्घा गर्भमानेन चोन्नता ॥२३२॥
भवोपकरणीयाभिर्देवताभिरलङ्कृता ।
जङ्घायामंशयुग्मेन उपयूनाधिकेन वै ॥२३३॥
कार्यं शिखरपीठं तु पूर्वलक्षणलक्षितम् ।
किं तु प्रवेशनिर्यासौ तत्र चार्धांशसम्मितौ ॥२३४॥
शिखरं चात्र विहितं भूमिकानवकान्वितम् ।
सङ्कोच्य तत्पुरा सूत्रमादायोन्नतिसम्मितम् ॥२३५॥
एतस्मादेकवर्णात्तु जङ्घोर्ध्वायात्प्रसार्य च ।
संस्पृशेच्छिखरं पीठमञ्जसा तन्निरोध्य च ॥२३६॥
प्रासादाद्बहिरायत्र भूभागे त्वमलेक्षण ! ।
कर्णादूर्ध्वं नयेत्सूत्रं लाञ्छयमानं क्रमेण तु ॥२३७॥
शिखरोन्नतिपर्यन्तं चतुर्दिक्ष्वेवमेवहि ।
पर्यटेल्लाञ्छयमानं तु कर्णात्कर्णं मुनीश्वराः ! ॥२३८॥
यावत्कुमुदपत्राभा सा स्याच्छिखरमञ्जरी ।
एवमालेख्यदृष्ट्या तु सम्पाद्यातन्तुपाततः ॥२३९॥
भूमिकाण्डप्रसिध्यर्थं कार्या सा दशधा पुनः ।
उपरिष्टात्तु भागेन भवेदामलसारकम् ॥२४०॥
भूमयो भागमानास्तु ततस्तासां समाचरेत् ।
क्षयवृद्ध्या विधानं तु तद्विरष्टांशसम्मितम् ॥२४१॥

विभिन्ना पीठरचना तासु कार्या यथास्थिता ।
सचक्रैर्विविधैः पद्मैः प्रादुर्भावैस्तु चाखिलैः ॥२४२॥
सर्वैर्वा लाञ्छनैर्मूर्तैः नृत्तगीतरसस्थितैः ।
नवांशेनोर्ध्वभागात्तु स्वपादेन विनिर्गतम् ॥२४३॥
उष्णीपमूर्ध्वभूमेस्तु कार्यं वै रचनोज्झितम् ।
शिष्टं कृत्वा त्रिधा पीठं मण्डलस्थेन पूर्ववत् ॥२४४॥
द्वितीयेन ततः कण्ठं तृतीयेनोर्ध्वगेन तु ।
सुसमं श्रीयुतं कुर्यादण्डं धात्रीफलाण्डवत् ॥२४५॥
नवधोष्णीपकं कृत्वा चतुर्भिर्वेदिकाश्रमम् ।
त्रिभागपृथुभागेन सस्तम्भा ह्यथ केवला ॥२४६॥
उन्नता शिखरार्धेन साप्युत्पलदळोपमा ।
कार्या शिखरपीठोर्ध्वे दिव्यकर्मविभूपिता ॥२४७॥
ततः शुभतरं कुर्यान्मण्टपं स्तम्भसंयुतम् ।
भूपितं विहगेन्द्रेण बलिमण्डलगेन तु ॥२४८॥
चतुर्द्वारे तथा दिक्षु विधेयं मण्टपत्रयम् ।
प्रवेशत्रितयोपेतं मण्टपे मण्टपं भवेत् ॥२४९॥
कुर्यान्मण्टपमुक्तं वा यथाभिमतनिर्गमम् ।
रथोपरथकाद्यं तु तेपां गर्भाद्विधीयते ॥२५०॥
निर्यासो दशमांशेन द्वादशांशेन लाङ्गलिन् ! ।
अथ वा पोडशांशेन ते कार्या नेमिवत्पुनः ॥२५१॥
चतुर्दिक्पक्षसंलिप्ताः पीठकर्मविभूपिताः ।
शिखरस्य चतुर्दिक्षु पीठोपरि समापयेत् ॥२५२॥
समं रथकयुक्त्या तु नासिकामञ्जरीगणम् ।
मध्यदेशचतुर्दिक्षु कुर्याद्द्वारगणं समम् ॥२५३॥
त्रिचतुःपञ्चपड्भागे ततो गर्भाद्विधीयते ।

द्विगुणं चोन्नतत्वेन त्रिपञ्चनवशाखिकम् ॥२५४॥
युक्तं द्वार्स्थद्वयेनैव कुम्भेभदशनैस्तु वा ।
विधिवत् स्थापनं तस्य मन्त्रपूर्वं समाचरेत् ॥२५५॥
संस्थाप्य मूलमन्त्रेण सम्पूज्यार्घ्यादिना हृदा ।
शाखामूलगतां कुर्याद्धातुरत्नमयीं स्थितिम् ॥२५६॥
सर्वाधारमयं मन्त्रं सन्निरोध्य हि तत्र च ।
ज्ञानक्रियात्मकं ध्यात्वा शिखामन्त्रेण शाश्वतम् ॥२५७॥
दक्षिणोत्तरभागाभ्यां शाखायुग्मं तु विन्यसेत् ।
हृन्मन्त्रेण तदूर्ध्वे तु रुध्वाद्यं परमेश्वरम् ॥२५८॥
सन्निधीकृत्य सम्पूज्य गगनस्थे ह्युदुम्बरे ।
द्विविधं धातुजालं तु रत्नं सिद्धार्थकान् तिलान् ॥२५९॥
चन्दनाद्या हि गन्धा ये क्षीरं दधि घृतं मधु ।
शालयः सर्वबीजानि सर्वौषध्यः सविद्रुमाः ॥२६०॥
कृत्वा नेत्रेण नेत्रस्थान् द्वारोर्ध्वे विनिवेश्य तान् ।
दृश्यं भोगाप्तये चैव त्वदृश्यं मोक्षसिद्धये ॥२६१॥
चतुष्पात्सकलो धर्मः तदूर्ध्वे सन्निरोध्य च ।
चत्वारि शृङ्गा इति यत् पाठयेद्दङ्मयांस्ततः ॥२६२॥
कर्महोमचयं कृत्वा पूर्णां मूलेन पातयेत् ।
एतद्बिम्बप्रतिष्ठानात्प्रग्वत्पश्चात्समाचरेत् ॥२६३॥
स्थित्यपेक्षावशेनैव ह्यालयस्य तु वै विभोः ।
अनन्तभुवनं नाम समेकामापवर्गदम् ॥२६४॥
चतुष्प्रकारमेवं हि प्रासादं विद्धि पीठवत् ।
रचनासन्निवेशोत्थभेदेनानेकधा तथा ॥२६५॥
पतत्रीशमृगेन्द्रैस्तु निधिभूतोपमैर्घटैः ।
शङ्खपद्माङ्कितभिस्तु सोपानपदपङ्क्तिभिः ॥२६६॥

युक्तं द्वारवशेनैव तथा पीठवशात्तु वै ।
विस्तारः प्रतिदिक्संस्थस्त्वरुणस्य विधीयते ॥२६७॥
गर्भोत्थक्षेत्रसंज्ञा च जगतीकस्य लाङ्गलिन् ! ।
ज्ञेयः सजगतीकस्य तन्मानेनापि सर्वदिक् ॥२६८॥
एभ्यः पादादिकं कुर्यात्पादाद्यंशोज्झितं तु वै ।
बुध्वा चायतनानां च संस्थितश्चाङ्गणे पुरा ॥२६९॥
चतुरायतनं ह्येतत्प्रासादैः दिक्त्रयस्थितैः ।
आद्येन सह कोणस्थैः तत्पञ्चायतनं स्मृतम् ॥२७०॥
विज्ञेयमष्टायतनं त्रिभिरन्यैस्तु दिग्गतैः ।
विना मध्यस्थितेनैव दिग्गतैस्तु द्विभिर्द्विभिः ॥२७१॥
तद्दशायतनं तेन युक्तमेकाधिकं भवेत् ।
प्रतोळीपक्षगेनैव प्रासादद्वितयेन तु ॥२७२॥
द्वादशायतनं ह्येतत्सह मध्यस्थितेन तु ।
तदेवाधिकसंज्ञं तु अतोन्येऽनन्तसंज्ञिकः ॥२७३॥
परस्परमुखौ कुर्यात्प्रासादौ द्वारदेशगौ ।
प्रासादाभिमुखाश्चैव दिक्त्रयेऽवस्थितास्तु ये ॥२७४॥
कोणस्थाभ्यां च साम्मुख्यं द्वाभ्यां द्वाभ्यां विधीयते ।
द्वाभ्यां चाभिमताभ्यां तु कुर्यादुचितदिङ्मुखम् ॥२७५॥
द्वौ परस्परवक्त्रौ तु कोणदेशसमाश्रितौ ।
द्वाराण्यनन्तायतने प्रासादानां मुनीश्वराः ! ॥२७६॥
यथाभिमतदिक्स्थानि कर्तव्यान्यविशङ्कया ।
न तत्र तेषां भवति वेधदोषः परस्परम् ॥२७७॥
अङ्गभावगतत्वाच्च प्रधानायतनस्य वै ।
अर्धेन च त्रिभागेन हितः पादेन चाङ्गणात् ॥२७८॥
परण्डकस्य चोच्छ्रायस्तद्विस्तारस्तथोच्छ्रितेः ।

तच्च पीठोपमं कुर्यात् श्लक्ष्णं सोष्णीषमेव वा ॥२७९॥
युक्तं कोटिगणेनाथ नानादेवान्तगेन तु ।
यदेकायतनं चैव त्वङ्गणं तन्मुनीश्वराः ! ॥२८०॥
युक्तं लघुपरण्डेन केवलं वा परण्डकम् ।
यदा व्यायतनाद्यं च द्वादशायतनान्तिमम् ॥२८१॥
एकदिग्वीक्षमाणं च चतुरश्रायतेऽङ्गणे ।
वृत्तायते वा वितते प्रासादे चोक्तलक्षणे ॥२८२॥
यस्माद्देवालयानां च अङ्गणानां विशेषतः ।
चतुरश्रादिपीठानां नित्यमेव मुनीश्वराः! ॥२८३॥
अन्योन्यानुगतत्वं तु हितं वापेक्षिकं तु वै ।
भूमिभागवशेनैव तथैवार्चावशेन तु ॥२८४॥
नानाफलवशेनापि तथा शोभावशेन च ।
भूलाभश्चतुरश्रात्तु चतुरश्रायताद्घनम् ॥२८५॥
वर्तुलात्सर्वकामाप्तिर्निर्वृतिस्तु तदायतात् ।
दृष्टादृष्टफलेप्सूनां लोकास्तु महदादयः ॥२८६॥
यच्छान्ति वैष्णवं स्थानमारोग्यं भूतिमुत्तमाम् ।
वैष्णवानामकामानां च्युतेरन्ते परं पदम् ॥२८७॥

मुनयः ।

प्रासादलक्षणमिदं श्रुतं त्वत्तो मुनीश्वर ! ।
तस्य संस्थापनविधिं विस्तरेण प्रकाशय ॥२८८॥

नारदः ।

प्रासादादिप्रतिष्ठानां शृणुध्वं विधिमुत्तमम् ।
प्रासादस्याग्रतः कृत्वा पूर्ववद्यागमण्टपम् ॥२८९॥
सर्वोपकरणैर्युक्तं सर्वलक्षणसंयुतम् ।
प्रसादस्यापि परितः कुर्यात्कुण्डाष्टकं गुरुः ॥२९०॥

सामग्र्यादेरभावे तु प्रासादाग्रप्रकल्पिते ।
यागमण्टपभूभागे कुण्डमेकं प्रकल्पयेत् ॥२९१॥
समस्तमूर्तिपीयं च होमं तत्रैव कल्पयेत् ।
प्रासादस्थापनारम्भात्तृतीये पञ्चमेपि वा ॥२९२॥
दिवसे त्वङ्कुरारोपं यथाविधि समाचरेत् ।
शैलोत्थं पूर्ववत्कुम्भं कृत्वा धातुमयं तु वा ॥२९३॥
तद्विगोळकमानेन मन्त्रविम्बेन वै सह ।
शुभेऽन्यस्मिन् दिने यागमण्टपे ह्युक्तलक्षणे ॥२९४॥
अधिवास्य यथान्यायं सर्वोपकरणान्वितम् ।
स्नानाद्यमखिलं ताभ्यामापाद्य च यथाविधि ॥२९५॥
तस्मिन् रत्नादिसंयुक्ते विम्बं कुम्भे निवेश्य च ।
वस्त्रैराभरणैः पुष्पैश्छन्नं कृत्वार्घ्यपुष्पवत् ॥२९६॥
शनैः प्रासादपर्यङ्कमारुहेन्मूर्तिपैः सह ।
तत्र प्राक्ताडनादींस्तु कुर्यात्सङ्क्षाळनादिकान् ॥२९७॥
आचरेद्रत्नविन्यासं सर्वं वाऽऽवाहनोदितम् ।
निवेशनीयमित्येव विम्बं कुम्भसमन्वितम् ॥२९८॥
हृदाद्यन्तनिरुद्धेन मूलमन्त्रेण लाङ्गलिन् ! ।
तत्राद्यमनुसन्धानमेकं कृत्वा परान्वितम् ॥२९९॥
सामान्यलक्षणं पश्चात्पूर्वोक्तं वै कलात्मकम् ।
सम्पूज्य वाससाच्छाद्य सुधया व्यक्ततां नयेत् ॥३००॥
ततः पिण्डं तदूर्ध्वे तु साण्डं कुर्याद्यथोदितम् ।

---

१— हृदादि इति—(पा)
२— प्रागास–न्तिमान्– इति—(पा)
३— बीज–इति– (पा)

प्रासादं स्नापयेत्पश्चात् पङ्भिः सिद्धार्थकादिभिः ॥३०१॥
सुधामयं चेत्प्रासादं दर्पणे स्नानमाचरेत् ।
समालभ्यार्चयित्वा च स्रगाद्यैर्मण्डयेत्ततः ॥३०२॥
प्रासादपट्टिकायां तु पञ्चविंशतितन्तुभिः ।
बध्वा तु कौतुकं पश्चात्कुर्याच्छायाधिवासनम् ॥३०३॥
स्नपनं दर्पणे कुर्यात्प्राग्वद्देशिकसत्तमः ।
प्रासादस्य चतुर्दिक्षु मूर्तयः कल्पिता यदि ॥३०४॥
तेषां नेत्राणि चोन्मील्य यथाविधि मुनीश्वराः ।
सर्वमन्यद्यथायोगं वक्ष्यमाणेन वर्त्मना ॥३०५॥
प्रासादस्यापि कुर्वीत कूर्चद्वाराधिवासनम् ।
प्रासादस्याग्रपर्यन्तं कुम्भाधारोपलात्तु वै ॥३०६॥
लोकाध्वतत्त्वदेवानां न्यासं प्राग्वत्समाचरेत् ।
दिङ्मूर्तिनां तथाऽङ्गेषु मूलमन्त्रादिकान् न्यसेत् ॥३०७॥
कलशे मण्डले चैव प्रासादस्थान् समर्चयेत् ।
प्रासादपरितः क्लृप्तकुण्डेष्वग्निं यथाविधि ॥३०८॥
संस्कृत्य वासुदेवादीन् प्रभवाप्यययोगतः ।
सन्तर्पयेद्यथाशास्त्रं यद्वा तत्पुरतः स्थिते ॥३०९॥
कुण्डे तु सकलं होममाचार्यः स्वयमाचरेत् ।
मन्त्रांश्च पाठयेद्विप्रांस्तत्प्रातिष्ठां नयेत्तु वै ॥३१०॥
संरोध्य वर्ममन्त्रं तु तत्र ध्यानधिया स्वयम् ।
पूर्णान्तमखिलं कृत्वा विधिनानेन वै पुनः ॥३११॥
क्षुरोहरेति वै साम पाठयेत्सामगांस्तु वै ।
चक्रमामलसारस्य मध्यतः सन्निवेशयेत् ॥३१२॥
यथाभिमतरूपं तु दिग्वक्त्रं वाम्बराननम् ।
स्वशक्तिवर्णदण्डस्थं चण्डमार्ताण्डभास्वरम् ॥३१३॥

चक्रमन्त्रं न्यसेत्तस्मिन् वर्णाध्वानं पुरोदितम् ।
गत्यागतिप्रयोगेण प्राक्प्रमेयज्ञलक्षणम् ॥३१४॥
तान्यथावत्पुरा ज्ञात्वा द्रव्यमूर्तिगते विभुम् ।
कुर्यात्ततोध्वसन्धानं नान्यथा तु मुनीश्वराः ! ॥३१५॥
अमलं शान्तसंज्ञं वै तथा शान्तोदितोदितम् ।
एकमेव हि तन्मूर्ति यश्चक्रंवेत्ति तत्वतः ॥३१६॥
सोस्मिन् संसारचक्रे तु सर्वाश्रमनिवासिनाम् ।
सर्वधर्मरतानां च चक्रवर्तित्वमाप्नुयात् ॥३१७॥
यच्छक्तिर्ब्रह्ममूर्त्यैव सिद्धा साक्षान्निराश्रया ।
अन्तर्बहिस्थं सर्वेषां मोक्षदं चामलं स्मृतम् ॥३१८॥
क्षीरोदार्णवतुल्यं यत्सहस्रादित्यसन्निभम् ।
निरङ्गं तीक्ष्णधारं वै तच्छान्ताख्यं हि योगतः ॥३१९॥
यत्तु नानाङ्गभावेन स्वातन्त्र्यात्स्वयमेव हि ।
सर्वदिक्प्रसृतां कृत्वा स्वात्मवृत्तिं हि वर्तते ॥३२०॥
ईषद्वलयवन्नाभेरराणामन्तरे स्रवत् ।
शान्तोदितं च तद्विद्धि चक्रमिच्छाफलप्रदम् ॥३२१॥
यच्छान्तमूर्तौ सम्बन्धं सर्वं कृत्वावतिष्ठते ।
प्रवृत्तं नाभिपूर्वं तु उदिताख्यं तु चक्रराट् ॥३२२॥
तस्मिन्नाराधितो मन्त्रस्तद्वै सम्पूजितं स्मृतम् ।
जप्तं सन्तर्पितं भक्त्या सर्वेषां सर्वमृच्छति ॥३२३॥
एवं चाभिमतं चक्रं सर्वविघ्नक्षयङ्करम् ।
प्रतिष्ठाप्य समभ्यर्च्य तस्यैवं समनन्तरम् ॥३२४॥
त्र्यंशेन शिखरादुच्चं खगराट्परिभूषितम् ।
संस्कृत्य ध्वजदण्डं च शिखामन्त्रेण विन्यसेत् ॥३२५॥
ततो विविधवर्णं च किङ्किणीगणभूषितम् ।

ध्वजाग्रशिखराग्रं तु यत्तद्दीर्घमकृत्रिमम् ॥३२६॥
दैर्घ्याद्द्वादशमांशेन द्विनवांशेन वा ततम् ।
कृत्वास्त्रसन्निधिं तस्मिन् लाञ्छनाख्ये पुरा पटे ॥३२
निवेश्य ध्वजदण्डाग्रे गन्धाद्यैरर्चयेत्ततः ।
सुधामयादिबिम्बानां स्थापने मुनिपुङ्गवाः ! ॥३२८॥
बिम्बप्रासादयोर्विप्राः ! युगपत् स्थापनं भवेत् ।
प्रासादस्य प्रतिष्ठेत्थं समासात्कीर्तिता मया ॥३२९॥
मण्टपादि प्रतिष्ठां च शृणुध्वं मुनिपुङ्गवाः ! ।
प्रथमं मण्टपं चाग्र्यं तथैवास्थानमण्टपम् ॥३३०॥
प्राकारं पचनावासं कोशागाराम्बरास्पदे ।
पुष्पपानीयशाले च तथा वै यागमण्टपम् ॥३३१॥
धान्यागारादिकं सर्वं सङ्क्षाल्य बहुभिर्जलैः ।
पर्यग्निकरणं चैव मार्जनोल्लेखनादिकम् ॥३३२॥
कारयित्वा द्विजवरैर्गव्यैः सम्प्रोक्ष्य पञ्चभिः ।
वितानाद्यैरलंकृत्य मण्टपादीन् विशेषतः ॥३३३॥
प्रधूपयित्वागरुभिर्दीपानारोप्य सर्वतः ।
सुधाचूर्णैरलंकृत्य अक्षतान्विकिरेद्भुवि ॥३३४॥
पुण्याहं वाचयित्वा तु वास्तुपूरुषमर्चयेत् ।
धान्यपीठं प्रकल्प्याथ कुम्भं तत्र सलक्षणम् ॥३३५॥
सोपकुम्भं सकरकं न्यस्य प्राग्वत्सलक्षणम् ।
तत्र देवं समभ्यर्च्य साङ्गं सपरिवारकम् ॥३३६॥
कुण्डे वा स्थण्डिले वापि प्रतिष्ठाप्यानलं ततः ।
तत्र देवं तु सन्तर्प्य पूर्णान्तं देशिकोत्तमः ॥३३७॥
सुमुहूर्ते तु सम्प्राप्ते प्रोक्षयेत्कुम्भतोयतः ।
सर्वत्र मूलमन्त्रेण देशिको मन्त्रवित्तमः ॥३३८॥

इत्येवं मण्टपादीनां प्रतिष्ठाविधिरीरितः।
मण्टपादिप्रतिष्ठायां गोपुरस्थापने तथा ॥३३९॥
क्ष्मापरिग्रहपूर्वं तु गर्भन्यासं समाचरेत्।
गर्भं तु मण्टपादीनामग्निकोणे तु विन्यसेत् ॥३४०॥
गोपुरस्य भवेद्याम्ये गर्भन्यासो मुनीश्वराः!।
गोपुरस्य प्रतिष्ठां तु कुर्यात्प्रासादवद्बुधः ॥३४१॥
तत्र वै देवतान्यासे विशेषः कथ्यतेऽधुना।
शाखामूलादिषु यजेच्चक्राद्यान् धर्मपश्चिमान् ॥३४२॥
कवाटद्वितये पूज्यौ कालाग्निर्वरुणस्तथा।
न्यसेज्जङ्घासमूहे तु भवोपकरणं महत् ॥३४३॥
मूर्तयः केशवाद्यास्तु जङ्घाग्रोपरि संस्थिताः।
विन्यसेत्प्रस्तरोद्देशे चक्राद्यायुधसञ्चयम् ॥३४४॥
पूर्ववद्वेदिकाग्रीवाशिखरोद्देशभूमिषु।
न्यस्या विभवदेवाश्च पद्मनाभान्तिमं द्विजाः! ॥३४५॥
तले तले गोपुरस्य दिङ्मूर्तीश्च यथापुरम्।
प्रासादोक्तविधानेन कल्पयेन्मुनिपुङ्गवाः! ॥३४६॥
ततस्तु कलशाधारवेदिकायास्तले द्विजाः!।
सुदर्शनं तु षडरं यजेत्कुम्भचतुष्टये ॥३४७॥
वासुदेवादिकाः पूज्याः कुम्भषट्के कृते सति।
सम्पूज्य केशवादीनां षट्कं कुम्भाष्टके कृते ॥३४८॥
केशवाद्यष्टकं पूज्यं द्विषट्के द्वादशार्चयेत्।
युग्मयोगेन कुम्भानां स्थापनं मोक्षकाङ्क्षिणः ॥३४९॥
इतरस्यायुग्मयुक्त्या कुम्भस्थापनमाचरेत्।
एकस्मिन् स्थापिते कुम्भे वासुदेवं समर्चयेत् ॥३५०॥
त्रयादौ केशवादींश्च पूजयेद्द्विजसत्तमाः!।

इत्येवं देवतावृन्दं गोपुरे न्यस्य पूजयेत् ॥३५१॥
प्रासादादिप्रतिष्ठाया विधिरेवं मुनीश्वराः ! ।

इति श्रीपाञ्चरात्रे ईश्वरसंहितायां
प्रासादादिप्रतिष्ठाविधिर्नाम
षोडशोऽध्यायः ।

---

## अथ सप्तदशोऽध्यायः ।

नारदः ।

अथ विम्बस्य पीठादेर्लक्षणं वक्ष्यते द्विजाः! ।
चित्रमृत्काष्ठशैलोत्थं सल्लोहमयमेव वा ॥१॥
भेदभिन्नं द्विजातीनां हितं बिम्बं फलार्थिनाम् ।
तदभिन्नमकामानां प्राप्तं चाप्यविरोधकृत् ॥२॥
अत्र चित्रमयं विद्धि भित्तिकाष्ठाम्बराश्रितम् ।
पुनर्वर्णक्रमेणैव चतुर्धा चाम्बरोत्थितम् ॥३॥
तच्च कार्पासकौशेयक्षौमशाणमयं तु वै ।
मृजमेवं सिताद्युत्थं वार्क्षं विविधमेव च ॥४॥
आश्वत्थं ब्रह्मवृक्षोत्थं श्रीपर्णीसुरदारुजम् ।
सालतालमयं चैव शार्शंवतीन्दुसारजम् ॥५॥
एवं द्वयं द्वयं विद्धि द्विजातीनां यथाक्रमम् ।
अतोन्ये दृढमूलाश्च सारवन्तो हि याज्ञिकाः ॥६॥
साधारणाश्चतुर्णां तु प्रतिमाद्ये च कर्मणि ।
सामान्यं भुक्तिमुक्त्यचर्थमश्म मृण्मयवत्स्मृतम् ॥७॥

---

— शैंशुपं वे इति–(पा)

तारहाटकताम्रोत्थमारकूटमयं तथा।
एवं हि भूमयो वस्त्रपाषाणा धातवो द्रुमाः ॥८॥
वज्रादयोखिला रत्नाः सितरक्तादिलक्षणाः।
असामान्याः फलेप्सूनां लाभालाभवशात्पुनः ॥९॥
सम्यक् स्वमूर्तिमन्त्रैस्तु जपहोमार्चनादिना।
नयेत्सामान्यभासित्वं तथा तत्कारणार्चनात् ॥१०॥
यजेत्सेन्द्रां धरां शैलमृदापादनकर्मणि।
एवं पटद्रुमार्थं तु वरुणं सवनस्पतिम् ॥११॥
सरत्नानां च धातूनां सम्बन्धेर्केन्दुपावकान्।
रत्नाश्रयेण धात्वर्थे नार्च्यादेशेन वै विना ॥१२॥
तथार्चनासनेनैव चक्रपद्ममयादिना।
न रात्नी प्रतिमा शस्ता ध्यायिनां ध्यानसिद्धये ॥१३॥
केवला लघुमाना च प्रमाणावयवोज्झिता।
वर्णाश्रमगुरुत्वाच्च स्वामित्वादखिलस्य च ॥१४॥
भूतादिदेवरूपत्वादुत्तमाद्येषु वस्तुषु।
नृपश्चार्हति वै नित्यं सविशेषपदे स्थितः ॥१५॥
किं पुनर्योऽफलाकाङ्क्षी भक्तिश्रद्धापरः सदा।
बुध्वैवं चित्रबिम्बार्थी यत्नेनेदं समाचरेत् ॥१६॥
गुह्यकान् गृहदेवांस्तु हृदार्च्यार्घ्यादिना पुरा।
मलभस्मतुषाङ्गारकेशकीटनखास्तृणम् ॥१७॥
मूलकण्टकचर्मास्थिसामान्येऽश्माद्धि भित्तिका।
भवत्यनर्थदावश्यमतः प्राक्चतुरङ्गुलम् ॥१८॥
विहाय मृद्दलं भित्तेरीषद्बिम्बात्तु वाधिकम्।
उक्तदोषविमुक्ताथ पञ्चगव्येन साम्भसा ॥१९॥
मर्दितया मृदा भूयस्तद्भित्त्यंशं प्रपूर्य च।

शस्त्रेण काष्ठफलकां मृगचर्मसमां पुरा ॥२०॥
छविं विहाय शुद्ध्यर्थं तुरीमुक्तं तु वै घटम् ।
प्रक्षाळ्य सलिलैनैव त्वास्त्रजप्तेन सप्तधा ॥२१॥
हृन्मत्रेण तु सास्त्रेण मूर्तिमन्त्रान्वितेन च ।
तीर्थदेशान्नदीतीरात्पुण्यक्षेत्राच्च पर्वतात् ॥२२॥
अपास्य दोपसङ्कीर्णामूर्ध्वादादाय मृत्तिकाम् ।
सावचूर्ण्याथ संशोप्या सूपलिप्ते धरातले ॥२३॥
शाणमूर्णं च कार्पासं ससूत्रं चाविजं तथा ।
कृत्वा पाषाणभिन्नं प्राग्योज्यं तत्र सवालुकम् ॥२४॥
ईपद्गोमययुक्तेन भूरिक्षीरघृतादिना ।
भावयेत्पञ्चगव्येन खादिरेण कपेण च ॥२५॥
सिद्धार्थकात(ल)सीस्नेहातिलोत्थेन तु वै सह ।
क्लेदयेच्च त्रिसप्ताहं भाण्डे कृत्वायसादिके ॥२६॥
मारुतानलसूर्येन्दुदर्शनेन विनैव हि ।
तया समाप्य तद्बिम्बं शुभकाष्ठान्तरीकृतम् ॥२७॥
वस्त्रवच्चैव लोहानां कृत्वा प्रक्षाळनं ततः ।
मार्जनं भूतिना भूयस्तथा तन्मन्त्रितेन च ॥२८॥
भक्त्या प्रवर्तमानस्तु बिम्बसाधनकर्मणि ।
सर्वत्र चास्त्रमन्त्रस्य कुर्याज्जिविघ्नशान्तये ॥२९॥
पूजनं हवनं भूतबलिदानं सदक्षिणम् ।
सम्यग्[1]ग्रहणकाले तु एतत्सामान्यमेव हि ॥३०॥
सच्छैलदारुग्रहणे विशेपस्त्वधुनोच्यते ।
सर्वत्रारम्भकाले तु निमित्तमुपलक्ष्य च ॥३१॥

---

१— सन्मृद्ग्रहण इति —(पा)

विशेषार्चनयात्रायां तच्छुभेन शुभोदयः ।
अशुभेन निमित्तेन यात्रा विघ्नवती भवेत् ॥३२॥
विरामेण तु जप्येन शान्तिस्वस्त्ययनादिना ।
निर्त्तनेन तद्धन्याद्दहते शुभकृ(द्य)त्यतः ॥३३॥
मन्त्रमभ्यर्च्य यात्रायामभ्यर्थ्याज्ञां विनम्य च ।
नैवेद्यशेषभुग्यामचारस्थः संयतेन्द्रियः ॥३४॥
प्राङ्मुखः संस्मरेन्मन्त्रं समुत्थायामृतोदये ।
परिज्ञाय परां मूर्तिं तन्मूर्त्यन्तरमेव वा ॥३५॥
यायात्तदीयं दिग्भागं तदभावात्तु चान्यदिक् ।
सहायैरप्रमत्तैस्तु शिल्पिभिः सह संवृतः ॥३६॥
लाजदध्यक्षतैः कुम्भैः यायात्पुष्पपुरस्सरैः ।
सौमनस्यं महोत्साहस्त्वंगस्पन्दस्तु दाक्षिणः ॥३७॥
शुभा वाणी ध्वजः शङ्खस्तन्त्रीवाद्यफलादयः ।
गोगजाश्वद्विजाः कन्या नवभाण्डं च मृद्दधि ॥३८॥
आर्द्रमांसान्यलङ्कारो मदिराभिर्घृतं पयः ।
सिद्धान्न शालिबीजादि दर्भाः सद्द्रुममञ्जरी ॥३९॥
छत्रं वस्त्रं ध्वजो यानं रोचना कुङ्कुमं मधु ।
दर्पणं चामरो हारो धातवः शस्त्रवर्जिताः॥४०॥
रत्नानि वैबुधं बिम्बं मधुमत्तोन्नकातरः ।
जीवन्मत्स्या निमित्तं च मनसो यदखेददम् ॥४१॥
तत्सर्वं दर्शने श्रेष्ठं तत्खेददमशोभनम् ।
स्वगृहद्वारदेशाच्च पथि सप्तपदावधि ॥४२॥
क्रममाणे निमित्तं च फलं यच्छति तेन हि ।
निर्गत्य नगराद्ग्रामात्क्रोशार्धं क्रोशमेव वा ॥४३॥

---

१— द्रुन इति—(प)

गृह्णीयाच्छाकुनं चिह्नं नकुलादिमयं त्वतः ।
पूर्णात्सार्धाधिकात्क्रोशात् हितकृन्मृगदर्शनम् ॥४४॥
दिङ्मुखे निर्मले सिद्धिर्व्रजेद्यत्र विशेषतः ।
सिद्धिकृच्चाम्बरं स्वच्छं सुदीप्ता भास्करादयः ॥४५॥
मरुत्सुखावहः स्निग्धप्रदक्षिणगतिः स्थिरः ।
दिव्याद्युत्पातनिर्मुक्तः स कालः सिद्धिसूचकः ॥४६॥
हंसः शुको भरद्वाजः कोकिलः खञ्जरीटकः ।
मयूरो भ्रमरश्चक्रवाकाद्याः खेचराः शुभाः ॥४७॥
भूचरा नकुलाः सौम्याः सितोहिर्ग्रहगोधिका ।
गन्धाखुर्जम्बुकश्चैव सर्वेषां दर्शनं शुभम् ॥४८॥
मृगाणां हरिणः सिंहो व्याघ्रः शशकचित्रकाः ।
सिद्धिसंसूचनाः सर्वे सर्वेषां विहितं तु वै ॥४९॥
प्रदक्षिणं विशेषेण व्यत्यये जम्बुकः शुभः ।
द्विजातिकं(दीनां)रुतं स्निग्धं सिद्धिकृत्तच्चसौख्यदम् ॥५०॥
समुत्पन्ने निमित्ते तु धातुसङ्क्षेपकर्मणि ।
प्रतीक्षितुं न युज्येत यदा शान्तिं तदाचरेत् ॥५१॥
पूर्वोक्तां चित्तशुद्ध्यर्थं सविशेषां सदक्षिणाम् ।
प्रविश्य विधिवत्क्षेत्रं निरीक्षेत स्वतेजसा ॥५२॥
पश्येच्छिलां गुणवतीं तरुं वा कर्मणि क्षमम् ।
वर्जयेदतिवृद्धां च परिक्षीणत्वचं तथा ॥५३॥
सभङ्गां दावदग्धां च निश्शब्दां रूक्षविग्रहाम् ।
सवालुकां च सच्छिद्रां बिन्दुयुक्तां पुटोद्वहाम् ॥५४॥
आखुदर्दुरमीनाहिमार्जारशशकोपमाम् ।
सवर्णपरवर्णास्थसिराजालेन सन्तताम् ॥५५॥
प्रागुक्तरूपस्याभावादमीषां ग्रहणं हितम् ।

पारावतशुकाब्जाभा मधुमाञ्जिष्ठमाषभा ॥५६॥
गुर्वी हृद्या शुभा स्निग्धा अतो वान्याभिशस्यते ।
सुहृद्ये भूतले मग्ना जलाशयतलस्थिता ॥५७॥
छन्ना तरुवरैणैव वनराजिष्ववस्थिता ।
वेष्टिता वल्लिवृन्देन तथैवौषधिभिर्वृता ॥५८॥
ऊर्ध्वगा जानुदेशाच्च एकपिण्डीकृता मृदुः ।
मोक्षदा च खवक्त्रा वै भोगदा सुतलानना ॥५९॥
दिङ्मुखी चोभयकरी प्राङ्मूर्धा भूतिरायुषे ।
अतोन्यमस्तका कीर्तियशोवृद्धिकरी मता ॥६०॥
वंशवृद्धिदमारोग्यशान्तिकृत्कं यदाप्यदिक् ।
पुष्टिमुन्नतिसन्मेधां यच्छत्युत्तरमस्तका ॥६१॥
एवं पुरा परिज्ञाय पृष्ठोरुचरणं शिरः ।
बलात्मना सधीर्येण प्रोद्धृत्य सह शिल्पिभिः ॥६२॥
प्राङ्मुखं चोत्तरस्यां वै प्राग्भागे चोत्तराननम् ।
स्थलेवतार्य मन्त्रेशमिष्ट्वा स्रक्चन्दनादिना ॥६३॥
ध्यात्वा शिलान्तः संरुद्धं सम्पूज्य जुहुयात्ततः ।
उक्तदिग्द्वितयस्यैकदेशे कुण्डेथ वा स्थले ॥६४॥
दत्वा पूर्णाहुतिं ध्यानजपयुक्तः क्षिपेद्दहः ।
निशागमेर्चनं कुर्याद्बलिभिर्भूततर्पणम् ॥६५॥
नैवेद्यशेषमश्नीयान्मन्त्रविन्यस्तविग्रहः ।
तद्दक्षिणेन दर्भेषु प्राक्शिराः प्रस्वपेज्जपन् ॥६६॥
पूर्ववत्स्वप्नलाभार्थमुत्थाय रजनीक्षये ।
कुर्यात्स्वकृत्यं जुहुयादशुभस्वप्नशान्तये ॥६७॥
अभिनन्द्य शुभं स्वप्नं हृदयावर्जकं स्फुटम् ।
पर्वतं च समारमानं स्थानं तदुपलस्थलम् ॥६८॥

स्फटिकामलसङ्काशं पश्येद्वा तप्तहेमवत् ।
निर्धूमाङ्गारकूटाभं तदाशु लभते शुभम् ॥६९॥
सशस्त्रमथ चादाय मुद्गरं चास्त्रमन्त्रितम् ।
प्राङ्मुखश्चतुरो वारांस्ताडयेन्मस्तकावधेः ॥७०॥
पाददेशाच्च वा मध्यादवेक्ष्य च फलं पुरा ।
चतुरश्रायतां कृत्वा भिन्नां पीठेन यन्त्रगाम् ॥७१॥
आनाय्य वा पृथक्पीठां छन्नां कर्मालयं शुभम् ।
विन्यस्य वै पुरा तेन विधिना चोद्धरेच्छिलाम् ॥७२॥
पीठार्थं भिन्नवर्णां च तद्रूपां वा यथेच्छया ।
अङ्गाङ्गिभावगुणवद्दृष्टदां तु मुनीश्वराः ॥७३॥
काष्ठलोहमणीनां चाप्यलाभे सति वै शुभम् ।
सति लाभे न वै कुर्याद्वैपम्यं व्यत्ययं च वा ॥७४॥
तत्कालमेव चाहृत्य रत्नाधारां शिलां शुभाम् ।
पुंस्त्रीनपुंसकोत्थाभिः शिलाभिस्त्रितयं हितम् ॥७५॥
बिम्बाख्यं विद्धि चाभावात्सर्वं बिम्बोपलात्तु वै ।
निषिद्धं भगवद्बिम्बं रत्नपीठमयोपलात् ॥७६॥
लक्ष्म्याद्या देवताकाराः स्वोपलाः सर्वसिद्धिदाः ।
या हतानलविन्दून्वै सनादमभिमुञ्चति ॥७७॥
पुमानिति शिला सा वै निस्तेजाः सस्वनाऽबला ।
आदिमध्यावसानेषु नाग्निर्यस्या न च ध्वनिः ॥७८॥
नपुंसकेति सा ज्ञेया स्वपदस्था फलप्रदा ।
ज्ञात्वैवं देवदेवस्य लक्ष्म्यादीनां तथैव च ॥७९॥
सर्वेषां परिवाराणां पीठादीनां तथैव च ।
प्रासादादेः शिलाश्चैव तत्तन्मन्त्रैर्यथाक्रमम् ॥८०॥
समभ्यर्च्य शिलाः सर्वाः सङ्गृह्य शकटादिषु ।

समारोप्य समानीय बिम्बादीन् कारयेद्गुरुः ॥८१॥
शिलाग्रहणमित्युक्तं दारुग्रहणमुच्यते ।
आपर्वतान्तःसञ्चारो निर्व्रणं सरळं बृहत् ॥८२॥
रोगमुक्तं न सिंहाद्यैः शार्ङ्गनखैः सक्षतीकृतम् ।
नानिलाशनिदावाग्निहतवीर्यं न बाह्यगम् ॥८३॥

सलक्षणे तु सुस्निग्धे भूभागे चोन्नते स्थितम् ।
आगत्यसमधिवास्यादौ परेऽह्न्यर्चयेत्ततः ॥८४॥
तदाश्रितामविज्ञातस्वरूपां देवतां पठन् ।
इहाश्रितात्मने तुभ्यं नमः सर्वेश्वराय च ॥८५॥
क्षमस्वावतरान्यत्र सन्तिष्ठात्र चिदात्मना ।
अथास्त्रोदकशुद्धेन विलिप्तेन घृतादिना ॥८६॥
जपन्मन्त्रवरं वौषट् छिन्द्याद्वै क्रकचादिना ।
प्राच्यामुदीच्यामैशान्यां पतत्यभिमुखं यदि ॥८७॥
परिज्ञेयं शुभं कुर्यादन्यपातेऽर्चनादिकम् ।
आनाय्य देवभागं चाप्यनादेयेन वै विना ॥८८॥
बिम्बमिच्छति वै कर्तुं वार्क्षं चेन्नातिविस्तृतम् ।
अनेकभुजवक्त्रास्त्रभूषितं तत्तदन्वितैः ॥८९॥
भिन्नैरवयवैर्मानयुक्तैः शिष्टैर्न दुष्यति ।
भक्तिश्रद्धावशाच्चैव सर्वं चार्णमयं यतः ॥९०॥
एवमेकतमस्यापि भक्तिपूर्वस्य वस्तुनः ।
सङ्ग्रहं च पुरा कृत्वा कुर्यादाकारमीप्सितम् ॥९१॥
तादर्थ्येन तु सामान्यं सौम्यमानं पुरोच्यते ।
ऋज्वाख्यमविकारं च व्यापकं त्वेकरानिमम् ॥९२॥
भूभागं सुसमे श्लक्ष्णे मानमुत्कीर्य तेन वै ।
निरूप्यावयवानां च लक्ष्म बिम्बनिरूपकम्॥९३॥

अष्टाधिकशतांशो यः सोन्नतेरङ्गुळं च तत् ।
द्वे अङ्गुळे कला नेत्रं गोळकं भाव एव च ॥९४॥
अङ्गुळादष्टभागो यः स यवः परिकीर्तितः ।
षट्कलं च परिज्ञेयं तालं बिम्बादिकर्मणि ॥९५॥
मुखाङ्गनाभिमेढ्रक्ष्मास्तालमानास्त्वथोरुयुक् ।
द्विकले च तथा जङ्घे गुल्फं जानुर्गळं च कम् ॥९६॥
त्र्यङ्गुळं त्र्यङ्गुळं ज्ञेयमित्युन्मानमुदाहृतम् ।
जटाधराणां बिम्बानां दीर्घह्रस्ववशेन तु ॥९७॥
चतुष्कळं च त्रिकलं मानं मानाद्बहिः क्षिपेत् ।
त्रिषड्गरासशिखरो मौळिरष्टकलोन्नतः ॥९८॥
निर्जटानां ललाटोर्ध्वे मकुटं वा सुशोभनम् ।
तालेन ह्रासवृद्धी तु कार्ये त्वत्र व्यपेक्षया ॥९९॥
यथोदितेषु भागेषु एकैकेनाङ्गुळेन तु ।
आस्यनासाललाटार्थं वदनांशं भजेत्त्रिधा ॥१००॥
ततोऽग्रतः कलामानं घ्राणं स्यात्तिलपुष्पवत् ।
कलार्धेन तु विस्तारः सोन्नतिस्तत्पुटद्वये ॥१०१॥
नासाग्रग्रासनिर्मुक्तं गोजीमानं चतुर्यवम् ।
तच्चतुर्यवमानेन घ्राणाग्रेणान्तरीकृतम् ॥१०२॥
अर्धाङ्गुळं चोत्तरोष्ठमधरोष्ठं तु चाङ्गुळम् ।
गोळकं चिबुकं विद्य सृक्किण्यौ चतुरङ्गुळे ॥१०३॥
आद्यस्य नासिकांशस्य मध्यभागसमाश्रिते ।
कुर्यान्नेत्रश्रुतिच्छिद्रे तत्र नेत्रे कलान्तरे ॥१०४॥
कलायामसमं दैर्ध्यात्कलार्धेन तु विस्तृतम् ।
यदुत्पलदळाकारं द्वियवेनाधिकं तु तत् ॥१०५॥

---

१ — ताले इति (पा)

कुर्यात्पद्मदळाकारं नेत्रार्धं वृत्ततारकम् ।
तारादैर्घ्यत्रिभागेन स्वाधस्यान्यस्य चाधिका ॥१०६॥
यवेनैकैन सार्धेन ज्योतिस्तत्पञ्चभागिकम् ।
त्रिभागेनापि विहितं तत्पद्मदळलोचन ! ॥१०७॥
द्वियव्यवं नेत्रकोशं विस्तारेण यवाधिकम् ।
सार्धांगुळद्वयं दैर्घ्याद्भ्रूलते द्विकले स्मृते ॥१०८॥
मध्यतो द्वियवे बाळचन्द्रतुल्ये क्रमक्षते ।
तदन्तरं कलार्धं च तत्कोटी समसूत्रके ॥१०९॥
श्रोत्रे ह्यङ्गुळविस्तीर्णे आयामेन द्विगोळके ।
द्वियवः कण्ठपरिधिः पर्वणी द्वे चतुर्यवे ॥११०॥
मध्यं ताभ्यां तथा विद्धि द्रोणी सार्धांगुळा तु वै ।
कलार्धेन तु तच्छिद्रं पाशमानं यथारुचि ॥१११॥
अङ्गुळाद्विकलान्तं तु वैपम्यमपि तत्र तत् ।
अन्तश्छिद्रविनिर्मुक्तं तद्विज्ञेयं चतुर्यवम् ॥११२॥
सदलङ्करणोपेतमेवं श्रोत्रद्वयं स्मृतम् ।
चतुष्कळं ललाटन्तु शिखरे द्वे द्विगोळके ॥११३॥
उच्छ्रायात् त्र्यङ्गुळे चैव अग्रतोऽङ्गुळविस्तृते ।
केशभूमेः समुद्भूतं ललाटोपरि संस्थितम् ॥११४॥
कुर्यात्कलार्धमानं तु वक्त्रं चाळकसञ्चयम् ।
कपोलपरिधिं कुर्यात्कर्णात्कण्ठगतं समम् ॥११५॥
तन्मध्ये वर्तुलौ गण्डौ परिच्छिन्नौ पुरोदितैः ।
शिरसः परिणाहं तु वित्त षट्त्रिंशदङ्गुळम् ॥११६॥
श्रोत्रकोटिद्वयाच्चैव मस्तकस्य यदन्तरम् ।
तत् षोडशाङ्गुळं वित्त वर्तिभ्यां पृष्ठतस्तथा ॥११७॥
सार्धतालं परिज्ञेयं ललाटात्कगुहान्तरम् ।

सत्कम्बुसदृशी ग्रीवा मूलमध्याग्रतो हि सा ॥११८॥
परिधेर्द्वादशकला एकविंशाङ्गुलाग्रतः ।
अष्टादशाङ्गुला चैव स्वांशात् त्र्यंशेन विस्तृता॥११९॥
तन्मूलं विस्तृतौ स्कन्धौ तुङ्गौ वृत्तायतौ समौ ।
षडङ्गुलं तद्बाहुल्यं बाहुमानं तथोच्यते ॥१२०॥
स्कन्धोत्तमाङ्गं त्रिकलं सन्ध्यन्तं षट्कलं स्मृतम् ।
सन्धेर्वै मणिबन्धान्तं मानं नवकलं स्मृतम् ॥१२१॥
मणेर्मध्यमशाखान्तो हस्तः सप्तांगुलो मतः ।
परिज्ञेयं कलाहीनं तन्मानं मध्यमांगुले ॥१२२॥
तच्चतुर्यवहीनाच्च सनामा तु प्रदेशिनी ।
द्विकला च परिज्ञेया सांगुष्ठा तु कनीयसी ॥१२३॥
द्विपर्वा च स्मृतोंगुष्ठः सर्वाश्चांगुलि विस्तृताः ।
सर्वासां मूलपर्यन्ताद्ह्रासयेच्च यवं यवम् ॥१२४॥
अग्रपर्वार्धमानेन कार्या लिङ्गोपमा नखाः ।
मानमंगुष्ठमूलस्य परिधेश्चतुरंगुलम् ॥१२५॥
तच्चतुर्यवहीनं च ज्ञेयं त्रिष्वंगुलीषु च ।
न्यूनांगुलेः कला सार्धा प्राग्वद्ह्रासश्च वेष्टनात् ॥१२६॥
अङ्गुष्ठमङ्गुलं चाग्रात्तिस्रोन्याः पञ्चयाः स्मृताः ।
अर्धांगुलाग्रतोन्यूना वित मध्यं कनकतम् ॥१२७॥
न जलक्ष्मो(जलक्षा)चाग्रात्सांगुलाद्द्विकलं करम् ।
ईषन्निम्नतलं चैव लक्ष्मरेखाविभूषितम् ॥१२८॥
शाखामूलावधेः पाणी बाहुल्यं द्वे यवंगुलम् ।
चतुर्यवाधिकं चैव मणिबन्धावधेः स्मृतम् ॥१२९॥
मध्ये कलार्धहीनं तु तद्बाहुल्यमुदाहृतम् ।

१ – तुल्यम् – इति –(पा)

मणिबन्धावधेर्बाहुवेष्टनं षट्कलं स्मृतम् ॥१३०॥
सन्धेः सप्तकलं वित्त साङ्गुलं व्यवमप्युत।
हीनसर्धांगुळेनैव मूलाद्वै नवगोळकम् ॥१३१॥
तथैव सन्धेरूर्ध्वं तु विस्तारः प्राग्वदत्र च।
अत्रापि पूर्ववद्दद्या कार्यान्तरा क्षितिः स्वयम् ॥१३२॥
तालं गळावधेरुत्यक्त्वा तन्मानेनान्तरीकृते।
स्तनद्वयं समं कुर्यात्तद्वारा च समांसळा ॥१३३॥
निम्नं हृद्गोळकार्धेन ऊर्ध्वतो स्तनाद्युतम्।
स्तनाभ्यां त्रिकलौ पार्श्वौ त्रियवं स्तनमण्डलम् ॥१३४॥
यवोन्नतं तथाचाश्राङ्गिस्मृतं तेन चूचुकम्।
लोचनं त्रियवं सार्धं कक्षमानमुदाहृतम् ॥१३५॥
स्कन्धमानविनिर्मुक्तं पृष्टमंसावधेः समम्।
द्रोणीनिकाशसदृशमध्वरार्धेः समांसळम् ॥१३६॥
कक्षान्तर्वेष्टनं वित्त पञ्चताळं सलोचनम्।
विनांगुळद्वयेनैव द्वे ताले द्विगुणीकृते ॥१३७॥
यवत्रयसमायुक्ते वित्त तत्कुक्षिवेष्टनम्।
त्रियवोनं कलामानं विज्ञेयं नाभिमण्डलम् ॥१३८॥
तन्मानं तु त्र्यवोनं तु तन्निम्नत्वं विधीयते।
परिधिर्नाभिमध्ये तु त्रितालः सत्रिलोचनः ॥१३९॥
षड्गोळकं च तन्मानं परिध्यर्धं कटेः स्मृतम्।
करिकुम्भोपमौ पीनौ परितः पञ्चगोळकौ ॥१४०॥
स्फिजौ कौपीनराजी च द्व्यंगुळा मूलतः स्मृता।
परितोंगुळमानासौ मेढ्रं तु त्रिकलं स्मृतम् ॥१४१॥
चतुर्यवं च तत्कोशं वेष्टनं तु षडंगुळम्।

१-- षष्ठ--असम्-- इति--(पा)

त्र्यंगुळौ वृषणौ दैर्घ्यान्मूलान्तं समविस्तृतौ ॥१४२॥
परितो त्र्यंगुळं वित्त वायुरन्ध्रं सुवर्तुळम् ।
ऊरुमानं परिज्ञेयं मध्यभूमेर्नवांगुळम् ॥१४३॥
षट्कलं मूलदेशाच्च अग्रान्तं त्रिकलं स्मृतम् ।
हीनमेकांगुळेनैव द्विकलं जानुमण्डलम् ॥१४४॥
विस्तारेणोन्नतत्वेन चतुर्यवसमं तु तत् ।
जङ्घामूले परिज्ञेये वेष्टनं नवगोळकम् ॥१४५॥
द्विसप्तांगुळकं मध्ये सार्धपञ्चकलं ततः ।
अत्रापि वेष्टनाद्वित्त तृतीयांशेन विस्तृतिम् ॥१४६॥
मध्यमूलावसानेभ्यो विस्तारमनुगुण्यतः ।
भुजाभ्यां मध्यदेशस्य तथांगुळिगणस्य च ॥१४७॥
ऊरुयुग्मस्य जङ्घाभ्यामापाद्या द्विपद्दस्तता ।
सताळभागमानं च दैर्घ्यं वै चरणं स्मृतम् ॥१४८॥
पार्ष्णी द्विगोळकतले तन्मध्ये सांगुळे कले ।
त्रिकलं चाग्रतश्चैव बाहुल्येन कलासमम् ॥१४९॥
पदमंगुष्ठनिकरात्रियवोनं प्रकीर्तितम् ।
बाहुलं च कलामानं गुल्फदेशाच्च सांगुळम् ॥१५०॥
कनीयोऽङ्गुळिमूलाच्च गुल्फान्तं पिण्डिकांगुळम् ।
जङ्घावसानदेशाच्च वेष्टनं सप्तलोचनम् ॥१५१॥
कलाहीनं तदैवाग्रात्परिणाहो विधीयते ।
चरणं विधिना तेन कूर्मपृष्ठं समाप्य च ॥१५२॥
त्र्यंगुळेन च तद्दैर्घ्यादंगुष्ठस्य च दीर्घता ।
पञ्चांगुळः परिज्ञेयः परिधिस्तस्य लाङ्गलिन् ! ॥१५३॥
यवद्वयाधिका कार्या तद्दैर्घ्यात्तु प्रदेशिनी ।
अंगुष्ठायामतुल्याथ कार्या वै पदगम्यगा ॥१५४॥

मध्यांगुळे द्विरष्टांशहीना तदनु या स्थिता ।
तद्वत्तदनुगा या च त्रिपर्वास्तास्तु पूर्ववत् ॥१५५॥
संयुक्ता नखजालेन कूर्मपृष्ठोपमेन च ।
द्विकलं तु यवार्धोनं पादतर्जनिवेष्टनम् ॥१५६॥
चतुश्चतुर्यवोनं च तच्छेपाणां प्रकीर्तितम् ।
त्र्यंशेन वेष्टनाद्ज्ञेयं सर्वासां चैव विस्तृतम् ॥१५७॥
सर्वे समांसळाः सौम्याः समास्त्ववयवाः शुभाः ।
दशनाचलिबाह्यस्थे दंष्ट्रे सप्तयवोन्नते ॥१५८॥
यवद्वयोन्नतं मानं मध्यदन्तचतुष्टये ।
तत्पक्षगानां सर्वेषां मानं विद्धि चतुर्यवम् ॥१५९॥
त्रियवं द्विजविस्तारमग्रान्मूलाद्यवद्वयम् ।
तत्सार्धं मध्यदेशाच्च सर्वे दन्ता निरन्तराः ॥१६०॥
लोमप्रदक्षिणावर्तमयुग्जन्मोत्थितं शुभम् ।
सुनिश्चितं हितं चैतन्मानमव्यभिचारि यत् ॥१६१॥
मनोहारित्वमेकत्र रूपलावण्यभूषितम् ।
सर्वदा चानयोर्वित्त अन्योन्यत्वेन संस्थितिम् ॥१६२॥
सौन्दर्यं तु मानस्य क्वचिदाक्रम्य वर्तते ।
लावण्यस्य क्वचिन्मानं समाच्छाद्यावतिष्ठते ॥१६३॥
यथाभिरूपवान् लोके दरिद्रोप्येति मान्यताम् ।
विरूपोप्यतिवित्ताढ्यो ह्यरूपो नैव निर्धनः ॥१६४॥
एवं द्वयोज्झितं बिम्बमनादेयत्वमेति च ।
आदेयमेकयुक्तं च नित्यं यस्मान्मुनीश्वराः! ॥१६५॥
सम्यङ्माने च सौन्दर्ये भक्तानुग्रहकाम्यया ।
मन्त्रसन्निधिशक्तिर्वै सफलाह्यवतिष्ठते ॥१६६॥
सा सम्यक्प्रतिपन्नस्य बिम्बे दृग्गोचरस्थिते ।

आमूर्त्याह्लादयत्याशु ज्ञात्वैवं यत्नमाचरेत् ॥१६७॥
मानोन्मानप्रमाणानामथ सौन्दर्यसिद्धये ।
ऋजोः सुसमपादस्य त्र्यंगुळं चरणान्तरम् ॥१६८॥
तद्द्वे विषमपादस्य अग्राताळसमं स्मृतम् ।
तत्पार्ष्णिद्वयमध्यात्तु परिज्ञेयं द्विगोळकम् ॥१६९॥
स्थित्यर्थं ब्रह्मनाड्या वै तथा मार्गद्वयस्य च ।
सूत्रेण सुसमे कुर्याद्देहोत्थे दक्षिणोत्तरे ॥१७०॥
समपादस्य बिम्बस्य ललाटान्मेढ्रमस्तकम् ।
प्रसार्य सूत्रमाच्छाद्य तेन नाभिहृदन्तरम् ॥१७१॥
घ्राणाग्रमळकानां च सिद्धिर्यस्तिलकोर्ध्वगः ।
एवं विषमपादस्य दक्षांगुष्ठाग्रगं नयेत् ॥१७२॥
गात्रसाम्यं समापाद्यं क्षेत्रात् क्षेत्रगतेन च ।
सूत्रेण सर्वबिम्बानां वैषम्यविनिवृत्तये ॥१७३॥
चतुस्त्रिद्ध्यधिपरितः परिशुद्धा यतः शुभा ।
अशुभा परिशुद्धा तु बिम्बोत्थावयवी स्थितिः ॥१७४॥
ललाटमथवक्त्रस्य विस्ताराद्वादशांगुळम् ।
अष्टलोचनमायामादग्रतश्चतुरंगुळम् ॥१७५॥
कलार्धसुषिरे घ्राणरन्ध्रे भागान्तरीकृते ।
अष्टांगुळे तु हनुके सृक्विण्यौ द्वेऽथ तत्समे ॥१७६॥
मध्यतश्श्रोत्रशुक्ती द्वे द्व्यंगुळे द्विकलोन्नते ।
द्व्यंगुळं घ्राणवंशं तु तदूर्ध्वं द्विकलं स्मृतम् ॥१७७॥
वित्त वक्त्रविकासं च द्वियवं चाग्रतः क्रमात् ।
तथैव हि यवांशेन हन्वन्तं तनुतां नयेत् ॥१७८॥
घ्राणवंशस्य पक्षौ द्वौ मध्यानिम्नौ च संहतौ ।
यवद्वयेन सार्धेन हग्राणाभ्यां तु चान्तरे ॥१७९॥

अथो दळं तु दृग्द्रोणेर्यवमानेन सञ्चितम् ।
ललाटं साळकं प्राग्वद्दृङ्मध्यं सांगुळा कला ॥१८०॥
नृसिंहस्य मुखे वित्त परितश्चाष्टलोचनम् ।
ततोष्ठखण्डदेशाच्च कुर्यात्कर्णद्वयोत्थितम् ॥१८१॥
तत्कर्णद्वयमानेन ललाटान्तं नयेत्पुनः ।
प्रमाणात्प्राक्प्रणीताच्च संरंभाघ्राणलक्षणः ॥१८२॥
प्रफुल्लविकसच्छिद्रं घ्राणवंशान्वितं भवेत् ।
तच्छिद्रे पूर्वमानाच्चाप्यस्य वै त्रियवाधिकम् ॥१८३॥
सगोळमुत्तराङ्गेषु सकलांशं च लोचनम् ।
अधरोष्ठं परिज्ञेयं सचतुर्यवमंगुळम् ॥१८४॥
सार्धं चतुष्कलं वक्त्रं शेपायामो हनोः स्मृतः ।
तद्विकासः परिज्ञेयः नेत्रमानं यवाधिकम् ॥१८५॥
अग्रतो ह्रासमायाति सृक्किण्यन्तं हि चांगुळम् ।
सर्ववृत्तं तदर्धेन नेत्रयुग्मं सविस्मयम् ॥१८६॥
पूर्ववद्विस्तृतं श्रोत्रं कलार्धेन तदुन्नतेः ।
तुल्या चेन्द्रकलायुग्मयोगस्य भ्रूस्त्रिगोळका ॥१८७॥
तन्मध्यं तु कलामानं शङ्खावर्तोपमं महत् ।
भागमानं समावृत्तं कार्यं तच्छिरसि स्फुटम् ॥१८८॥
दैर्घ्येण सार्धतालं च क्ष्माधरस्याननं स्मृतम् ।
विस्तारेण ललाटाच्च तन्मानं द्व्यंगुळोज्झितम् ॥१८९॥
सौम्यरूपस्य च विभोः प्रोद्यतस्य कलोज्झितम् ।
तच्चतुर्थांशमानेन पोत्रदेशस्य विस्तृतिः ॥१९०॥
तस्योपरिघ्राह्लाहुल्यं तत्समं चांगुळं त्वधः ।
हनुद्वयस्य वै मानं सार्धं सप्तांगुळं स्मृतम् ॥१९१॥
शेषमाननरन्ध्रं तु सृक्किणीभ्यां यदन्तरम् ।

तद्विकासश्च सार्धेन कलार्धेनाग्रदेशतः ॥१९२॥
स एवांगुळमानेन विज्ञेयः सृक्किणीद्वयात् ।
घ्राणरन्ध्रश्च वक्रोक्ते दंष्ट्रे त्वर्धकलोन्नते ॥१९३॥
नासावंशं यथापूर्वं कदळीनाडिपृष्ठवत् ।
श्रोत्रे वाजिमुखोक्ते तु को(कि)टेः सप्तकलान्तरे ॥१९४॥
तत्तुल्ये लोचने किं तु प्रान्ततीक्ष्णे यवोज्झिते ।
एतेषां विहिता ग्रीवा ह्यङ्गुळद्वितयेन तु ॥१९५॥
प्रत्येकदेशात्संयुक्ता सौम्यमूर्त्युदिता च या ।
विनोच्छ्रयेण नृहरेः यस्य गात्रस्य या प्रमा ॥१९६॥
सा सा संवेष्टनाद्व्यासात्कलार्धेनाधिका भवेत् ।
वक्षःकट्युदरांसस्फिक्कलामानाधिकानि च ॥१९७॥
तथैव नखपत्राणि देहश्चास्य समांसलः ।
सम्पूर्णो दक्षिणावर्तैर्लोमभिश्चातिकुञ्चितैः ॥१९८॥
त्रिचतुःपञ्चवक्त्रस्य विनैवोर्ध्वमुखेन तु ।
दक्षिणोत्तरवक्त्राभ्यां ह्रासं कुर्याद्विगोळकम् ॥१९९॥
विकासःसिंहवक्त्रोक्तः उदग्वक्त्रस्य तत्र च ।
समो दृक्सन्निवेशस्तु चतुर्णां मोक्षसिद्धये ॥२००॥
आरोग्यभोगकैवल्यप्राप्तयेऽर्धांगुळेन च ।
कुर्यात्सव्यापसव्याभ्यामथो दृक्सन्निवेशनम् ॥२०१॥
सहपूर्वाननेनैव सम्यक्प्रत्यङ्मुखस्य च ।
निष्का(ष्ठा)सायामविस्तारघ्राणदृग्भ्रूश्रुतिष्वथ ॥२०२॥
ईषत्तिर्यक्क्षितिन्यस्तदृङ्मुखं दक्षिणं शुभम् ।
तद्वच्च प्रोक्तदृग्वक्त्रमुत्तरं सर्वसिद्धिकृत् ॥२०३॥
स्वकार्यसूचनान्नूनं तन्मन्त्रस्य च सन्निधिः ।
अतोऽन्यथा समाश्रित्य शान्तिमस्ते च मन्त्रराट् ॥२०४॥
नित्यं तत्सन्निधानाच्च भूतवेताळराक्षसाः ।

आदर्शनात्पलायन्ते आविशन्ति च दर्शनम् ॥२०५॥
आदाय शिरसा मन्त्रिसमाज्ञां सम्प्रयान्ति ते ।
अतः समाचरेद्यत्नाचेन स्याद्बिम्बसन्निधिः ॥२०६॥
न हि तत्सन्निधानाद्वै कश्चिदारभते शुभम् ।
वराहदंष्ट्रं सिंहाक्षं तथा चिपिटनासिकम् ॥२०७॥
विधेयं पश्चिमं वक्त्रं पञ्चवक्त्रस्य वै विभोः ।
अस्याधरोत्तराभ्यामप्योष्ठाभ्यां समता भवेत् ॥२०८॥
विभिन्नतांगुळार्धेन ताभ्यां तन्मध्यगा स्फुटा ।
कार्या दशनपाळी वै मूलमध्याग्रतः समा ॥२०९॥
कलार्धेनोल्वणं वृत्तं तद्गण्डद्वितयं ततः ।
द्विकलं चाग्रतः श्मश्रु कला चार्धकला क्रमात् ॥२१०॥
सम्बन्धवेणिः पूर्वोक्तमानेन शुभकृद्भवेत् ।
सिंहसूकरवन्मुख्यवक्त्राणां सौम्यतां नयेत् ॥२११॥
प्रमाणं दृग्गतालक्षाद्व्यवहारमयात्तु वै ।
विकासश्चाश्ववक्त्रोक्तः सौम्यरूपस्य भूभृतः ॥२१२॥
तदाद्योक्तस्तु नृहरेःप्रागुक्तो यः समाचरेत् ।
तथा वक्त्राङ्गभावित्वे विभोः शक्तीश्वरस्य च ॥२१३॥
हारनूपुरवस्त्रस्रक्कटकाङ्गदभूषिता ।
माल्योपवीतकेयूरमकुटाद्युपशोभिता ॥२१४॥
प्रतिमा मन्त्रमूर्तीनां कृता भवति सिद्धिदा ।
यत्पुरा पञ्चधा प्रोक्तं वाहनं प्राणदैवतम् ॥२१५॥
तस्य विम्बसमुत्थेन तालेन मुखमण्डलम् ।
त्र्यङ्गुळं तु ललाटोक्तं जटाबन्धो द्विलोचनः ॥२१६॥
द्व्यङ्गुळेनोन्नतः कर्ण उरः पञ्चकलं स्मृतम् ।
अष्टांगुळं तदुदरं कटिः पञ्चांगुळोन्नता ॥२१७॥

नवांगुळोन्नतावूरू जानुनी द्व्यङ्गुळे स्मृते ।
अष्टांगुळोच्छ्रिते जङ्घे द्व्यङ्गुळे पदपिण्डके ॥२१८॥
ग्रममेकं कलाहीनं तद्ग्रीवायाश्च वेष्टनम् ।
बिम्बतुल्या परिज्ञेया सर्वदा साङ्गविस्तृतिः ॥२१९॥
तद्द्विभागाधिकं वित्त वेष्टनं ह्युदरस्य च ।
परिधिः कटिदेशस्य चतुर्नेत्राधिकस्तु वै ॥२२०॥
बिम्बोक्तसदृशं वित्त तदूर्वोर्मूलवेष्टनम् ।
तदेव जङ्घामध्यस्य जङ्घान्तस्य तदेव हि ॥२२१॥
पादं पञ्चकलायामं चतुरंगुळविस्तृतम् ।
त्र्यङ्गुळं पार्ष्णिदेशाच्च अङ्गुष्ठोर्धकलासमः ॥२२२॥
विज्ञेया अङ्घ्रिदेशाच्च यवेनांगुळयः क्रमात् ।
नाभिरन्ध्रं सुविस्तीर्णं द्व्यर्धलोचनविस्तृतम् ॥२२३॥
मध्यमांगुळिपर्यन्तं मणिबन्धान्नवांगुळम् ।
त्रिकलः पाणिविस्तारः तन्नखा निशितोन्नताः॥ २२४॥
तद्बाहुमस्तकं वित्त उच्छ्रायेण द्विलोचनम् ।
भुजोपभुजयुग्मं यत्तत् द्वितालसमं स्मृतम् ॥२२५॥
कलार्धेनाधिकं बिम्बबाहोस्तद्बाहुवेष्टनम् ।
बिम्बोष्ठां सद्विधीर्घैवं स्तनभूर्लोचनोल्वणा ॥२२६॥
वृत्तवैपुल्यमानेन लोचने पद्मपत्रवत् ।
भ्रूयुग्मं नरसिंहोत्थं घ्राणाग्रं शुकचञ्चुवत् ॥२२७॥
कलार्धमानं दीर्घं च तद्वंशं गजपृष्ठवत् ।
स्वायामदीर्घं तत्पक्षयुगळं कुक्षिदेशगम् ॥२२८॥
तदेव दैर्घ्यादर्धेन विस्तृतं हंसपक्षवत् ।
स्वपक्षमानाद्द्विगुणं तत्पुच्छं शतशाखकम् ॥२२९॥
सपक्षमिममायामं सत्यं स्ववयवान्वितम् ।

सर्वेषां वित्त सामान्यं विशेषाख्यमथोच्यते ॥२३०॥
ऊरुद्वयान्नयेद्ध्रासमङ्गुळानां त्रयं तथा ।
जङ्घाकाण्डोच्छ्रितेः कुर्याज्जङ्घाभ्यां चात्र वेष्टनम् ॥२३१॥
बिम्बाख्यं मणिबन्धस्य सममूलान् महामते ।
जालदेशात्तदर्धेन सह चार्धांगुळेन तु ॥२३२॥
पादे जालं परिज्ञेयं विस्तारेण षडंगुळम् ।
शेषं सत्योदितं सर्वं सर्वेषां वित्त सर्वदा ॥२३३॥
किं तु पादोज्झितौ पक्षौ दैर्घ्यात्तद्दलविस्तृतौ ।
एषा चोड्डीयमानानां स्यायामा पक्षविस्तृतिः ॥२३४॥
पक्षानांच परिज्ञेया स्थितानामर्धलक्षणा ।
एतदादाय मानं तु पुच्छभूपक्षवर्जितम् ॥२३५॥
विद्धि वामनरूपस्य लक्षणं किं तु लाङ्गलिन् ।
ललाटनासावक्त्रेभ्यः समादायांगुळत्रयम् ॥२३६॥
मस्तकस्योपरिष्टात्तु जटाबन्धं प्रकल्पयेत् ।
जटावसानमायामं यथा स्यात्पञ्चतालकम् ॥२३७॥
ततस्तु कर्मबिम्बेषु विशेषः कथ्यतेधुना ।
कर्मार्चा चोत्सवार्चा च बल्यर्चा तीर्थकौतुकम् ॥२३८॥
निमित्तस्नपनार्चा च शयनार्चेति षड्विधाः ।
अर्चाः कार्यास्त्विमा विप्राः! बहुबेरविधानके ॥२३९॥
एकबेरे तु कर्मार्चां विना पञ्च प्रकल्पयेत् ।
एतैः सर्वैरङ्गबिम्बैर्युक्तं चेन्मूलकौतुकम् ॥२४०॥
उत्तमं स्यात्त्रिभिर्युक्तं मध्यमं परिकीर्तितम् ।
एकेन युक्तमधमं तत्तन्मानमिहोच्यते ॥२४१॥
मूलबिम्बसमुच्छ्रायं द्विधा वापि त्रिधापि वा ।
चतुर्धा वा संविभज्य एकभागेन कल्पयेत् ॥२४२॥

उत्सवार्चां तदुच्छ्रायं द्विधा वापि त्रिधापि वा ।
चतुर्धा वा विभज्यैकभागेन परिकल्पयेत् ॥२४३॥
कर्मार्चादीनि बिम्बानि पञ्चापि द्विजपुङ्गवाः! ।
बिम्बषट्कं च देवीभ्यां सहितं परिकल्पयेत् ॥२४४॥
अथ वा चौत्सवं बिम्बं तथा शयनकौतुकम् ।
श्रीपुष्टिसहितं कार्यं मूलबिम्बे द्विजोत्तमाः ! ॥२४५॥
स्थिते वा वाहनारूढे समासीनेपि वा द्विजाः! ।
कर्मबिम्बादिषट्कं च तथैव स्यात् स्थितं तु वा ॥२४६॥
मूलबिम्बे शयाने तु कर्मबिम्बादयो द्विजाः! ।
स्थितावपि समासीनाः विधातव्या मुनीश्वराः! ॥२४७॥
नित्योत्सवार्थबिम्बं तु सर्वत्रैव स्थितं भवेत् ।

मुनयः ।

कैर्लिङ्गैर्मुनिशार्दूल ! बेरैकत्वबहुत्वकम् ॥२४८॥
ज्ञातव्यं तदशेषेण वदस्व वदतां वर ! ।

नारदः ।

शिलया मणिना वापि लोहैर्वापि कृता तु या ॥२४९॥
नित्यादिसकलस्नानविषया रहिता सदा ।
कर्मार्चयापि देवीभिः स्थिताप्यासीनतां गता ॥२५०॥
स्थाप्यते केवला मूर्तिरेकबेरं तु वित्त तत् ।
मृद्दारुजं तु यद्बिम्बं कर्मार्चादिसमन्वितम् ॥२५१॥
नित्यादिसर्वस्नानार्थं शक्तिभिः सहितं न वा ।
मणिवज्रादिशैलोत्थं निमित्तस्नपनक्षमम् ॥२५२॥
सदा तु नित्यस्नानार्थं कर्मार्चासहितं तु यत् ।
मृद्बिम्बं तु लक्ष्म्यादिसहितं रहितं तु वा ॥२५३॥
नित्यनैमित्तिकायुक्तसकलस्नपनक्षमम् ।

लक्ष्म्यादिभिः समोपेतं यद्बिम्बं शक्तिभिः सदा ॥२५४॥
तदेतत्त्रिविधं वित्त बहुबेरं मुनीश्वराः ! ।
यत्तु चित्रमयं बिम्बं भित्तिकाष्ठाम्बराश्रयम् ॥२५५॥
कर्मबिम्बसमोपेतं नित्यादिस्नानकर्मणि ।
यच्चापि मृण्मयं बिम्बं त्रिविधं चापि चित्रजम् ॥२५६॥
नित्यनैमित्तिकस्नाने दर्पणादिसमन्वितम् ।
कर्मबिम्बान्वये योग्यं विभवेच्छानुसारतः ॥२५७॥
एतच्चतुर्विधं वित्त बहुबेरं विशेषकम् ।
बहुबेरं यथायोगं स्थितमासीनमेव वा ॥२५८॥
शयानं यानगं वापि भवेदिच्छानुरूपतः ।
बहुबेरादिभेदास्तु पञ्चधा परिकीर्तिताः ॥२५९॥
अन्यानि कर्मबिम्बानि यात्राबिम्बपुरस्सरम् ।
तत्तत्कर्मविशेषार्थं बहुबेरैकबेरयोः ॥२६०॥
द्वयोश्च कल्पनीयानि विभवस्यानुरूपतः ।
इत्युक्तं केशतो बिम्बलक्ष्म पीठमथोच्यते ॥२६१॥
बिम्बानामुपविष्टानां चतुरश्रं तु तद्भवेत् ।
चतुरश्रायतं चैव प्रोत्थितानां सदैव हि ॥२६२॥
वृत्तवृत्तायतत्वेन ह्यनयो रूपमन्यथा ।
यांगुळैः परमाणूत्थैराराधकमयैस्तु वा ॥२६३॥
यद्वेर्चा तु समायामद्वाराद्वा मन्दिरोत्थितात् ।
तन्मानेन तु पीठस्य दैर्घ्यमर्धेन विस्तृतिः ॥२६४॥
द्वारोर्ध्वाच्च त्रिरन्तानि एकपूर्वाणि वै पुरा ।
सन्त्यज्य द्वादशांशाद्वै अथः पीठोन्नतिस्त्रिभिः ॥२६५॥
शेषेणात्रांशसंघेन प्रतिमा चोत्थिता भवेत् ।
अथ वा वाहनारूढा न्यूना वा मध्यमोत्तमा ॥२६६॥

चतुर्भिर्द्वादशांशैस्तदुपविष्टस्य चोन्नतिः ।
विहिता चास्य सर्वत्र प्रतिमार्धेन विस्तृतिः ॥२६७॥
तत्र्यंशकविलुप्ता वा चतुर्थांशोज्झिताथ वा ।
परिवारवशेनैव चातुरात्म्यस्य वै पुनः ॥२६८॥
अलुप्तांशं च विहितपीठायामं च सर्वदिक् ।
चतुर्दिग्द्वगतस्यैव एकदिग्द्वगतस्य च ॥२६९॥
तदेव दैर्घ्यं द्विगुणं लाञ्छनैरावृतस्य च ।
सार्धं चानावृतस्यैव तद्बाहुल्यं पुरोदितम् ॥२७०॥
चतुष्कमेकपीठानां केवलं लक्ष्मवर्जितम् ।
एकैकं लक्ष्मभेदेन तत्सङ्ख्यं वित्त वै पुनः ॥२७१॥
अनन्तासनमाद्यं च द्वितीयं पक्षमन्दिरम् ।
कमलाङ्कं तृतीयं तु चतुर्थं चक्रभूषितम् ॥२७२॥
एवं हि सर्वसामान्यं पीठानां हि द्विरष्टकम् ।
भेदभिन्नं समासेन पुनरेव निबोधत ॥२७३॥
दिक्षु लक्ष्माणि पीठानां वित्त कण्ठगतानि च ।
अन्योन्यसन्निवेशाच्च तेषां बह्वात्मना पुनः ॥२७४॥
चक्राम्बुजाभ्यां तत्स्थाभ्यां लुप्ताभ्यामथ तत्स्थितेः ।
ताभ्यामन्योन्ययोगाच्च दिक्ष्वनन्तखगाश्रयात् ॥२७५॥
द्विद्व्यात्मना द्व्यात्मना वा बहुत्वमवधार्यताम् ।
पद्मेनोर्ध्वगतेनैव द्वयं चक्रेण तद्बहिः ॥२७६॥
एवं ह्यधोगतेनैव परिज्ञेयं द्वयं द्वयम् ।
उपरिष्टात्तु पद्माभ्यामधश्चक्रं द्वयं द्वयम् ॥२७७॥
द्वितयव्यत्ययाच्चान्यत्परिज्ञेयं मुनीश्वराः! ।
अन्तर्बहिःस्थितिवशाच्चक्रपद्मद्वयस्य च ॥२७८॥
व्यत्ययादनयोर्वित्त ऊर्ध्वभागाच्चतुष्टयम् ।

अधोभागादेवमेव चतुष्कमपरं तु वै ॥२७९॥
पीठानामष्टकमिदमधस्तादूर्ध्वतस्तु वा ।
युक्तमेकेन वै कुर्याच्चक्रेण कमलेन वा ॥२८०
चक्राकारास्तु विहिता खेकभ्रमसमाश्रिताः ।
वहवोपि तलास्तद्वदीपद्मे कर्णिकान्विताः ॥२८१॥
इति लाञ्छनसञ्चारो वहुधा तन्मयोदितम् ।
यस्मिन् प्रकृतिभूते तु पीठे तदधुनोच्यते ॥२७२॥
कृत्वा द्विर्दशधा पीठं पुरायामात्समैः पदैः ।
एकेन चरणं जंघाकलशौ च त्रिभिस्त्रिभिः ॥२८३॥
कण्ठवीधीमथैकेन पड्भिः कण्ठं तदूर्ध्वतः ।
भागेन कण्ठसूत्रं तु शुक्तिकांशत्रयेण तु ॥२८४॥
उष्णीषं च तदूर्ध्वे तु कुर्यादंशद्वयेन वै ।
निर्गमः स्वदळेनैव विहितश्चरणस्य तु ॥२८५॥
चतुर्दिक्षु महात्मानः! क्षेत्रतो ह्यधिकः स्मृतः ।
सर्ववृत्तं घटं कुर्यात्पल्लवैर्वारकैर्युतम् ॥२८६॥
परितोंशद्वयेनैव कर्णपीठं प्रवेशयेत ।
अन्तः प्रवेशमेकेन वीथ्यंशेन गळस्य च ॥२८७॥
कुर्याद्गळप्रवेशस्य समां सूत्रस्य निःसृतिम् ।
शुक्तेरधः कण्ठसूत्रभागात्पादेन निर्मितम् ॥२८८॥
वदनान्तं समासेन शक्तेः सङ्कोचमाचरेत् ।
उष्णीषघटजंघानामाश्रिसाम्यं यथास्थितम् ॥२८९॥
घटवद्रूपयेच्छुक्तिमरकैर्वाऽब्जपल्लवैः ।
तत्रोपरिष्टात्परिधिं चतुरंशकसंमितम् ॥२९०॥
सन्त्यज्य निखनेद्द्रोणीमंशनिम्नां समन्ततः ।
विस्तृतेर्मध्यभागेथ स्वत्र्यंशेन च निर्गमम् ॥२९१॥

तन्मानं चतुरश्रं तु पीठक्षेत्राद्विनिर्गतम् ।
तत्राग्रतस्त्रिधा कृत्वा पक्षभागौ क्षयं नयेत् ॥१९२॥
अनुपादेन चामूलात्सम्यक् लाङ्गलवक्त्रवत् ।
अग्रतो मूलदेशाच्च कृत्वादौ वै त्रिधा त्रिधा ॥२९३॥
भूयस्तन्निखनेन्मध्याज्जलं याति यथा द्रुतम् ।
सूकराननतुल्यं तु भवत्येवं मुनीश्वराः ! ॥२९४॥
कुर्याद्वै शङ्खसदृशं मकरास्योपमं तु वा ।
जलनिर्गममेतद्वै पीठेषूदितलक्षणम् ॥२९५॥
न कुर्यात्कर्मबिम्बानामाशमादिभितात्मनाम् ।
चित्रमृत्काष्ठजानां तु चलानां तु विशेषतः ॥२९६॥
तथैव चतुरश्रस्य चतुर्मूर्तिगतस्य च ।
प्रणाळमग्रगं मूर्तेर्यतः संसिद्धिहानिकृत् ॥२९७॥
प्रयोजनं विना कापि न क्षतिस्तस्य तद्विना ।
सामान्यस्य तु वै यस्मादाधारस्य विशेषतः ॥२९८॥
सप्रणाळं भवेत्पीठमासनं च प्रणाळकम् ।
भूरि नीरादिना स्नानं यत्र यच्छति साधकः॥२९९॥
प्रत्यहं तद्विना तत्र प्रत्यवायो भवेत् स्फुटम् ।
एवमेव बृहद्बिम्बं भूपितानां विधीयते ॥३००॥
धातुशैलोत्थितानां च निमित्तस्नपनार्थतः ।
भद्रासनगते कर्मबिम्बे तस्य समाचरेत् ॥३०१॥
सततं च यथालाभं दधिक्षीरघृतादिना ।
तोयेन तन्नयेद्वत्नाद्धूभागं वा प्रतिग्रहम् ॥३०२॥
यथा नाक्रम्यते पादैः जन्तुभिस्तन्महर्धिदम् ।
अतः प्रणाळं विहितं निषिद्धमत एव हि ॥३०३॥
जन्मान्तं वा जगत्यन्तं कैरवान्तं गळान्तकम् ।

पट्टिमध्यन्तलं पञ्चभेदं सर्वेषु धामसु ॥३०४॥
तत्संस्थापनकाले तु देवानां दिग्द्वये हितम्।
प्राक्प्रत्यगाननानां च तदुदग्दिग्गतं शुभम् ॥३०५॥
उदग्दक्षिणवक्त्राणां प्राग्भागे विहितं सदा।
तत्पुनर्भद्रपीठीयदेवाद्वामेऽर्थसिद्धिकृत् ॥३०६॥
सदैवाराधकानां तु विलोमाद्विपरीतदम्।
इत्येवं पीठलक्ष्मापि समासात्कथितं मया ॥३०७॥

इति श्रीपाञ्चरात्रे ईश्वरसंहितायाम्

प्रतिमादिलक्षणं नाम

सप्तदशोऽध्यायः।

## अथाष्टादशोऽध्यायः।

अतः परं प्रवक्ष्यामि मन्त्रबिम्बनिवेशनम्।
भोगेप्सूनां च वर्णानां साम्प्रतं यदभीष्टदम् ॥१॥
कैवल्यदं शमाच्चैव चातुराश्रम्यसेविनाम्।
यज्ञकर्मरतानां च सहायं च फलैस्तु तत् ॥२॥
प्राग्वद्देवगृहस्याग्रे द्विभागे सति मण्टपम्।
चतुरश्रं चतुर्द्वारं दर्भमालान्तरीकृतम् ॥३॥
अन्यत्र तदलाभे तु यथाभिमतदिङ्मुखम्।
चतुर्दशकराच्चैव यावत्रिंशत्करावधि ॥४॥
षट्करान्तं पुरस्तस्माद्बिम्बमानव्यपेक्षया।
कार्या मध्ये स्थली तेषां द्विसप्तांशैस्ततोऽष्टभिः ॥५॥
समन्तभद्रा सुश्लक्ष्णा चिता पक्वेष्टकादिभिः।

तालोन्नतेः समारभ्य सामान्येऽस्मिन् हि कर्मणि ॥६॥
उन्नतांगुळवृद्ध्यातु नीता तद्ध्रासतां क्रमात् ।
द्वित्रिरष्टांशकैर्मध्ये सर्वासां मण्डलं भवेत् ॥७॥
चतुरश्रं चतुर्द्वारं चक्रांबुरुहभूपितम् ।
दक्षिणे शयनं सौम्ये कुण्डमग्नेस्तु पूर्ववत् ॥८॥
समेखलं द्विहस्तं तु चक्रपद्माङ्कितं शुभम् ।
तदधश्चतुरश्रं प्राग्दाममेखलिकान्वितम् ॥९॥
अथ दक्षिणदिग्भागे कुर्याद्वै चक्रचिह्नितम् ।
वर्तुळं पश्चिमे सौम्ये कमलाङ्कं मनोहरम् ॥१०॥
शङ्खाङ्कं सर्वकोणेपु मानमेषां यथोर्ध्वगे ।
सर्वे दशान्तहस्तानां चतुर्णामेकमेखलाः ॥११॥
मण्टपानां तु किं त्वत्र ऊर्ध्वगं सर्वमेखलम् ।
अतोऽधस्संस्थिताः सर्वे एककुण्डास्तु मण्टपाः ॥१२॥
तेषां समेखलं चाद्यं द्वाविंशत्यंगुळैर्भवेत् ।
ह्रासादंगुळयुग्मस्य यावद्वै षोडशांगुळम् ॥१३॥
स्यात् पट्करे गृहे कुण्डं कार्या वा मेखलाधिका ।
अष्टहस्तोच्छ्रितं पूर्वमथोर्ध्वैककरवर्धिताः ॥१४॥
न ह्रासप्पट्कारांतानां न्यूनानामुच्छ्रितेर्भवेत् ।
त्रयोदशकरादीनां चतुर्णां पातयेत्ततः ॥१५॥
अष्टकं चांगुळानां तु सप्तपञ्चचतुःक्रमात् ।
एवं स्नानगृहाणां तु विस्तारश्चोन्नतैः सह ॥१६॥
किं तु वै वालुकापीठैः मध्यतश्चोपशोभिताः ।
द्विचतुर्भिः द्विहस्तांशैर्विस्तृताः प्राग्वदुन्नताः ॥१७॥
स्नानीया अग्रगेहाद्वै दिक्त्रयेऽभिमते शुभे ।
अर्धमानसमं मुख्यात्सुपीठशयनान्वितम् ॥१८॥

द्वादानभवनं कुर्यान्माङ्गल्यकलशैः सह ।
सर्वेषामपि भूभागे कोणस्तम्भैर्विभूपितम् ॥१९॥
सुनेत्रैर्वेष्टितं कुर्याच्चक्राद्यैः पूर्ववद्युतम् ।
सुस्थितं दृढपादं च स्नानाम्भोग्रहणक्षमम् ॥२०॥
अर्धेन वालुकापीठं दीर्घमाद्यक्रमेण तु ।
वर्धितं चार्धहस्तेन ह्रासितं चतरङ्गुलैः ॥२१॥
स्वदैर्घ्यादर्धविस्तीर्णं कृत्वैवं सप्रणाळकम् ।
तेन तद्वालुकापीठं भूपयेन्मध्यगेन तु ॥२२॥
यागागारस्य वै दिक्षु द्वारार्थं तत्र चान्तरे ।
शामार्धवृद्धियोगेन ह्रासोन्यत्र कलादिकः ॥२३॥
तोरणानि बहिः कुर्यात् दृढैः काष्ठैः सुपूजितैः ।
पञ्चहस्तानि चार्धेन वर्धितानि करेण तु ॥२४॥
न ह्रासमाचरत्तेपामन्यत्र करणे सति ।
न समात्पञ्चहस्तानामृते भूमौ प्रवेशयेत् ॥२५॥
शमार्थं वर्धितानां च द्वे द्वे संवर्धयेत्कले ।
दैर्घ्यात्प्रवेशशिष्टात्तु त्रिभागेन तदन्तरम् ॥२६॥
सर्वे चक्रध्वजाः कार्या वस्त्रस्रङ्मञ्जरीयुताः ।
सुधाद्यैर्वर्णकैः पीतैश्चन्दनाद्यैस्तु लेपिताः ॥२७॥
भिन्नाङ्गमेतदखिलं यथैकस्मिन् हि युज्यते ।
कर्म यागगृहे शश्वद्विभूतेर्वावनेर्विना ॥२८॥
पञ्चत्रिंशत्करं क्षेत्रं स्वतुर्यांशेन विस्तृतम् ।
तन्मध्ये तु चतुर्हस्तं स्वापाद्यं स्थलसप्तकम् ॥२९॥
स्थलानां व्यवधानं तु कुर्याद्वै ताळसंमितम् ।
एकापायेन वै कुर्यात् द्विहस्तान्तं स्थलाङ्गणम् ॥३०॥
क्रमेणाष्टांगुळान्मानात् द्व्यंगुळं द्व्यंगुळं विना ।

स्थलानां सङ्कटानां च व्यवधानं द्विगोळकम् ॥३१॥
एवमेव समुच्छ्रायः सर्वेषां परिकीर्तितः ।
परितो विहितं वीधेः मानमत्र स्वपीठजम् ॥३२॥
एवं वा सङ्कटे कुर्यादाद्योक्तान्मण्टपद्वयात ।
मध्यमण्डलपीठं तु तस्य दक्षिणदिग्भवेत् ॥३३॥
समीपे शयनस्थानं कुम्भानां स्थापनायनम् ।
एवं हि वामनिकटे भोगानां मन्त्रतर्पणम् ॥३४॥
ऋग्यजुस्सामपूर्वाणां श्रुतीनां हवनं परे ।
हम्दानं शयनस्थानं ह्यन्यस्मिन् शयने हितम् ॥३५॥
प्रासादस्याष्टदिङ्मूर्तिपानामेव यथोदितम् ।
स्थण्डिलेष्वथ कुण्डेषु तादर्थ्येनाथ वा स्वयम् ॥३६॥
स्वकुण्डे हवनं कुर्याच्चतुर्वेदमये परे ।
समस्तमूर्तिपीयं वा स्वयमेव समाचरेत् ॥३७॥
सामग्रीविरहाद्योग्यमूर्तिपानामभावतः ।
एवं त्वभिनवं कृत्वा यागार्थं मण्टपं द्विजाः! ॥३८॥
पूर्वोदितैरलङ्कारैरलंकृत्य पृथग्विधैः ।
सितरक्तादिभेदेन प्रागादौ तु ध्वजाष्टकम् ॥३९॥
निवेश्य मध्यवेद्यां तु पुनरप्ययवत्तथा ।
तदर्थान् सर्वसम्भारान् सम्भृत्य सुसमाहितः ॥४०॥
दिने कर्मदिनात्पूर्वे सप्तमे पञ्चमेपि वा ।
अङ्कुरानर्पयित्वा तु ततः कर्म समारभेत् ॥४१॥
प्रधानदिवसात्पूर्वं दिने देशिकसत्तमः ।
स्नातः शुक्लांबरः स्रग्वी कृतन्यासः सुशान्तधीः ॥४२॥
कृताह्निकोधिवासार्थं सर्वालङ्कारभूषितः ।
सर्वसाधनसंयुक्तस्त्वर्घ्यपात्रसमन्वितः ॥४३॥

माङ्गल्यकुम्भमादाय ध्यायमानोच्युतं हृदि।
सह चैकायनैर्विप्रैः सदागमपरायणैः ॥४४॥
तथा ऋङ्मयपूर्वैस्तु आमूलाद्भगवन्मयैः।
भेरीपटहवादित्रशङ्खशब्दादिकैः सह ॥४५॥
ऋग्यजुस्सामपूर्वैस्तु प्रशस्ताः सम्पठन् श्रुतीः।
द्वारपालार्चनं कृत्वा यागागारं प्रविश्य च ॥४६॥
संस्मृत्य स्वासने न्याप्तिगर्चयित्वोपविश्य च।
मध्यपीठसमीपे तु प्राङ्मुखः पश्चिमे पदे ॥४७॥
अग्रे मांगल्यकलशमाधारस्योपरि न्यसेत्।
विप्रानृङ्मयपूर्वांश्च उपवेश्य च पूर्ववत् ॥४८॥
पूर्वोक्तस्त्वधिकैर्युक्तो द्रव्यैर्द्रव्यगणः शुभः।
यश्च यत्रोपयोज्यस्तु तत्र तं संप्रवेशयेत् ॥४९॥
मंत्राणामुपदेष्टा च अनुकूलो महामतिः।
योक्तव्यः कर्मदक्षस्तु सर्वेष्ववसरेषु च ॥५०॥
दक्षिणे ह्यात्मनो विप्राः! एकचित्तः समाहितः।
स्वयं वस्त्वनुसंधाय हवनार्चनकर्मणाम् ॥५१॥
आस्ते ह्युत्पत्तिपूर्वाणां न्यासान्तानामनन्यधीः।
करशुध्यादि सर्वं तु चक्रादिन्यासपश्चिमम् ॥५२॥
सर्वं क्रमेण कृत्वा तु पुण्याहं वाचयेत्ततः।
पूर्वोक्तविधिना कुर्यात्सहोमं कलशार्चनम् ॥५३॥
कुर्यात्सतोरणानां च ध्वजानां स्थापनं ततः।
सत्यादिकं चतुष्कं तु मध्यवेद्या ध्वजाष्टके ॥५४॥
प्रभवाप्यययोगेन यजेत्प्रागादियोगतः।
उत देवा अवहिता ऋङ्मयान् पाठयेत्ततः ॥५५॥
प्रागादिदिक्चतुष्केषु तोरणानां चतुष्टये।

सुशोभनं सुभद्रं च सुगंधं च यजेत्क्रमात् ॥५६॥
सुगोत्रं च ततश्चक्रं विहगेश्वरसंयुतम् ।
उपरिष्टान्मुनिश्रेष्ठाः ! पूजयेत्प्रतितोरणम् ॥५७॥
एतेषामथ वा पूर्वं भवेद्द्वास्थैः सहार्चनम् ।
पाठयेत् द्वारपालीयं साम सामविदस्ततः ॥५८॥
अथार्घ्यपुष्पभृन्मूर्तिधरैर्यायात्समावृतः ।
यत्र तिष्ठति विश्वेशः पीठब्रह्मशिलान्वितः ॥५९॥
तत्रावलोकनं तेषां कुर्यात्सन्ताडनादिकम् ।
चक्रास्त्रमन्त्रितैः स्नानकलशैः स्नापयेत्ततः ॥६०॥
सिद्धार्थकैः तथा पञ्चगव्यमृद्भूतिवारिणा ।
वल्मीकमृज्जलेनाथ चक्राङ्कौषधिवारिणा ॥६१॥
संक्षाल्याभ्यर्च्य चोद्वर्त्य क्षालयेदस्त्रवारिणा ।
तमर्घ्येणार्चयित्वा च ततस्तन्मान्त्रितान् करे ॥६२॥
सिद्धार्थकान् दक्षिणे तु वध्वाग्रे पाठयेदृचम् ।
प्ररोहणं तथा सर्वान्नयेत्प्रतिसरे मणीन् ॥६३॥
सर्वत्र वेष्टितं कृत्वा समारोप्य रथोत्तमे ।
कर्मारम्भं च पठतस्तस्य दक्षिणदिङ् न्यसेत् ॥६४॥
ऋक्सामपूर्वान् वामे तु ब्राह्मणांश्च चतुश्चतुः ।
पुरतोऽस्त्रं स्मरन्यायात्स्वयं विघ्नांस्तु सूदयन् ॥६५॥
सनृत्तगीतवादित्रस्तुतिमङ्गळपाठकैः ।
इदंविष्णुर्विचक्रम इति ऋङ्मयैः सहपाठकैः ॥६६॥
एकायनांस्तदन्ते तु ओन्नमोब्रह्मणे तु यत् ।
तथैव शाकुनं सूक्तं श्रीसूक्तेन समन्वितम् ॥६७॥

स्वर्णादिनार्थिनः शक्त्या तर्पयंस्तान्निवेशयेत् ।
यागभूमिं ततो बिम्बमवरोप्य रथादिकात् ॥६८॥
निषण्णं दृढकाष्ठोत्थतोरणे सन्निवेश्य च ।
स्नानभूमौ ततः कुर्यादस्त्रेणाज्यतिलाहुतीः ॥ ६९ ॥
यद्वा पूर्वं समानीय पीठं ब्रह्मशिलान्वितम् ।
भूमिष्ठे भद्रपीठे तु वेदिकायां निवेश्य च ॥ ७० ॥
ततो बिम्बं समानीय स्थापयेत्पिण्डिकोपरि ।
स्थाप्यमाने बृहद्बिम्बे विशेषः कथ्यते द्विजाः ! ॥७१॥
पूर्ववत्कर्मशालायां संस्थाप्याकारशुद्धये ।
संस्नाप्य विधिना कृत्वा नयनोन्मीलनं ततः ॥ ७२ ॥
स्नपनं बृहदापाद्य केवलं वा बहूदकैः ।
स्नानकर्म शिलादीनामीषत्कृत्वा तु सार्चनम् ॥७३॥
उत्थाप्य मूर्तिपावैस्तु बहुभिस्तु रथस्थितम् ।
समानीय ततो यत्नात्प्रासादाभ्यन्तरं तु वै ॥७४॥
यथावद्रत्नविन्यासपूर्वं पीठे निवेश्य च ।
बृहद्बिंबं ततः कुर्यात्कर्मबिंबेऽखिलं तु वै ॥ ७५ ॥
सन्निरोधस्तु मन्त्राणां तत्र लग्नोदये स्मृतः ।
आबृहत्स्नपनात्पूर्वं यत्किंचिदपि तत्र तत ॥७६॥
निर्वर्तनीयं पूर्णान्तं बुध्वैवं प्राङ्मुनीश्वराः ! ।
तथा कार्यं शुभो येन मुहूर्तो नावसीदति ॥७७॥
एवं हि चित्रपूर्वाणामन्येषां मुनिसत्तमाः ! ।
सरलब्रह्मपाषाणवर्जितानां समापयेत् ॥७८॥
स्नानाद्यं कर्म बिंबे तु तत्समीपेऽथ दर्पणे ।
कर्मबिंबं विनान्येषां प्रस्वापाद्यं हि विष्टरे ॥७९॥
कुर्यात्प्रवेशपूर्वं तु सर्वमुत्सवपश्चिमम् ।

शक्तिभिः कर्मबिंबैश्च गरुडाद्यैर्यदा सह ॥८०॥
समाचरेत्प्रतिष्ठानं मूलबिंबस्य वै सह ।
तदानीं तानि बिंबानि यागभूमौ प्रवेशयेत् ॥८१॥
एवं प्रवेश्य तद्बिंबं स्नानार्थं स्थापयेत्घटान् ।
अथ वा कर्मदिवसात्तृतीये वासरे पुरा ॥८२॥
प्रागुक्तविधिना कृत्वा सहोगं कलशार्चनम् ।
आचार्यो मूर्तिपैः सार्धं कर्मशालां प्रविश्य च ॥८३॥
प्राप्तेऽपराह्णसमये बिंबमाकारशुद्धये ।
संस्नाप्य विधिना पश्चाद्बिंबन्तोयेधिवास्य च ॥८४॥
अपरस्मिन्दिने प्राप्ते देशिकस्तु कृताह्निकः ।
जलादुत्थाप्य तद्बिंबं यागभूमौ प्रवेशयेत् ॥८५॥

मुनयः ।

तोयाधिवासनविधिः कथं कार्यो मुनीश्वर ! ।
तद्विधानं विस्तरेण वदस्व वदतां वर ! ॥८६॥

नारदः ।

जलाधिवासनविधिं शृणुध्वं मुनिपुङ्गवाः ।
प्रासादस्य विशुद्ध्यर्थं बिम्बशुद्ध्यर्थमेव च ॥८७॥
मानोन्मानप्रमाणानामूनाधिक्योपशान्तये ।
जगदाप्यायनार्थंच सर्वसम्पूर्णसिद्धये ॥८८॥
प्रतिष्ठार्थक्रियारम्भात्पूर्वमेव शुभे दिने ।
पञ्चगव्यादिना स्नानं पूजाहोमौ तथा जपम् ॥८९॥
समाचरेत्स्वमन्त्रस्य यत्नैवं न कृतं पुरा ।
हेतुना केन चित्तत्र जलवासं समाचरेत् ॥९०॥
नदीषु दीर्घिकायां वा तटाके निर्झरे ह्रदे ।
सम्भवे सति कुर्वीत जलवासं यथाविधि ॥९१॥

असम्भवे जलद्रोण्यां कटाहे धातुनिर्मिते ।
यथासम्भवमन्यस्मिन् पात्रे वा मृण्मयादिके ॥९२॥
अल्पतोये श्मशानान्ते लवणोदपरिप्लुते ।
कटुके च कषाये च तिक्ते फेनैश्च दूषिते ॥९३॥
चैत्यवृक्षसमीपे च नीचावाससमीपके ।
वर्णान्तरयुते स्वल्पे ऊषरे शैवलान्विते ॥९४॥
एवमादिषु दुष्टेषु जलवासं न कारयेत् ।
एकत्रिपञ्चरात्रं वा जलमध्येऽधिवासयेत् ॥९५॥
देशकालानुसारेण सद्यो वा जलवासनम् ।
प्रतिष्ठादिवसात्पूर्वं तृतीये पंचसप्तमे ॥९६॥
दिनेपराह्णसमये कर्मशालां प्रविश्य च ।
अस्त्रमन्त्रेण सम्प्रोक्ष्य बिम्बं सन्ताडयेत्ततः ॥९७॥
सिद्धार्थकैस्तिलैर्दीर्घैरस्त्रमन्त्राभिमन्त्रितैः ।
संस्नाप्याकारशुद्ध्यर्थं पङ्भिः सिद्धार्थकादिभिः ॥९८॥
वस्त्राभरणपुष्पाद्यैरलंकृत्य च भूषणैः ।
पूर्ववत्कौतुकं बध्वा समारोप्य रथादिके ॥९९॥
पूर्ववच्छ्रुतिघोषैश्च शङ्खभेर्यादिकैः सह ।
विविधैर्नृत्तगेयैश्च तथान्यैर्मङ्गळैः सह ॥१००॥
ग्रामं वा नगरं वापि प्रासादं च प्रदक्षिणम् ।
भ्रामयित्वा जलोद्देशमानयेन्मूर्तिपैः सह ॥१०१॥
प्रपायां तु जलाभ्यर्णे अवरोप्य रथादिकात् ।
विष्टरे विनिवेश्याथ प्राङ्मुखं वाप्युदङ्मुखम् ॥१०२॥
मण्टपं जलमध्ये तु वातवृष्टिक्षमं शुभम् ।
चतुस्स्तम्भसमायुक्तं चतुस्तोरणभूषितम् ॥१०३॥
वितानध्वजसंयुक्तं वेष्टितं दर्भमालया ।

विचित्रैश्च फलैर्युक्तं द्रुमांगैः पावनैस्तथा ॥१०४॥
मुक्तादामसमायुक्तं स्रग्दामभिरलंकृतम् ।
कोणे प्रदीपसंयुक्तं चामरैरुपशोभितम् ॥१०५॥
पुरैव कारयित्वा तु कुर्यात्पुण्याहघोषणम् ।
प्राग्वच्छुद्धिमपां कृत्वा तन्मध्ये विन्यसेत्ततः ॥१०६॥
प्रतिमानुगुणं भद्रपीठमास्तरणान्वितम् ।
सोपधानं तदूर्ध्वे तु कल्पयेन्मान्त्रमासनम् ॥१०७॥
अनन्तं कल्पयित्वोर्ध्वे अर्घ्यगन्धादिनार्चयेत् ।
मूलमन्त्रेण बिंबस्य अर्घ्यं पाद्यं तथैव च ॥१०८॥
आचामं वासितं गन्धमुपवीतोत्तरीयके ।
भूषणानि च माल्यानि दीपं धूपं यथाक्रमम् ॥१०९॥
दत्वा कृत्वा घृतारोपं संस्मरेत्संहृतिक्रमम् ।
संहारस्य क्रमं वक्ष्ये समाकर्णयत द्विजाः ! ॥११०॥
आत्मानं सर्वगन्ध्यात्वा सर्वज्ञं विष्णुमव्ययम् ।
कुर्याद्भावान्वितो मन्त्री तद्विष्णोरधिवासनम् ॥१११॥
प्रणवेन समारोप्य जीवमर्चाभिमानिनम् ।
उत्क्रम्यात्मैकतां कृत्वा स्वस्मिन् सर्वेश्वरे हरौ ॥११२॥
संशोध्य मलिनां पृथ्वीं दग्ध्वा बीजान्विताग्निना ।
अद्भिः संप्लाप्य तां वायुशुष्कां वह्नौ विलाप्य च ॥११३॥
संहृत्य वायुना वह्निं वायुमाकाशतां नयेत् ।
आध्यात्मिकाधिदैवैस्तु करणैर्विषयैः सह ॥११४॥
तन्मात्रासंस्थितान्येव क्रमात्संहृत्य देशिकः ।
नभो मनसि संहृत्य मनोऽहंकृति तत्पुनः ॥११५॥
महत्यात्मनि तं चापि नयेदव्याकृतैकताम् ।
शान्तानन्ते परे व्योम्नि निष्कले ज्ञानविग्रहे ॥११६॥

तं ध्यायेत्परमानन्दे संस्थितं शान्तविग्रहम्।
यस्मिन्नव्याकृतं लीनं सावस्थं यत्स्वरूपकम् ॥११७॥
वासुदेवोपि विज्ञेयः सर्वात्मा सर्वकृत्प्रभुः।
तस्मिन्नेव तु संहृत्य पृथिव्यादीनि देशिकः ॥११८॥
एवं ध्यात्वा यथान्यायं बिंबं वस्त्रेण वेष्टयेत्।
स्थगयित्वांशुकैर्दिव्यैर्दर्भैः सर्वैः स्रगादिभिः ॥११९॥
आचार्यो मूर्तिपैर्मन्त्रान् व्यापकांश्चतुरोपि वा।
पठद्भिः शाकुनं सूक्तं तथा चान्यैस्त्रयीमयैः ॥१२०॥
आम्नायोद्घोषणपरैः सार्धमादाय तीरतः।
तद्बिंबं जलमध्ये तु पीठोर्ध्वे शाययेत्स्वयम् ॥१२१॥
अम्भस्येति च मन्त्रेण प्राङ्मूर्धानमुदङ्मुखम्।
दुन्दुभीर्विविधाकारा नादयित्वा दिशो दश ॥१२२॥
जयशब्दैश्च गीताद्यैः सपुण्याहपुरस्सरम्।
आत्मन्यासं क्रमात्कृत्वा दिशोऽस्त्रेणावबध्नियात् ॥१२३॥
अवलोक्य च नेत्रेण कवचेनावकुण्ठयेत्।
लोकपालान् बहिर्ध्यात्वा स्थानादस्मात्समन्ततः ॥१२४॥
तीरदेशमनुप्राप्य कुम्भं सूत्रेण वेष्टितम्।
वेष्टितं नववस्त्राभ्यां सपिधानं सपल्लवम् ॥१२५॥
संस्थाप्य तद्दक्षिणतः करकं च तथैव हि।
इन्द्रादीशानपर्यन्तं कलशान् परितो न्यसेत् ॥१२६॥
सवस्त्रान् सापिधानांश्च सहिरण्यान् सकूर्चकान्।
कुम्भे विशाखयूपं तु करके च सुदर्शनम ॥१२७॥
आवाह्यार्घ्यादिनाभ्यर्च्य इन्द्रादीन् कलशाष्टके।
बिम्बस्य शिरसो देशे कुम्भं च करकं न्यसेत् ॥१२८॥
अर्चितं परितश्चाष्टौ कलशान्विन्यसेत्क्रमात्।

कोणेषु पालिका न्यस्य अनिर्वाणैश्च दीपकैः ॥१२९॥
दर्शयेच्चक्रमुद्रां च रक्षामुद्रां तथैव च ।
अत ऊर्ध्वं न वै कुर्याद्ग्राम्यधर्मं तु तज्जले ॥१३०॥
दारुलोहशिलोत्थानां बिम्बानां जलवासनम् ।
साक्षाद्भवेत्तदन्यत्र भवेच्छायाधिवासनम् ॥१३१॥
विधानं तत्र वक्ष्यामि यथावन्मुनिपुङ्गवाः! ।
स्नानमाकारशुद्ध्यर्थं दर्पणे तु समाचरेत् ॥१३२॥
अन्यच्च सकलं विप्राः! प्राग्वद्बिम्बे समाचरेत् ।
अग्रतो देवबिम्बस्य छायाधिवसनार्थतः ॥१३३॥
जलद्रोणीं कटाहं वा स्थापयेल्लोहनिर्मितम् ।
मृण्मयं दारुजं वापि भाजनं धान्यसंचये ॥१३४॥
पूरयेद्गन्धतोयेन शुद्धस्फटिकवर्चसा ।
पूर्ववद्विष्टरं कृत्वा दर्भमंजरिजं शुभम् ॥१३५॥
अष्टाविंशतिदर्भोत्थं कूर्चं कृत्वा द्विजोत्तमाः! ।
देशिकेन्द्रो विधानेन तत्रावाह्य जगद्गुरुम् ॥१३६॥
अर्घ्यगन्धादिनाभ्यर्च्य स्मृत्वा वै संहृतिक्रमम् ।
विष्टरं जलमध्ये तु प्राङ्मूर्धानं तु शाययेत् ॥१३७॥
चक्रमुद्रां प्रदर्श्याथ कुम्भादीन् पूर्ववन्न्यसेत् ।
शक्तीनामपि विप्रेन्द्राः! पूर्ववद्विष्टरं भवेत् ॥१३८॥
अथ वा तु त्रिभिर्दर्भैः कूर्चं कुर्याद्विधानतः ।
छायाधिवासमात्रं तु तासामपि पृथक् पृथक् ॥१३९॥
सर्वाङ्गं नववस्त्रेण प्रतिमायाः समन्ततः ।
छादयित्वा समन्ताच्च सिद्धार्थान् विकिरेत् क्षितौ ॥१४०॥
रक्षोहणेति मन्त्रेण रक्षां कुर्यात्समन्ततः ।
अनुक्तमत्र यत्किञ्चित्प्राग्वत्सर्वं समाचरेत् ॥१४१॥

मृण्मये भित्तिसंस्थे च बिंबे छायाधिवासनम् ।
अन्तः प्रविश्य प्रासादे देशिकेन्द्रः समाचरेत् ॥१४२॥
अन्येषां यागगेहस्य प्राग्वत्कृत्वा तु मण्टपम् ।
कुटीं वा तत्र कुर्वीत छायाधिवसनं गुरुः ॥१४३॥
दारुलोहशिलोत्थानां बिंबानां विभवे तदा ।
जलद्रोण्यादिके पात्रे तोयाधिवसनं चरेत् ॥१४४॥
तदापि जलवासन्तु आचरेन्मण्टपान्तरे ।
यद्वा स्नानार्थतः कल्पसमण्टपे वा समाचरेत् ॥१४५॥
अथ वा यागसद्मने स्नानभूमौ तु तद्भवेत् ।
एवं जलाधिवासन्तु कृत्वा वै देशिकोत्तमः ॥१४६॥
उपयोज्यं प्रतिष्ठायां यद्यद्द्रव्यमुपार्जितम् ।
तत्सर्वं समुपाहृत्य प्रासादादींश्च शोधयेत् ॥१४७॥
पर्यग्निकरणं चापि कारयेद्ब्राह्मणेन तु ।
मार्जनैर्गोमयालेपैः शोधयित्वा तु मन्दिरम् ॥१४८॥
सुधाचूर्णैरक्षताद्यैः भूषयित्वा समन्ततः ।
पञ्चगव्यैस्ततः प्रोक्ष्य दीपानारोप्य सर्वतः ॥१४९॥
वितानाद्यैरलंकृत्य गन्धद्रव्यैश्च धूपयेत् ।
नास्तिकान् भिन्नमर्यादान् देवब्राह्मणनिन्दकान् ॥१५०॥
पापयोगयुतानन्यान् निन्दितान् पिशुनांस्तथा ।
पाषण्डिनो हीनवृत्तीन् प्रतिलोमान् समत्सरान् ॥१५१॥
लुब्धान् मूर्खानविदुषो बहिर्निर्वासयेत्ततः ।
कर्माहाद्वासरे विप्राः ! अपराह्णे गुरुः स्वयम् ॥१५२॥
जलाधिवासदेशं तु संप्राप्य सह मूर्तिपैः ।
उत्थाप्य बिम्बमुदकात्कुम्भं च कलशानपि ॥१५३॥
उद्वास्य देवतास्तत्स्थास्तद्बिम्बं तीरविष्टरे ।

प्राङ्मुखं समवस्थाप्य वारिभिः क्षाळयेत्ततः ॥१५४॥
लोहजाश्चेद्विशुद्ध्यन्तिं तिन्त्रिणीफलवारिभिः ।
प्राग्वत्सृष्टिक्रमं कृत्वा विधानेन मुनीश्वराः! ॥१५५॥
वस्त्राभरणपुष्पाद्यैरलंकृत्य मनोहरैः ।
यानमारोप्य तद्बिम्बं शङ्खभेर्यादिसंयुतम् ॥१५६॥
ग्रामं प्रदक्षिणीकृत्य ह्यालयं वा समानयेत् ।
यागगेहं तु यानादेरवरोप्य निवेशयेत् ॥१५७॥
स्थाने पूर्वोदिते पश्चादारगेत्स्नपनं गुरुः ।
लेख्यादौ संप्रविश्याथ प्रासादं मूर्तिपैः सह ॥१५८॥
प्राक्चाधिवासितं कूर्चं जलात्तस्मात्समुद्धरेत् ।
बिम्बाच्च वस्त्राभरणमाल्यान्यपनयेत्ततः ॥१५९॥
पीठे तु स्नानकुम्भानां स्थापनार्थं प्रकल्पिते ।
पूर्वोदितं स्थूलपरं स्नपनं स्थापयेद्द्विजाः!॥१६०॥
पूर्वादिपश्चिमाशान्तं पृथक्स्नपनमण्टपम् ।
विहितं यत्र तत्रैव देवदेवस्य वामतः ॥१६१॥
यातुधानपदंयावदग्निकोणादितो न्यसेत् ।
स्नपनं स्थूलपराख्यं स्थूलसूक्ष्मंतु पृष्ठतः ॥१६२॥
ईशकोणात्समारभ्य यावदाग्नेयगोचरम् ।
देवस्य दक्षिणे पार्श्वे ईशानाद्वायुपश्चिमम् ॥१६३॥
स्थूलस्थूलाभिधं स्नानं स्थापयेत्क्रमयोगतः ।
अधिवासदिने कुर्यात्स्नानं स्थूलपराभिधम् ॥१६४॥
प्रतिष्ठादिवसे त्कुर्यात्स्नपनं स्थुलसूक्ष्मकम् ।
चतुर्थे दिवसे स्नानं स्थूलस्थूलाभिधं भवेत् ॥१६५॥
तदा तत्तद्दिने तत्तत्स्नपनं स्थापयेद्गुरुः ।
एवं हि स्नानकलशान् क्रमात्संस्थाप्य पूर्ववत् ॥१६६॥

अ–१

तदर्पणावसानेथ शयनं कल्पयेत् द्विधा ।
नयनोन्मीलनार्थं तु शयनं कल्पयेत्पुरा ॥१६७॥
द्वादशाक्षरमन्त्रेण पीठं संप्रोक्षयेत्ततः ।
प्रगग्रानुदगग्रान्वा दर्भानास्तीर्य पुष्कलान् ॥१६८॥
पञ्चभारमितान् शालीनथ वा चार्धसंमितान् ।
वृत्तं वा चतुरश्रं वा कंबळानुपरि न्यसेत् ॥१६९॥
उपधानानि चित्राणि शयनांगानि कल्पयेत् ।
मंगल्यकुम्भान् संस्थाप्य दिगष्टकसमाश्रितान् ॥१७०॥
ततो बिंबाधिवासार्थं शयनं परिकल्पयेत् ।
तदर्थं वेदिकोर्ध्वे तु कुर्यात्स्वस्तिकमण्डलम् ॥१७१॥
रजसा कुसुमैर्वाथ चतुर्वर्णैर्महोज्वलैः ॥
प्रागग्रानुदगग्रांश्च दर्भानास्तीर्य तत्परम् ॥१७२॥
पञ्चभारप्रमाणेन शालींस्तत्र विनिक्षिपेत् ।
तदर्धं तण्डुलं शुद्धं तदर्धं तु तिलं तथा ॥१७३॥
उपर्युपरि निक्षिप्य लाजानूर्ध्वे तु विन्यसेत् ।
काष्ठजं सुदृढं स्निग्धं चतुर्गात्रसमन्वितम् ॥१७४॥
चतुष्पादसमायुक्तं चतुरश्रायतं ततम् ।
खट्वासंज्ञितपर्यंकं तदूर्ध्वे स्थापयेत्ततः ॥१७५॥
दुकूलं मृदुतल्पं च विन्यसेत्सोपरिच्छदम् ।
केवलं तल्पमात्रं वा विन्यसेदथ वा द्विजाः ! १७६॥
खट्वातूले विसृज्याथ लाजोर्ध्वे रत्नकम्बळम् ।
न्यसेदभिनवं पश्चाद्वस्त्रं कार्पासजं नवम् ॥१७७॥
क्षौमवस्त्रं न्यसेन्मध्ये चित्रवस्त्रं ततोपरि ।
शिरोपधानसंयुक्तं पादगण्डूकसंयुतम् ॥१७८॥
सर्वानभिनवान् शुभ्रान् सकपोलोपधानकान् ।

सुगन्धधूपितान् वस्त्रान् कुसुमामोदसम्मितान् ॥१८
इन्द्रादीशानपर्यंतं कलशान् सूत्रवेष्टितान् ।
तोयपूर्णान् समान् स्निग्धान् सापिधानान् सवस्त्रकान्॥१८
सरत्नपल्लवैर्युक्तान् धान्यराशिषु निक्षिपेत् ।
शंखचक्रगदापद्मैर्ध्वजैश्चेन्द्रादिषु क्रमात् ॥१८१॥
श्रीवत्सं गरुडं कूर्मं सौवर्णं तेषु निक्षिपेत् ।
मध्ये मध्ये च कुम्भानां धान्योर्ध्वे मङ्गळान् न्यसेत्
शंखं चक्रं तथा लक्ष्मीं कुम्भं श्रीवत्समेव च ।
दर्पणं स्वस्तिकं मत्स्ययुग्मं वै मङ्गळाष्टकम् ॥१८३॥
वस्त्रैराच्छादितास्तद्वत् न्यसेत्कोणेषु पालिकाः ।
एवं शयनयुग्मं तु प्रकल्प्य तदधो यजेत् ॥१८४॥
सर्वाधारमनन्तं तु तदूर्ध्वे सर्वगं प्रभुम् ।
प्रभवाप्यययोगेन यजेत्प्रागादियोगतः ॥१८५॥
पाठयेत्सर्पसामादि संज्ञां ज्ञानबलात्मिकाम् ।
हुत्वा शताष्टसंख्यं तु मूलं तदनु कल्पयेत् ॥१८६॥
मण्डलं पावनै रागैः सिताद्यैर्मांगळीयकैः ।
तदूनाधिकशान्त्यर्थं हुत्वा कुण्डगणं ततः ॥१८७॥
संस्कुर्यात्प्रतिकुण्डस्य निकटे कुम्भमध्यगम् ।
प्रभवाप्यययोगेन चातुरात्म्यं तु संयजेत् ॥१८८॥
हृदादि यद्वा दिक्स्थेषु विदिक्स्थेषु तदस्त्रपम् ।
दत्वा तदर्थं पूर्णां तु पूर्णात्पूर्णं च पाठयेत् ॥१८९॥
एकायनान्यजुर्मयानाश्रावितमनन्तरम् ।
एवं सर्वं समाप्य प्रयायाद्दिवसान्निधिम् ॥१९०॥
बिंबमर्घ्यादिनाभ्यर्च्य गुरुः स्नपनमारभेत् ।
अथास्त्रमन्त्रेण पुरा मांगल्यकलशांभसा ॥१९१॥
संसेच्य बिंबं तदनु स्नापयेत्तन्मृदांभसा ।

पाठयेत्तत्र कूश्माण्डान् बलमन्त्रादनन्तरम् ॥१९२॥
ततो गोमयकुम्भेन इह गावः प्रपाठयेत् ।
भूतिस्त्वमिति मन्त्रेण पाट्यमाने विभूतिना ॥१९३॥
पञ्चगव्येन तदनु पाठयेच्छाकरन्ततः ।
पूर्ववच्च ततोऽभ्यर्च्य विधिवच्चमसांबुना ॥१९४॥
क्षाळयित्वा जलैः शुद्धैरभिषिज्य ततोऽर्चयेत् ।
शिल्पिदोषविनाशार्थं स्नानमेतदुदाहृतम् ॥१९५॥
परिधाय ततो विप्रा वाससी अधरोत्तरे ।
नयनोन्मीलनार्थं तु शयनं यत्प्रकल्पितम् ॥१९६॥
तत्र पूर्वशिरस्कं च बिंबं प्रस्वापयेत् द्विजाः! ।
ततः समन्ताद्बिंबं तु छादयेत्कम्बळादिभिः ॥१९७॥
सौवर्णं राजतं चैव पात्रमाढकपूरणम् ।
धान्यराशौ निधायाग्रे पूरयेत यथाक्रमम् ॥१९८॥
मधुना सर्पिषा चैव ततस्तु मधुपात्रके ।
अर्कमण्डलमध्यस्थं मार्ताण्डायुतसन्निभम् ॥१९९॥
ध्यात्वा मन्त्रेशमभ्यर्च्य तदन्यस्मिन् मुनीश्वराः! ।
चन्द्रमण्डलमध्यस्थं धेनुमुद्रासमन्वितम् ॥२००॥
मन्त्रं वै सौरभीयं च स्फुरदिन्दुशतप्रभम् ।
तदन्तरस्थं मन्त्रेशं हिमाचलनिभं स्मरेत् ॥२०१॥
तत्स्थैरमृतौघैश्च शशिजैर्धेनुजैरपि ।
सुभावितं स्मरेद्बिंबं मधुवातेति मन्त्रतः ॥२०२॥
घृतादि मन्त्रयेत्पश्चाद्वस्त्रेणाच्छादयेत्तु तत् ।
अष्टांगुळा च सौवर्णी शलाका राजती तथा ॥२०३॥
केवला वापि सौवर्णी शलाका स्यात् द्विजोत्तमाः! ।
अष्ट धान्यानि परितः पात्रेषु विनिवेशयेत् ॥२०४॥

गाः कन्यकाः शुभाकारा भूषणैश्चापि भूषिताः ।
आनीय स्थापयेत्पार्श्वे ब्रह्मघोषेण घोषयेत् ॥२०५॥
स्वयं शलाकां सौवर्णीं कृत्वा नेत्राभिमन्त्रिताम् ।
मध्वाक्तां च तया नेत्रं दक्षिणं त्वीषदुल्लिखेत् ॥२०६॥
संस्मरन् परमं ज्योतिर्नेत्रमन्त्रेण देशिकः ।
आज्याक्तया तया वांपि राजत्या वाममुल्लिखेत् ॥२०७॥
तन्मन्त्रितेन शस्त्रेण शिल्पी स्नातोऽवलोकितः ।
यथावत्प्रकटीकुर्यात् विधिदृष्टेन वर्त्मना ॥२०८॥
वारुणं पाठयेत्साम सह चान्द्रेण सामगान् ।
पूरयेन्मधुसर्पिर्भ्यां नेत्रयुग्मं क्रमेण तु ॥२०९॥
वौषडन्तेन मूलेन तेनैव जुहुयात्ततः ।
सिंचन्तममृतौघं तु हृदाद्यन्तेन सेचयेत् ॥२१०॥
तन्मूर्ध्नि शशिबिम्बं तु ध्यायेत्तापादिशान्तये ।
व्यपोह्याच्छादनपटं दर्शयन्मधुसर्पिषी ॥२११॥
अष्ट धान्यानि गाश्चैव कन्यकाः पुरतः स्थिताः ।
मध्वाज्ये च शलाके च प्रदद्याच्छिल्पिने द्विजाः ॥२१२॥
अष्ट धान्यानि गाश्चैव शय्योपकरणं तथा ।
प्रदद्याद्देशिकेन्द्राय साधकः सिद्धिलालसः ॥२१३॥
यद्वा मध्वादि सकलमाचार्याय निवेदयेत् ।
यथाशक्ति तथान्येषां मूर्तिपानां च दक्षिणाः ॥२१४॥
मृण्मये मूलबिम्बे तु भित्तिस्थेथ प्रविश्य तु ।
प्रासादं तत्र कुर्वीत नयनोन्मीलनक्रियाम् ॥२१५॥
एवं श्रियादिशक्तीनां नयनोन्मीलनं भवेत ।
एवं नेत्रे समुन्मील्य बिम्बस्य तु ततः परम् ॥२१६॥
दहनाप्यायनं कुर्यादस्त्रेण हृदयेन च ।

आमूर्ध्नो मूलमन्त्रं तु मूर्त्यर्थं पूर्ववत् न्यसेत् ॥२१७॥
स्नानार्थतः पुरा कलशे पीठे बिम्बं नयेत्ततः ।
व्याप्तिसत्तासमायुक्ते संस्कृते प्रोक्षणादिना ॥२१८॥
आधारादिक्रमोपेते समालब्धे सुपूजिते ।
पीठेवतार्य संवेष्टय वाससी ह्यधरोत्तरे ॥२१९॥
अधः क्रमोदितैः कुम्भैर्द्विष्पोढावर्तितैर्हृदा ।
स्नापयेत्पाठयेद्विप्रानोषधीनामिति श्रुतिम् ॥२२०॥
या ओषधय इत्यादि ऋग्वेदांस्तदनन्तरम् ।
एवं दशावशिष्टान्तैः सेचिते कलशैः सति ॥२२१॥
ततः कुम्भचतुष्केण चतुर्भिर्मूर्तिधारकैः ।
ऋक्सामपूर्वैर्विधिवत् स्नपनीयं च पाठयेत् ॥२२२॥
उदुत्तमं हि ऋग्वेदान् पाठयेद्द्रविणं यजुः ।
ततस्तु वारुणं साम सामज्ञोऽथर्वणस्ततः ॥२२३॥
अयन्ते वरुणश्चेति पवित्रं ते ततो ऋचम् ।
वसोः पवित्रं हि यजुः पाठयेत्सुमहांस्ततः ॥२२४॥
पवित्रं ते हि यत्साम संयोज्यैकायनांस्ततः ।
मूर्तिपान् समुदायेन पावमानीचतुष्टयम् ॥२२५॥
तदन्ते तु परं मन्त्रं व्यूहीयं भगवानिति ।
पवित्रमन्त्रं तदनु इदंविष्णुर्विचक्रमे ॥२२६॥
ततो विभवमन्त्रैस्तु सर्वैस्सम्मन्त्रितेन च ।
कुम्भेन सेचयित्वा तु व्यूहमन्त्रैः परेण तु ॥२२७॥
स्नापयित्वाऽर्चयित्वा च जुहुयात्साधिकं शतम् ।
यथावत्प्रणवेनाथ व्याप्तिं कृत्वा च पाठयेत् ॥२२८॥
मामगामेति ऋग्वेदान् अग्नेवायुर्यजुर्मयान् ।
प्राणापानं हि यत्साम ततः प्राणाय वै नमः ॥२२९॥

यातव्येति परं मन्त्रं विप्रानेकायनांस्ततः ।
ध्यानयुक्तो धिया सम्यक्पठेदाराधकस्ततः ॥२३०॥

आवाहयाम्यमरवृन्दनतांघ्रियुग्मं-
लक्ष्मीपतिं भुवनकारणमप्रमेयम् ।
आद्यं सनातनतनुं प्रणवासनस्थं
पूर्णेन्दुभास्करहुताशसहस्रदीप्तिम् ॥२३१॥

ध्येयं परं सकलतत्वविदां च वेद्यं
वाराहकापिलनृकेसरिसौम्यमूर्तिम् ।
श्रीवत्सकौस्तुभमहामणिभूषितांगं
कौमोदकीकमलशङ्खरथाङ्गहस्तम् ॥२३२॥

सर्वत्रगोसि भगवन् ! किल यद्यपि त्वा-
मावाहयामि हि यथा व्यजनेन वायुम् ।
गूढो यथैव दहनो मथनादुपैति
आवाहितोपि हि तथा त्वमुपैपि चार्चाम् ॥२३३॥

मालाधराच्युत ! विभो ! परमार्थमूर्ते ! .
सर्वज्ञ ! नाथ ! परमेश्वर ! सर्वशक्ते ! ।
आगच्छ मे कुरु दयां प्रतिमां भजस्व
पूजां गृहाण मदनुग्रहकाम्ययाद्य ॥२३४॥

ततो विसृज्य वस्त्रेण भोगैः पूर्वोदितैर्यजेत् ।
अर्घ्याद्यैर्दक्षिणान्तैस्तु पाठयेद्वङ्मयांस्ततः ॥२३५॥
अर्चामि तेति मन्त्रं वै सामगांश्चार्चितस्त्विति ।
ओं- भगवानिति तद्ज्ञांस्तु अग्नौ सन्तर्पयेत्ततः ॥२३६॥
स्वकुण्डे देशिकेन्द्रस्तु समिधां सप्तकं हुनेत् ।
पश्चाच्छताष्टसंख्यं च साज्यैश्च तिलतण्डुलैः ॥२३७॥
तर्पयित्वा तु पूर्णान्तमुद्धृत्याग्निकणं ततः ।

दिक्कुण्डेषु विनिक्षिप्य संस्कृतेषु पुरैव तु ॥२३८॥
तथैव च विदिक्स्थेषु उद्धृत्याभ्यर्च्य वै क्रमात् ।
ततः प्रभवयोगेन चतुर्दिक्षु निवेशयेत् ॥२३९॥
चतुरो वासुदेवादिनाम्ना एकायनान् द्विजान् ।
स्वाभिस्स्वाभिरसंख्यं च तैः कार्यमभिधादिभिः ॥२४०॥
समित्ससक्तपूर्वैस्तु साज्यैस्तु तिलतण्डुलैः ।
एवमप्ययोगेन वाय्वादीशावसानकम् ॥२४१॥
ऋग्वेदाद्यांस्तु चतुरः संस्कृत्याद्यौ तथा न्यसेत् ।
तैरप्यच्युतलिङ्गैस्तु स्वशाखोक्तैश्च पावनैः ॥२४२॥
हवनं विधिवत्कार्यं भक्तियुक्तेन चेतसा ।
एवं क्रमेण कुण्डांस्तु सर्वान् हुत्वा ततो गुरुः ॥२४३॥
द्वारस्थादीनां पुरोक्तानां दिक्पतीनां समाचरेत् ।
हवनं विधिवत्कुण्डे स्थण्डिले वा मुनीश्वराः ! ॥२४४॥
प्रासादस्येशदिग्भागे तदर्थं पूर्वनिर्मिते ।
स्तुत्वा जितन्तेमन्त्रेण सामज्ञान् पाठयेत्पुनः ॥२४५॥
सह गायत्रसाम्ना तु यद्रथन्तरसंज्ञितम् ।
प्रजप्य द्वादशार्णं तु मुद्रां बद्ध्वा प्रणम्य च ॥२४६॥
अष्टाङ्गेनाथ विज्ञाप्यो भगवान् भूतभावनः ।
"मूर्तिभेदेन रूपेण अनेनैव हि सांप्रतम् ॥२४७॥
लोकानज्ञाततत्त्वांस्तु समाह्लादय नागरान् ।
येनान्तस्सम्प्रविष्टेन ईषत्कालवशात्तु वै ॥२४८॥
जन्मान्तरसहस्रोत्थान्मोक्षमायान्ति किल्बिषात् । "
एवमर्थ्यो हि भगवान् लोकानुग्रहकृत्प्रभुः ॥२४९॥
दत्त्वाऽर्घ्यगन्धस्रग्धूपदीपान्नैवेद्यमेव च ।
निवेद्याचमनं चार्घ्यं कुर्यान्नीराजनं ततः ॥२५०॥

पुण्याहजयघोषेण वेदध्वनियुतेन च ।
शङ्खवादित्रनिर्घोषपटहैर्गीतिभिः सह ॥२५१॥
करावंघ्रिगतौ कृत्वा देवदेवस्य देशिकः ।
पाठयेदृङ्मयं मन्त्रमुत्तिष्ठेति ततस्सह ॥२५२॥
यात्रोपकरणैर्मन्त्रं कृत्वा ब्रह्मरथे स्थिरे ।
सुयन्त्रिते च क्षीराज्यदध्योदनसमन्विते ॥२५३॥
सुभिक्षक्षेमशान्त्यर्थं परमान्नफलैर्युते ।
पाठयेदस्यवामीयमृङ्मयं तदनन्तरम् ॥२५४॥
तन्मयान् बलमन्त्रं तु दशार्धेति मुनीश्वराः ! ।
स्वयमाद्यन्तसंरुद्धं हृदा तु कवचं जपेत् ॥२५५॥
भ्रामयेद्बलिदानं च क्रियमाणं तु सर्वदिक् ।
रत्नकांचनवज्राणां पूर्ववत् क्षेपमाचरेत् ॥२५६॥
दिव्याद्यायतनानां च कार्या पूजा यथोचिता ।
पचरात्रविदां चैव यतीनां ब्रह्मचारिणाम् ॥२५७॥
षट्कर्मनिरतानां च दानं दीनजनेष्वपि ।
रथस्थे मन्त्रबिम्बे तु यावत्पदशतं व्रजेत् ॥२५८॥
तद्रथं तूर्यघोषेण तावत्क्रतुशतं फलम् ।
आप्नोत्याराधकः शश्वत्सकामो नियतव्रतः ॥२५९॥
ततस्तोरणदेशस्थं रथं कृत्वार्चयेत्प्रभुम् ।
पाद्यार्घ्यपुष्पधूपैश्च नमस्कृत्य च पाठयेत् ॥२६०॥
उत्तिष्ठेति द्विषट्कार्णं साजितन्तं तु चाखिलम् ।
सम्पठन् पौरुषं सूक्तं यागवेश्म प्रवेशयेत् ॥२६१॥
शय्यायां प्राक्शिरो बिम्बं शाययेद्धृदयेन तु ।
देशिको मूर्तिपैः सार्धं यात्राहोमं समापयेत् ॥२६२॥
ततस्तच्छिरसो देशे चक्राधारस्थिते घटे ।
पूर्वोक्तलक्षणे नेत्रमन्त्रसम्पुटितं यजेत् ॥२६३॥

पूजयेन्मङ्गलान्यष्टौ प्रागादौ तु स्वनामभिः ।
अष्टासु तत्र कुम्भेषु पुरैव स्थापितेषु च ॥२६४॥
वासुदेवादयः पूज्याः प्रभवाप्यययोगतः ।
हृदादि यद्वा दिक्स्थेषु विदिक्स्थेषु तदस्त्रपम् ॥२६५॥
यद्वा प्राच्यां तु वाराहो नारसिंहस्तु दक्षिणे ।
प्रतीच्यां श्रीधरो देवो हयवक्त्रस्तथोत्तरे ॥२६६॥
आग्नेय्यां भार्गवो रामो नैर्ऋते राम एव च ।
वायव्ये वामनश्चापि विष्णुरीशानगोचरे ॥२६७॥
स्वनाम्ना पूजयित्वैतानर्घ्यगन्धादिभिस्ततः ।
पूजयित्वार्घ्यगन्धाद्यैः शयनस्थं विभुं ततः ॥२६८॥
वर्मणाच्छादनपटं दत्वा धूपाधिवासितम् ।
मूलेन शयनस्थस्य कुर्यादाप्यायनं ततः ॥२६९॥
देवांघ्रिनिकटोद्देशे उपविष्टस्तु देशिकः ।
मन्त्रविद्देवबिम्बस्य मन्त्रन्यासं समाचरेत् ॥१७०॥
लेख्यादौ मन्त्रबिम्बे तु प्रासादस्थे द्विजोत्तमाः ! ।
उत्सवं कर्मबिम्बे तु विष्टरे वा प्रकल्प्य च ॥२७१॥
प्रस्वाप्य शयने प्राग्वत्प्रासादं सम्प्रविश्य च ।
मन्त्रन्यासादिकं कुर्याद्वक्ष्यमाणविधानतः ॥२७२॥
सुविस्तृतं तद्विधानं शृणुध्वं मुनिपुङ्गवाः ! ।
पीठे पुष्पांजलिं कृत्वा गन्धयुक्तं च साक्षतम् ॥२७३॥
न्यसेदष्टाक्षरं प्राग्वदामूर्ध्नश्चरणान्तिमम् ।
न्यसेद्धृदादिषण्मन्त्रान् स्थानेषु हृदयादिषु ॥२७४॥
किरीटं शिरसो देशे श्रीवत्सं तु गळादधः ।
वक्षसो वामभागे तु विन्यसेत्तदनन्तरम् ॥२७५॥
कौस्तुभं हृदये न्यस्य वनमालां च कण्ठतः ।

देवस्य दक्षिणे हस्ते चक्रं शंखं तु वामतः ॥२७६॥
वामहस्ते गदाखड्गौ ह्यथ वा दक्षवामयोः ।
क्रमाल्लांछनमन्त्रांस्तु चक्रादीन् लांछनान्न्यसेत् ॥२७७॥
श्रियं दक्षिणभागे तु पुष्टिमुत्तरतो न्यसेत् ।
ऊरुमूले वैनतेयमथेदानीं निबोधत ॥२७८॥
चतुर्भुजस्य देवस्य चक्रादेर्विनिवेशनम् ।
मुख्यदक्षिणहस्तेऽब्जं गदां वामकरे न्यसेत् ॥२७९॥
अपरे दक्षिणे चक्रं शंखं वामकरे परे ।
अन्यान् लांछनमन्त्रांस्तु यथायोगं च विन्यसेत् ॥२८०॥
अन्येषु षड्भुजाद्येषु मुख्यदक्षादितः क्रमात् ।
सर्वान् लांछनमन्त्रांस्तु यथास्थानगतान् न्यसेत् ॥२८१॥
संस्थाप्या भगवन्मूर्तिर्धत्ते चक्रादिलांछनम् ।
हस्ते येन क्रमेणैव लांछनानि न्यसेत्तथा ॥२८२॥
मन्त्रान् किरीटपूर्वांश्च प्राग्वत्सर्वत्र विन्यसेत् ।
पादादिद्वादशांगेषु ततो दामोदरादिकान् ॥२८३॥
तच्छक्तिकांस्तथा मन्त्रान् तद्वद्व्यापकलक्षणान् ।
ऐश्वरेणाथ बीजेन यथावस्थेन भावयेत् ॥२८४॥
पादादि तन्मयेनैव तद्वन्मन्त्रवरेण तु ।
प्राग्वदप्ययुक्त्या तु ह्यन्तर्ज्योतिर्मयात्मना ॥२८५॥
विभुना वाक्स्वरूपेण तदेवाथ परं पदम् ।
सुशांतं सर्वगं बुध्वा निस्तरङ्गमिवोदधिम् ॥२८६॥
विद्यां गदामित्याद्यं यत्पाठयेत्पाञ्चरात्रिकान् ।
देहसान्यासिकं मन्त्रं धारणाख्यमनन्तरम् ॥२८७॥
जीमूतस्येति ऋग्वेदान् नासदासीत्तु पाठयेत् ।
क्रमेणानेन हुत्वा तु पदार्थशतसंख्यया ॥२८८॥
तिलानां च तथाज्यस्य मन्त्रैरेभिर्मुनीश्वराः ! ।

दत्वा पूर्णाहुतिं प्राग्वदुपसंहारलक्षणाम ॥२८९॥
ततस्तत्परमं ब्रह्म ह्युदितं पूर्ववत् स्मरेत् ।
सर्वशक्तिमयेनैव स्वभावेन स्वकेन तु ॥२९०॥
ओजो बलात्मना यद्वद्गन्धो द्रव्यात्मना तु वै ।
बीजं तरुस्वरूपेण समुद्रो बुद्बुदात्मना ॥२९१॥
एवमव्यपदेश्या या शक्तिः स्वे शक्तिदर्पणे ।
स्थितमादाय विश्वेशं स्वातन्त्र्याच्च मुनीश्वराः ! ॥२९२॥
मन्त्ररूपां तनुं धत्ते सम्यगाराधनाय च ।
नानात्वमुपयातस्य प्रसरं तस्य च स्वयम् ॥२९३॥
निष्प्रभत्वं प्रयातस्य चिद्बीजनियमस्य च ।
आविष्कृतस्य भेदे वाप्यमूर्तेन बलीयसा ॥२९४॥
अज्ञानगहनेनैव नित्यानित्यामलात्मना ।
स्मृत्वैवं मूलमन्त्रं तु विंवह्वलग्नगं स्मरेत् ॥२९५॥
षड्छक्तिकरणोपेतं तैस्तद्द्रव्यमयीं तनुम् ।
संस्मरेत्संहरन्तं च प्रागुक्तेनैव वर्त्मना ॥२९६॥
स्वरूपममलं भूयः स्मरेन्मूर्त्यात्मना तु तत् ।
नयन्तं पूर्वविधिनाप्येवं स परमेश्वरः ॥२९७॥
मन्त्रात्मना स्वतन्त्रत्वमुपयातो यदा तदा ।
सहस्रशिरसं देवमिति सर्वांस्तु पाठयेत् ॥२९८॥
पाठयेद्ब्राह्मणान् धातर्यद्धक्षेति च मन्त्रराम् ।
योविश्वतश्चक्षुरिति ध्यातव्यो भवतीति च ॥२९९॥
द्वासुपर्णेति तदनु अतोदेवेति वै ततः ।
ऋङ्मयं पौरुषं सूक्तं ततः परतमानिति ॥३००॥
शाश्वताच्चततः कालकूलेति समुदाहरेत् ।
एषाबुद्धिः सप्तधेति अत्रेदानींच पाठयेत् ॥३०१॥

ततोऽर्चयित्वा मन्त्रेशं शयने विनतासिकम् ।
सांस्पर्शिकैरासनाद्यैर्विविधैरोपचारिकैः ॥३०२॥
हृदयङ्गमसंज्ञैश्च मधुपर्कादिभिर्द्विजाः ! ।
परमान्नादिभिश्चान्नैः पवित्रैः पावनैस्तथा ॥३०३॥
अन्यैश्च विविधैर्भोगैर्यथा चानुक्रमेण तु ।
सर्वं तु सम्प्रदानान्तं कृत्वा पश्चात्तु मण्डले ॥३०४॥
सन्निधीकृत्य सम्पूज्य महता विभवेन तु ।
अग्नौ सन्तर्पयेत्साङ्गं समित्सप्तकपूर्वकम् ॥३०५॥
जुहुयुर्मूर्तिपाश्चापि स्वे स्वे कुण्डे यथाक्रमम् ।
प्रागादि दिक्षु कुण्डेषु क्रमेण समिधः स्मृताः ॥३०६॥
पलाशवृक्षखदिरबिल्वोदुम्बरभूरुहाम् ।
आग्नेयादिविदिक्षु स्युः पिप्पलप्लक्षसम्भवाः ॥३०७॥
न्यग्रोधप्रभवाश्चैव कश्मर्यप्रभवास्तथा ।
पलाशसमिधोन्यत्र भूयसां परिकल्पने ॥३०८॥
उक्ताभावे तु सर्वत्र पालाश्यः समिधो गताः ।
चतस्रो धेनवः स्थाप्याः दक्षिणस्यामुदङ्मुखाः ॥३०९॥
गङ्गा सरस्वती गोदा यमुना रूपधारिणी ।
दुग्धैस्तदीयैश्श्रपणं चरूणामाहुतिस्तथा ॥३१०॥
श्रपयेत्पयसा पूर्वे शालितण्डुलगाढकम् ।
कृसरैर्दक्षिणाग्नौ तु पाश्चात्ये गुडमिश्रितम् ॥३११॥
उदीच्याग्नौ हरिद्रान्नं शुद्धान्नमितराग्निषु ।
प्रत्येकं शतमष्टौ च होमाः स्युः समिदादिभिः ॥३१२॥
तदर्धं वापि पादं वा देशकालानुरूपतः ।
तिलशालियवैर्वेणुहोमबीजान्यनुक्रमात् ॥३१३॥
तिलैरितरकुण्डेषु तैर्वा सर्वत्र कल्पयेत् ।

स्वमूर्तिकुम्भान्मन्त्रेण जलमुद्धृत्य भाजने ॥३१४॥
बिंबमूर्ध्नि क्रमाद्देयं सेचैरेकायनादिकैः ।
चतुर्दर्भकृतेनैव कूर्चेन तदनन्तरम् ॥३१५॥
पलाशखदिराश्वत्थबिल्वशाखाभिरम्बुभिः ।
सिञ्चेयुर्मूर्तिपाः सम्यक् वेदिकाकलशस्थितैः ॥३१६॥
आचार्यः कोणदेशस्थैर्मन्त्रैर्वेतसशाखया ।
सन्तर्पयित्वा तदनु मन्त्रं सपरिवारकम् ॥३१७॥
आज्यादिना प्रभूतेन दत्वा पूर्णाहुतिं ततः ।
बिंबात्मना प्रयातानां क्ष्मादीनामङ्गरूपिणाम् ॥३१८॥
आपादनेपि प्राणार्थं पिण्डीभूतार्थमेव च ।
आरम्भादेव जातानां छिद्राणां शमने तु वै ॥३१९॥
आप्यायनार्थं मन्त्राणां द्रव्यैर्होमं समाचरेत् ।
द्विषट्केणाहुतीनां च एकैकेन चतुर्हृदा ॥३२०॥
आचाङ्घ्रेर्जानुपर्यन्तं स्पृष्ट्वाज्यं होमयेत्पुरा ।
आनाभि जानुदेशाच्च तथैव जुहुयाद्दधि ॥३२१॥
नाभेराकण्ठतःक्षीरमामूर्ध्नः कण्ठतो मधु ।
संमिश्रं जुहुयात्सर्वं स्पृष्ट्वा देहन्तु चाखिलम् ॥३२२॥
दत्वा घृतेन वै पश्चात्पूर्णां मूलेन तत्परम् ।
संस्कृत्य बिम्बवत्पीठं भिन्नं ब्रह्मशिलां तथा ॥३२३॥
प्राणाभिमानदेवं वा यस्य यो विहितस्तु वै ।
वेष्टयित्वाम्बरैश्चित्रैः चक्रमन्त्रेण वै ततः ॥३२४॥
कार्यो ब्रह्मशिलाहोमः शताष्टाधिकसङ्ख्यया ।
गायत्रीभिस्तदर्धं च बह्वृचाद्यैः पृथक् पृथक् ॥३२५॥
अजस्यनाभावित्यादि मन्त्रैरेकायनैस्ततः ।
अध्वादिभूतमूर्तं तु भोग्यं वापि पृथक् स्थितम् ॥३२६॥

देवतानां स्वधिष्ठानं पीठं कृत्वा तु शुद्धिगम् ।
होतव्यं प्रणवेनैव स्वयं व्याहृतिभिस्ततः ॥३२७॥
अपरैर्वैलमन्त्रेण प्रणवान्तेन हावयेत् ।
ततो हवनमन्त्रेण तर्पणीयं तथैव हि ॥३२८॥
स्वनाम्ना प्रणवेनैव स्वाहान्तेनापरैस्तथा ।
संरोधस्तर्पितानां च कार्यः पूर्णान्तमेव हि ॥३२९॥
साम्भसा विष्टरेणैव भावेन सजपेन च ।
सर्वेश्वरस्य देवस्य स्वकीयासु च मूर्तिषु ॥३३०॥
शब्दात्मिकासु मूर्तासु तद्वच्छ्रुतिमयस्य च ।
कृत्वैवं च तदा दिक्षु मूर्तिपान् विनिवेश्य च ॥३३१॥
पार्श्वदेशे तु कुण्डानां तर्पयेत्पायसेन तु ।
दक्षिणां च यथाशक्ति दद्याद्धेमादिकां ततः ॥३३२॥
गृहीत्वा दक्षिणां मन्त्रः प्रीणनीयस्तु तैस्ततः ।
अथ निद्रायमाणं तु देवं स्तुत्वावकुण्ठ्य च ॥३३३॥
अर्चयित्वा नमस्कृत्य तत्र सर्वान् प्रवेशयेत् ।
विप्रानेकायनांश्चापि तथा वै बह्वृचादिकान् ॥३३४॥
स्वस्वशाखोदितान् मन्त्रान् पाठयेत्क्रमयोगतः ।
स्तुतिपाठकपूर्वांश्च नृत्तगीतपरायणान् ॥३३५॥
वीणावेणुमृदङ्गादीनितरांश्च प्रवेशयेत् ।
विदिक्स्थान् प्रणवे जापे मूर्तिपान् विनिवेशयेत् ॥३३६॥
दिक्स्थितान् मूर्तिपान् विप्रान् द्वादशार्णे नियोजयेत् ।
रक्षामुद्रां ततः कृत्वा दर्शयेत्सर्वदिक्ष्वथ ॥३३७॥
शाययेद्दर्भशय्यायां यजमानमुपोषितम् ।
स्थण्डिले स्वप्नसिद्ध्यर्थं प्राक्शिरस्कन्ततो द्विजाः ॥३३८॥
एवं कृत्वाधिवासं तु जागरेण नयेन्निशाम् ।
प्रभातायां तु शर्वर्यां कृत्वा स्नानादिकाः क्रियाः ॥३३९॥

प्रतिष्ठामारभेत्पश्चाद्देशिकः शास्त्रवित्तमः ।
प्रबुद्धं यजमानं तु स्वप्नं पृच्छेच्छुभाशुभम् ॥३४०॥
तत्राशुभोपशान्त्यर्थं तदानीं जुहुयाद्गुरुः ।
शतं सहस्रं साष्टं वा यथाशक्त्यथ वा द्विजाः! ॥३४१॥
मध्वाज्यक्षीरसंमिश्रान् सफलांश्च तिलानपि ।
अस्त्रसम्पुटितेनैव नाम्ना स्वाहान्वितेन तु ॥३४२॥
दोषं जहि जहीत्येवं पदं नामावसानकम् ।
केवलेनाथ वाक्येन सिंहमन्त्रेण होमयेत् ॥३४३॥
एवं दुस्स्वप्नशान्तिंतु कृत्वा स्थापनमाचरेत् ।
प्रासादं दर्भशाखाभिर्बहिरन्तश्च मार्जयेत् ॥३४४॥
विकीर्य साक्षतं पुष्पं गुग्गुलुं धूपयेत्पुनः ।
सहमूर्तिधरैर्विप्राः! शिल्पिभिश्चाथ देशिकः ॥३४५॥
सार्घ्यपुष्पाक्षतकरः प्रासादान्तं व्रजेत्ततः ।
हन्यात्सिद्धार्थकैस्तत्स्थान् विघ्नानस्त्राभिमन्त्रितैः ॥३४६॥
प्राङ्मध्ये विधिनानेन श्वभ्रं वा सांप्रतं खनेत् ।
तदर्थं गर्भगेहं तु सूत्रपातैर्विभाजयेत् ॥३४७॥
प्रासाद एकद्वारे तु गर्भमानं विनिश्चितम् ।
द्वारात्पश्चिमभित्त्यन्तं दक्षिणोत्तरमायतम् ॥३४८॥
सप्तधा विभजेत्सम्यक् पैशाचः प्रथमः स्मृतः ।
द्वितीयो मानुषो भागस्तृतीयो दैवसंज्ञितः ॥३४९॥
ब्राह्मश्चतुर्थो विज्ञेयः क्रमादन्ये त्रयस्तथा ।
दैवमानुषपैशाचा विज्ञेया द्विजसत्तमाः! ॥३५०॥
प्रासादे तु चतुर्द्वारे चतुर्दिक्षु समैः पदैः ।
विभजेत्सप्तधा मध्यो भागः स्याद्ब्राह्मसंज्ञितः ॥३५१॥
दिव्यमानुषपैशाचाः क्रमात्तद्बहिरगेण तु ।

चतुर्द्वारेऽत्रभवने ब्राह्माख्ये मध्यमे पदे ॥३५२॥
चतुर्दिग्वीक्षमाणस्य स्थापनं चतुरात्मनः ।
प्रासाद एकद्वारे तु देवं संस्थापयेत् द्विजाः! ॥३५३॥
ब्राह्मदैविकभागाभ्यां दैवमानुषयोस्तु वा ।
ब्राह्मे वा दैविके वाथ तस्मिन् दिव्याश्रिते तु वा ॥३५४॥
मानुषाश्रितदैवेन फलभेदवशात्तु वै ।
ब्राह्मभागेतु मोक्षः स्याद्दिव्यं स्थानाभिवृद्धिकृत् ॥३५५॥
भोगमोक्षफलावाप्तिर्ब्राह्मे दिव्यसमाश्रिते ।
दिव्यभागफलावाप्तिर्मानुषाश्रितदैवके ॥३५६॥
दैवमानुषभागाच्च त्वैहिकामुष्मिकं फलम् ।
विबुधब्रह्मभागाच्च सैहिकं तु गुणाष्टकम् ॥३५७॥
अग्रदेशेथ बिम्बस्य वेदिर्भागद्वयोपरि ।
आराधनार्थतो विप्राः! स्थापनीया शिलान्विता ॥३५८॥
पीठोपर्यथ वा देवं यन्त्वाराधयते सदा ।
मध्ये रत्नोपलं पीठे न्यस्त्वोर्ध्वे स्थापयेत्तु तम् ॥३५९॥
देवीसमन्वितं यत्र स्थापनं भवति द्विजाः! ।
मूलबिम्बस्य पार्श्वेतु पीठदेशं विसृज्य च ॥३६०॥
सपीठानां तु देवीनां स्थापनं तु समाचरेत् ।
एका सव्ये दक्षिणे वा स्थाप्या द्वे दक्षवामयोः॥३६१॥
चतस्रस्तु क्रमेणैव स्थाप्या दक्षिणवामयोः ।
प्रमादादबुद्धिपूर्वाद्वा तत्तत्स्थानविपर्ययम् ॥३६२॥
न कुर्याद्राजराष्ट्रादेर्हितैषी देशिकोत्तमः ।
भिन्नप्रेक्षावशान्मध्ये सति भूयः समाचरेत् ॥३६३॥
क्षालितेस्त्वाम्बुना लिप्ते हृदा वै चन्दनादिना ।
श्वभ्रेषो घटरुद्धानां मन्त्राणां च निरो[illegible] ॥३६४॥

पूर्वोक्तेन विधानेन धिया स्वं स्वेयने तथा ।
कृत्वार्चनं यथोद्दिष्टं पूर्णान्तं तत्र विन्यसेत् ॥३६५॥
बाहुल्येन तु षट् पंच चतुर्गोळकसंमिताम् ।
पीठाद्विनिर्गतां किञ्चिद्भूतये सुस्थिरां शिलाम् ॥३६६॥
ग्रस्तां पीठेन मुक्त्यर्थं नवरन्ध्रकृतां पुरा ।
स्वमन्त्रेण तु तत्रापि प्रतिष्ठासीति पाठयेत् ॥३६७॥
प्रागादौ 'प्रभवेनाथ पंचकं पंचकं न्यसेत् ।
शिलावटेषु द्रव्याणां तत्र वज्रं च हाटकम् ॥३६८॥
हरितालमुशीरं च व्रीहयो दक्षिणेत्वथ ।
इन्द्रनीलमयश्चैव कासीसं चन्दनं तिलम् ॥३६९॥
मुक्ताफलं च रजतं पारदश्चाप्यदिक्तथा ।
सहोशीराश्च वै मुद्गाः पद्मरागमथोत्तरे ॥३७०॥
कांस्यं सराजपाषाणं राजेन्द्रं चणकैः सह ।
विंशकं विन्यसेन्मध्ये पूर्वमेव ततो बहिः ॥३७१॥
विदिक्ष्वप्ययययोगेन त्वेवमन्यत् पृथक् पृथक् ।
एवं वैडूर्यपूर्वन्तु चक्रांकं चाभ्रकं तथा ॥३७२॥
षाष्टिकां त्वीशदिग्वायोः पुष्परागो हरीतिका ।
गैरिकं शारिकान्नैव मसूराण्यथ यातु दिक् ॥३७३॥
महानीलञ्च वज्रञ्च तथा पाषाणमाक्षिकम् ।
यवान्सागरुकांश्चैव आग्नेय्यां स्फटिकं तथा ॥३७४॥
ताम्रं मनश्शिलाचैव गोधूमाश्शङ्खपुष्पिकाः ।
मध्ये सर्वाणि तदनु ततो गर्तगणं तु तत् ॥३७५॥
लेपैराच्छादितं कृत्वा साङ्गं मन्त्रं पदे पदे ।
पूजयित्वा यजुर्वेदांश्चमपट्कांश्च पाठयेत् ॥३७६॥
तदूर्ध्वे विन्यसेत्पीठं तच्छ्वभ्रे विनिवेश्यच ।

अष्टलोहमयं चक्रं तदूर्ध्वे तु महामते ॥३७७॥
द्वादशाख्या द्विशेषोत्थादाधारो यस्य यः स्वकः ।
हैमन्तदूर्ध्वे कमलं तज्जं वा ताम्रमेव वा ॥३७८॥
यथाक्रमस्थितं ह्येतत्पञ्चकं चतुरात्मनि ।
न्यसेदनन्तं चक्रस्य मीनकूर्मौ तु तस्य वै ॥३७९॥
कूर्मानन्तौ तु मीनस्य मीनानन्तौ तु तस्य च ।
सर्वस्य विहितं पद्मं तस्यानन्तं तु विन्यसेत् ॥३८०॥
लक्ष्म्यादीनां च शक्तीनां चक्रस्थापनकर्मणि ।
न्यस्य पूर्णान्तिकं कृत्वा कर्माण्यत्र च तर्पणम् ॥३८१॥
मण्टपे तु खगेशस्य एवमेव समाचरेत् ।
सह मूर्तिधरः प्राग्वत्कार्या दर्भोदकक्रिया ॥३८२॥
चतुर्गुणितसूत्रेण वेष्टयेद्देवमन्दिरम् ।
छादयेन्नववस्त्रेण तथा वै दर्भमालया ॥३८३॥
ततस्तु मूर्तिपैः सार्धं प्रविशेद्यागमण्टपम् ।
प्रतीक्षेल्लग्नकालं तु यावत्कालं न याति च ॥३८४॥
तावद्विनोदैर्होमैश्च हास्यैः पाठैश्च संक्षिपेत् ।
प्राप्ते लग्नोदये विप्राः! शयनस्थं प्रबोधयेत् ॥३८५॥
अर्घ्यालभनमाल्याद्यैरर्चयित्वा त्विमं पठेत् ।
मन्त्रात्मन् रूपमात्मीयमाग्नेयमुपसंहर ॥३८६॥
समाश्रयस्व सौम्यत्वं स्थित्यर्थं परमेश्वर ।
नमस्तेऽस्तु हृषीकेश! उत्तिष्ठ परमेश्वर! ॥३८७॥
मदनुग्रहहेत्वर्थं पीठभूमिं समाश्रय ।
उद्धृत्य हृदयेनाथ त्यक्तनिद्रं च मन्त्रपम् ॥३८८॥
उत्थाप्य मूर्तिमन्त्रेण सह मूर्तिधरैर्बलात् ।
तथा तच्छिरसो देशे चक्राधारस्थितं घटम् ॥३८९॥

तदष्टदिक्स्थितांश्चापि कुम्भांस्तन्मङ्गलैः सह ।
उत्थाप्य मूर्तिपाग्रैस्तु वाहयन् देशिकोऽग्रतः ॥३९०॥
यायात्प्रक्षिपमाणस्तु रत्नांश्च विविधान् बहून् ।
नानाविधैस्तु कुसुमैर्लाजाद्यान् मिश्रितान् बहून् ॥३९१॥
प्रतिमामुद्वहन्तो ये मूर्तिधारास्त्वनन्तरम् ।
अन्ये यथा न गच्छेयुरन्तराचार्यविम्बयोः ॥३९२॥
अष्टकुम्भधराश्चान्ये ये च मङ्गलपाठकाः ।
परितस्तेपि गच्छेयुः पठन्तः शाकुनं तथा ॥३९३॥
वाम्यतो यजमानस्तु कुशपाणिः प्रणामवान् ।
तेषां वै पृष्ठतस्त्वन्ये गच्छेयुः परिवारकाः ॥३९४॥
तोरणेन च निष्क्रम्य प्रदक्षिणचतुष्टयम् ।
कुर्यात्प्रासादपीठस्य द्वाराग्रे सन्निरोध्य च ॥३९५॥
पाद्यार्घ्याचमनं दत्वा हृन्मन्त्रेण प्रवेशयेत् ।
शाखाद्यमस्पृशन् तं च पाठयेत्तद्विदस्ततः ॥३९६॥
चतुश्चक्रेति तदनु पुरमेकादशेति च ।
वर्माभिमन्त्रितेनाथ दुकूलेन सितेन च ॥३९७॥
पादाम्बुरुहनाळं प्राक् शिखामन्त्रेण वेष्टयेत् ।
अग्नीषोमौ समीकृत्य प्रणवाद्यन्तकेन तु ॥३९८॥
मूलमन्त्रेण पीठोर्ध्वे बिंबं संस्थापयेत स्थिरम् ।
द्वारमध्यं न सन्त्याज्यं देवस्थापनकर्मणि ॥३९९॥
न ततश्चाग्रतः स्थाप्यं न पार्श्वे न च पृष्ठतः ।
नामतो मारुतं पश्चात् सन्त्यजेद्देशिकोत्तमः ॥४००॥
प्रतिष्ठालिङ्गशब्दौ च द्वौ मन्त्रौ पाठयेत्क्रमात् ।
शान्तं ब्रह्ममयं रूपं स्वकं समवलम्ब्य च ॥४०१॥
यत्रापि केवले ब्राह्मे स्थापनं समुदीरितम् ।

तत्रापि वामतः किंचिद्दिव्यभागं समाश्रयेत् ॥४०२॥
यतो हितार्थं सर्वेषां निर्गतष्षड्गुणात्मना ।
अतो ब्रह्मपदादीषद्देवभागे समानयेत् ॥४०३॥
मोक्षादिफलसिद्धीनां प्राप्तये ह्यविचारतः ।
करस्थमथ मोक्तव्यं कौतुकं हृदयेन तु ॥४०४॥
सर्वाङ्गमर्घ्यमन्त्रेण दत्वा मूलमनुस्मरेत् ।
हृदास्त्रपरिजप्तेन वज्रलेपेन वै ततः ॥४०५॥
बिंबपीठशिलानां चाप्येकत्वेनाचरेत् स्थितम् ।
ततस्तु नेत्रकुम्भस्थैस्तथा कुम्भाष्टकस्थितैः ॥४०६॥
तोयैः कूर्चाग्रसंलग्नैर्बिंबं संप्रोक्ष्य मन्त्रतः ।
तत्तत्कुम्भगतान् मन्त्रान् बिंबेन सह योजयेत् ॥४०७॥
बालबिंबगतां चापि शक्तिं मूले न्यसेत्तदा ।
मूलबिंबे मुनिश्रेष्ठाः मृदादिद्रव्यनिर्मिते ॥४०८॥
कर्मार्चायां विष्टरे वा दर्भमञ्जरिजे द्विजाः ! ।
प्रबोधनंच वै कर्म तथा प्रादक्षिणक्रियाम् ॥४०९॥
प्रासादे संप्रवेशं च कृत्वान्यत्सर्वमाचरेत् ।
मूलबिंबे क्रमेणैव देशिकेन्द्रः समाहितः ॥४०१॥
मूलमन्त्रं ततो ध्यात्वा संशांतब्रह्मलक्षणम् ।
आधारादिध्वजाग्रान्तं व्याप्तं तेनाखिलं स्मरेत् ॥४११॥
इति सामान्यसन्धानं प्राक्कृत्वा तद्विशिष्यते ।
स्थूलसूक्ष्मपरत्वेन स्थूलं षोढा शिलांतगम् ॥४१२॥
पिण्डिकायां तथा सूक्ष्मं तत्परं बिम्बविग्रहे ।
विन्यासं पीठमूलेथ देवतानां समाचरेत् ॥४१३॥
भवोपकरणीयानामेतासां मुनिपुङ्गवाः ।
विन्यासं मन्त्रबिम्बे तु न कदाचित्समाचरेत् ॥४१४॥

पीठोर्ध्वे तु मुनिश्रेष्ठाः! प्रतिष्ठैवं विनैव तु ।
न्यसेद्बिम्बवद्देवांस्तु ह्युपर्युपरि पूर्ववत् ॥४१५॥
घटोद्देशात्समारभ्य परमर्चागतं ततः ।
एवं हि सर्वदेवानां विनिवेशवशात्तु वै ॥४१६॥
चिन्तामणीमयो न्यासः कृतो भवति सिद्धिदः ।
मन्त्रन्यासं ततःकुर्याद्बिम्बाङ्गेषु यथाविधि ॥४१७॥
सृष्टिसंस्थितिसंहारन्यासं कुर्यात् त्रयं विभोः ।
स्थितेपि च तथासीने शयाने यानगेपि च ॥४१८॥
एतेष्वपि च सर्वेषु कुर्यान्न्यासत्रयं द्विजाः ! ।
यद्वा स्थिते स्थितिन्यासमासीने सृष्टिसंज्ञितम् ॥४१९॥
शयाने संहृतिन्यासमाचरेत् द्विजसत्तमाः! ।
अङ्गमन्त्रस्थितिं कुर्यात् स्थानेषु हृदयादिषु ॥४२०॥
अन्यानि भूषणादीनि विन्यस्य गरुडान्तिमम् ।
ततः सम्पूजयेत्तत्र लययागेन चाखिलम् ॥४२१॥
पीठस्थं भोगयागेन मन्त्रचक्रं यजेत्पुनः ।
स्वनाम्नि स्वामिशब्दं तु समारोप्य परं तु वा ॥४२२॥
हरिकेशवपूर्वं तु ततस्तारसमन्वितम् ।
प्रब्रूयुर्मूर्तिपाद्या वै सुप्रतिष्ठितमस्त्विति ॥४२३॥
पुष्पाक्षताञ्जलिं पूर्णं क्षिपमाणाश्च सर्वतः ।
सर्वे वदेयुस्तत्रस्थाः सुप्रतिष्ठितमस्त्विति ॥४२४॥
आत्वाहार्षेति सह वै प्रतिष्ठासीति पाठयेत्।
विश्वस्य मित्रमित्यादि मन्त्रमेकायना द्विजाः! ॥४२५॥
ओं नमोस्तु नमश्चान्तो ऋग्वेदाद्यैस्तु तैः सह ।
ओं नमो ब्रह्मणेभीक्ष्णं जितन्तेत्येवमेव हि ॥४२६॥
जयशब्दसमोपेतं स्तोत्रं श्रोतृमनोहरम् ।

देशिकैः सह सर्वैस्तु वाग्भिरुच्चाभिरुच्चरेत् ॥४२७॥
जीवभूतेन चैतेन विभुना मन्त्रमूर्तिना ।
प्रतिष्ठितेन विप्रेंद्रा वित्त सर्वं प्रतिष्ठितम् ॥४२८॥
एवं कृत्वाधिवासादि मूलबिंबेन वै सह ।
स्थापयेत्कर्मबिंबादीन् मूलबिंबाग्रतो द्विजाः! ॥४२९॥
लक्ष्म्यादींश्च यथाशक्ति स्थापयेत्तु विधानतः ।
अथ मण्टपमध्येतु देवदेवस्य सम्मुखम् ॥४३०॥
स्थितेपि तन्मुहूर्तांशे स्थापनीयश्च पक्षिराट् ।
स्नातोनुलिप्तो मन्त्रेण स्वेन यः संस्कृतः पुरा ॥४३१॥
ह्यशक्त्या सह बिंबेन यस्माद्भिन्नेपु वस्तुषु ।
बिंबसन्निकटस्थेपु अथवान्यत्र सत्तमाः! ॥४३२॥
तत्कालमङ्गभावत्वं व्रजमानेषु सर्वदा ।
हवनान्तं च निश्शेषं ध्यानार्चनपुरस्सरम् ॥४३३॥
स्वयमेवानुरूपेण कर्म सामान्यतां व्रजेत् ।
तस्मात्तद्यागभवनादुत्थाप्यादाय बिंबवत् ॥४३४॥
देवं प्रदक्षिणीकृत्य प्राग्वत्संस्थापनापदे ।
एकस्मिन् मध्यरन्ध्रे तु वज्राद्यं पञ्चकं न्यसेत् ॥४३५॥
एक एव तदूर्ध्वेत आधारो य उदीरितः ।
प्राग्वन्निवेशनीयश्च तत्पीठोर्ध्वेथ भावनम् ॥४३६॥
भावनीयं शरीरे च शेषं विज्ञप्तिलक्षणम् ।
पाठयेद्ब्राह्मणांस्तद्वत्सुपर्णोसीति मन्त्रराट् ॥४३७॥
तमेवास्त्रार्चितं कृत्वा त्वथप्राक् शाङ्करे ततः ।
सोमेशानान्तरे वापि अङ्गणे वापि तत्पदे ॥४३८॥
अथ वा मूर्तिपीठस्थं भवनाभ्यन्तरेपि च ।
स्वगोक्तेन विधानेन विष्वक्सेनं निवेश्य च ॥४३९॥

द्वारस्थानखिलान् देवान् तथा चावरणस्थितान् ।
पूर्वोदितान् क्रमेणैव स्थापयेद्देशिकोत्तमः ॥४४०॥
सम्प्रोक्ष्य कुम्भतोयेन यायात्पाकगृहं ततः ।
चुल्लीष्वग्निं प्रतिष्ठाप्य अग्निमीळेतिपाठयेत् ॥४४१॥
तत्र वै पायसादीनि हवींषि विविधानि च ।
पाचयेच्च ततो विप्रा यायाद्देवनिकेतनम् ॥४४२॥
कलशैः पृष्ठभागस्थैः स्नापनीयस्ततो विभुः ।
सह मूर्तिधरैः सर्वैः यथा चानुक्रमेण तु ॥४४३॥
सहाघमर्षणेनैव गायत्र्यावर्तितेन तु ।
प्राग्वृङ्मयस्तु तदनु चतुर्धावर्तितैः स्वयम् ॥४४४॥
हृदाद्यावर्तितैः षड्भिर्यजुर्ज्ञस्तेन सेचयेत् ।
भूयः स्वयं तथा कुम्भैः सामवित् स्नापयेत्ततः ॥४४५॥
षड्भिरन्यैः स्वयं पश्चात्तेनैवाथर्वणस्ततः ।
पवित्रावर्तितैरेवं कलशैरन्तरान्तरा ॥४४६॥
सह चैकायनीयैस्तु स्नपनीयमनन्तरम् ।
चतुर्मूर्तिमयैर्मन्त्रैर्बहुशः परिभावितैः ॥४४७॥
स्नापयेत्कलशेनाथ शेषमादाय वै घटम् ।
तच्छतावर्तितं कृत्वा समूलेनाद्यमूर्तिना ॥४४८॥
सार्ध्यं वै देवदेवस्य मूर्ध्नि चोत्कीर्य पाठयेत् ।
जितन्त इति वै सर्वांस्ततश्चाप्योदकेन तु ॥४४९॥
प्रासादं शोधयित्वा तु गत्वा वै कुम्भसन्निधिम् ।
तत्र सम्पूज्य देवेशं पूर्वोक्तेन क्रमेण तु ॥४५०॥
मण्डले पूजयित्वाथ प्रयायाद्बिम्बसन्निधिम् ।
तत्र सम्पूजयेद्देवं स्नानवर्जं विशेषतः ॥४५१॥
सांस्पर्शिकैरासनाद्यैर्विविधैरौपचारिकैः ।

हृदयङ्गमसंज्ञैश्च पायसाद्यैश्चतुर्विधैः ॥४५२॥
अन्नैः प्रभूतैरन्यैस्तु भक्ष्यभोज्यादिभिस्तथा ।
सम्प्रदानावसानान्तं क्रमात्कृत्वा द्विजोत्तमाः ! ॥४५३॥
सदक्षिणं विशेषेण गुरौ मूर्तिधरेषु च ।
समित्सप्तकपूर्वं तु वह्नौ सन्तर्प्य वै क्रमात् ॥४५४॥
महानसेपि नित्याग्निं प्रतिष्ठाप्य यथाविधि ।
हुत्वा नित्योक्तमार्गेण कृत्वा होमसमर्पणम् ॥४५५॥
देवं प्रणम्य विज्ञाप्य कर्मणा मनसा गिरा ।
त्वमर्चान्तर्गतो देव मया यच्चानलादिषु ॥४५६॥
नीतोसि चाभिमुख्यं तु क्षन्तव्यं तन्ममाच्युत ।
एवं प्रणम्य विज्ञाप्य क्रान्त्वा निष्क्रम्य संमुखम् ॥४५७॥
आमूलात् ध्वजपर्यन्तं प्रासादो यः पुराकृतः ।
देवं प्रदक्षिणीकृत्य अष्टाङ्गेन प्रणम्य च ॥४५८॥
गृहीत्वा चार्ध्यपात्रं तु यायाद्देवगृहाद्बहिः ।
स्नानादिना समभ्यर्च्य वाहनं भगवन्मयम् ॥४५९॥
पूर्वोदितानां द्वास्थानां दिक्पतीनां तथैव च ।
पूर्ववत्तु बलिं दद्यात्क्रमेण च ततः परम् ॥४६०॥
प्रभूतानां च भूतानां बलिदानं समाचरेत् ।
गृह्णन्तु भगवद्भक्ता भूताः प्रासादबाह्यगाः ॥४६१॥
जलमन्त्रपवित्राश्च तेषामनुचराश्च ये ।
एवं क्रमाद्बलिं दत्वा सर्वेषां पाठयेत्ततः ॥४६२॥
ऋग्विग्धिरण्यगर्भेति या देवास्त्विति वै क्रमात् ।
सामज्ञांश्चान्नसामानि सहधेनुमयानि च ॥४६३॥
सर्वेष्वावरणेष्वेवं बल्यर्थं तु प्रदक्षिणम् ।
कृत्वा तु देशिकः पश्चादाचम्य भवनं विशेत् ॥४६४॥

न्यूनातिरेकशान्त्यर्थं पूर्णान्तं जुहुयाच्छतम् ।
हृन्मन्त्रेण तु साङ्गेण दद्यात्पूर्णाहुतिं ततः ॥४६५॥
एवं तद्दिनमारभ्य कुर्याद्दिनचतुष्टयम् ।
पूजनं देवदेवस्य चतुःस्थानेषु च क्रमात् ॥४६६॥
प्राप्ते ऽहनि चतुर्थे तु अपनीय स्रगादिकम् ।
कलशान् मण्डलाद्बिंबात्ततो यागगृहेऽर्चनम् ॥४६७॥
होमावसानं मन्त्रस्य कृत्वा पूर्वं यथा पुरा ।
आचम्य च बलिं दत्वा यायाद्देवगृहं ततः ॥४६८॥
तत्रासनादिकैरिष्ट्वा स्नानान्तैः पूर्ववत्प्रभुम् ।
अपनीताम्बरैः कुम्भैर्धान्यपीठोपरि स्थितैः ॥४६९॥
हृन्मन्त्रपूजितैर्भूयः सलिलेन सुपूरितैः ।
सह मूर्तिधरैः प्राग्वदन्तरान्तरयोगतः ॥४७०॥
कार्यं वै स्नानकर्माथ विधिदृष्टेन कर्मणा ।
निरोदकेथप्रासादे पुनराराध्य पूर्ववत् ॥४७१॥
भोगैरासनपूर्वैस्तु सम्प्रदानान्तमच्युतम् ।
मुद्रां बध्वा जपेन्मन्त्रं स्तुत्वा क्षान्त्वा बहिर्व्रजेत् ॥४७२॥
शतं सहस्रं साष्टं वा जुहुयान्मन्त्रराट् स्वयम् ।
साङ्गं सपरिवारं च संहितोच्चारयुक्तितः ॥४७३॥
मूर्तिपैः प्रणवाद्याभिर्गायत्रीभिः शतं शतम् ।
एकायनैरभिज्ञाभिस्स्वकीयाभिस्तु तत्समम् ॥४७४॥
प्रदापयेत्ततः पूर्णामृग्वेदाद्यांस्तु मूर्तिपान् ।
एकायनांस्तदन्ते तु क्रमाच्चान् पाठयेत्ततः ॥४७५॥
पूर्णात्पूर्णेति वै मन्त्रमाद्यात्पूर्णमसीति यत् ।
सनमस्केन मन्त्रेण स्वयं साङ्गेन निक्षिपेत् ॥४७६॥
बलिभिस्तु ततः सर्वान् भूतपूर्वांस्तु तर्पयेत् ।
प्रविश्याचम्य तदनु क्षान्त्वा देवन्तु कुम्भगम् ॥४७७॥

पूर्ववन्मण्डलस्थं तु कुण्डस्थं तदनन्तरम् ।
विष्वक्सेनं यजेत्प्राग्वदिष्टशिष्टैस्तु वै क्रमात् ॥४७८॥
भूषयेद्गुरुपूर्वांस्तु मूर्तिपान् कटकादिकैः ।
गुरोर्वा गुरुपुत्रस्य यागद्रव्यं निवेदयेत् ॥४७९॥
सिद्धिमूर्त्योरभीप्सार्थं स्नायादवभृथेन च ।
इत्येतत्साधकस्योक्तं मन्त्राराधनकांक्षिणः ॥४८०॥
मन्त्रमूर्तिप्रतिष्ठानं यत्रस्थस्सिद्धिमाप्नुयात् ।
स्थापने यजमानस्य फलं वक्ष्ये समासतः ॥४८१॥
आ देवालयभूभागात् ध्वजान्ताद्वापि मण्टपात ।
सर्वोपकरणोपेतात्सर्वेष्वावरणेषु च ॥४८२॥
समन्तात्परमाणूनां सर्वेषां द्विजसत्तमाः! ।
यावती जायते संख्या तावत्कर्ता समावसेत् ॥४८३॥
भोगभुग्विष्णुलोके च यात्यन्ते परमं पदम् ।
कर्ता वै ब्राह्मणो विप्रः सर्वविद्याधिपो भवेत् ॥४८४॥
क्षत्रियो यजमानस्तु सर्वदेशाधिपो भवेत् ।
वैश्यस्तु यजमानः स्याद्धनधान्यसमृद्धिमान् ॥४८५॥
शूद्रस्तु यजमानः स्यान्मोदते बन्धुभिः सह ।
सज्जन्मना च ज्ञानेन एवमेव भवेत्तु सः ॥४८६॥
पुत्रार्थी पुत्रमाप्नोति राज्यार्थी राज्यमाप्नुयात् ।
अकामानां तु भक्तानां भक्तिरव्यभिचारिणी ॥४८७॥
यच्चापि शाश्वतं ज्ञानं भवेत्तद्धर्मणा सह ।
स्वयं कृतानां बिंबानां स्थापनं संप्रकीर्तितम् ॥४८८॥
एवं बिंबं प्रतिष्ठाप्य प्रासादे स्वगृहे तु वा ।
ततः प्रभृति कालाच्च पूजयेत्प्रतिवासरम् ॥४८९॥
जीर्णोद्धारविधिर्यावत्तावत्कालं विधानतः ।
प्रमादादबुद्धिपूर्वाद्वा पूजालोपं न कारयेत् ॥४९०॥

१— स्त्रियोपि च– पा–

एवं श्रियादिदेवीनां चक्रादीनां तथैव च।
सर्वेषां विष्णुभक्तानां प्रतिष्ठां च समाचरेत् ॥४९१॥
प्रथमावरणादौ वा मण्टपे वांकणादिके।
लक्ष्मीप्रतिष्ठया सर्वा समृद्धिर्जायते नृणाम् ॥४९२॥
चक्रसंस्थापनात् स्थानसंरक्षा भवति ध्रुवम्।
विष्णुभक्तप्रतिष्ठानादैहिकामुष्मिकं फलम् ॥ ४९३ ॥
तस्मात्कार्यं श्रियादीनां स्थापनं देवमन्दिरे।
देवप्रतिष्ठाकाले वा ह्यन्यकालेपि वा पृथक् ॥४९४॥
सह संस्थापने त्वेषां न पृथक्त्वङ्कुरादिकम्।
न यागगेहनिर्माणं परिवारोक्तवद्भवेत् ॥४९५॥
सर्वं तत्रापि कर्तव्यं शृणुध्वं मुनिसत्तमाः ! ।
सिद्धार्थकादिभिः षड्भिः स्नानं कौतुकबन्धनम् ॥४९६॥
जलाधिवसनं चैव सूक्ष्मसूक्ष्मादिपञ्चसु।
स्नानेष्वन्यतमस्नानं नयनोन्मीलनं तथा ॥४९७॥
शय्यायामधिवासं च तत्तन्मन्त्राधिकस्य च।
तत्तल्लाञ्छनजालस्य न्यसनञ्च यथाविधि ॥४९८॥
तत्तन्मन्त्रैस्तथा होमं कुर्यात्कुण्डे पृथक्कृते।
तत्तत्पीठादिसंस्कारं पीठसंस्थापनं तथा ॥४९९॥
वज्रादिपञ्चकन्यासं प्राग्वत्संस्थापनं पदे।
तदाधारनिवेशं च यस्य यः समुदीरितः ॥५००॥
बिंबसंस्थापनं चैव पीठोर्ध्वे तु यथाविधि।
तत्तत्स्थापनकाले तु तत्तन्मन्त्रप्रपाठनम् ॥५०१॥
एतत्सर्वं समभ्यूह्य कुर्याद्देशिकसत्तमः।
पृथक्संस्थापने कुर्यात्सर्वं कर्म यथाविधि ॥५०२॥
तत्तन्मन्त्रैस्तथा तत्तत्परिवार्चनैः सह।

चक्रसंस्थापने कश्चिद्विशेषः श्रूयतां द्विजाः ! ॥५०३॥
अमूर्तं द्वादशारन्तु अष्टारं षडरन्तु वा ।
चक्रं संस्थापयेत्तत्र प्रासादशिखरोपरि ॥५०४॥
मूर्तमङ्कणदेशे तु षोडशाष्टभुजं तु वा ।
तस्य स्थापनकाले तु तस्य संज्ञामनुं जपेत् ॥५०५॥
विद्यां गदामित्याद्यं यत्पाठयेत्तद्विदो जनान् ।
चमूपच्छ्येन इति च प्रतेविष्णो इति त्वृचौ ॥५०६॥
पाठयेद्बह्वृचान् पश्चाच्छाकुनं सूक्तमेव च ।
धृतोर्ध्वपुण्ड्रः कृतचक्रेति मन्त्रं ततः परम् ॥५०७॥
पवित्रन्ते विततमिति मन्त्रान्यजुर्मयान् ।
आरोहेति[1] च सामज्ञान् पवित्रन्तेग्निरित्यपि ॥५०८॥
एभिर्वयमुरुक्रमस्येत्याथर्वणिकान् द्विजान् ।
एवं संस्थाप्य विधिवन्नवभिः कलशैस्ततः ॥५०९॥
स्नापयेद्ब्रह्मसूक्तस्थैर्मन्त्रैरष्टभिरेव च ।
विश्वस्य वशिनं देवमिति प्राक्स्थापितेन तु ॥५१०॥
बहिरावरणेनास्तीत्यग्निदिक्संस्थितेन तु ।
यन्नाभिपद्मादभवदिति याम्यस्थितेन तु ॥५११॥
धृतोर्ध्वपुण्ड्रइति च यातुधानगतेन तु ।
दक्षिणे तु भुजे विप्र इति पश्चिमगेन वै ॥५१२॥
विष्णुनात्तमश्नन्तीति वायुदिक्संस्थितेन च ।
पुंप्रधानेश्वरो विष्णुरिति सोमगतेन वै ॥५१३॥
इमां महोपनिषदमितीशानगतेन्न तु ।
मन्त्रैरेतैः समस्तैस्तु मध्यकुम्भेन सेचयेत् ॥५१४॥
प्रासादाग्रस्थिते चक्रे प्रोक्षणं तु समाचरेत् ।

---

१— क्षुरोहरेति— पा—

महोपनिषदन्तस्थानष्टौ मन्त्रान् पुरोदितान् ॥५१५॥
यद्वा पुरुषसूक्तं तु सर्वशान्त्यै ततो जपेत् ।
अत्रानुक्तं तु सकलं पूर्वोक्तं तु समाचरेत् ॥५१६॥
इत्थं हि वीरलक्ष्म्यादि प्रतिष्ठा च प्रकीर्तिता ।
भूषोपकरणानां तु प्रतिष्ठा तूच्यतेऽधुना ॥५१७॥
तदर्थमिह सर्वेषां शृणुध्वं देवताक्रमम् ।
किरीटे कौस्तुभे चैव श्रीवत्सवनमालयोः ॥५१८॥
ता एव देवतास्तासां रूपं प्रागेव कीर्तितम् ।
प्रभायां तु प्रभा देवी पीठेनन्तादयस्तथा ॥५१९॥
पादुकायां वैनतेयो घण्टायां तु सरस्वती ।
शिविकायां तथा याने हंसकेसरिणोस्तथा ॥५२०॥
गजाश्वयो रथेचैव गरुत्मानेव देवता ।
शेषपक्षीशयोश्चैव तथा चन्द्रार्कबिम्बयोः ॥५२१॥
वायुसूनौ ध्वजाः साक्षाच्छेषाद्या एव देवताः ।
एवं ज्ञात्वा पुरा तत्तद्देवताः क्रमशो द्विजाः! ॥५२२॥
तत्तत्संस्थापनं कुर्यात् तत्तन्मन्त्रेण देशिकः ।
अङ्कुरारोपणं कृत्वा सद्योङ्कुरमथापि वा ॥५२३॥
सिद्धार्थकादिभिः षड्भिः स्नाप्य कौतुकबन्धनम् ।
कृत्वा छायाधिवसनं जलाधिवसनं तु वा ॥५२४॥
कृत्वा मूर्तस्य नयने समुन्मील्य यथाविधि ।
कुम्भैः संस्नाप्य विधिवत्कृत्वा शय्याधिवासनम्॥५२५॥
कुम्भं संस्थाप्य तत्रेष्ट्वा तत्तद्देवांस्तदङ्गके ।
तत्तन्मन्त्रादिकान्यस्य तत्तन्मन्त्रैः समर्चयेत् ॥५२६॥
कुण्डेषु वा स्थण्डिलेषु हुनेदेकत्र वा द्विजाः! ।
ततः शुभमुहूर्ते तु प्रोक्षयेत्कुम्भयोयतः ॥५२७॥

आचार्यदक्षिणादीनि यथाशक्ति प्रदापयेत् ।
एवं सामान्यतः प्रोक्तः सर्वेषां स्थापनक्रमः ॥५२८॥
रथस्य स्थापने ज्ञेयो विशेषो मन्दिरोक्तवत् ।
अन्यत्सर्वोपकरणं छत्रचामरपूर्वकम् ॥५२९॥
भूषणानि च दिव्यानि धूपपात्रादिकानि च ।
अर्घ्यादिसर्वपात्राणि वाद्यानि विविधानि च ॥५३०॥
क्षाळनार्हाणि प्रक्षाळ्य कृत्वा पुण्याहवाचनम् ।
सम्प्रोक्ष्य पञ्चगव्येन दहनाप्यायनादिकैः ॥५३१॥
संस्कृत्य देवदेवस्य पूजनादौ नियोजयेत् ।
नानारत्नप्रभाढ्यानि लांछनान्यङ्गदानि च ॥५३२॥
निर्मितानि सुवर्णाद्यैः प्रभोः संयोजयन्ति ये ।
ते धूतकल्मषाः सर्वे देहमासाद्य निष्कळम् ॥५३३॥
सम्यक् ज्ञानेन युज्यन्ते भावं नायान्ति येचन ।
आत्मनश्चोपकाराय सर्वदुःखनिवृत्तये ॥५३४॥
अङ्गुष्ठाग्राच्च गुल्फान्तमाजान्वंसावधीहवा ।
मणिमुक्ताप्रवाळाढ्यं कवचं कांचनादिकम् ॥५३५॥
यः क्षिपत्यतिभक्त्या वै स्वशक्त्या चागतेच्युते ।
स याति परमं स्थानं सर्वत्र पशुबान्धवाः ॥५३६॥
लग्नं यद्भगवन् मूर्तावङ्गदं नू पुरादिकम् ।
वियोजयति यो मोहात्तस्य वीचौ स्थिता स्थितिः ॥५३७॥
यः पंचकालसक्तानां विप्राणामधिकारिणाम् ।
पंचकालविदां चैव भक्तानां सिद्धिकाङ्क्षिणाम् ॥५३८॥
अथ योच्छिन्नशाखानां नारायणरतात्मनाम् ।
तपस्विनां व्रतीनां वा स्नातकब्रह्मचारिणाम् ॥५३९॥
भक्तानामथवान्येषामर्चनानिरतात्मनाम् ।
प्रीतये परमेशाय कृत्वा सम्यक्प्रयच्छति ॥५४०॥

शालाद्यायतनोपेतमश्मपकेष्टकान्वितम् ।
ग्राम्यैर्धान्यैस्तथारण्यैः पूर्णं सद्वृत्तिसङ्कुलम् ॥५४१॥
वणिक्कुडुम्बभृतकरक्षापालैः समन्वितम् ।
सोनन्तं फलमाप्नोति कालमाचन्द्रतारकम् ॥५४२॥
संस्थितिं शाश्वते लोके प्राप्नुयादक्षयं यशः ।
भोगोपयोगिनीं भद्रां रम्यां पूर्वोक्तलक्षणाम् ॥५४३॥
यागनिष्पत्तये कुर्याद्योग्रतः पीठसन्निधेः ।
बहिरावरणार्थं वा कर्मिणां ब्रह्मयोजिनाम् ॥॥५४४॥
ऋषिदेवपितृभ्यश्च मुच्यते स ऋणत्रयात् ।
मध्यतो गरुडाक्रान्तं सचक्राम्बुरुहाङ्कितम् ॥५४५॥
तुर्यांश्रमथवा वृत्तं कुण्डवत्पदवीयुतम् ।
वलिपीठं बहिः कुर्याद्दाता यस्त्वच्युतालये ॥५४६॥
स याति चाच्युतं स्थानं विमानैः सूर्यवर्चसैः ।
यस्तु प्राग्ग्राममारामं सम्प्रयच्छति वै विभोः ॥५४७॥
नानापुष्पफलोपेतं वापीद्रुमसमाकुलम् ।
साब्जतोयाशयोपेतं मारखड्गसमन्वितम् ॥५४८॥
स नन्दनवने भोगान् भुक्त्वा यात्यच्युतालयम् ।
क्षोणिं यः सस्यसम्पूर्णां युक्तां सद्गन्धशालिना ॥५४९॥
केदारं जलपातैस्तु परिच्छन्नं समन्ततः ।
स गच्छति जगद्योनेः कालमासाद्य शाश्वतम् ॥५५०॥
स यायात्सुसितद्वीपं तत्रास्ते भगवानिव ।
स्नानोपभोगमन्त्रार्थसवृषेन्द्रन्तु गोगणम् ॥५५१॥
समर्चयित्वा योर्चां वै वैष्णवीं प्रतिपादयेत् ।
सोचिरान्मुक्तदोषस्तु विष्णुलोकं प्रयाति च ॥५५२॥
गजं रथं वराश्वं च दीपस्थालीं सुलक्षणाम् ।

व्यजनं चामरं छत्रं वादित्रं गणिकागणम् ॥५५३॥
शुभवस्त्राणि नेत्राणि दिव्यान्याभरणानि च ।
वितानं वैजयन्तीं च चित्रपत्रलतागणम् ॥५५४॥
सुखराशुपघण्टां च धूपस्थालीं सुलक्षणाम् ।
भृङ्गारं दर्पणं तोयकुम्भं गन्धोपलं महत् ॥५५५॥
पूर्वोद्दिष्टानि चान्यानि धान्यानि विविधानि च ।
यो ददाति हरेर्भक्त्या स तल्लोकमवाप्नुयात् ॥५५६॥
ईक्षमाणं विभोर्वक्त्रं वहन्तं दीपभाजनम् ।
महान्तं चाथवा दीपं यन्त्रं कूर्मादिरूपधृक् ॥५५७॥
शरयज्ञासनस्थं च चित्तसम्पुटभूषितम् ।
सच्छास्त्रपीठं विविधं श्रद्धया यो मुनीश्वराः! ॥५५८॥
ददाति देवदेवस्य परं स्थानं प्रयाति सः ।
पुरस्कृत्य जगद्योनिं यद्यद्भक्त्या प्रदीयते ॥५५९॥
तदाराधनसक्तानां तत्तदक्षय्यतामियात् ।
इत्येवं बिंबपूर्वाणां प्रतिष्ठाविधिरीरितः ॥५६०॥
इतोन्यच्छ्रोतुमिच्छा चेत्कथ्यतां मुनिपुङ्गवाः ! ।

इति श्रीपाञ्चरात्रे ईश्वरसंहितायाम्

प्रतिष्ठाविधानं नाम

अष्टादशोऽध्यायः ।

## अथ एकानविंशोऽध्यायः ।

मुनयः ।

भगवन्नारदमुने! जीर्णोद्धारविधिं तथा ।
बिंबस्यास्पृश्यसंस्पर्शे महोत्पातादिसम्भवे ॥१॥

नित्यपूजादिलोपे च प्रायश्चित्तं तु कृत्स्नशः ।
श्रोतुमिच्छामहे योगिन् तत्सर्वं सम्प्रकाशय ॥२॥

नारदः ।

शृणुतेहं प्रवक्ष्यामि जीर्णोद्धारादिकं द्विजाः ।
यत्कृत्वा देशिकादीनां चतुर्णां सुखमेधते ॥३॥
मनुष्यनिर्मिते स्थाने वक्ष्ये जीर्णविधिं पुरा ।
धातुमृच्छैलदारूत्थो वस्त्रादिष्ववतारितः ॥४॥
यो यो भगवदाकारस्तस्य तस्य मुनीश्वराः ! ।
उपाङ्गभङ्गे सन्धानं कुर्यादङ्गे महाङ्गके ॥५॥
तद्विंबन्तु परित्यज्य सृजेद्बिंबान्तरं पुनः ।
तत्र तावत्प्रवक्ष्यामि महाङ्गोपाङ्गकक्रमम् ॥६॥
शिरो वक्त्रं तथा कर्णौ पाणी वक्षस्तथोदरम् ।
नाभिमेढ्रपदं चैव महाङ्गानि द्विजोत्तमाः ! ॥७॥
चक्षुः श्रोत्रं तथा नासा तालुर्हस्तपदांगुलिः ।
केशश्मश्रु च रोमाणि नखदन्तास्तथैवहि ॥८॥
चक्राद्यायुधसंघश्च वनमालादिभूषणम् ।
उपाङ्गानि मुनिश्रेष्ठा मूर्द्धिवे शृणुताधिना ॥९॥
प्रधानशूलं यत्तत्र महाङ्गमिति कथ्यते ।
वक्षोदण्डः कटीदण्डो बाहुकूर्परकोष्ठकम् ॥१०॥
जंघोरुजानु चान्यानि उपाङ्गानि मुनीश्वराः ! ।
महांगभङ्गे जातेऽपि विम्बस्य मुनिपुङ्गवाः! ॥११॥
सति सन्धानयोग्यत्वे न कदाचित्परित्यजेत् ।
तस्य त्यागो विनाशश्च ह्युपर्युपरि बाधकृत् ॥१२॥
विम्बादीनां तु बृहतां परित्यागो न युज्यते ।
वक्त्रभङ्गे तु विम्बस्य सर्वथा त्यागमाचरेत् ॥१३॥

परित्यक्तानि बिम्बानि धातुद्रव्योद्भवं विना ।
जलाशये ह्यगाधे वा समुद्रे विधिना क्षिपेत् ॥१४॥
भूमौ वा निखनेद्विप्रा देशकालानुसारतः ।
उत्कृष्टानां हेमतारताम्रजानां विशेषतः ॥१५॥
नोचितः स्यात्परित्यागः तस्मात्सन्धानमाचरेत् ।
प्रयत्नेनाप्ययोग्यत्वे परित्यागं समाचरेत् ॥१६॥

परित्यक्तं तु वा द्रव्यं द्रवीकृत्य यथा विधि ।
तद्द्रव्येण यथापूर्वं विंबंकर्म समापयेत् ॥१७॥
अथवा हीनताम्रोत्थमारकूटमयं तु यत् ।
सन्धानकरणायोग्यं तद्द्वयं तु परित्यजेत् ॥१८॥
परित्यक्तं तु तद्बिम्बं क्षिपेत्पूर्वोक्तवर्त्मना ।
ततो विंबान्तरं कुर्याद्राजतं वा सुवर्णजम् ॥१९॥
उत्कृष्टतत्तज्जातियद्रव्यजं वा मुनीश्वराः! ।
कर्मविंबेषु सर्वेषु ह्येवमेव समाचरेत् ॥२०॥

भग्नांगस्य तु सन्धानप्रकारं शृणुत द्विजाः ! ।
लोहाश्मदारुबिम्बानां भग्नांगं लोहपट्टकैः ॥२१॥
बन्धयेदथ वा लोहविंबांगं भग्नमेव तु ।
स्वर्णादिना द्रावितेन योज्यं यत्नाद्विजोत्तमाः! ॥२२॥
चित्रमृण्मयविंबानां भग्नांगं मुनिसत्तमाः! ।
तत्तत्सजातिद्रव्येण सन्धेयं यत्नगौरवात् ॥२३॥
सर्वेषां भग्नमङ्गं तु नष्टं चेत् तत् तथा पुनः ।
तत्तत्सजातिद्रव्येण कृत्वा योज्यं प्रयत्नतः ॥२४॥
महाङ्गे रत्नविंबस्य भग्नेऽपि मुनिसत्तमाः ! ।
सन्धेयमेव न त्याज्यं स्वयंव्यक्ताश्मविंबवत् ॥२५॥
सर्वत्राङ्गसमाधाने पुनः स्पृष्टौ तु वा द्विजाः ! ।

जीर्णविम्बगतां शक्तिं कुम्भे त्वावाह्य देशिकः ॥२६॥
कुर्वन्नभ्यर्चनं तत्र विम्बसन्धानमाचरेत् ।
मासादर्वाक्समाधाने कुम्भे शक्तिं समर्चयेत् ॥२७॥
तदूर्ध्वं द्वादशाब्दान्तं समाधानविळम्बने ।
कृत्वा बालगृहं तत्र बालबिंबं यथाविधि ॥२८॥
संस्थाप्य तत्र तच्छक्तिं समावाह्य समर्चयेत् ।
अङ्गमात्रसमाधाने कुर्यात्संप्रोक्षणं द्विजाः ! ॥२९॥
बिंबान्तरस्य करणे प्रतिष्ठां पुनराचरेत् ।
मूलबिंबांगसन्धाने कुर्याद्बालगृहादिकम् ॥३०॥
कर्मबिंबांगभङ्गे तु तत्तद्बिम्बगतं विभुम् ।
मूलबिम्बे समुद्वास्य सन्धानादि समाचरेत् ॥३१॥
बालालये तु प्रथमे जीर्णोद्धाराभिधेऽन्तिमे ।
प्रायश्चित्तं प्रवक्ष्यामि शृणुध्वं मुनिपुङ्गवाः ! ॥३२॥
अतीते प्रार्थिते काले कर्त्रा प्रासादवेरयोः ।
निर्माणे स्नपनं कुर्यादुत्तमं शास्त्रचोदितम् ॥३३॥
पश्चादभ्यर्थयेत्कालं वाञ्छितं तत्समापने ।
अकृत्वैवं गते पश्चात्काले द्वादशवार्षिके ॥३४॥
पुनः प्रतिष्ठां कुर्वीत मूले बालालये तु वा ।
विम्बे चोरादिभिर्नष्टे बालगेहे प्रमादतः ॥३५॥
तदेवापाद्य तामर्चां प्रतिष्ठाप्य यथाविधि ।
उत्तमस्नपनं कृत्वा शान्तिहोमं समाचरेत् ॥३६॥
चोरैरपहृतं विम्बं पुनःप्राप्तं यदि द्विजाः ! ।
पुनः प्रतिष्ठां कुर्वीत नयनोन्मीलनं विना ॥३७॥
स्वस्थानाच्चलिते तस्मिन् हेतुना येन केन चित् ।
यथापूर्वं प्रतिष्ठाप्य स्थापयेत् पुरुषोत्तमम् ॥३८॥

सर्वं बालगृहे कार्यं नित्यनैमित्तिकादिकम् ।
पूर्वं संस्थापितं बिम्बं लक्षणैरुज्झितं यदि ॥३९॥
जीर्णोद्धारस्य काले तु कुर्याल्लक्षणसंयुतम् ।
जीर्णाख्यस्य विधेः पूर्वं न कदाचित्समाचरेत् ॥४०॥
रौप्यजे ताम्रजे वापि आरकूटमयेऽपि वा ।
प्रणीते पूज्यमाने तु कर्मबिम्बादिके सति ॥४१॥
कालान्तरेण जीर्णेऽस्मिन् उत्कृष्टसमुपस्थिते ।
निकृष्टं सन्त्यजेद्विद्वान् न दोषस्तत्र विद्यते ॥४२॥
लोहपाषाणमृत्काष्ठैः स्थापिते मूलकौतुके ।
न सम्पाद्यमतोन्येन कदाचिन्मुख्यवस्तुना ॥४३॥
पुरावज्जीर्णतां यातं कर्तव्यं मूलकौतुकम् ।
प्राक्स्थितं बहुबेरं वा एकबेरमथापि वा ॥४४॥
जीर्णोद्धारेपि कर्तव्यं पूर्ववन्मुनिपुङ्गवाः ! ।
व्यत्यासं नैवकुर्वीत बहुबेरैकबेरयोः ॥४५॥
लक्ष्म्यादिकान्तराहिते बहुबेरपुरस्थिते ।
जीर्णोद्धारे तु देवीभ्यां कल्पयेत्सहसा विना ॥४६॥
सर्वदा बहुबेरत्वहानिर्न स्याद्विपर्ययात् ।
शयनं वासनं यानं स्थानं वा प्राग्यथास्थितम् ॥४७॥
तथैव स्यात्पुनस्सृष्टावन्यथा वेच्छयाभवेत् ।
जीर्णे देवे पुनस्सृष्टे देव्यो यदि यथा स्थिताः ॥४८॥
देवीभिस्ताभिरेवायं योज्यो देवो न चान्यथा ।
एवं मानुषबिंबस्य जीर्णोद्धारः प्रकीर्तितः ॥४९॥
स्वयं व्यक्ते तथा दिव्ये सैद्धे चार्षायमानुषे ।
जीर्णोद्धारविधिं वक्ष्ये शृणुध्वं मुनिसत्तमाः ! ॥५०॥
स्वयंव्यक्तादिबिम्बानां महाङ्गे बाह्युपाङ्गके ।

भग्ने सन्धानमेव स्यात्त्यागस्तु न कदाचन ॥५१॥
सन्धानायोग्यमपि तन्न त्याज्यं मुनिसत्तमाः! ।
सालिग्रामशिलाबिंबं भिन्नं भग्नं बृहत क्षतम् ॥५२॥
अल्पक्षतं च सौवर्णैः पट्टैर्दृढतरं यथा ।
बन्धयेच्च तथैवैषु स्वयंव्यक्तादिकेष्वपि ॥५३॥
शिलामयेषु बिम्बेषु भिन्नं भग्नं च योजयेत् ।
सुवर्णनिर्मितैः पट्टैर्यथा दृढतरं भवेत् ॥५४॥
यद्वा तदङ्गं हैमेन कृत्वा सम्यङ्नियोजयेत् ।
दारुजे लोहजेष्वेवं स्वयंव्यक्तादिकेष्वपि ॥५५॥
भेदेप्यङ्गे समाधिः स्यात्स्वयंव्यक्ताश्मबिंबवत् ।
रत्नजेऽपि समाधानमेवमेव समाचरेत् ॥५६॥
मृण्मये मूलबिंबे तु जीर्णे वाथ जलादिभिः ।
हीनाङ्गे वा तथा कुर्यात्सन्धानन्तु प्रयत्नतः ॥५७॥
एवं वर्णविहीनेऽपि सन्धानन्तु समाचरेत् ।
मृत्तिकाशूलरज्वादीन्न कदाचित्परित्यजेत् ॥५८॥
तथैव चित्रबिंबांगं गळितं गन्धभावितैः ।
सितरक्तादिकै रागैः पावनैरस्त्रमन्त्रितैः ॥५९॥
चित्रयेत्तु यथापूर्वं शिल्पिभिः शास्त्रकोविदैः ।
अत्रायं हि विशेषः स्यात्स्वयंव्यक्तादिषु द्विजाः! ॥६०॥
न बालगेहबिम्बाद्यं कुर्यात्तत्रैव पूर्ववत् ।
पूजायां वर्तमानायां समाधानादिकं चरेत ॥६१॥
सन्धानांते तु विधिवत्कुर्यात्संप्रोक्षणादिकम् ।
देवादिपूजिते वापि स्वयंव्यक्ते तु कौतुके ॥६२॥
मृद्दारुजे तु सञ्जीर्णे क्रिमिवह्निजलादिभिः ।
तत्तद्बालगृहं कृत्वा पूज्यमाने तु पूर्ववत् ॥६३॥

क्रमादर्चान्तरं कृत्वा स्थापयेच्च यथाविधि ।
वालविम्बे तु जीर्णेऽत्र कुर्यादेवं पुनःपुनः ॥६४॥
स्वयंव्यक्तादिविम्बानि यादृशानि भवन्ति हि ।
लक्षणैश्च प्रमाणैश्च युक्तानि रहितानि वा ॥६५॥
उत्कृष्टलोहजातानि अपकृष्टोत्थितानि वा ।
तादृशानि भवन्त्येव न कुर्यादन्यथा पुनः ॥६६॥
न लक्षणान्तरं कुर्यान्न प्रमाणान्तरं तथा ।
न तु द्रव्यान्तरं चैव न तु कुर्यात्क्रियान्तरम् ॥६७॥
मन्त्रान्तरं न कुर्वीत सर्वं कुर्याद्यथापुरम् ।
कुर्याच्चेल्लक्षणादीनां विपर्यासं मुनीश्वराः! ॥६८॥
राज्ञो राष्ट्रस्य सर्वेषां प्रत्यवायो महान् भवेत् ।
तस्मात्पौराणिकस्थाने न विपर्यासमाचरेत् ॥६९॥
लक्षणादिष्वपि तथा न कुर्यादन्यथा पुनः ।
येषु व्यक्तेषु चिह्नानि नाभिव्यक्तानि वै द्विजाः ॥७०
तान्यपि स्वानि चिह्नानि ललाटे वांसपट्टके ।
पृष्ठे वाप्यङ्गपट्टे वा पाणिपादतलेषु वा ॥७१॥
मूर्ध्नि वा दधते तस्मात्तत्र तत्र निरीक्षयेत् ।
तस्मादलक्षणा व्यक्तिर्विद्यते न कदाचन ॥७२॥
स्वयंव्यक्तादिके चैव मानुषे च मुनीश्वराः! ।
शिलामयादिविम्बानां नासाद्यवयवेषु चं ॥७३॥
एकद्वित्रियवा मात्रं न्यूनता सम्भवेद्यदि ।
पूर्ववत्कारयेत्तत्तीक्ष्णशस्त्रेण यत्नतः ॥७४॥
ततः संप्रोक्षणं कुर्याद्देवस्य मुनिपुङ्गवाः! ।
एवं पीठादिभङ्गेऽपि सन्धानं सम्यगाचरेत् ॥७५॥
प्रतिमा चैव तत्पीठं प्रासादे गर्भमन्दिरम् ।

विग्रहं देवदेवस्य चतुष्टयमिदं समम् ॥७६॥
समाधिश्च तथा शान्तिः कार्या तत्र सदा समा।
प्रभाभङ्गो यदिभवेद्वन्धयेल्लोहपट्टकैः ॥७७॥
पीठभङ्गे तु तं पीठं सर्वदा सन्त्यजेद्वुधः।
किञ्चिन्यूनं तु तं पीठं वन्धयेल्लोहपट्टकैः ॥७८॥
प्राक्तनार्चाङ्गभङ्गादिदोषैर्या चातिदूषिता।
निर्दोषादासनात्तस्मात्तामुत्थाप्य विसृज्य च ॥७९॥
पूर्ववन्निर्मितां पीठे स्थापयेत्तु यथाविधि।
पीठभङ्गे तथान्यस्मिन् कल्पिते योजयेद्दृढम् ॥८०॥
प्रतिमापीठयोरष्टवन्धविश्लेषणेपि च।
अष्टवन्धं पुनः कृत्वा सम्प्रोक्षणमथाचरेत् ॥८१॥
स्वयंव्यक्तादिके वापि मानुषे वा मुनीश्वराः!।
विम्बे चोराद्यपहृते तत्तद्रव्येण पूर्ववत् ॥८२॥
निर्माय लक्षणोपेतं प्रतिष्ठाप्य तदैव तु।
पूर्ववत्पूजयेन्मन्त्री विम्बं सर्वत्र सर्वदा ॥८३॥
द्रव्यान्तरेण वा कुर्यात् देशिको यागसिद्धये।
चोरैरपहृतं विम्बं पुनः प्राप्तं यदि द्विजाः! ॥८४॥
कृत्वा सम्प्रोक्षणं पूज्यं मानुषे तु द्विजोत्तमाः!।
पुनः प्रतिष्ठां कुर्वीत नयनोन्मीलनं विना ॥८५॥
मूलविम्बेऽग्निना दग्धे मानुषे वाप्यमानुषे।
सहस्रकलशस्नानमाचर्तव्यं विधानतः ॥८६॥
वह्निना कर्मविम्बादौ वैवर्ण्यं समुपागते।
तत्तद्विम्बेषु कुर्वीत स्नपनं चोत्तमं क्रमात् ॥८७॥
वह्निदाहादिना मूलबिम्बे वा कर्मकौतुके।
भिन्नाङ्गे सति सन्धेयं प्राग्वत्तच्छिल्पिसत्तमैः ॥८८॥

सन्धानान्तं तु सर्वत्र कुर्यात्सम्प्रोक्षणं विभोः ।
प्रासादादेः ततो विप्रा जीर्णोद्धारश्च वक्ष्यते ॥८९॥
तत्र पूर्वं मानुषस्य विधानं शृणुत द्विजाः ! ।
भग्ने विमानैकदेशे शिखाकुम्भादिकेपि वा ॥९०॥
विमानसंस्थितान् देवान् मूलबेरस्य पीठके ।
समावाह्यार्चयन् भग्नं प्रासादावयवं दृढम् ॥९१॥
सन्धाय पश्चाद्देवस्य सप्रासादस्य सत्तमाः ! ।
सम्प्रोक्षणादिकं कुर्याच्छास्त्रदृष्टेन वर्त्मना॥९२॥
विमाने सर्वतो भग्ने बालस्थानं प्रकल्प्य च ।
प्रासादान्तर्गता यास्तु देवतास्ताः मुनीश्वराः ! ॥९३॥
बालबिम्बस्य पीठस्थाः कृत्वा पूज्यास्तु पूर्ववत् ।
तथैव बालबिम्बेतु नित्यनैमित्तिकादिकम् ॥९४॥
पवित्रारोहणांतं च सर्वं कर्म समाचरेत् ।
प्रासादं तु पुनः कृत्वा प्रतिष्ठाप्य यथा विधि ॥९५॥
सम्प्रोक्षणादिकं कुर्यात् देवस्य मुनिपुङ्गवाः ! ।
एवं हि मण्टपे साले गोपुरे माळिकादिके ॥९६॥
जीर्णे तत्रस्थिताः सर्वा नीत्वान्यत्र तु देवताः ।
यथापूर्वं नवं कृत्वा प्रतिष्ठाप्य विधानतः ॥९७॥
उत्तमस्नपनंकुर्यात् तस्य दोपस्य शान्तये ।
प्रासादादि पुराक्लृप्तं लक्षणैरुज्झितं यदि ॥९८॥
जीर्णोद्धारप्रकरणे कुर्यात् तल्लक्षणान्वितम् ।
प्रासादादौ पुराक्लृप्ते मृण्मये चैष्टकेऽपिवा ॥९९॥
जीर्णे पुनः समुद्धारे शिलाभिर्वा प्रकल्पयेत् ।
स्वयंव्यक्तादिके धाम्नि जीर्णोद्धारस्तु वक्ष्यते ॥१००॥
प्रासादादेरेकदेशभङ्गश्चेत् तत्र संस्थिताः ।
देवास्त्वन्यत्र नोद्वास्याः पूजयन्नेव तत्र ताः ॥१०१॥

भग्नैकदेशं सन्धाय कुर्यात्सम्प्रोक्षणं द्विजाः ! ।
प्रासादे सर्वतो भग्ने प्रासादस्थास्तु देवताः ॥१०२॥
मूलबिम्बस्य पीठे तु समावाह्य समर्चयन् ।
प्राक्तनैरेवेष्टकाद्यैस्तत्सजातीयवस्तुभिः ॥१०३॥
नूतनैश्चापि मिळितैः प्रासादं कल्पयेत्पुनः ।
पूर्वं विमानं यद्द्रव्यं यादृग्लक्षणसंयुतम् ॥१०४॥
तादृगेव पुनः कुर्यान्न कुर्यादन्यथा पुनः ।
पुनः कृतं विमानाद्यं प्रतिष्ठाप्य यथाविधि ॥१०५॥
संप्रोक्षणादिकं कुर्याद्बिम्बस्य मुनिपुङ्गवाः ! ।
स्वयंव्यक्तादिके वापि देवसिद्धादिकल्पिते ॥१०६॥
बिम्बे विमाने प्राकारे गोपुरे द्वारि मण्टपे ।
पीठे वा पचनावासे कोशागारादिकेऽपि वा ॥१०७॥
लक्षणैरन्विते वापि लक्षणैरुज्झितेऽपि वा ।
जीर्णे पुनस्तथा कुर्यात्पूर्वरूपानुसारतः ॥१०८॥
अन्यथा करणे विप्राः ! प्रत्यवायो महान् भवेत् ।
स्वयंव्यक्तादिके धाम्नि तथा देवादिकल्पिते ॥१०९॥
चिरकालवशात्किञ्चिच्छैथिल्यं समुपागते ।
निर्वाहकाणां भक्तानां शास्त्रज्ञानामनुज्ञया ॥११०॥
बाह्ये वाभ्यन्तरे धाम्नो रक्षणार्थं शिलादिभिः ।
निपुणैः शिल्पिभिः कार्यो भित्तिबन्धः समन्ततः ॥१११॥
विमाने वह्निदग्धे तु मानुषे चाप्यमानुषे ।
तद्दोषशान्तये कुर्याद्धमगस्नपनं विभोः ॥११२॥
वह्निदाहादिना भग्ने प्रासादे पूर्ववत्तु तत् ।
सन्धाय शिल्पनिपुणैः कुर्यात्संप्रोक्षणादिकम् ॥११३॥
क्ष्माभेदजलवेगाद्यैः पतितं भगवद्गृहम् ।

प्राग्बिम्बसहितं तस्माद्देशादन्यत्र कल्पयेत् ॥११४॥
नष्टे सबिम्बे सदने दिव्याद्यै प्राग्वदाचरेत् ।
चोरनद्यादिवेगाद्यैरतिनष्टे तु मानुषे ॥११५॥
बिम्बे पश्चात्प्रकुर्वीत पूर्ववद्वान्यथा तु वा ।
न शून्यमूलबिम्बत्वाद्बालार्चावाहनादिकम् ॥११६॥
न कुर्याद्देशिकेन्द्रस्तु पूर्ववत् स्थाप्य पूजयेत् ।
एवं हि सर्वदेवानां परव्यूहादिरूपिणाम् ॥११७॥
विष्वक्सेनगणेशादि परिवारगणस्य च ।
कल्पानां गोपुराद्येषु विभवव्यूहरूपिणाम् ॥११८॥
सान्निध्यातिशयाद्येषु पूजितानां दिनं प्रति ।
जीर्णोद्धारविधिः प्रोक्तः सर्वेषां मुनिपुङ्गवाः ! ॥११९॥
तत्तत्सान्निध्यानुगुणं प्रतिष्ठादिकमाचरेत् ।
प्रायश्चित्तं समभ्यूह्य साधकस्तु समाचरेत् ॥१२०॥
बिम्बादीनां च धामादेरङ्गभङ्गादिके सति ।
आचार्यस्त्वनुतापार्तः स्वमन्त्रमयुतं जपेत् ॥१२१॥
तदारभ्य ब्रह्मचर्यव्रतस्थः साधकैः सह ।
यावद्बिम्बसमापत्ति जपेन्मन्त्रमतन्द्रितः ॥१२२॥
चतुस्स्थानार्चनं कुर्यात् सर्वदोषप्रशान्तये ।
त्रिरात्रं वा सप्तरात्रं पात्रेभ्यो दानमाचरेत् ॥१२३॥
गोभूहेमादिकानां तु यथाशक्ति मुनीश्वराः ! ।
ब्राह्मणान् भोजयेन्नित्यं शतं वापि सहस्रकम् ॥१२४॥
यावद्बिम्बस्य सन्धानं विशेषेणार्चयेद्विभुम् ।
सन्धानान्ते तु देवस्य कृत्वा संप्रोक्षणादिकम् ॥१२५॥
शान्तिहोमं तथा दानं ब्राह्मणानां च भोजनम् ।
कारयेद्यजमानस्तु आचार्यं दक्षिणादिभिः ॥१२६॥
तोषयेच्छक्त्यनुगुणं तेन तुष्यति केशवः ।

अपूर्वकल्पनाज्जीर्णसमुद्धारेऽधिकं फलम् ॥१२७॥
लभते यजमानस्तु नात्र कार्या विचारणा ।
इत्येवं मुनिशार्दूला जीर्णोद्धारो मयोदितः ॥१२८॥
ततस्तु बिम्बस्यास्पृश्यस्पर्शादौ मुनिपुङ्गवाः ! ।
प्रायश्चित्तं प्रवक्ष्यामि शृणुध्वमवधानतः ॥१२९॥
अज्ञातो देशिकश्चैवं चण्डालाद्युपघातितः ।
केशास्थ्याद्यशुचिस्पृष्टश्चियं गत्वा स्नानाप्लुतः ॥१३०॥
स्पृशेच्चेद्भगवद्बिम्बं स्नापयेन्नवभिर्घटैः ।
आचरेच्छान्तिहोमं च शतवारं जपेन्मनुम् ॥१३१॥
एतेषां गर्भगेहान्तः प्रवेशश्चेत्तदा विभुम् ।
संस्नाप्य पञ्चभिर्गन्धैः शान्तिहोमादिकं चरेत् १३२॥
अदीक्षितैरन्यतन्त्रदीक्षितैर्वैदिकेतरैः ।
स्पृष्टे बिम्बे तदा कुर्यात्स्नपनं त्वधमाधमम् ॥१३३॥
शान्तिहोमं जपं चापि तद्दोषस्य प्रशान्तये ।
एतेषां गर्भगेहान्तः प्रवेशे नवभिर्घटैः ॥१३४॥
संस्नाप्य देवदेवेशं शान्तिहोमादिकं चरेत् ।
स्मार्तैर्वानुपनीतैर्वा तथा वैखानसैर्द्विजैः ॥१३५॥
अवैष्णवैर्वा संस्पृष्टे बिम्बे त्वधममध्यमम् ।
स्नपनं विधिवत्कृत्वा शान्तिहोमादिकं चरेत् ॥१३६॥
एतैः प्रविष्टे गेहान्तरधमाधमगागतः ।
संस्नाप्य विधिवद्देवं शान्तिहोमं समाचरेत् ॥१३७॥
पतितः पातकी वापि कुष्ठापस्माररोगवान् ।
काणो वान्धश्च मूको वा बधिरो वाङ्गहीनकः ॥१३८॥
परस्त्रीगमनासक्तः कुण्डो वा गोळकोऽपि वा ।
रजस्वलान्त्यजाद्यैश्च संस्पृष्टो गर्दभादिभिः ॥१३९॥

स्पृशेच्चेद्भगवद्बिम्बमधमोत्तममार्गतः ।
संस्नाप्य देवं विधिवच्छान्तिहोमं तथाचरेत् ॥१४०॥
एतैः प्रविष्टे धामान्तः कुर्यादधममध्यमम् ।
स्नपनं देवदेवस्य शान्तिहोमं तथाचरेत् ॥१४१॥
क्षत्रैर्वैश्यैस्तथा शूद्रैः तत्तत्स्वामिस्तु वा द्विजाः ! ॥
बिम्बे स्पृष्टे क्रमात्कुर्यात्स्नपनं त्वधमोत्तमम् ॥१४२॥
मध्यमाधमसंज्ञं च तथा मध्यममध्यमम् ।
एतैर्गर्भगृहाभ्यन्तःप्रवेशे मुनिपुङ्गवाः ! ॥१४३॥
अधमाधमसंज्ञं च तथा ह्यधममध्यमम् ।
अधमोत्तमसंज्ञं च क्रमात्स्नपनमाचरेत् ॥१४४॥
सर्वत्र शान्तिहोमं च सहस्रं जपमाचरेत् ।
अनुलोमजसंस्पर्शे बिम्बस्य स्नपनम्भवेत् ॥१४५॥
मध्यमोत्तमसंज्ञं तु प्रविष्टे तैर्गृहान्तरे ।
विमाने वापि संस्पृष्टे स्नपनं मध्यमाधमम् ॥१४६॥
प्रतिलोमजसंस्पृष्टे बिम्बे तूत्तममध्यमम् ।
स्नपनं त्वाचरेत्तेषां प्रवेशे गर्भमन्दिरे ॥१४७॥
प्रासादे वापि तैः स्पृष्टे स्नपनं तूत्तमाधमम् ।
कुर्यात्सर्वत्र होमं च जपं प्राग्वन्मुनीश्वराः ! ॥१४८॥
चोरभूतो ब्राह्मणो वा क्षत्रियो वैश्य एव वा ।
शूद्रोनुलोमजो वापि प्रतिलोमज एव वा ॥१४९॥
स्पृशेच्चेद्देवबिम्बं तु क्रमेण स्नपनम्भवेत् ।
मध्यमाधमसंज्ञं च तथा मध्यममध्यमम् ॥१५०॥
मध्यमोत्तमसंज्ञं च ह्युत्तमाधमसंज्ञकम् ।
तन्मध्यमं च स्नपनं तथास्यादुत्तमोत्तमम् ॥१५१॥
एतैस्तु गर्भगेहान्तः प्रवेशे ह्यधमोत्तमम् ।

मध्यगाधमपूर्वं च त्रितयं चोत्तमाधमम् ॥१५२॥
तन्मध्यमं च स्नपनं ह्याचरेत्क्रमशो द्विजाः ! ।
अज्ञातजातिभिश्चोरैः बिम्बसंस्पर्शने कृते ॥१५३॥
सहस्रकलशैर्देवं स्नापयेद्विधिपूर्वकम् ।
तैस्तु गर्भगृहाभ्यन्तःप्रवेशे तूत्तमोत्तमम् ॥१५४॥
स्नपनं स्यात्तु सर्वत्र शान्तिहोमो जपस्तथा ।
आशौचवद्भिर्मनुजैः महापातकिभिर्नरैः ॥१५५॥
चण्डालैः सूतिकोदक्याम्लेच्छैर्वा पुल्कसादिभिः ।
संस्पृष्टे भगवद्बिम्बे गोघृतेनाभिषिच्य तम् ॥१५६॥
संप्रोक्षणं च विधिवत्कृत्वा शान्तिं समाचरेत् ।
गोदानादींस्तथा कुर्याद्ब्राह्मणांश्चापि भोजयेत् ॥१५७॥
चित्रमृण्मयबिम्बं तु नवीकृत्य यथाविधि ।
पुनः प्रतिष्ठां कुर्वीत स्वयंव्यक्तादिकेषु च ॥१५८॥
चित्रबिम्बादिकं चापि न नवीकृत्य पूर्ववत् ।
संप्रोक्षणादिकं कुर्यात् तत्तु तेनैव शुध्यति ॥१५९॥
एतैराशौचवत्पूर्वैः प्रवेशे गर्भमन्दिरे ।
विमानस्पर्शने चापि ह्यालयस्थानि सर्वतः ॥१६०॥
मृत्पात्राणि परित्यज्य लोहपात्राणि शोधयेत् ।
आलयं चापि संशोध्य मार्जनोल्लेपनादिभिः ॥१६१॥
पञ्चगव्येन संप्रोक्ष्य सर्वत्र मुनिपुङ्गवाः ! ।
उत्तमोत्तममार्गेण स्नापयेद्विधिवत्प्रभुम् ॥१६२॥
तैरग्रमण्टपाभ्यन्तः प्रथमावरणेऽपि वा ।
प्रवेशे धामसंशुद्धिं प्राग्वत्कृत्वा मुनीश्वराः ! ॥१६३॥
अधमोत्तममार्गेण स्नापयेत्पुरुषोत्तमम् ।
द्वितीयावृतिमारभ्य रथ्यावरणपश्चिमम् ॥१६४॥
तैरन्तस्संप्रविष्टे तु कृत्वाऽऽलयविशोधनम् ।

अधमाधममार्गेण देवं संस्नापयेत् द्विजाः! ॥१६५॥
सर्वत्र शान्तिहोमं च कुर्याद्ब्राह्मणभोजनम् ।
चण्डालैश्श्वपचैर्वापि प्रमादाद्विष्णुमन्दिरे ॥१६६॥
निरन्तरं कृते वासे मासमेकं मुनीश्वराः ! ।
मृत्पात्राणि परित्यज्य सम्मार्ज्य भगवद्गृहम् ॥१६७॥
गोमयेनोपलिप्याथ पर्यग्निकरणं चरेत् ।
पुण्याहं वाचयित्वाथ प्रोक्षयेत्पञ्चगव्यकैः ॥१६८॥
गोगणं वासयेत्तत्र सर्वदोपप्रशान्तये ।
वाचयित्वा महाशान्ति ब्राह्मणैर्वेदपारगैः ॥१६९॥
भोजयित्वा द्विजांस्तत्र तेभ्योदद्यात्तु दक्षिणाम् ।
एवं मासं तु मासार्द्धं सप्तपञ्चत्र्यहन्तु वा ॥१७०॥
कृत्वा शुद्धिं मन्दिरस्य बिम्बानां गोघृतैः पुरा ।
कृत्वाभिषेचनं प्राग्वत्संप्रोक्षणमथाचरेत् ॥१७१॥
मानुषं मृण्मयं बिम्बं तथा चित्रमयं द्विजाः! ।
नवीकृत्य यथापूर्वं प्रतिष्ठां पुनरारभेत् ॥१७२॥
चण्डालश्वपचाद्यास्तु प्रमादाद्भगवद्गृहे ।
कर्मण्यधिकृताश्चेत्तैः सहवासेऽपि च द्विजाः ! ॥१७३॥
स्नात्वा सर्वे कुशाम्भश्च पीत्वा चान्द्रायणादिकम् ।
कृत्वा चालयसंशुद्धिं द्विजभोजनपश्चिमम् ॥१७४॥
संप्रोक्षणादिकं सर्वं प्राग्वदेव समाचरेत् ।
अन्ते महोत्सवं कुर्यात्सर्वदोपप्रशान्तये ॥१७५॥
तथैव प्रतिलोमाद्याः कर्मण्यधिकृता यदि ।
प्राग्वदालयशुध्यन्तं सर्वं कृत्वा यथाविधि ॥१७६॥
सहस्रकलशैः स्नानमुत्सवं च समाचरेत् ।
ब्रह्मक्षत्रियविट्शूद्रशवैश्चैवानुलोमजैः ॥१७७॥
शवैः स्पृष्टं कौतुके तु गोघृतेनाभिषिच्य तम् ।

संप्रोक्षणं प्रकुर्वीत सहस्रकलशाप्लवम् ॥१७८॥
शान्तिहोमं च कुर्वीत जपं चायुतसंख्यया।
मानुपं चित्रबिम्बाद्यं नवीकृत्य यथाविधि ॥१७९॥
पुनःप्रतिष्ठां कुर्वीत सहस्रकलशाप्लवम्।
तैश्शवैर्गर्भगेहान्तर्विमाने वापि दूषिते ॥१८०॥
कुर्यात्संप्रोक्षणं चापि स्नपनं चोत्तमोत्तमम्।
प्रतिलोमजचण्डालसूतिकाशवदूषिते ॥१८१॥
बिम्बे प्रतिष्ठां कुर्वीत नयनोन्मीलनं विना।
सहस्रकलशैश्चापि स्नापयेत्पुरुषोत्तमम् ॥१८२॥
प्रासादे दूषिते तैस्तु शवैः संप्रोक्षणं चरेत्।
सहस्रकलशैश्चापि स्नापयेद्विधिपूर्वकम् ॥१८३॥
प्रथमावृतिमारभ्य रथ्यावरणपश्चिमे।
ब्राह्मणादिशवैर्वापि प्रतिलोमशवादिकैः ॥१८४॥
दूषिते प्राङ्गणक्षेत्रे चतुर्हस्तमितां क्षितिम्।
खात्वा मृदं समुद्धृत्य बहिः प्रक्षिप्य शुद्धया॥१८५॥
सम्पूर्य च समीकृत्य कारयेन्मार्जनादिकम्।
शिलातलं चेत्तां भूमिं दाहयेत्खननं विना ॥१८६॥
गोमयेनोपलिप्याथ पुण्याहाङ्कुरोपणादिकम्।
पञ्चगव्येन चाभ्युक्ष्य गोगणं तत्र वासयेत् ॥१८७॥
वाचयित्वा महाशान्तिं भोजयेत्तत्र वै द्विजान्।
कृत्वैवं स्थूलसंशुद्धिं शान्तिं कुर्यादतःपरम् ॥१८८॥
मुख्योत्तमात्तु स्नपनात् नीचान्तिममनुक्रमात्।
स्नापयित्वा विशेषेण शान्तिहोमादिकं चरेत् ॥१८९॥
आलये जनने वापि प्रमादान्मुनिपुङ्गवाः!।
प्रायश्चित्तं भवेदेव तत्तदावरणक्रमात् ॥१९०॥

सालमण्टपपीठेषु गोपुरे मन्दिरेषु वा ।
विमानाद्बाह्यतो वापि परिवारालयादिषु ॥१९१॥
वर्णानां ब्राह्मणादीनामनुलोमादिकस्य च ।
मरणे जनने वापि तत्तदावरणोक्तवत् ॥१९२॥
प्रायश्चित्तं प्रकुर्वीत बिम्बस्पर्शादिकेपि च ।
तत्तत्सान्निध्यानुगुणं प्रायश्चित्तं समाचरेत् ॥१९३॥
एवं महानसे वापि यागमण्टप एव वा ।
चण्डालादिप्रवेशे वा शवाद्यैर्वापि दूषिते ॥१९४॥
मृत्पात्राणि परित्यज्य खननाद्यैर्महीतलम् ।
संशोध्य कुण्डचुल्लीस्थमग्निं त्यक्त्वा यथा विधि ॥१९५॥
पुनरग्निं प्रतिष्ठाप्य शान्तिहोमादिकं चरेत् ।
स्वयंव्यक्ताद्यालयानामङ्गत्वेन प्रकल्पिते ॥१९६॥
ग्रामादौ ब्रह्मवर्णस्य मरणं सम्भवेद्यदि ।
ग्राममध्ये गतो यावच्छवस्तिष्ठति वै द्विजाः!॥१९७॥
ग्रामस्य तावदाशौचं तदा देवस्य पूजनम् ।
न कुर्यात्तच्छवे ग्रामाद्बहिर्नीते मुनीश्वराः! ॥१९८॥
संप्रोक्ष्य सर्वतो ग्रामं पुण्याहोद्घोषपूर्वकम् ।
ततस्तु देवदेवस्य प्रकुर्यात्पूजनादिकम् ॥१९९॥
आरब्धे पूजने विप्राः! ग्रामश्चेच्छवदूषितः ।
आरब्धपूजनं शीघ्रं कुर्यात्तन्त्रेण देशिकः ॥२००॥
प्राग्वद्ग्रामप्रोक्षणान्ते पुनःपूजनमाचरेत् ।
ग्रामे शूद्रादिमरणं सम्भवेद्यदि वै तदा ॥२०१॥
आशौचं गृहमात्रस्य ग्रामाशौचं न विद्यते ।
तत्रापि भगवद्गेहसमीपे द्विजसत्तमाः ! ॥२०२॥
एकादशधनुर्भ्योन्तः शूद्रादिशवदूषिते ।
निष्कास्य तच्छवं पश्चात्कुर्याद्देवस्य पूजनम् ॥२०३॥

पुरग्रामाद्यङ्गतया क्लृप्तेऽपि भगवद्गृहे ।
अन्तश्शवं चेद्ग्रामाद्यं न कुर्याद्देवपूजनम् ॥२०४॥
चतुश्शतब्राह्मणैस्तु युक्ते ग्रामपुरादिके ।
अन्तश्शवेऽपि नैवास्ति ग्रामाशौचं मुनीश्वराः! ॥२०५॥
तत्रापि भगवद्गेहसमीपे चैकवीथिषु ।
शवस्तिष्ठति चेद्देवं नार्चयेत्प्रोक्षणात्पुरा ॥२०६॥
उत्सवाङ्गतया क्लृप्तग्रामादौ राष्ट्रसंकुलात् ।
चण्डाळपतितोदक्यासूतिकाशबरादिभिः ॥२०७॥
अधिष्ठिते च श्वानाद्यैर्मद्यमांसादिभिस्तथा ।
शवास्थिभिश्च संदुष्टे सर्वत्रैकत्र वा क्षितिम् ॥२०८॥
खात्वा मृदं समुद्धृत्य बहिः प्रक्षिप्य शुद्धया ।
समापूर्य समीकृत्य पञ्चगव्योक्षणादिभिः ॥२०९॥
शुद्धिं कृत्वा ग्रामशान्तिं कुर्यात्तद्दोषशान्तये ।
रेतोमूत्रपुरीषाद्यैः रुधिरापेयवान्तिभिः ॥२१०॥
निष्ठीवनास्थिमांसाद्यैर्बिम्बे स्पृष्टे मुनीश्वराः ।
उत्तमोत्तममार्गेण स्नापयेच्छान्तिमाचरेत् ॥२११॥
एतैः प्रासादसंस्पर्शे मध्यमोत्तममार्गतः ।
संस्नाप्य देवदेवेशं शान्तिहोमं समाचरेत् ॥२१२॥
प्रथमावरणे तैस्तु संस्पृष्टे मुनिपुङ्गवाः! ।
अधमोत्तममार्गेण स्नापयेत्पुरुषोत्तमम् ॥२१३॥
द्वितीयावरणादौ तु शकृन्मूत्रादिदूषिते ।
तत्क्षणात्तद्बहिर्नीत्वा मार्जनोल्लेपनादिभिः ॥२१४॥
शोधयित्वा भुवं पश्चात्पञ्चगव्यैस्तु सेचयेत् ।
शान्तिहोमं ततः कुर्यात्सर्वदोषप्रशान्तये ॥२१५॥
तथैव भगवद्गेहे प्रथमावरणादिषु ।

रजसा दूषिते स्त्रीणां तद्धवं जानुमात्रकम् ॥२१६॥
खात्वा तु मृद्भिर्नव्याभिरापूर्य धरणीतलम् ।
गोमयाम्भोभिरालिप्य पर्यग्निकरणं तथा ॥२१७॥
पुण्याहवाचनं पञ्चगव्यैरभ्युक्षणं तथा ।
कृत्वा रजस्वलाभिस्तु स्पृष्टं द्वारकवाटकम् ॥२१८॥
सङ्क्षाळ्य वारिणा भूयस्तासां मार्गं च मार्जनैः ।
गोमयालेपनैश्चैव शोधयित्वालयस्थितान् ॥२१९॥
मृद्भाण्डांश्च परित्यज्य प्रासादान्तःस्थितं विभुम् ।
अधमोत्तममार्गेण स्नापयित्वा तथैव हि ॥२२०॥
रजस्वलासन्निकृष्टं विम्बं च स्नाप्य शास्त्रतः ।
शान्तिहोमं जपं चापि कुर्याद्देशिकसत्तमः ॥२२१॥
मार्जालमूषिकासर्पमण्डूकसरटादिभिः ।
गौळिभिश्चापि खद्योतैः विम्बसंस्पर्शने सति ॥२२२॥
स्नापयेन्नवभिः कुम्भैर्देवदेवं मुनीश्वराः! ।
पिपीलिकाद्यैर्विम्बस्य स्पर्शे दोषो न विद्यते ॥२२३॥
बिम्बे गोमुखसंस्पृष्टे तथा वै वर्षविन्दुभिः ।
अधमाधममार्गेण स्नाप्य शान्तिं समाचरेत् ॥२२४॥
श्वानैश्च गर्दभैरुष्ट्रैर्वराहैश्च शिवाशशैः ।
बिम्बे स्पृष्टे स्नापयेत्तमुत्तमोत्तममार्गतः ॥२२५॥
सहस्रसंख्यया शान्तिहोमं च जपमाचरेत् ।
एतैर्गर्भगृहाभ्यन्तःप्रवेशे स्पर्शनेपि वा ॥२२६॥
मध्यमोत्तममार्गेण स्नापयेत्पुरुषोत्तमम् ।
प्रथमावरणाभ्यन्तःप्रवेशे त्वधमोत्तमम् ॥२२७॥
स्नपनं कारयेत्तेषां द्वितीयावरणादिषु ।
प्रवेशश्चेद्देवदेवमधमाधममार्गतः ॥२२८॥

संस्नाप्य शान्तिहोमं च सहस्रं जपमाचरेत् ।
मार्जालादिशवैर्बिम्बस्पर्शने त्वधमोत्तमम् ॥२२९॥
स्नपनं शान्तिहोमं च कुर्याद्देशिकसत्तमः ।
तैस्तु गर्भगृहाभ्यन्तर्दूषिते नवभिर्घटैः ॥२३०॥
स्नापयेद्देवदेवं तु शान्तिहोमं तथा चरेत् ।
प्रथमावरणादौ तैर्दूषिते तद्बहिर्नयेत् ॥२३१॥
मार्जनैर्गोमयालेपैः पञ्चगव्यैश्च शोधयेत् ।
गोमहिष्यव्यजाद्यैस्तु वानरादिशवैस्तथा ॥२३२॥
बिम्बस्पर्शे स्नापयेत्तमुत्तमोत्तममार्गतः ।
एतैस्तु गर्भगेहान्तर्दूषिते मध्यमोत्तमम् ॥२३३॥
स्नपनं शान्तिहोमं च कुर्याद्देशिकसत्तमः ।
पूर्वोक्तानां गवादीनां प्रथमावरणादिषु ॥२३४॥
जनने मरणे चैव तद्भुवं खननादिभिः ।
संशोध्य स्नापयेद्देवमधमोत्तममार्गतः ॥२३५॥
श्वगर्दभवराहादिशवैः स्पृष्टे तु कौतुके ।
संप्रोक्षणं तथा शान्तिहोमादींश्च समाचरेत् ॥२३६॥
एतैः प्रासादसंस्पर्शे उत्तमोत्तममार्गतः ।
स्नापयेद्देवदेवं तु प्रथमावरणादिषु ॥२३७॥
तैर्दूषिते देवदेवं मध्यमोत्तममार्गतः ।
संस्नाप्य शान्तिहोमादीन् कुर्याद्देशिकसत्तमः ॥२३८॥
तथा महानसे यागगेहे श्वादिप्रवेशने ।
तच्छवैर्दूषिते वापि मृत्पात्राणि परित्यजेत् ॥२३९॥
लोहपात्राणि संशोध्य कृत्वा सम्मार्जनादिकम् ।
पञ्चगव्यैश्च संप्रोक्ष्य शान्तिहोमं समाचरेत् ॥२४०॥
तैस्तु कुण्डादिसंस्पर्शे चुल्लीस्पर्शे तथा द्विजाः ।

त्यक्त्वा तमग्निमन्यन्तु स्नापयेद्विधिवद्द्विजाः ! ॥२४१॥
काकैर्गृध्रैस्तथा वृकैः कुक्कुटैश्च कपोतकैः ।
श्येनादिभिश्च गोधाभिर्बिम्बस्पर्शे मुनीश्वराः ! ॥२४२॥
मध्यमोत्तममार्गेण स्नापयेच्छान्तिमाचरेत् ।
एतेषां गर्भगेहान्तःप्रवेशे मुनिपुङ्गवाः ! ॥२४३॥
अधमोत्तममार्गेण स्नाप्य शान्तिं समाचरेत् ।
प्रथमावरणाद्येषु ह्यप्रवेश्यस्थले द्विजाः ! ॥२४४॥
एषां प्रवेशे तत्स्थानं प्रोक्षयेत्पञ्चगव्यकैः ।
शान्तिहोमादिकं कुर्यात्सर्वदोषप्रशान्तये ॥२४५॥
काकादीनां शवैः स्पृष्टे बिम्बे चैवोत्तमोत्तमम् ।
स्नपनं शान्तिहोमं च कुर्यात्तद्दोषशान्तये ॥२४६॥
तैस्तु प्रासादसंस्पर्शे मध्यमोत्तममार्गतः ।
स्नापयेद्देवदेवं तु प्रथमावरणादिषु ॥२४७॥
तैर्दूषिते स्थले तत्तु मार्जनोल्लेपनादिभिः ।
संशोध्य पञ्चगव्यैश्च प्रोक्षणं शान्तिमाचरेत् ॥२४८॥
महानसादौ तैर्दुष्टे प्राग्वत्सर्वं समाचरेत् ।
शिथिलीसरघातुम्भीवल्मीकादौ तु वा द्विजाः! ॥२४९॥
बिम्बोपरि समुत्पन्ने तत्समुद्धृत्य तत्क्षणात् ।
बिम्बाभिषेचनं कृत्वा पञ्चगव्यैर्यथाविधि ॥२५०॥
कृत्वा सम्प्रोक्षणं पश्चाच्छान्तिहोमं समाचरेत् ।
गोभूतिलादिकं दद्यात्तद्दोषस्य प्रशान्तये ॥२५१॥
सहस्रं ब्राह्मणांश्चैव भोजयेन्मुनिपुङ्गवाः ! ।
प्रासादे गर्भगेहे वा शिथिल्यादिसमुद्भवे ॥२५२॥
उत्तमोत्तममार्गेण स्नापयेत्पुरुषोत्तमम् ।
शान्तिहोमादिकं सर्वं प्राग्वदेव समाचरेत् ॥२५३॥

प्राकारे मण्टपे वापि गोपुरे वाहनादिके ।
शिथिलीसरघादीनां वल्मीकादेस्समुद्भवे ॥२५४॥
छत्राकाणां समुत्पत्तौ ब्रह्मदण्डसमुत्थितौ ।
तत्क्षणात्तत्समुद्धृत्य प्रोक्षयेत्पञ्चगव्यकैः ॥२५५॥
अधमोत्तममार्गेण संस्नाप्य पुरुषोत्तमम् ।
शान्तिहोमादिकं सर्वं प्राग्वदेव समाचरेत् ॥२५६॥
भगवन्मन्दिरे विप्राः! कृतं चेत्पूजकेतरैः ।
आसनेष्वासनं चैव शयनं भोजनादिकम् ॥२५७॥
तत् स्थानं पञ्चगव्येन प्रोक्ष्य शान्तिं समाचरेत् ।
बिम्बोपर्यशनेः पाते भग्नमङ्गं यथाविधि ॥२५८॥
सन्धाय प्रोक्षणं कृत्वा सहस्रकलशैस्तथा ।
संस्नाप्य देवं शान्त्यर्थं हुत्वा ब्राह्मणभोजनम् ॥२५९॥
सहस्रसंख्यया कृत्वा कुर्यादन्ते महोत्सवम् ।
प्रासादे त्वशनेः पाते भग्नं सन्धाय पूर्ववत् ॥२६०॥
संप्रोक्षणादिकं कृत्वा उत्तमोत्तममार्गतः ।
संस्नाप्य देवं तदनु शान्तिहोमादिकं चरेत् ॥२६१॥
प्रथमावरणाद्येषु गोपुरे मण्टपे तु वा ।
भवेदशनिपातश्चेदधमोत्तममार्गतः ॥२६२॥
स्नपनं शान्तिहोमं च ब्राह्मणानां च भोजनम् ।
अथोत्पातस्य शान्तिं तु वक्ष्यामि शृणुत द्विजाः! ॥२६३॥
उल्काशन्यादिपाते च नक्षत्रे पतिते च खात् ।
सधूमे च दिशां दाहे भूताद्यावेशिते नृपे ॥२६४॥
दुर्भिक्षे व्याधिते राष्ट्रे तथा वै शत्रुसङ्कटे ।
सूर्योदयस्य व्यत्यासे भूकम्पे तद्विदारणे ॥२६५॥
अतिवृष्ट्यावनावृष्टौ दिव्यदुन्दुभिनिस्वने ।

रात्राविन्द्रधनुर्दर्शे जलेऽग्निजनने तथा ॥२६६॥
चन्द्रोदयेऽन्धकारे च विनाग्निं धूमदर्शने ।
प्रतिसूर्यप्रदर्शे च दिवा नक्षत्रदर्शने ॥२६७॥
दर्शने वाल्मीनस्य रात्रौ सूर्यप्रदर्शने ।
स्वप्ने तु चन्द्रपतने भूमौ ज्वलनदर्शने ॥२६८॥
भूतादिदर्शने चैव व्योम्नि नेमिस्वने तथा ।
आकाशे ग्रहयुद्धे च निमित्तं तु विना द्विजाः! ॥२६९॥
आर्द्रवृक्षस्य पतने तथैव पतिते गिरौ ।
वृक्षे त्वन्यफले दृष्टे शिलायामङ्कुरे तथा ॥२७०॥
शिलावर्षे तटाकादौ रक्तशैवालदर्शने ।
द्विशीर्षजंतुप्रसवे द्रुमे शोणितसम्भवे ॥२७१॥
विभिन्नजंतुप्रसवे मनुष्यपशुपक्षिषु ।
एवमन्येष्वद्भुतेषु महोत्पातेषु सत्स्वपि ॥२७२॥
तद्दोषशान्तिं विप्रेन्द्राः! कारयेदचिरान्नृपः ।
स्थापनोक्तविधानेन कल्पिते मण्टपे शुभे ॥२७३॥
चक्राम्बुरुहपूर्वेषु यथावत्कल्पितेषु च ।
कुण्डेषु दशसंख्येषु ब्रह्मवृक्षादिसम्भवैः ॥२७४॥
समिद्गणैस्तिलैराज्यैः सेचितैः प्रागुदीरितैः ।
पञ्चभिर्मधुराद्यैश्च मिश्रीभूतैः क्रमेण तु ॥२७५॥
महत्तराणां दोषाणां शान्तये मन्त्रवित्तमैः ।
अयुतं नियुतं लक्षं कोटिनिष्ठं यथाबलम् ॥२७६॥
होतव्यं पूर्णया सार्धं दशभिर्मन्त्रवित्तमैः ।
कुण्डेषु मध्यपूर्वेषु मन्त्राणां नियतिः क्रमात् ॥२७७॥
चक्राब्जे द्वादशार्णेन वस्वश्रेऽष्टाक्षरेण तु ।
षडर्णेन षडश्रेषु शङ्खाभे प्रणवेन तु ॥२७८॥

जितन्तया चतुरश्रे विश्वत्रात्रा त्रिकोणके ।
द्वात्रिंशद्दळपद्माख्ये नृसिंहानुष्टुभेन तु ॥२७९॥
सुदर्शनन्नृसिंहेन चक्रकुण्डाक्षरारके ।
वाराहेणार्धचन्द्राख्ये वृत्ते सौदर्शनेन तु ॥२८०॥
धिष्ण्यद्वयं मध्यवेद्यां प्रागुक्तं दक्षिणोत्तरे ।
शेषाणि परितः कुर्यादिक्षु चैव विदिक्षु च ॥२८१॥
सिद्धमन्त्रा नियोक्तव्या होतारः शान्तिकर्मणि ।
सर्वकुण्डानि सर्वेषां मन्त्राणामिच्छया गुरोः ॥२८२॥
कल्पनीयानि वा मन्त्रा यतः सर्वफलप्रदाः ।
न्यस्तमन्त्रैर्यथान्यायं जप्यास्ते संख्यया तथा ॥२८३॥
गोभूहेमतिलान्नानां दानैर्योग्यजनस्य च ।
तृप्तिः कार्या विशेषेण दिव्याद्यायतनस्य च ॥२८४॥
प्रजापालनशीलेन भूपेनात्महितेच्छुना ।
शान्तिरेवंविधा कार्या शास्त्रज्ञैर्बहुभिर्धनैः ॥२८५॥
मुख्यकल्पे विधिरयमनुकल्पे द्विजोत्तमाः! ।
पूर्ववद्यागगेहे तु पञ्चकुण्डेष्वनुक्रमात् ॥२८६॥
व्यापकैः पञ्चभिर्मन्त्रैरष्टाक्षरपुरस्सरैः ।
मधुक्षीरादिभिर्द्रव्यैः पंचभिर्नियुताख्यया ॥२८७॥
संख्यया जुहुयान्मन्त्री लक्षसंख्या यथा भवेत् ।
गोभूतिलादिकं दद्यात्प्राग्वदेव मुनीश्वराः! ॥२८८॥
सर्वत्रान्ते ध्वजारोहपूर्वकं तूत्सवं चरेत् ।
तथा बिम्बस्य हसने चलने रोदने तथा ॥२८९॥
पतने भ्रमणे स्वेदसम्भवे रक्तसम्भवे ।
सम्प्रोक्षणं तु कृत्वाथ पूर्वोक्तां शान्तिमाचरेत् ॥२९०॥
ब्रह्मोत्सवान्तं देवस्य सर्वदोषप्रशान्तये ।

प्रासादान्तःस्थिते विम्बे अकस्मादुष्णसम्भवे ॥२९१॥
पयोमधुघृतैश्चैव नाळिकेरजलैस्तथा ।
पृथक्प्रस्थसहस्रैस्तु स्नापयेत्सप्त वासरान् ॥२९२॥
ततः पूर्वोदितां शान्तिमुत्सवान्तं समाचरेत् ।
रक्तवर्षेतु संजाते प्रासादादीन् मुनीश्वराः! ॥२९३॥
शुद्धोदकैः क्षाळयित्वा गोमयालेपनं तथा ।
पर्यग्निकरणं पंचगव्यैः सम्प्रोक्षणं तथा ॥२९४॥
कृत्वा देवस्य विधिवत्सम्प्रोक्षणमथाचरेत् ।
संस्नाप्य मधुसर्पिभ्यां देवं प्रस्थसहस्रकैः ॥२९५॥
कुर्यात्पूर्वोदितां शान्तिमुत्सवान्तं यथाविधि ।
मधुवर्षे क्षीरवर्षे तत्तत्प्रस्थसहस्रकैः ॥२९६॥
संस्नाप्य देवं सप्ताहं प्राग्वच्छान्तिं समाचरेत् ।
अकस्माद्धामपतने तदूर्ध्वे पतिते द्रुमे ॥२९७॥
सन्धाय पूर्ववच्छीघ्रं कृत्वा सम्प्रोक्षणं विभोः ।
कुर्यात्पूर्वोदितां शान्तिमन्ते कुर्यान्महोत्सवम् ॥२९८॥
एवं महोत्पातदोपशान्तिर्विप्राः! प्रकीर्तिताः ।
अथ नित्यार्चनादीनां प्रायश्चित्तं तु वक्ष्यते ॥२९९॥
अस्नातोनूर्ध्वपुण्ड्रश्चापवित्रोनुपवीतकः ।
नग्नो वा ह्येकवस्त्रो वा जीर्णवस्त्रधरस्तु वा ॥३००॥
तथा पर्युषितं वासो दधानो नीलवस्त्रधृक् ।
दग्धवस्त्रधरो वापि ह्यार्द्रवस्त्रधरस्तु वा ॥३०१॥
अनाचान्तो ध्यानहीनो मुक्तकेशस्तथा द्विजाः! ।
स्विन्नाङ्गश्च हसन् कुप्यन् श्वसंश्च प्रलपन् द्विजाः!॥३०२॥
निष्ठीवादियुतश्चापि देवं सम्पूजयेद्यदि ।
तद्दोषशान्तये विप्रा अष्टाक्षरमनुत्तमम् ॥३०३॥

जपेत्सहस्रवारं तु शतवारं तु वा द्विजाः! ।
पुनः सम्पूजनं कुर्याद्देवस्य विधिपूर्वकम् ॥३०४॥
केशास्थिलोष्टचीरास्रगस्पृश्यस्पर्शदूषितः ।
तथा मूत्रपुरीषादीन् समाक्रम्य ह्यनाप्लुतः ॥३०५॥
आशौचवद्भिः संपृष्टश्चण्डालाद्युपधातकः ।
रुधिराद्यन्विताङ्गश्च पूजयेद्यदि केशवम् ॥३०६॥
पञ्चगव्यैः स्नापयित्वा पुनः पूजनमाचरेत् ।
काकगृद्ध्रादिभिः स्पृष्टः श्वानैर्वा गर्दभादिभिः ॥३०७॥
पाषण्डप्रतिलोमाद्यैः पतितैर्हीनवृत्तिभिः ।
चैत्यवृक्षादिभिश्चापि संस्पृष्टः पूजयेद्यदि ॥३०८॥
अधमाधममार्गेण स्नापयेत्पुरुषोत्तमम् ।
चण्डालैर्वा तथा म्लेच्छैरुदक्यासूतिकादिभिः ॥३०९॥
महापातकिभिः स्पृष्टः स्त्रियं गत्वा ह्यनाप्लुतः ।
पूजयेद्यदि देवेशं नीचमध्यममार्गतः ॥३१०॥
संस्नाप्य देवं तदनु पुनः पूजनमाचरेत् ।
परस्त्रीगमनासक्तः कुष्ठी वाप्यङ्गहीनकः ॥३११॥
काणो वान्धोपि मूको वा बधिरः पंगुरेव वा ।
अपस्मारी तथोन्मत्तो देवं सम्पूजयेद्यदि ॥३१२॥
अधमोत्तममार्गेण देवं संस्नापयेत् द्विजाः! ।
आशौचवान्वा पतितः गुण्डो वा गोळकोपि वा ॥३१३॥
महापातकवांश्चापि देवं सम्पूजयेद्यदि ।
उत्तमोत्तममार्गेण संस्नाप्य पुरुषोत्तमम् ॥३१४॥
शान्तिहोमं मूलमन्त्रजपं चापि समाचरेत् ।
क्रिमिकीटादिभिर्दुष्टधान्यपुष्पफलादिभिः ॥३१५॥
प्राण्यङ्गतुषभस्मास्थिकेशदन्तनखादिभिः ।

स्पृष्टैर्द्रव्यैस्तथा ऽस्पृश्यपाणिस्पृष्टैः फलादिभिः ॥३१
तथा पर्युषितैर्वान्यैः पत्रपुष्पफलादिभिः ।
पूजने सति देवस्य मूलमन्त्रं शतं जपेत् ॥३१७॥
चण्डालपतितोदक्यासूतिकाप्रतिलोमजैः ।
शबराद्यैश्च संस्पृष्टैर्द्रव्यैश्शास्त्रविनिन्दितैः ॥३१८॥
पत्रपुष्पादिभिश्चैव स्पृष्टैर्वा गोमुखादिभिः ।
मनुष्यैर्लंघितद्रव्यैस्तथा ऽस्पृश्यमृगादिभिः ॥३१९॥
क्रिमिकीटपतङ्गास्थिदन्तकेशनखादिभिः ।
तुषैश्च भस्मलोष्टाद्यैर्युक्तैर्द्रव्यैस्तथा द्विजाः! ॥३२०॥
पूर्वं समर्पितैर्द्रव्यैस्तथा पर्युषितोदकैः ।
पूजने सति देवस्य पुंसूक्तेन कुशोदकैः ॥३२१॥
स्नापयित्वा मूलमन्त्रमष्टोत्तरशतं जपेत् ।
शान्तिहोमं तु वा कुर्यात्सर्वदोषप्रशान्तये ॥३२२॥
जन्तुभक्षितपुष्पाद्यैर्नीचावाससमीपगैः ।
अन्यारामोद्भवैः पुष्पैर्ग्रथितैर्दीक्षितेतरैः ॥३२३॥
शूद्रानीतैः पुष्पगेहाद्बहिर्वृद्धैश्च रोगिभिः ।
भूगतैः पत्रपुष्पाद्यैः फलाद्यैर्वार्चने हरेः ॥३२४॥
क्षीरेण स्नाप्य देवेशमष्टोत्तरशतं जपेत् ।
मूलमन्त्रं पुनः शुद्धपत्रपुष्पादिभिर्यजेत् ॥३२५॥
जीर्णवस्त्रैरधौतैश्च जीर्णैश्छत्रादिभिस्तथा ।
अशोधितार्घ्यपात्राद्यैः कृते देवस्य पूजने ॥३२६॥
अष्टोत्तरशतं जप्त्वा पुनः पूजनमाचरेत् ।
केशास्थ्याद्यशुचिस्पृष्टैः स्पृष्टैश्शूद्रादिभिस्तथा ॥३२७॥
श्वानादिभिर्वा संस्पृष्टैश्चण्डालाद्युपघातकैः ।
वस्त्रैस्संपूजिते देवे अधमोत्तममार्गतः ॥३२८॥

संस्नाप्य देवदेवं तु शान्तिहोमं समाचरेत् ।
चण्डालसूतिकोदक्यास्पृष्टैर्वस्त्रैः प्रपूजने ॥३२९॥
उत्तमोत्तममार्गेण स्नाप्य शान्तिं समाचरेत् ।
केशास्थिश्वादिभिश्शूद्रैः स्पृष्टं कार्पासवस्त्रकम् ॥३३०॥
पुनस्संशोध्य देवाय दद्याच्चण्डालपूर्वकैः ।
स्पृष्टं कार्पासवस्त्रं तु सन्त्यजेन्मुनिपुङ्गवाः! ॥३३१॥
पट्टवस्त्रं तु शूद्राद्यैः स्पृष्टं संप्रोक्षयेद्द्विजाः! ।
चण्डालपूर्वैः स्पृष्टं तु जलैः संक्षाळयेद्गुरुः ॥३३२॥
अजाविमहिषोष्ट्राज्यैस्तैलैरेरण्डजैस्तथा ।
प्राण्यङ्गसम्भवैस्तैलैः फलजैर्वापि दीपने ॥३३३॥
अजादिक्षीरदध्याज्यहोमे वा मुनिपुङ्गवाः! ।
शान्तिहोमं प्रकुर्वीत तद्दोषस्य प्रशान्तये ॥३३४॥
पूर्वोक्ताज्यादिभिर्देवस्नपने वा निवेदने ।
अधमोत्तममार्गेण स्नपनं शान्तिमाचरेत् ॥३३५॥
नरभुक्तैर्वस्त्रखण्डैर्दीपवर्त्यादिके कृते ।
शान्तिहोमं प्रकुर्वीत सहस्रं जपमाचरेत् ॥३३६॥
धूपैः प्राण्यङ्गसंमिश्रैस्तैलजैः स्नुहिजैरपि ।
अन्यैर्दुर्गन्धजैश्चैव पूजयेद्यदि मोहतः ॥३३७॥
कपिलागोघृतेनैव हुत्वाहुतिसहस्रकम् ।
जातिपुष्पसहस्रेण देवमभ्यर्च्य देशिकः ॥३३८॥
पुनः शुद्धं मुनिश्रेष्ठाः! कर्पूरागरु धूपयेत् ।
देवतान्तरनिर्माल्यदुष्टद्रव्यैः प्रपूजने ॥३३९॥
अधमाधममार्गेण स्नाप्य शान्तिं समाचरेत् ।
चण्डालसूतिकोदक्यास्पृष्टाद्वा शवदूषितात् ॥३४०॥
कूपात्समुद्धृतैस्तोयैः कृते देवस्य पूजने ।

उत्तमोत्तममार्गेण स्नापयेत्पुरुषोत्तमम् ॥३४१॥
अन्तस्तिर्यक्छवात्कूपात्स्पृष्टाद्वा प्रतिलोमजैः ।
समुद्धृतैर्जलैर्देवमर्चयेद्यदि मोहतः॥३४२॥
तद्दोषशान्तये कुर्यात्स्नानमुत्तममध्यमम् ।
अन्तर्जन्तुशवात्कूपाद्विण्मूत्रापेयदूषितात् ॥३४३॥
देवतान्तरनिर्माल्यदुष्टाद्वोद्धृतवारिभिः ।
पूजने देवदेवस्य स्नानं स्यादुत्तमाधमम् ॥३४४॥
अन्तश्शवोषिताद्वापि स्पृष्टाच्चण्डाळपूर्वकैः ।
सरसः प्रोद्धृतैस्तोयैः पूजने मध्यमोत्तमम् ॥३४५॥
स्नानं कुर्यात्तु देवस्य अन्तस्तिर्यक्छवोषितात् ।
स्पृष्टाद्वा प्रतिलोमाद्यैः सरसः प्रोद्धृतैर्जलैः ॥३४६॥
पूजने सति देवस्य स्नानं मध्यममध्यमम् ।
स्पृष्टाच्चण्डालपूर्वैर्वा मनुष्यशवदूषितात् ॥३४७॥
तटाकादुद्धृतैस्तोयैः पूजने त्वधमोत्तमम् ।
स्नपनं देवदेवस्य कुर्याद्देशिकसत्तमः ॥३४८॥
अन्तश्शवोषिते कूपे स्पृष्टे चण्डालपूर्वकैः ।
सर्वमुद्धृत्य तत्तोयं तदर्धं वा मुनीश्वराः! ॥३४९॥
पुण्याहं वाचयित्वाथ प्रोक्षयेत्पञ्चगव्यकैः ।
तिर्यक्छवादिभिर्दुष्टे जलस्यार्धं समुद्धरेत् ॥३५०॥
पादं वापि समुद्धृत्य प्रोक्षयेत्पञ्चगव्यकैः ।
चुचुन्दर्यादिजन्तूनां शवैर्मूत्रपुरीषकैः ॥३५१॥
दुष्टे वा शिवनिर्माल्यैः कूपे तज्जलमुद्धरेत् ।
पादं वापि तदर्धं वा सेचयेत्पञ्चगव्यतः ॥३५२॥
चण्डालाद्यशुचिस्पर्शमनुष्यशवदूषिते ।
प्रतिलोमजसंस्पर्शतिर्यक्छवविदूषिते ॥३५३॥

कुर्यात्सरसि कूपोक्तप्रायश्चित्तार्धमेव च ।
तटाके शवचण्डालस्पर्शनाद्यैर्विदूषिते ॥३५४॥
आचरेत्सरसि प्रोक्तप्रायश्चित्तार्धमेवच ।
यद्वा सरसि विस्तीर्णे तटाके च महत्तरे ॥३५५॥
कुम्भानां तु सहस्रं वा शतं वा जलमुद्धरेत् ।
दिवा समुद्धरेत्तोयं रात्रौ चेदग्निसान्निधौ ॥३५६॥
चण्डालसूतिकोदक्याशवरैर्मद्यपादिभिः ।
श्वसृगालवराहाद्यैः काकगृध्रादिभिस्तथा ॥३५७॥
स्पृष्टान्नपानभक्ष्यादेर्देवाय विनिवेदने ।
तथा रुधिरमांसास्थिस्पृष्टान्नविनिवेदने ॥३५८॥
शवादिदूषिते गेहे पक्वान्नस्य निवेदने ।
मृत्पात्राणि परित्यज्य लोहपात्राणि शोधयेत् ॥३५९॥
कृत्वा चालयसंशुद्धिं सर्वे स्नात्वा यथाविधि ।
कुर्युः कुशोदपानं च स्नपनं चोत्तमोत्तमम् ॥३६०॥
कृत्वा देवस्य विधिवच्छान्तिहोमं समाचरेत् ।
परस्त्रीगमनासक्तैर्भक्ष्याभक्ष्याविवेकिभिः ॥३६१॥
अवैष्णवैश्च संस्पृष्टहविषो विनिवेदने ।
त्यक्तं पर्युषितं वापि दृष्टं वाऽयोग्यमानुषैः ॥३६२॥
मण्डूकमूषिकासर्पैर्बिडालैः स्पृष्टमेव वा ।
क्रिमिकीटपतङ्गाद्यैः स्पृष्टं केशादिदूषितम् ॥३६३॥
श्वासाहतं तथाघ्रातं तथा पूर्वं निवेदितम् ।
निवेदयेच्चेदन्नाद्यं कुम्भैर्द्वादशभिः क्रमात् ॥३६४॥
संस्नाप्य देवदेवेशं शान्तिहोमं समाचरेत् ।
श्वगृध्रादिस्पृष्टचुल्ल्यां पक्वान्नविनिवेदने ॥३६५॥
प्राग्वद्द्वादशभिः कुम्भैः स्नापयेत्पुरुषोत्तमम् ।

चण्डालाद्यैः स्पृष्टचुल्ल्यां पक्वान्नविनिवेदने॥३६६॥
पञ्चविंशतिभिः कुम्भैः स्नापयेत्पुरुषोत्तमम्।
अत्युष्णं चातिशीतं च रजस्तुषकणान्वितम्॥३६७॥
मृत्पाषाणैर्दूषितं वा हविश्चेद्विनिवेदयेत्।
जपेत्सहस्रवारं तु मूलमन्त्रं द्विजोत्तमाः!॥३६८॥
अयाज्ञीयैः कोद्रवाद्यैः कृतस्य हविषोऽर्पणे।
निषिद्धशाकमूलानां फलानां वा निवेदने॥३६९॥
गोघृतेन स्नाप्य देवं शान्तिहोमं समाचरेत्।
महाहविर्विधाने तु विशेषः श्रूयतां द्विजाः!॥३७०॥
पचनालयतोन्यत्र साधितं दीक्षितेतरैः।
अमन्त्रसंस्कृतं चान्नमविभक्तमलक्षणम्॥३७१॥
निरीक्षितमयोग्यैश्च संस्पृष्टं मक्षिकादिभिः।
सम्प्रोक्ष्य चास्त्रतोयेन निवेद्यं यत्नगौरवात्॥३७२॥
अन्यत्रैवं दुष्टहविःकल्पने शान्तिमाचरेत्।
मक्षिकाघुणभृङ्गाद्यैर्दष्टं दुष्टं पुरीषकैः॥३७३॥
पत्रपुष्पफलाद्यन्नं त्यक्तव्यं तदधिष्ठितम्।
अस्त्रोदकेन सम्प्रोक्ष्य दद्याद्देवाय भक्तितः॥३७४॥
अकृत्वा भूतसंशुद्धिं मन्त्रन्यासादिकं तु वा।
हृदि देवमनभ्यर्च्य निर्माल्योद्वासनादिकम्॥३७५॥
बिम्बसंशोधनं वापि स्थानसंशोधनं तथा।
अकृत्वा देवयजनं कुर्याच्चेन्मोहतो द्विजाः!॥३७६॥
तद्दोषशान्तये मूलमन्त्रं जप्त्वा सहस्रकम्।
लुप्तं कर्म ततः कृत्वा पुनः पूजनमाचरेत्॥३७७॥
अर्घ्यादीनां द्रव्यलोपे दहनाप्यायनादिके।
लुप्ते वा विष्णुगायत्रीं शतं जप्त्वा यथाविधि॥३७८॥
द्रव्यन्यासादिसंस्कारं कृत्वार्घ्यादीन् समर्चयेत्।

प्रासादद्वारदेवानां तथाऽऽवरणवासिनाम् ॥३७९॥
लुप्तेऽर्चने तत्पुरतस्तत्तन्मन्त्रान्यथाक्रमम्।
अष्टोत्तरशतं जप्त्वा पुनरर्चनमाचरेत॥३८०॥
प्रासादद्वारदेवानां परिवारगणस्य वा ।
विपर्यासे मूलमन्त्रं शतं जप्त्वा क्रमाद्यजेत् ॥३८१॥
पीठार्चनमकृत्वैव देवसम्पूजने कृते ।
पीठादिदेवतामन्त्रं शतं जप्त्वा यथोदितम् ॥३८२॥
पुनः पीठार्चनं कृत्वा देवमभ्यर्चयेद्गुरुः ।
कर्मार्चाद्यङ्गबिम्बेषु विनाऽऽवाहनमर्चने ॥३८३॥
लययागं भोगयागं विना वाभ्यर्चने कृते ।
सहस्रवारं संजप्त्वा मूलमन्त्रं यजेत्पुनः ॥३८४॥
मन्त्रहानौ क्रियाहानौ मुद्राहानौ तथैव च ।
भोगमन्त्रक्रियादीनां विपर्यासेपि च द्विजाः! ॥३८५॥
तद्दोपशान्तये मन्त्रमष्टोत्तरशतं जपेत् ।
पूजाकाले तु घण्टायाश्चालने तु विवर्जिते ॥३८६॥
वेदघोपविहीने वा शान्तिहोमं समाचरेत् ।
पूर्वक्लृप्तोपचारे तु न्यूने द्विगुणवस्तुभिः ॥३८७॥
पुनरभ्यर्चनं कृत्वा अष्टोत्तरशतं जपेत् ।
औपचारिकसांस्पर्शहृदयङ्गमरूपिणाम् ॥३८८॥
परिच्युतौ च भोगानां त्रयाणां क्रमशो द्विजाः! ।
पूजने सर्वबीजानि मात्रावित्तं घृतोदनम् ॥३८९॥
निवेदनीयं देवस्य विशेपेज्यापुरस्सरम् ।
मात्रादानादिहानौतु देवं मङ्गळवारिभिः ॥३९०॥
संस्नाप्य शान्तिहोमं च कुर्यात्तद्दोपशान्तये ।
अकस्माद्दीपनिर्वाणे पूजामध्ये मुनीश्वराः !॥३९१॥

पुनरुद्दीप्य शान्त्यर्थं हुत्वा नेत्रमनुं जपेत् ।
अनिर्वाणस्य दीपस्य नाशे तु मुनिपुङ्गवाः ! ॥३९२॥
क्षीरेण स्नाप्य देवेशं शान्हिोमं समाचरेत् ।
पुनरारोप्य तद्दीपं जपेन्मूलसहस्रकम् ॥३९३॥
पाकस्थानादाहृतेपु देवनीराजनार्थतः ।
दीपेष्वेकतमो दीपो यायादुपरतिं यदि ॥३९४॥
प्रमादाद्वातवेगाद्यैः पुरस्ताद्विनिवेदनात् ।
श्रीभङ्गो जायते पश्चाद्यदि व्याध्यादिपीडनम् ॥३९५॥
तस्मात्प्रदीप्य सहसा मूलमष्टोत्तरं जपेत् ।
तथा नीराजने नष्टे प्राक्पश्चाद्वा समर्पणात् ॥३९६॥
पुनः प्रदीप्य सहसा जपेन्मन्त्रं सहस्रधा ।
अयोग्यजनसंस्पृष्टे तत्कुम्भे तं विहाय तु ॥३९७॥
कुम्भान्तरं समापाद्य तेन तत्तु समाचरेत् ।
पूजाकाले धूपपात्रे दीपपात्रे तु वा द्विजाः! ॥३९८॥
नीराजनार्थकुम्भे वा प्रमादात्पतिते सति ।
घण्टायाश्चार्घ्यपात्रादेश्छत्रदीनां तु वा द्विजाः! ॥३९९॥
पतने प्रजपेन्मन्त्रमष्टोत्तरसहस्रकम् ।
धूपपात्रादिके भग्ने पुनः सन्धाय पूर्ववत् ॥४००॥
पञ्चगव्यैस्तु सम्प्रोक्ष्य पूजनादौ नियोजयेत् ।
क्लृप्तेपु पूजाकालेपु लुप्ते कस्मिंश्चिदर्चने ॥४०१॥
तदनन्तरकाले तु देवं द्विगुणवस्तुभिः ।
पूजयेद्वित्रिकालेपु लुप्तेपु मुनिसत्तमाः ! ॥४०२॥
त्रिचतुर्गुणितैर्द्रव्यैः पूजयेत्पुरुषोत्तमम् ।
एकाहमर्चनाहीने त्वधमाधममार्गतः ॥४०३॥
देवं संस्नाप्य विधिवच्छान्तिहोमं समाचरेत् ।

यजेत् द्विगुणितैर्द्रव्यैर्ब्राह्मणान् भोजयेत्तथा ॥४०४॥
द्विदिनादौ च पक्षान्ते पूजाहीने मुनीश्वराः ! ।
अधमोत्तममार्गेण स्नाप्य शान्तिं समाचरेत् ॥४०५॥
तावद्द्विगुणितैर्द्रव्यैर्दिनसंख्यावशेन तु ।
देवमाराध्य विधिवद्ब्राह्मणान् भोजयेद्बहून् ॥४०६॥
एकमासेऽर्चनाहीने तूत्तमोत्तममार्गतः ।
संस्नाप्य देवं विधिवत्प्राग्वच्छान्त्यादिकं चरेत् ॥४०७॥
संवत्सरत्रयादर्वाङ्मासादूर्ध्वं द्विजोत्तमाः ! ।
पूजालोपे तु देवस्य कुर्यात्संप्रोक्षणं तथा ॥४०८॥
तावद्द्विगुणितैर्द्रव्यैर्माससंख्यावशेन तु ।
देवमभ्यर्च्य विधिवत्सहस्रं भोजयेत् द्विजान् ॥४०९॥
संवत्सरत्रयादूर्ध्वं पूजालोपे तु मानुषे ।
पुनः प्रतिष्ठां कुर्वीत स्वयंव्यक्तादिकेषु तु ॥४१०॥
कुर्यात्संप्रोक्षणं चापि सहस्रकलशाप्लवम् ।
मनुष्यनिर्मिते स्थाने पूजालोपादिके द्विजाः ! ॥४११॥
प्रायश्चित्तं तु कृत्वैव नित्यपूजादिकं चरेत् ।
स्वयंव्यक्तादिके स्थाने पूजालोपादिके सति ॥४१२॥
पूजायां वर्तमानायां प्रायश्चित्तं समाचरेत् ।
समित्परिधिदर्भाणां कूर्चानां हविषामपि ॥४१३॥
आज्यस्थाल्यादिपात्राणामग्नेः स्थण्डिलकुण्डयोः ।
स्रुक्स्रुवस्य प्रणीताया अभावे लक्षणोज्झिते ॥४१४॥
शान्त्यर्थं जुहुयान्मन्त्री प्राग्वद्व्यापकपञ्चकैः ।
एतेषां भेदने छेदे वह्निदाहादिके सति ॥४१५॥
पुनरन्यं समापाद्य शान्तिहोमं समाचरेत् ।
अभावे काष्ठसमिधामाज्येन चरुणा हुनेत् ॥४१६॥

समिद्भिराज्याभावे तु तिलैर्वा होममाचरेत् ।
अलाभे हविषान्येषामाज्येन जुहुयात्सुधीः ॥४१७॥
सर्वथा होमकर्मार्थं तिलमाज्यं न लोपयेत् ।
तिलाज्ययोरभावे तु हवनं स्यान्निरर्थकम् ॥४१८॥
शान्तिहोमं प्रकुर्वीत तद्दोषस्यापनुत्तये ।
वह्नौ कुण्डे स्थले चुल्यां संस्कृतेनुगतिं गते ॥४१९॥
पुनराधाय संस्कृत्य शान्तिहोमादिकं हुनेत् ।
अग्निप्रतिष्ठाकर्मादौ मोहादविधिवत्कृते ॥४२०॥
पुनर्विधिवदापाद्य शान्तिहोमं समाचरेत् ।
वह्नौ स्पृष्टे तथाऽस्पृश्यैः केशास्थिनखैररपि ॥४२१॥
यथावन्मूलमन्त्रेण जुहुयात्सर्पिषा शतम् ।
उदक्यासूतिकाद्यैश्च सन्निकृष्टेऽयुतं हुनेत् ॥४२२॥
संस्पृष्टेऽन्यं समाधाय जुहुयाच्चायुतं जपेत् ।
असमिद्धे हुतेऽग्नौ तु पुनर्होमं समाचरेत् ॥४२३॥
नैमित्तिकेषु काम्येषु चोत्सवेषु विशेषतः ।
तदङ्गहुतभुग्यागं कुण्डेऽन्यस्मिन् समाचरेत् ॥४२४॥
विपर्यासे कृते मोहाच्छान्तिहोमं समाचरेत् ।
हुतशेषहविश्शेषे भुक्ते योग्यजनैर्विना ॥४२५॥
जपेन्मूलायुतं मन्त्री दाता किल्बिषशान्तये ।
एकद्वित्रिचतुःपञ्चषट्कालेषु यथाक्रमम् ॥४२६॥
सङ्कल्प्य यागं होमान्तं हवनं न कृतं यदि ।
द्विगुणं हवनं कुर्यात्पूर्णान्तं मन्त्रवित्तमः ॥४२७॥
एकं दिनं समारभ्य मासान्तं होमलोपने ।
अधमोत्तममार्गेण संस्नाप्य पुरुषोत्तमम् ॥४२८॥
तत्तद्द्विगुणितैर्द्रव्यैर्होमकर्म समाचरेत् ।

मासोर्ध्वं वत्सरादर्वाक् होमलोपेऽधमोत्तमम् ॥४२९॥
स्नपनं शान्तिहोमं च सहस्राहुतिभिश्चरेत् ।
वर्षोर्ध्वं होमलोपे तु स्नपनं मध्यमोत्तमम् ॥४३०॥
शान्तिहोमं च गोदानं कुर्याद्ब्राह्मणभोजनम् ।
पतने बलिवस्तूनां तत्त्यक्त्वान्येन देशिकः ॥४३१॥
बलिं दत्वाथ तच्छान्त्यै शान्तिहोमं समाचरेत् ।
तथैव बलिवस्तूनामस्पृश्यस्पर्शने द्विजाः! ॥४३२॥
तथैव पात्रेऽभिमते केशलोष्टादिदूषिते ।
तत्त्यक्त्वान्येन निर्वर्त्य मूलमष्टोत्तरं जपेत् ॥४३३॥
बलिं दुष्टेन दद्याच्छेच्छान्तिहोमपुरस्सरम् ।
बलिं दत्वा विशेषेण परिवारमनुं जपेत् ॥४३४॥
मुद्रामन्त्रक्रियाध्यानद्रव्याणां भोगरूपिणाम् ।
तत्तद्गानस्वराणां च ताळनृत्तादिकस्य च ॥४३५॥
विशेषाद्बलिकाले तु हानिरुत्पद्यते यदि ।
जपेन्मूलसहस्रं तु मन्त्री ध्यानसमान्वितः ॥४३६॥
यानस्थे बलिबिम्बे तु व्यूढेऽयोग्यजनैः सति ।
कुशोदकेन संप्रोक्ष्य शान्तिहोमं समाचरेत् ॥४३७॥
अस्पृश्यैर्यदि संस्पृष्टा बलिबिम्बस्य वाहकाः ।
पञ्चगव्येन संप्रोक्ष्य शुचिनान्येन वाहयेत् ॥४३८॥
बलिकाले दीपनाशे पुनरारोप्य दीपकम् ।
कृत्वा चोत्सवशेषं तु शान्तिहोमं समाचरेत् ॥४३९॥
बलिबिम्बे निपतिते शिबिकादौ मुनीश्वराः! ।
स्थापयित्वा यथापूर्वं बलिशेषं नयेत्ततः ॥४४०॥
तद्दोषशान्तये कुम्भैर्नवभिस्स्नापयेद्विभुम् ।
सबिम्बयानपतनेप्येवं शान्तिं समाचरेत् ॥४४१॥

नित्योत्सवार्थबिम्बे तु यानान्निपतिते भुवि ।
तदैवोद्धृत्य तद्बिम्बमक्षतं स्नाप्य मन्त्रवित् ॥४४२॥
अधमाधममार्गेण शान्त्यर्थं जुहुयादनु ।
तथैव च क्षतं बिम्बं समाधाय यथापुरम् ॥४४३॥
कृत्वा प्रातिष्ठिकं कर्म स्वस्थाने स्थापयेदनु ।
यावत्समाधिकालं तु तावद्बिम्बान्तरेण वा ॥४४४॥
कूर्चेन वाऽन्यबिम्बेन कुर्यान्नित्योत्सवं हरेः ।
बलिबिम्बस्य मूर्द्धस्थपुष्पादिपतने तु वा ॥४४५॥
किरीटपतनेचापि तद्दोषस्य प्रशान्तये ।
स्नपनं नवभिः कुम्भैश्शान्तिहोमं समाचरेत् ॥४४६॥
बलिकाले तु नृत्यन्त्याः पतने वारयोषितः ।
तद्दोपशान्तये कुर्याच्छान्तिहोमं द्विजोत्तमाः! ॥४४७॥
बलिदानविहीने तु एककालार्चनादिके ।
बलिं द्विगुणितं दद्यात्तथा त्वेकदिने द्विजाः! ॥४४८॥
बलिप्रदानहीने तु हुत्वा मूलशतं ततः ।
तत्तदावरणद्वारदेवानां स्वस्वसंज्ञया ॥४४९॥
जुहुयात्तिलमिश्रेण घृतेनैव शतं शतम् ।
द्विदिनादौ च मासान्तं तदूर्ध्वं वत्सरान्तिमम् ॥४५०॥
वर्षादूर्ध्वं च रहिते बलिदानेऽधमाधमम् ।
तदुत्तमं च स्नपनं क्रमाद्वै मध्यमोत्तमम् ॥४५१॥
शान्तिहोमं च कुर्वीत द्रव्यैर्द्विगुणितैर्बलिम् ।
सूतकं वा मृताशौचं पूजाकाले श्रुतं यदि ॥४५२॥
आशौचमाचरेद्विप्राः! पूजान्ते देशिकोत्तमः ।
देवस्य नित्यपूजादौ मोहात्सिद्धान्तसङ्करे ॥४५३॥
संहितासङ्करे वापि जाते तद्दोपशान्तये ।

संप्रोक्षणं पुरा कृत्वा सहस्रकलशाप्लवम् ॥४५४॥
महोत्सवं च कुर्वीत नान्यथा शान्तिरिष्यते ।
एकत्र दीक्षितस्तन्त्रे सिद्धान्ते वा मुनीश्वराः! ॥४५५॥
न कुर्याद्देशिकोऽन्यत्र पूजनादीनपि द्विजाः! ।
तन्त्रभेदे च सिद्धान्तभेदे वाप्युत्सवादिषु ॥४५६॥
आचार्यत्वं तथार्त्विज्यं न कार्यं गोहृतः कृते ।
दोषाय कल्पते राजराष्ट्रधामक्षयात्मने ॥४५७॥
पञ्चरात्रोक्तमार्गेण पूज्यमाने प्रतिष्ठिते ।
वैखानसैः पूजिते तु प्रतिष्ठां पुनराचरेत् ॥४५८॥
तथैव कर्मबिम्बानां साङ्कर्यमपि नाचरेत् ।
कर्मणां स्नपनादीनां यत्कर्म विहितं द्विजाः! ॥४५९॥
यस्मिन्वै कर्मबिम्बे तु तत्रैव च समाचरेत् ।
तत्तत्कर्मार्थबिम्बे तु तत्र सन्निहिते सति ॥४६०॥
तत्तत्कर्मविशेषाणां व्यत्ययं न समाचरेत् ।
असन्निधाने तेषां तु राष्ट्रभङ्गादिदोषतः ॥४६१॥
तद्देशकालानुगुणं तत्र सन्निहितं भवेत् ।
यद्यत्कर्मार्थबिम्बं तु तत्र सर्वं समाचरेत् ॥४६२॥
स्नपनद्वितयञ्चैव नित्यनैमित्तिकात्मकम् ।
नित्योत्सवविधानं च तथा नैमित्तिकोत्सवम् ॥४६३॥
तीर्थयात्राविधानं चेत्येवं कर्माणि पंच वै ।
शयनोत्थापनं कर्म तदा कूर्चे समाचरेत्॥४६४॥
यद्वा शोभार्थबिम्बे तु पूज्यमाने प्रतिष्ठिते ।
एवं कथितमेकस्मिन् बिम्बे सन्निहिते सति ॥४६५॥
बिम्बद्वये सन्निहिते तत्तत्कर्मविभेदतः ।
कृत्वा तदन्यत्सकलं यथायोगं समाचरेत् ॥४६६॥

एवमभ्यूह्य कर्तव्यं तत्तद्बिम्बे प्रकाशिते ।
सर्वेषु कर्मबिम्बेषु तत्र सन्निहितेषु वै ॥४६७॥
तदा तेषां तु बिम्बानां व्यत्ययं न समाचरेत् ।
प्रमादाद्व्यत्यये जाते कुर्यात्स्नपनमुत्तमम् ॥४६८॥
अतः परं प्रवक्ष्यामि प्रायश्चित्तं तु चोत्सवे ।
पुरस्तात्सर्वकर्मार्थमर्पितेष्वङ्कुरेष्वनु ॥४६९॥
रक्तेषु श्यामवर्णेषु तथा तिर्यग्गतेषु च ।
वक्रेषु चाप्ररूढेषु दक्षिणाभिमुखेषु च ॥४७०॥
विधिहीनेषु चास्पृश्यस्पृष्टेष्वधिकृतैर्विना ।
पालिकादिषु भिन्नेषु नष्टेषु पतितेषु च ॥४७१॥
मूषिकाद्यैश्च दष्टेषु मूलमन्त्रायुतं जपेत् ।
पुनः कृत्वाङ्कुरारोपं शान्तिहोमं समाचरेत् ॥४७२॥
सक्तुचियुक्तपात्रेषु मृण्मयेषु पुनर्द्विजाः! ।
बीजावापे कृते विप्राः! महान् दोषः प्रजायते ॥४७३॥
तच्छान्त्यै शान्तिहोमं तु कृत्वा भूयोऽङ्कुरार्पणम् ।
समाचरेत्पालिकादौ वल्मीकादिसमुद्भवे ॥४७४॥
तान् त्यक्त्वान्येषु पात्रेषु बीजावापं समाचरेत् ।
शान्तिहोमं तथा कृत्वा भोजयेद्ब्राह्मणान् शतम् ॥४७५॥
कर्मार्थमङ्कुरं कृत्वा तत्कर्माकरणे द्विजाः! ।
अङ्कुरानपि तान् त्यक्त्वा शान्तिहोमं समाचरेत् ॥४७६॥
अनर्प्य त्वङ्कुरं मोहादारब्धे तु महोत्सवे ।
सद्यः कृत्वा तदन्येद्युर्बीजावापं यथाविधि ॥४७७॥
शान्तिहोमं प्रकुर्वीत तद्दोषस्यापनुत्तये ।
देवताव्यत्यये जाते पालिकादौ मुनीश्वराः! ॥४७८॥
अष्टोत्तरशतं जप्त्वा शान्तिहोमं समाचरेत् ।

तथैव पालिकादीनां स्थानव्यत्ययसम्भवे ॥४७९॥
अष्टोत्तरशतं जप्त्वा क्रमेण स्थापयेत्पुनः ।
पात्राणां पालिकादीनां विहीने लक्षणादिके ॥४८०॥
जपेदष्टाक्षरमनुमष्टोत्तरसहस्रकम् ।
करस्थे देशिकादीनां देवदेवस्य वा द्विजाः! ॥४८१॥
नष्टे कौतुकसूत्रे तु छिन्ने वा मुनिपुङ्गवाः! ।
सूत्रान्तरं पुनर्बध्वा शान्तिहोमं समाचरेत् ॥४८२॥
रक्षाबन्धं विना कर्मप्रारम्भे मुनिसत्तमाः! ।
सद्यो बध्वा प्रतिसरं शान्तिहोमं समाचरेत् ॥४८३॥
महोत्सवाद्युत्सवेषु प्रतिष्ठाप्रोक्षणादिके ।
कर्मणि स्नपनादौ वा बद्धप्रतिसरो गुरुः ॥४८४॥
ऋत्विजश्च तथाभूता मध्येप्याशौचसम्भवे ।
भवन्ति नैवाशुचयस्तत्तत्कर्मावसानकम् ॥४८५॥
शावं वा सूतकाशौचं कर्मानन्तरमाचरेत् ।
कर्ममध्ये स्नानमात्रं कार्यं शावस्य सम्भवे ॥४८६॥
कर्ममध्येपि वाशौचं भवेदात्मान्विते मृते ।
पिता माता ज्येष्ठपुत्रो भार्या चात्मान्विता स्मृताः ॥४८७॥
तदा गुरोरभ्यनुज्ञां लब्ध्वान्यो देशिकोत्तमः ।
तद्दोषस्य प्रशान्त्यर्थमुत्तमोत्तममार्गतः ॥४८८॥
देवं संस्नाप्य शान्त्यर्थं हुत्वाहुतिसहस्रकम् ।
गोभूतिलादिकं दत्वा ब्राह्मणान् भोजयेद्बहून् ॥४८९॥
ततः समापयेत्कर्मशेषं भक्तसमन्वितः ।
एवं गुरौ व्याधिते वा मृते वान्यः समाचरेत् ॥४९०॥
कर्मशेषं द्विजश्रेष्ठाः प्रायश्चित्तपुरस्सरम् ।
प्रमाणरहिते वंशे पटे बालध्वजेपि च ॥४९१॥

वर्णभूषणनामाद्ये दण्डयष्टौ तु वैणवे ।
फेणके चावटे पीठे प्रपायां ध्वजरज्जुषु ॥४९२॥
आचरेच्छान्तिहोमं च अष्टोत्तरशतं जपम् ।
छिन्ने भिन्नेऽग्निना दग्धे नष्टे मूषकदंशिते ॥४९३॥
विण्मूत्ररुधिरापेयरेतोनिष्ठीवनादिभिः ।
दूषिते ध्वजमुत्सृज्य प्राग्वदन्यं समाचरेत् ॥४९४॥
प्रतिष्ठाप्याथ दण्डाग्रमानयित्वाधमेन तु ।
संस्नाप्य दोषशान्त्यर्थं जुहुयात्सर्पिषा शतम् ॥४९५॥
स्तम्भाग्रे ध्वजवस्त्रस्य रक्षा कार्याथ दीक्षितैः ।
आरोहणे न दोषोऽत्र रक्षाहेतोर्द्विजातिभिः ॥४९६॥
ध्वजस्य रज्जुविच्छेदे किंचिच्छिन्ने तु वा ध्वजे ।
यष्टिघण्टाविहीने वा शान्तिहोमं समाचरेत् ॥४९७॥
सुजीर्णान् फेणदण्डादीन् परित्यज्य ततोपरान् ।
संस्कृत्य योजयेत्तत्र बध्वा तु ध्वजमञ्जसा ॥४९८॥
मध्यमस्नपनान्ते तु शान्तिहोमं समाचरेत् ।
वर्षवातातपस्पर्शैर्लुप्तवर्णे खगध्वजे ॥४९९॥
न किंचिदप्यनिष्टं स्यात् स्तम्भाग्रे यावदुत्सवम् ।
बद्धध्वजपटे स्तम्भे वातवेगादिहेतुभिः ॥५००॥
मूलदेशे तु विच्छिन्ने सध्वजे पतिते सति ।
अकृत्वा ध्वजविश्लेषं स्थापयेच्छेषमञ्जसा ॥५०१॥
स्नपनं चोत्तमं कुर्यात् चतुःस्थानार्चनादिकम् ।
गोभूहेमतिलादीनां दानं शक्त्या समाचरेत् ॥५०२॥
उत्सवध्वजभङ्गेन राज्याद्भ्रष्टो भवेन्नृपः ।
तस्मात्तत्परिहारार्थं त्वरया शान्तिमाचरेत् ॥५०३॥
हेतुभिर्वातवेगाद्यैर्ध्वजे निपतिते भुवि ।

क्षिप्रमुद्धृत्य तद्बध्वा स्नपनं चाधमेन तु ॥५०४॥
शान्त्यर्थं जुहुयादाज्यं तिलेन शतसंख्यया ।
ध्वजे निपतिते छिन्ने कुर्यात्स्नपनमुत्तमम् ॥५०५॥
पुनरन्यं समुत्पाद्य बध्नीयात्संस्कृतं तथा ।
अन्यथा यदि दोषः स्याद्राज्ञो राष्ट्रस्य मन्त्रिणः ॥५०६॥
ग्रामप्रदक्षिणे काले ध्वजे वातादिना भुवि ।
पतिते तत्पुनर्याने स्थाप्य नीत्वालयं ततः ॥५०७॥
स्थाप्याधमाधमेनाथ शान्तिहोमं समाचरेत् ।
सक्तुन्नियुक्तस्तम्भादौ पुनश्चापि नियोजिते ॥५०८॥
अधमोत्तममार्गेण स्नपनं शान्तिमाचरेत् ।
विपरीतध्वजपटं बन्धयेद्यदि मोहतः ॥५०९॥
तं मोचयित्वा बध्वान्यमधमाधममार्गतः ।
स्नपनं शान्तिहोमं च कुर्याद्दोषापनुत्तये ॥५१०॥
पक्षींशाधिष्ठिते कुम्भे नष्टे वा पतिते भुवि ।
स्पृष्टेऽस्पृश्यैस्तथा केशलोष्टास्थिशकृदादिभिः ॥५११॥
कुम्भेऽन्यस्मिन् समारोप्य तां शक्तिं कुम्भमध्यगाम् ।
हुत्वा मूलायुतं जप्त्वा शेषं कर्म समाचरेत् ॥५१२॥
ध्वजारोहणकाले तु अतिक्रान्ते द्विजोत्तमाः ! ।
शान्तिहोमं तु वा कुर्यात्सहस्रं जपमेव वा ॥५१३॥
ध्वजस्तम्भेऽग्निना किञ्चिद्दग्धे सन्धाय पूर्ववत् ।
शान्तिहोमं प्रकुर्वीत तद्दोषस्यापनुत्तये ॥५१४॥
स्तम्भस्य तु महद्दाहे छेदे भेदे तु वा द्विजाः ! ।
स्तम्भान्तरं प्रतिष्ठाप्य देवस्योत्तममार्गतः ॥५१५॥
स्नपनं शान्तिहोमं च कुर्याद्देशिकसत्तमः ।
ध्वजस्तम्भे तु चण्डालोदक्यादिस्पर्शदूषिते ॥५१६॥

तं त्यक्त्वान्यं प्रतिष्ठाप्य प्राग्वच्छान्तिं समाचरेत् ।
सूतकप्रेतकस्पृष्टे स्पृष्टे वा प्रतिलोमजैः ॥५१७॥
पञ्चगव्यैस्तु संप्रोक्ष्य शान्तिहोमं समाचरेत् ।
ध्वजस्तम्भे खगेशस्य पूजालोपे मुनीश्वराः ! ॥५१८॥
पूजालोपोदितं प्राग्वत्प्रायश्चित्तं समाचरेत् ।
देवतावाहनार्थं तु भेरीताडनकर्मणि ॥५१९॥
वाद्यजालेषु सर्वेषु मृदङ्गपणवादिषु ।
न स्थापितेषु स्वस्थाने तत्तत्पूजाविलोपने ॥५२०॥
पुण्याहपाठराहित्ये जप्त्वा मनुसहस्रकम् ।
तत्तत्कुर्याद्यथाशास्त्रं भेरीताडनलोपने ॥५२१॥
अधमाधममार्गेण देवं स्नाप्य यथाविधि ।
पुनस्तत्ताडनं कुर्याच्छान्तिहोमपुरस्सरम् ॥५२२॥
भेरीताडनकाले तु कोणच्छेदे द्विजोत्तमाः ! ।
चर्मविच्छेदने चैव शान्तिहोमपुरस्सरम् ॥५२३॥
जप्त्वा गारुत्मतं मन्त्रं पुनरन्यं समाचरेत् ।
ताडयेद्विधिवद्भेरीं तथाऽऽवाहनगाथया ॥५२४॥
सगणेषु च भूतेषु सगृहेषूत्कटादिषु ।
स्वासु दिक्षु यथान्यायमनाहूतेषु सत्सु च ॥५२५॥
द्वारावरणरथ्यासु ग्रामवास्तुष्वनुक्रमात् ।
बलिप्रदानहीने तु तथा ताळस्वरादिषु ॥५२६॥
गेयनृत्तेषु हीनेषु शान्तिहोमपुरस्सरम् ।
प्रत्येकं देवतामन्त्रमष्टधावर्तयेद्बुधः ॥५२७॥
पुनरापादयेत्सर्वं देवतावाहनादिकम् ।
आरम्भस्नपने हीने शान्तिहोमपुरस्सरम् ॥५२८॥
देवं संस्नापयेल्लुप्ते महाहविषि सत्तमाः ! ।

शान्तिहोमपुरस्कंतु द्विगुणं हविराचरेत् ॥५२९॥
द्वाःस्थानां यागगेहस्य पूजालोपे प्रमादतः ।
तत्तन्मन्त्रानष्टवारं जप्त्वा भूयः समर्चयेत् ॥५३०॥
चतुःस्थानार्चनाहीने त्वेककालं द्विजोत्तमाः ! ।
शान्तिहोमपुरस्कं तु यजेद्विगुणवस्तुभिः ॥५३१॥
एकाहमर्चनाहीने चतुःस्थानस्थितस्य तु ।
अधमाधममार्गेण देवं स्नाप्य यथाविधि ॥५३२॥
शान्तिहोमपुरस्कन्तु यजेद्विगुणवस्तुभिः ।
भेदे च्छेदे तु वा जाते महाकुम्भस्य सत्तमाः ! ॥५३३॥
तथा चास्पृश्यसंस्पर्शे तच्छक्तिं मण्डलावनौ ।
समावाह्य तु तत्कुम्भं त्यक्त्वान्यस्मिन् सलक्षणे ॥५३४॥
कुम्भे प्राग्वत्समावाह्य यजेच्छान्तिं समाचरेत् ।
मण्डलेप्येवमादीनां दोषाणां सम्भवे द्विजाः! ॥५३५॥
कुम्भे देवं समावाह्य प्राग्वत्सर्वं समाचरेत् ।
वल्मीकशिथिलीदुष्टे मण्डले तत्स्थदेवताः ॥५३६॥
कुम्भे विसृज्य तद्वेदीं खात्वापूर्य च सैकतैः ।
पुनर्मण्डलमालिख्य प्राग्वत्तत्र समर्चयेत् ॥५३७॥
तद्दोपशान्तये देवमधमाधममार्गतः ।
संस्नाप्य शान्तिहोमं च कुर्याद्देशिकसत्तमः ॥५३८॥
ध्वजतोरणकुम्भानां कूर्चपल्लववाससाम् ।
प्रतिमाधान्यपीठादेर्लोपे शान्तिं समाचरेत् ॥५३९॥
अष्टोत्तरशतं जप्त्वा यथाशास्त्रं प्रकल्पयेत् ।
ध्वजतोरणपूर्वाणां पीठानामङ्गरूपिणाम् ॥५४०॥
प्रपामण्टपपात्राणामन्येषां वा मुनीश्वराः ! ।
अग्निदाहे समुत्पन्ने पुनरुत्पाद्य तानपि ॥५४१॥

शान्तिहोमं प्रकुर्वीत मूलमन्त्रजपं तथा ।
प्रमादादुत्सवाग्नेस्तु नाशे जाते मुनीश्वराः ! ॥५४२॥
पुनरग्निं प्रतिष्ठाप्य देवमावाह्य पूर्ववत् ।
शान्तिहोमं प्रकुर्वीत शतब्राह्मणभोजनम् ॥५४३॥
यागशालाकुम्भदीपनिर्वाणे मुनिपुङ्गवाः ! ।
शान्तिहोमपुरस्कन्तु दीपमुद्दीप्य पूर्ववत् ॥५४४॥
जपेदष्टोत्तरशतं नेत्रमन्त्रं द्विजोत्तमाः ! ।
चण्डालसूतिकोदक्यागर्दभश्वानसूकरैः ॥५४५॥
ऊष्ट्रादिभिः सूतकिभिस्तथैव प्रतिलोमजैः ।
प्रविष्टे यागगेहान्तः कुम्भमण्डलवह्निषु ॥५४६॥
स्थितान् देवान् स्वहृदये समावाह्य यथाविधि ।
कुम्भमण्डलवह्न्यादीन् त्यक्त्वा लोहमयानि चेत् ॥५४७॥
पात्राणि तानि संशोध्य मार्जनोल्लेखनादिभिः ।
यागगेहं शोधयित्वा सेचयेत्पञ्चगव्यकैः ॥५४८॥
पुनःकुम्भादिकान् स्थाप्य हृदयस्थास्तु देवताः ।
यथापूर्वं समावाह्य शान्तिहोमं समाचरेत् ॥५४९॥
मूलमन्त्रायुतं जप्त्वा भोजयेद्ब्राह्मणान् शतम् ।
प्रतिरात्रं बलिद्रव्यव्यत्यासे सर्पिषां शतम् ॥५५०॥
हुत्वाग्नौ मूलमन्त्रेण जपेदष्टोत्तरं शतम् ।
काले तस्मिन् बलिं दद्यात्तत्काले प्रासमञ्जसा ॥५५१॥
व्यत्यासे बलिदेवानां जपो होमश्च तादृशः ।
अस्वतन्त्रालये ग्रामबलिदानेऽकृते द्विजाः ! ॥५५२॥
शान्तिहोमं प्रकुर्वीत तद्दोपस्य प्रशान्तये ।
सायं प्रातस्तु कर्तव्यमुत्सवेषु बलिद्वयम् ॥५५३॥
तन्न्यूनाधिक्यदोषे तु अधमोत्तममार्गतः ।

संस्नाप्य देवं विधिवत् शान्तिहोमं समाचरेत् ॥५५४॥
बिम्बाधिष्ठितयानस्य पतने भुवि सत्तमाः! ।
उद्वृत्योत्सवशेषं तु कृत्वा नवघटैर्विभुम् ॥५५५॥
संस्नाप्य शान्तिहोमं च कुर्याद्देशिकसत्तमः ।
अधिष्ठितेषु बिम्बेन यानेषु पतनादिना ॥५५६॥
भिन्नेष्वपि च वाहेषु प्रमादाद्यत्र कुत्र चित् ।
यानान्तरे समारोप्य वाहने वाथ कौतुकम् ॥५५७॥
शान्तिहोमं पुरा कृत्वा जपेन्मूलसहस्रकम् ।
गोभूहेमादिकं दद्याद्वैष्णवेभ्यो गुरोरपि ॥५५८॥
यानाद्वा वाहनाद्वापि बिम्बे तु पतिते सति ।
उत्तमं स्नपनं कृत्वा शान्तिहोमं समाचरेत् ॥५५९॥
यानमारोप्य तद्बिम्बं पुनरुत्सवमाचरेत् ।
तथैव च क्षतं बिम्बं समाधाय यथापुरम् ॥५६०॥
कृत्वा सम्प्रोक्षणं पश्चादुत्सवं शेषमाचरेत् ।
समाधौ दीर्घकालीने कुर्याच्छोभार्थकौतुके ॥५६१॥
शेषकर्म महार्चायां निर्वृत्ते सन्धिकर्मणि ।
पूर्ववत्तां प्रतिष्ठाप्य यथावच्छान्तिमाचरेत् ॥५६२॥
बिम्बेनाधिष्ठिते याने व्यूढेऽस्पृश्यजनैस्तदा ।
यानादीन् क्षाळयेद्देवमधमाधममार्गतः ॥५६३॥
स्नापयेत्केवलं याने व्यूढे तैः शुद्धवारिणा ।
सङ्क्षाळ्य यानं विधिवत्प्रोक्षयेत्पञ्चगव्यकैः ॥५६४॥
देवस्योत्सवकाले तु जातायां दीपनिर्वृतौ ।
पतने वापि दीपस्य मूलमन्त्रेण मन्त्रवित् ॥५६५॥
अष्टोत्तरसहस्रं तु हुत्वा तत्संख्यया जपेत् ।
छत्रचामरपूर्वाणां पतने तु शतं जपेत् ॥५६६॥

वह्निदाहे समुत्पन्ने पुनरुत्पाद्य तानपि ।
सजपं शान्तिहोमं तु कुर्यादष्टोत्तरं शतम् ॥५६७॥
देवस्योत्सवकाले तु ग्रामे मरणसम्भवे ।
पश्चाद्ग्रामं तु सम्प्रोक्ष्य अधमाधममार्गतः ॥५६८॥
देवं संस्नापयेत्पश्चाच्छान्तिहोमं समाचरेत् ।
देवस्योत्सवकाले तु ग्रामादौ वह्निदाहतः ॥५६९॥
दूषिते पञ्चगव्यैस्तु प्रोक्ष्य ग्रामादिकं बुधः ।
शान्तिहोमं च कृत्वाथ पुनरुत्सवमाचरेत् ॥५७०॥
ग्रामादावग्निना दग्धे वात्यासारादिदूषिते ।
शान्तिहोमं पुरा कृत्वा पश्चादुत्सवमाचरेत् ॥५७१॥
अन्यथा चोत्सवे क्लृप्ते त्वधमोत्तममार्गतः ।
देवं संस्नाप्य विधिवच्छान्तिहोमं समाचरेत् ॥५७२॥
शून्येषु ग्रामनगरपत्तनादिषु चोत्सवम् ।
बलिदानं न कुर्वीत कृते तत्रापि निष्फलम् ॥५७३॥
धामन्येवोत्सवं कुर्याद्बलिदानं च देशिकः ।
अन्यथा करणे देवमुत्तमोत्तममार्गतः ॥५७४॥
संस्नाप्य शान्तिहोमं च कुर्यात्तद्दोषशान्तये ।
समाहिते तु ग्रामादौ ग्रामशान्तिपुरस्सरम् ॥५७५॥
पुनरप्युत्सवं कुर्याद्ब्राह्मणानामनुज्ञया ।
रिपुचोराग्निवृष्ट्यादिभयात्कस्मिंश्चिदुत्सवे ॥५७६॥
विघ्निते मुनिशार्दूलाः! केवलं बलिमाचरेत् ।
अतिक्रान्तोत्सवं कुर्यादन्येद्युः शान्तिपूर्वकम् ॥५७७॥
विघ्निते बलिदानेपि ह्यन्येद्युरधमोत्तमम् ।
स्नपनं शान्तिहोमं च कृत्वातिक्रान्तमुत्सवम् ॥५७८॥
बलिदानं च कुर्वीत द्विदिनं त्रिदिनं तु वा ।

चतुष्पञ्चदिनं वापि उत्सवे विघ्निते सति ॥५७९॥
तत्तद्दोषानुरूपेण प्रायश्चित्तं विधाय च ।
अतिक्रान्तोत्सवान् कुर्याद्बलिदानानि च क्रमात् ॥५८०॥
देवस्योत्सवकाले तु महावातैस्तथाऽऽतपैः ।
पांसुभिर्वर्षनीहारैः स्पृष्टे बिम्बेऽधमोत्तमम् ॥५८१॥
स्नपनं शान्तिहोमं च कुर्यात्तद्दोषशान्तये ।
बिम्बे चोरादिभिर्नष्टे वर्तमाने महोत्सवे ॥५८२॥
बिम्बान्तरं समापाद्य प्रतिष्ठाप्य यथापुरम् ।
महाभिषेकं हवनं जपं चैव यथाविधि ॥५८३॥
कुर्यादुत्सवशेषं तु कर्मार्चादिषु नाचरेत् ।
रथस्य यात्राकाले तु चक्रच्छेदेऽक्षभेदने ॥५८४॥
रज्जुच्छेदेपि वा ह्यन्यं संयोज्य च यथापुरम् ।
यात्रान्ते शान्तिहोमं तु कुर्यात्तद्दोषशान्तये ॥५८५॥
शिखाकुम्भस्य पतने सारथेः पतने तु वा ।
पुनर्यथापुरं स्थाप्य कृत्वा पुण्याहवाचनम् ॥५८६॥
रथं सम्प्रोक्ष्य यात्रान्ते शान्तिहोमं समाचरेत् ।
रथोपरि त्वयोग्यानामारोहे पंचगव्यकैः ॥५८७॥
रथं सम्प्रोक्ष्य यात्रान्ते त्वधमाधममार्गतः ।
स्नापयेद्देवदेवेशं रथे वै किंचिदग्निना ॥५८८॥
दग्धे पुनर्नवीकृत्य सेचयेत्पंचगव्यकैः ।
यात्रान्ते स्नपनं कुर्यादधमोत्तमसंज्ञकम् ॥५८९॥
रथस्य तु महद्दाहे रथाद्देवं खगोपरि ।
समारोप्यालयं नीत्वा उत्तमोत्तममार्गतः ॥५९०॥
स्नपनं शान्तिहोमं च कुर्याद्ब्राह्मणभोजनम् ।
रथाद्बिम्बस्य पतने रथोपरि खगे तु वा ॥५९१॥

पुनर्देवं समारोप्य नीत्वा वै मन्दिरं ततः ।
उत्तमोत्तममार्गेण स्नपनं हवनं तथा ॥५९२॥
मूलमन्त्रायुतजपं कृत्वा गोभूतिलादिकम् ।
दत्वा तद्दोषशान्त्यर्थं सहस्रं भोजयेद्द्विजान् ॥५९३॥
सबिम्बस्य रथस्यैव पतने प्राग्वदाचरेत् ।
प्रायश्चितं द्विजश्रेष्ठाः! रथभङ्गे तु तं पुनः॥५९४॥
सन्धायोत्सवशेषं तु कृत्वा शान्त्यै हुनेद्गुरुः ।
असन्धेये रथे देवमारोप्य च खगोपरि॥५९५॥
नीत्वालयं तत्र देवमधमोत्तममार्गतः ।
संस्नाप्य शान्तिहोमादि कुर्यात्तद्दोषशान्तये ॥५९६॥
रथचक्रादिघातैस्तु मनुष्यमरणे सति ।
शवं बहिर्विनिष्कास्य तद्देशखननादिकाम ॥५९७॥
पञ्चशुद्धिं क्रमात्कृत्वा यात्रान्ते त्वधमोत्तमम् ।
स्नपनं शान्तिहोमं च कुर्याद्ब्राह्मणभोजनम् ॥५९८॥
चक्रघातादिना तिर्यङ्मरणे प्राग्वदाचरेत् ।
भूमिशुध्यादिकं सर्वं स्नपनं त्वधमाधमम् ॥५९९॥
यात्राकाले तथान्योन्यविरोधादायुधादिना ।
रथान्तिके जनमृतौ प्राग्वन्निष्कृतिरीरिता ॥६००॥
तद्रक्ताद्यै रथे स्पृष्टे रथं संक्षाल्य वारिभिः ।
पञ्चगव्येन संप्रोक्ष्य यात्रान्ते त्वधमाधमम् ॥६०१॥
स्नपनं शान्तिहोमं च कुर्याद्देशिकसत्तमः ।
रथोत्सवस्य काले तु तद्ग्रामे यत्र कुत्र वा ॥६०२॥
मरणे ब्राह्मणादीनां तच्छवं ग्रामतो बहिः ।
निष्कास्य ग्रामवीथीस्तु मार्जनोल्लेखनादिभिः ॥६०३॥
संशोध्य पञ्चगव्येन प्रोक्ष्य यात्रां समाचरेत् ।
ततोऽधमाधमं स्नानं शान्तिहोमं समाचरेत् ॥६०४॥

एकद्वित्रिदिनान्ते तु रथे स्वस्थानसंस्थिते ।
अधमोत्तममार्गेण स्नपनं हवनं तथा ॥६०५॥
कृत्वा ततस्त्वतिक्रान्तमुत्सवं बलिमाचरेत् ।
तथा तीर्थदिने वापि ह्यप्रविष्टे रथे खलम् ॥६०६॥
अवरोप्य रथाद्देवं समारोप्य खगेश्वरे ।
ग्रामप्रदक्षिणं नीत्वा उत्तमोत्तममार्गतः ॥६०७॥
स्नपनं शान्तिहोमं च कृत्वातिक्रान्तमुत्सवम् ।
बलिदानं च कुर्वीत ततस्तीर्थादिकं चरेत् ॥६०८॥
एकद्वित्रिदिनान्तं तु रथारोहे तु विघ्निते ।
अधमोत्तममार्गेण स्नपनं हवनं तथा ॥६०९॥
द्विजानां भोजनं कृत्वा सद्यः कुर्याद्रथोत्सवम् ।
एकद्वित्रिचतुर्वर्षं विघ्निते तु रथोत्सवे ॥६१०॥
उत्तमस्नपनं होमं सहस्रद्विजभोजनम् ।
गोभूदानादिकं कृत्वा रथप्रोक्षणमाचरेत् ॥६११॥
रथस्था देवताः पूज्य खगेशमनुना ततः ।
अष्टोत्तरशतं हुत्वा तिलैराज्यैश्च तण्डुलैः ॥६१२॥
रथस्थदेवतामन्त्रैः पृथगष्टाहुतीर्हुनेत् ।
एवं कृत्वाथ देवस्य रथयात्रां समाचरेत् ॥६१३॥
महोत्सवाङ्गभूते तु वसन्तोत्सवकर्मणि ।
डोलोत्सवे च मृगयाद्युत्सवे च मुनीश्वराः ! ॥६१४॥
युद्धारम्भे च देवीभ्यां तथा चूर्णाभिषेचने ।
लुप्ते कुर्यात् शान्तिहोमं तत्तद्दोषोपशान्तये ॥६१५॥
मुहूर्तातिक्रमेप्येवमुत्सवे सर्वकर्मणाम् ।
शान्तिहोमं प्रकुर्वीत अष्टोत्तरजपं तथा ॥६१६॥
दिवारात्र्युत्सवं कुर्यादासूर्यास्तमयोदयात् ।

कालयोर्विपरीतश्चेदधमस्नपनं चरेत् ॥६१७॥
तीर्थयात्रा प्रकर्तव्या सूर्यस्यास्तमयात्पुरा ।
पूर्वभागे रजन्यां वा कुर्यात्स्वव्यक्तदिव्ययोः ॥६१८॥
उत्तमस्नपनं कुर्यात्तीर्थकालविपर्यये ।
भ्रष्टायां तीर्थयात्रायामवरोप्य खगध्वजम् ॥६१९॥
पूर्ववद्ध्वजमुत्थाप्य कुर्यात्तीर्थार्थमुत्सवम् ।
कुम्भप्रोक्षणलोपे तु स्नपनं मध्यमोत्तमम् ॥६२०॥
महोत्सवान्तस्नपने नष्टे स्नापयेत्ततः ।
उत्तमोत्तममार्गेण शान्त्यर्थं जुहुयात्ततः ॥६२१॥
निशायां सर्वशान्त्यर्थी पुष्ट्यर्थी मध्यमे दिने ।
आप्यायनार्थी पूर्वाह्णे धर्मार्थी मध्यतो निशि ॥६२२॥
तथा रिपुक्षयार्थी च पुष्पयागं समाचरेत् ।
न तु पर्युषितैः पुष्पैः परिम्लानैस्तथार्चयेत् ॥६२३॥
तद्दोपशान्तये कुर्यात्स्नपनं त्वधमाधमम् ।
नष्टे पुष्पयागेऽस्मिन् कुर्यात्स्नपनमुत्तमम् ॥६२४॥
तद्रात्रौ ध्वजदण्डाग्रादवरोप्य खगध्वजम् ।
ब्रह्मादिवास्तुनिष्ठानां बलिं दत्वा विसर्जयेत् ॥६२५॥
उत्सवान्ते ध्वजे नष्टे पुरस्तादवरोहणात् ।
प्राग्वत् ध्वजं समुत्थाप्य पुनरेवावरोहयेत्॥६२६॥
तीर्थान्ते पंचदिवसादूर्ध्वं चाप्यवरोहणे ।
ध्वजस्य नष्टे कुर्यात्स्नपनं मध्यमोत्तमम् ॥६२७॥
अवरोप्य ध्वजं पश्चाद्देवतास्तु विसर्जयेत् ।
उद्वासनवेलेलोपे शान्तिहोमपुरस्सरम् ॥६२८॥
द्विगुणं तु बलिं दत्वा देवतोद्वासनं चरेत् ।
आचार्यदक्षिणाहीने निष्फलः स्यात्स उत्सवः ॥६२९॥

आचार्यदक्षिणाहीनं ऋत्विजां च तथैव च ।
यत्कर्म क्रियते सर्वमभिचाराय कल्पते ॥६३०॥
तच्छान्त्यै शान्तिहोमं तु कारयेद्गुरुणा ततः ।
प्रणम्य दण्डवद्भूमौ यजमानः स्वयं गुरोः ॥६३१॥
सन्तोषं कारयेद्धीमान् वस्त्रहेमाङ्गुळीयकैः ।
दक्षिणां द्विगुणां दद्यात्तेन शान्तिर्भविष्यति ॥६३२॥
द्विजभोजनलोपेपि ह्येवं शान्तिं समाचरेत् ।
अतुष्टेषु ब्राह्मणेषु न प्रीणाति हरिः सदा ॥६३३॥
यत्र विप्रास्तु सन्तुष्टास्तत्र देवः प्रसीदति ।
ततस्तद्दोषशान्त्यर्थं द्विगुणं भोजयेद्द्विजान् ॥६३४॥
दैवाद्वा मानुषाद्धेतो राष्ट्रक्षोभादिनापि वा ।
एकद्वित्रिदिनं विप्रा अनारब्धे महोत्सवे ॥६३५॥
ब्राह्मणान् समनुज्ञाप्य देवेशस्याधमोत्तमम् ।
स्नपनं शान्तिहोमं च कृत्वा ब्राह्मणभोजनम् ॥६३६॥
अङ्कुरार्पणपूर्वं तु द्रव्यैर्द्विगुणितैस्ततः ।
अतिक्रान्तोत्सवान् कृत्वा क्रमप्राप्तमथाचरेत ॥६३७॥
चतुःपंचदिनं विघ्ने स्नपनं मध्यमोत्तमम् ।
कुर्यात्तद्दोषशान्त्यर्थं सर्वं पूर्ववदाचरेत् ॥६३८॥
षट्सप्तदिनपर्यन्तमनारब्धे तु चोत्सवे ।
उत्तमोत्तममार्गेण स्नानमन्यत्तु पूर्ववत् ॥७३९॥
तथाष्टदिनपर्यन्तमनारब्धे महोत्सवे ।
सहस्रकलशैर्देवं स्नाप्य प्राग्वत्समाचरेत् ॥६४०॥
यद्वा तीर्थदिने विप्राः ! आरभ्यः पुनरुत्सवः ।
तथा तीर्थदिने चापि ह्यतिक्रान्ते द्विजोत्तमाः! ॥६४१॥
तदनन्तरमासस्थतीर्थऋक्षवशेन तु ।

पुनरप्युत्सवं कुर्यात्सर्वदोषप्रशान्तये ॥६४२॥
तस्मिन् मासेप्यतिक्रान्ते मासि स्यात्तदनन्तरे ।
एवं संवत्सरान्तं स्यादतिक्रान्तेपि वत्सरे ॥६४३॥
सहस्रकलशस्नानं शान्तिहोमोऽप्ययुतं जपः ।
सहस्रब्राह्मणानां च भोजनं कारयेद्द्विजाः! ॥६४४॥
तेनैव शान्तिर्भवति न गतोत्सवमाचरेत् ।
नवाहोत्सवपूर्वेषु पूर्वं यावद्दिनोत्सवम् ॥६४५॥
सङ्कल्पितं तथैव स्यात्प्रतिसंवत्सरं द्विजाः! ।
तावन्न्यूनाधिकदिनं नोत्सवं परिकल्पयेत् ॥६४६॥
अमत्या यदि कुर्वीत पुनरुत्सवमाचरेत् ।
वैशेषिकेषु प्राप्तेषु वर्तमाने महोत्सवे ॥६४७॥
द्वादश्यादिषु तत्सर्वं यथान्यायं समाचरेत् ।
न लोपयेत्प्रयत्नेन प्राप्तं वैशेषिकं सुधीः ॥६४८॥
जपेदष्टायुतं मन्त्री त्वकृतेषु च शान्तये ।
एवमादिषु चान्येषु दोषेषु मुनिसत्तमाः! ॥६४९॥
उत्सवाग्नौ यथाशास्त्रं शान्तिहोमं समाचरेत् ।
पर्वोत्सवेषु लुप्तेषु स्नपनं त्वधमाधमम् ॥६५०॥
हविर्निवेदनं चापि विशेषेण समाचरेत् ।
श्रवणाद्युत्सवे लुप्ते स्नपनं त्वधमोत्तमम् ॥६५१॥
लुप्ते तु कृत्तिकादीपे तदनन्तरमासि वा ।
कुर्वीत वह्निनक्षत्रे स्नपनं त्वधमोत्तमम् ॥६५२॥
दीपोत्सवं प्रकुर्वीत शान्तिहोमपुरस्सरम् ।
अन्येष्वप्युत्सवेष्वेवं लुप्तेषु मुनिपुङ्गवाः! ॥६५३॥
तदनन्तरमासे वा तत्तदुत्सववासरे ।
आचरेदुत्सवं प्राग्वत्स्नानहोमपुरस्सरम् ॥६५४॥

प्रायश्चित्तमथो वक्ष्ये पवित्रारोपणे द्विजाः! ।
अप्रमाणे पवित्रे तु अस्त्रमन्त्रायुतं जपेत् ॥६५५॥
अतीत उक्तकाले तु चातुर्मास्यस्य मध्यतः ।
मध्यमं स्नपनं कृत्वा काले ऽन्यस्मिंस्तदाचरेत् ॥६५६॥
पवित्रे केशपाषाणचर्माङ्गारनखादिभिः ।
दूषिते वाग्निना दग्धे छिन्ने दष्टेऽतिभक्षिते ॥६५७॥
मूषिकाद्यैश्च काकाद्यैस्स्पृष्टे त्यक्त्वा तु तत्पुनः ।
सूत्रैस्तथाविधं कृत्वा विधिवच्चाधिवासयेत् ॥६५८॥
एवं दुष्टपवित्राणां मोहादारोपणे कृते ।
तत्परित्यज्य देवेशमधमोत्तममार्गतः ॥६५९॥
संस्नाप्य हुत्वा शान्त्यर्थं दद्याच्छुद्धपवित्रकम् ।
अक्रमेण तु देवस्य पवित्रारोपणे कृते ॥६६०॥
शान्तिहोमं तदा कृत्वा सहस्रं जपमाचरेत् ।
मुहूर्ते समतिक्रान्ते शुद्धे यजनविस्तरात् ॥६६१॥
तदन्यस्मिन् विभोर्दद्यात्पवित्रं शान्तिपूर्वकम् ।
पावित्रिकी तीर्थयात्रा न कृता चेन्मुनीश्वराः ! ॥६६२॥
उत्तमं स्नपनं कृत्वा पुनरुत्सवमाचरेत् ।
पवित्रे देवदेवस्य अयोग्यानां नियोजिते ॥६६३॥
शान्तिहोमं तदा कृत्वा सहस्रं जपमाचरेत् ।
चातुर्मास्ये तु देवस्य कुर्वीत शयनोत्सवम् ॥६६४॥
तद्व्यत्यये विलोपे च चतुःस्थानार्चनादिकम् ।
जप्त्वा मूलायुतं मन्त्री शान्त्यर्थं जुहुयात्तथा ॥६६५॥
कलशस्थापनार्थं चेन्न कुर्यादङ्कुरार्पणम् ।
तथा प्रतिसरं बन्धं मूलमन्त्रायुतं जपेत् ॥६६६॥
पुरस्तादङ्कुरानर्प्य बध्वा बिम्बे तु कौतुकम् ।

अमत्यावा समत्या वा स्नपनं नाचरेद्यदि ॥६६७॥
शान्तिहोमं पुरा कृत्वा जपेदष्टाक्षरायुतम् ।
कौतुकांकुरपूर्वं तु पुनरेवाभिषेचयेत् ॥६६८॥
अकृत्वांकुरयागं तु तथा कौतुकबन्धनम् ।
स्नापितो यदि देवेशः स्नपनं निष्फलं भवेत् ॥६६९॥
विधिवच्चांकुरावापं कृत्वा कौतुकबन्धनम् ।
स्नापयेद्विधिवन्मन्त्री शान्तिहोमपुरस्सरम् ॥६७०॥
सङ्कल्पिते तु स्नपने त्वकृते द्विगुणं चरेत् ।
नासादितैर्द्रव्यहीनैः स्नापितेप्येवमाचरेत् ॥६७१॥
स्थापितेष्वथ कुम्भेषु हीनेषु स्थाप्य पूर्ववत् ।
जपेत्कलशदैवत्यं मन्त्रमष्टोत्तरं शतम् ॥६७२॥
समुद्धृतेषु कुम्भेषु रिक्तेषु सुषिरादिना ।
प्राग्वदन्यं प्रतिष्ठाप्य जपेदष्टोत्तरं शतम् ॥६७३॥
मार्जालमूषिकाद्यैस्तु स्पृष्टे वा लंघिते घटे ।
केशास्थिलोष्टसंस्पृष्टे भेदच्छेदादिदूषिते ॥६७४॥
पिपीलिकादेर्गव्यादौ पतने सूत्रवस्त्रयोः ।
अग्निदाहे तथा कुम्भे कालमण्डलदूषिते ॥६७५॥
तं तं कुम्भं परित्यज्य स्थाप्य कुम्भान्तरं पुनः ।
सम्पूज्य कुम्भदैवत्यं मन्त्रमष्टोत्तरं जपेत् ॥६७६॥
स्थापिते स्नानकलशे श्वानकुक्कुटवायसैः ।
अस्पृश्यैश्चापि संस्पृष्टे उदक्यासूतिकादिभिः ॥६७७॥
चण्डालैर्वा सन्निकृष्टे स्पृष्टे सूतकिभिर्नरैः ।
सर्वान् कुम्भान् परित्यज्य शुद्धान् संस्थाप्य पूर्ववत् ॥६७८॥
पुण्याहपूर्वकं चेष्ट्वा जप्त्वा मूलसहस्रकम् ।
मन्त्रं कलशदैवत्यमष्टवारं जपेत्पृथक् ॥६७९॥

दुष्टैस्संस्नापिते देवे पुनरप्यभिषेचयेत् ।
माहिषाजोष्ट्रसम्भूतदधिक्षीरघृतादिभिः ॥६८०॥
मासातीतघृतैर्वापि पयोभिर्दधिसंयुतैः ।
क्षीरयुक्तैश्च दधिभिर्गुडमिश्रैश्च माक्षिकैः ॥६८१॥
अन्यैश्च सङ्करद्रव्यैस्तथा पर्युषितोदकैः ।
अगाळितैश्च सलिलैस्तथा वै पल्वलोदकैः ॥६८२॥
संस्नापिते तु देवेशे पुनरप्यभिषेचयेत् ।
शान्तिहोमं च कुर्वीत तत्तद्दोषप्रशान्तये ॥६८३॥
अधिवासितकुम्भस्थतोयानां पूर्वमेव तु ।
न पर्युषितदोषोस्ति अधिवासैस्तथार्चनैः ॥६८४॥
अनर्चने च कुम्भानामक्रमेण समर्चने ।
अक्रमेण समुद्धारे स्थापने द्रव्ययोजने ॥६८५॥
द्रव्ये न्यूनेऽधिकेवापि शरावे कलशे तथा ।
कूर्चे वस्त्रे तथा कोष्ठे पीठादौ तोरणादिके ॥६८६॥
प्रमाणरहिते धान्यपीठाभावे मुनीश्वराः! ।
सूत्रवस्त्राद्यभावे च शतवारं जपेन्मनुम् ॥६८७॥
गेयमङ्गळवादित्रस्तोत्रनृत्तादिभिर्विना ।
वीणावेणुनिनादैश्च तथा पुण्याहवाचनैः ॥६८८॥
विनाभिषेचने मूलमष्टोत्तरशतं जपेत् ।
मोक्षार्थी स्नापयेद्देवं सर्वकालं यथाविधि ॥६८९॥
रिपूणां निग्रहार्थीतु दिवा कुर्यात्तु सर्वदा ।
स्वर्गकामस्तु पूर्वाह्ने धर्मार्थी दिनमध्यमे ॥६९०॥
दिनान्ते सर्वभोगार्थी प्रायश्चित्तेषु सर्वदा ।
चन्द्रसूर्योपरागे च तत्काले स्नापयेत्प्रभुम् ॥६९१॥
संक्रान्तिषु च सूर्यस्य प्रागूर्ध्वश्चात्तथैव च ।

संक्रान्तिकाला विज्ञेया नाड्यः षोडश षोडश॥६९२॥
तदानीं स्नापयेद्देवमतिक्रान्ते हुनेन्मनुम् ।
सहस्रकृत्वस्तदनु तत्समञ्जसमाचरेत् ॥६९३॥
बद्धप्रतिसरे बिम्बे स्नपनार्थं तु मन्त्रिणा ।
सम्प्राप्ते स्नपनेऽन्यस्मिन् प्रायश्चित्तनिमित्ततः ॥६९४॥
तदर्थं कौतुकं बध्वा स्नानकर्म समाप्य च ।
पूर्वारब्धं प्रकुर्वीत प्रायश्चित्तादनन्तरम् ॥६९५॥
अन्यत्र क्रमशः कुर्यात्पूर्वारब्धं समाप्य च ।
अन्यथा चेदिदं कर्म निष्फलं भवति द्विजाः! ॥६९६॥
तद्दोषपरिहारार्थं शान्तिहोमो जपस्तथा ।
सहस्रसंख्यया युक्तो मूलमन्त्रेण मन्त्रवित् ॥६९७॥
विनावभृथकालं तु देवमालयतो बहिः ।
स्नापयेद्यदि संमोहाच्छान्तिहोमं समाचरेत् ॥६९८॥
बहुबेरेऽभिषेकार्चां तां गृहीत्वाग्रमण्टपात् ।
न गच्छेद्बाह्यतो मन्त्री स्नपनार्थं बहिर्गते ॥६९९॥
शान्तिहोमं प्रकुर्वीत तस्य दोषस्य शान्तये ।
बिम्बेऽभिषिच्यमाने तु पतिते स्नानविष्टरात् ॥७००॥
प्रतिष्ठास्नपनं कृत्वा शान्तिहोमं समाचरेत् ।
स्नानकाले विशेषेण बिम्बस्य चलने द्विजाः!॥७०१॥
चलने स्नानवेद्याश्च शान्तिहोमं समाचरेत् ।
प्रभापीठास्त्रवस्त्राङ्गभेदभङ्गादिदूषिते ॥७०२॥
तत्तद्बिम्बगतां शक्तिं नियोज्य धृतकौतुके ।
सन्धानं शिल्पिभिः कृत्वा सुसंस्कृत्य तदैव तु ॥७०३॥
शेषकर्मणि निर्वृत्ते स्नापयेदुत्तमक्रमात् ।
तिलेन चरुणाज्येन प्रत्येकञ्च सहस्रशः ॥७०४॥

जुहुयान्मूलमन्त्रेण तेन शान्तिर्भविष्यति।
तदा न घटितुं शक्तिर्यदि स्याद्यत्नगौरवात् ॥७०५॥
शोभार्थबिम्बे पुरतः स्थापिते शेषमाचरेत्।
एवमुत्सवतीर्थार्थशयनादिषु मूर्तिषु ॥७०६॥
तत्तदङ्गादिसन्धानं स्थापनं योजनं पुनः।
क्ष्मापरिग्रहकाले तु दुर्निमित्तोदये द्विजाः! ॥७०७॥
शान्तिहोमं पुरा कृत्वा सहस्रं जपमाचरेत्।
तथैव क्षेत्रमानार्थं सूत्रं यत्संप्रसारितम् ॥७०८॥
विच्छेदे तस्य सूत्रस्य शङ्कूनां वा विदारणे।
भूतानां बलिकाले तु पतिते बलिपात्रके ॥७०९॥
भूतले खन्यमाने तु भस्माङ्गारतुषादिके।
क्रिमिकीटादिके वापि दृष्टे तच्छान्तये द्विजाः! ॥७१०॥
नारसिंहेन मन्त्रेण तिलैराज्यैः सहस्रशः।
हुनेदाचार्यवरणमकृत्वा क्ष्मापरिग्रहम् ॥७११॥
मन्दिरे निर्मिते विप्रा ब्राह्मणानामनुज्ञया।
शान्तिहोमपुरस्कन्तु क्ष्मापरिग्रहमाचरेत् ॥७१२॥
बालस्थानमकृत्वैव मन्दिरे निर्मिते द्विजाः!।
मूलार्चास्थापनात्पूर्वं यजमानान्वितो गुरुः ॥७१३॥
रविमण्डलमध्यस्थं देवं सम्पूज्य भक्तितः।
ओंनमः पुण्डरीकाक्ष भक्तानुग्रहकारक ॥७१४॥
क्षन्तुमर्हसि देवेश यन्मयाप्यकृतं कृतम्।
इति प्रणम्य देवेशं वासस्थानं यथाविधि ॥७१५॥
निर्माय तत्र देवं तु प्रतिष्ठाप्य समर्चयेत्।
खातप्रदेशे प्रासादभूमध्ये मुनिसत्तमाः! ॥७१६॥
विना प्रासादनिर्माणे कुम्भसंस्थापनादिकम्।

ब्राह्मणान् समनुज्ञाप्य स्नात्वा प्रासादमध्यतः ॥७१७॥
तत्र कुम्भस्थापनादि यथासम्भवमाचरेत् ।
शान्तिहोमं च कुर्वीत सर्वदोषप्रशान्तये ॥७१८॥
गर्भन्यासेपि न कृते तथा गर्भं च विन्यसेत् ।
आयशुद्ध्यादिहीने वा प्रासादे लक्षणोज्झिते ॥७१९॥
यथाशास्त्रं पुनः कृत्वा शान्तिहोमं समाचरेत् ।
न स्थापिते शिखाकुम्भे प्रासादे चाप्रतिष्ठिते ॥७२०॥
तत्तत्कर्म पुनः कुर्याच्छान्तिहोमपुरस्सरम् ।
प्राकारमण्टपादीनां गोपुरादेस्तथा द्विजाः! ॥७२१॥
अकृते स्थापने शान्तिपूर्वं तत्तत्समाचरेत् ।
दारुलोहशिलादीनां संग्रहावसरे द्विजाः! ॥७२२॥
दुर्निमित्तोदये चैव तथा दुस्वप्नदर्शने ।
नारसिंहेन मन्त्रेण तिलाज्यैस्तु सहस्रशः ॥७२३॥
शान्तिहोमं प्रकुर्वीत सर्वदोषप्रशान्तये ।
दारुलोहशिलामृत्स्नावस्त्रादीनां परिग्रहे ॥७२४॥
तत्तदङ्गतयोदीर्णद्रव्यमन्त्रक्रियादिषु ।
परिच्युतेषु तत्कुर्याच्छान्तिहोमजपादिकम् ॥७२५॥
अकृते पर्वतादौ तु दार्वादीनां परिग्रहे ।
आनीतस्यालयक्षेत्रे शिल्पिभिः सत्क्रियां विना ॥७२६॥
यथावदाचरेद्विद्वानर्चाद्रव्यस्य सङ्ग्रहम् ।
विनैव संग्रहं कर्मबिम्बादौ निर्मिते सति ॥७२७॥
पश्चादपि च तत्कुर्याच्छान्तिहोमपुरस्सरम् ।
बिम्बपीठशिलादीनां मानोन्मानादिलक्षणे ॥७२८॥
रहिते शान्तिहोमं तु कुर्यात्तद्दोषशान्तये ।
बिम्बपीठशिलानां तु व्यत्यस्ते पुंशिलादिके ॥७२९॥

तत्तत्त्यक्त्वा पुनः कुर्याद्यथोक्तशिलया द्विजाः!।
निर्मिता प्रतिमा शीघ्रं स्वगृहे न निवेशिता ॥७३०॥
राज्ञो राष्ट्रस्य तत्कर्तुरनिष्टमुपपादयेत्।
एकविंशद्दिनादूर्ध्वमासुरी सा भवेद्ध्रुवम् ॥७३१॥
कृत्वा महाभिषेकार्चं स्थापयेदन्यथा त्यजेत्।
जलाधिवासे स्नपने तथा नयनमोक्षणे ॥७३२॥
शयने वेदिकायां च मन्त्रन्यासादिकर्मसु।
कुम्भमण्डलपूजायां द्वारतोरणकुम्भयोः ॥७३३॥
होमे पीठादिसंस्कारे अकृते वान्यथा कृते।
शान्तिहोमं प्रकुर्वीत सहस्राहुतिसंख्यया ॥७३४॥
मूलमन्त्रायुतजपं शतब्राह्मणभोजनम्।
अस्थाने स्थापिते बिम्बे पादाधारशिलान्वितम् ॥७३५॥
तदानीमेव चोद्धृत्य स्थापयेत्तं स्वके पदे।
उत्तमस्नपनं कृत्वा शान्तिहोमं समाचरेत् ॥७३६॥
न स्थापिते मुहूर्तेऽस्मिन् न तदा बिम्बमुद्धरेत्।
पूर्ववत्स्नपने होमे कृते शान्तिर्भविष्यति ॥७३७॥
स्थापनेऽधिकृते मुख्ये देशिके व्याधितेसति।
न्यस्तदेहे ऽथवा मध्ये वर्तमाने क्रियाक्रमे ॥७३८॥
क्रियामन्त्रोपदेष्टा च प्रतिष्ठाकर्मणि स्थितः।
पुत्रो वा देशिकेन्द्रस्य स्थापने शेषमाचरेत् ॥७३९॥
अन्ते सहस्रकलशैरभिषिच्य सुरेश्वरम्।
चक्रांबुरुहकुण्डे तु मधुक्षीरादिभिः क्रमात् ॥७४०॥
शान्त्यर्थं मधुना हुत्वा तत्संख्यं जपमाचरेत्।
प्रतिष्ठाकर्मकालादावाचार्ययजमानयोः ॥७४१॥
ऋत्विगाचार्ययोर्वापि संजाते कलहे द्विजाः!।

कर्म निष्फलतां याति शान्तिहोमं समाचरेत् ॥७४२॥
नमस्कृत्याभ्यर्च्य गुरुं क्षम्यतामिति चोच्चरेत् ।
दोषाणामेवमादीनां सम्भवेपि मुनीश्वराः! ॥७४३॥
तत्तच्छान्तिं प्रकुर्वीत शान्तिहोमजपादिभिः ।

मुनयः ।

प्रायश्चित्तान्यशेषाणि श्रुतानि मुनिपुङ्गव ! ॥७४४॥
तत्र तत्र त्वया प्रोक्तं कर्म संप्रोक्षणाभिधम् ।
ग्रामशान्तिविधिश्चापि शान्तिहोमश्च भूयशः ॥७४५॥
तद्विधानादिकं सर्वं ज्ञातुमिच्छामहे मुने! ।

नारदः ।

सम्प्रोक्षणविधानादीन् वक्ष्यामि मुनिसत्तमाः ! ॥७४६॥
शृणुध्वमधुना सर्वे सावधानेन चेतसा ।
बिम्बपीठविमानानां भग्नाङ्गे तु समाहिते ॥७४७॥
प्रतिमापीठयोरष्टबन्धने तु पुनः कृते ।
आशौचवद्भिर्मनुजैर्महापातकभिर्नरैः ॥७४८॥
चण्डालोदक्यादिभिश्च म्लेच्छैर्वा फुल्कसादिभिः ।
देवबिम्बेतु संस्पृष्टे चण्डालश्वपचादिभिः ॥७४९॥
निरन्तरं त्वेकमासमालये समधिष्ठिते ।
चण्डालश्वपचादीनां प्रमादाद्भगवद्गृहे ॥७५०॥
कर्मण्यधिकृतौ तैस्तु सहवासेपि च द्विजाः ! ।
बिम्बे प्रासादभागे वा शवैः स्पृष्टे द्विजोत्तमाः! ॥७५१॥
बिम्बे वल्मीकशिथिलीसरघाणां समुद्भवे ।
बिम्बेत्वशनिसंस्पृष्टे प्रासादे वा मुनीश्वराः ! ॥७५२॥
बिम्बस्य हसने चैव चलने रोदने तथा ।
पतने भ्रमणे चैव स्वेदरक्तादिसम्भवे ॥७५३॥

कम्पने च तथा विप्राः! रक्तवर्षादिसम्भवे।
आराधने च विच्छिन्ने मासादूर्ध्वं मुनीश्वराः! ॥७५४॥
संहितासङ्करे चैव तथा सिद्धान्तसङ्करे।
भूगुप्ते चोद्धृते बिम्बे मासादूर्ध्वं द्विजोत्तमाः! ॥७५५॥
सम्प्रोक्षणं प्रकुर्वीत तत्तद्दोषप्रशान्तये।
दोषैरुपहतं ज्ञात्वा प्रासादप्रतिमादिकम् ॥७५६॥
असम्प्रोक्ष्यार्चनं कुर्वन् राजानं राष्ट्रमञ्जसा।
देवतायतनं ग्रामं नाशयेन्नात्र संशयः ॥७५७॥
तस्मात्सम्प्रोक्षणं कार्यं प्रासादप्रतिमादिषु।
पुरा सम्प्रोक्षणदिनं राजराष्ट्राभिवृद्धिदम् ॥७५८॥
निश्चयीकृत्य कालज्ञैः पुरस्तादुक्तवासरे।
अङ्कुरानर्प्य विधिवत्पश्चात्संशोधिते गृहे ॥७५९॥
सर्वत्र गोमयाम्भोभिः पुण्याहोक्तिपुरस्सरम्।
सम्प्रोक्ष्य पञ्चगिर्गव्यैः कुशोदकसमन्वितैः ॥७६०॥
मूलबेरादिबिम्बानां पड्भिस्सिद्धार्थकादिभिः।
पवित्रावर्तितैरद्भिर्बहुशः क्षाळने कृते ॥७६१॥
प्रधानदिनपूर्वस्यां रात्रौ यागादिमण्टपे।
तोरणद्वारकलशे वितानध्वजशोभिते ॥७६२॥
दीक्षाधिवासवत्कृत्वा कुम्भे वै मण्टपस्थले।
पूजनं विभवेनैव जपान्तं मूलमन्दिरे ॥७६३॥
क्षीराद्यैः पञ्चविंशाद्भिः स्नापयेद्ध्रुवकौतुकम्।
लेपभित्तिपटस्थस्य पुरस्ताद्भद्रविष्टरे ॥७६४॥
कर्मार्चामथवा कूर्चदर्पणे प्रतिबिम्बितम्।
संस्नाप्य विधिवत्कुम्भैः स्थापितैरग्रमण्टपे ॥७६५॥
उत्सवार्चादिबिम्बानामङ्गानामाश्रयात्मनाम्।

पूजनं स्नपनं कार्यं पाश्चात्ये यागमण्टपे ॥७६६॥
तत्रस्थे हवनं कुण्डे शङ्खचक्रादिलक्षणे ।
मधुक्षीरादिभिः कार्यं सहस्रशतसंख्यया ॥७६७॥
कर्मविम्बं विनान्येषां विम्बानामङ्गरूपिणाम् ।
दक्षिणे मण्टपस्याथ शयने कल्पयेन्महत् ॥७६८॥
तिलतण्डुलशालीनां भारैर्वस्त्रादिभिः सह ।
तदूर्ध्वे शाययेदर्चां विधिवद्बद्धकौतुकाम् ॥७६९॥
सम्पूज्य कंबळाद्यैश्च छादयेदर्चां सितादिभिः ।
वर्णकैर्मण्डलं कुर्याच्चक्रांबुरुहभूषितम् ॥७७०॥
यावत्प्रभातसमयं बिम्बस्थस्य समीपतः ।
देशिको मूलमन्त्रस्य जपेनैव नयेन्निशाम् ॥७७१॥
प्रभातायां तु शर्वर्यां कृतसन्ध्याविधिर्गुरुः ।
चतुःस्थानार्चनं कृत्वा पूर्ववत्स्नपनान्वितम् ॥७७२॥
पूर्णाहुत्यादिकं सर्वं विधाय तु यथाविधि ।
कुण्डस्थं मण्डलस्थञ्च देवं हृदि विसृज्य च ॥७७३॥
उद्वास्य द्वारदेवांश्च बलिदानपुरस्सरम् ।
मुहूर्ते शोभने प्राप्ते नववस्त्रपरिष्कृतम् ॥७७४॥
सोत्तरीयोपवीतं च कृतकौतुकबन्धनम् ।
समस्ततत्वविन्यस्तमभ्यर्च्यार्घ्यादिभिः क्रमात् ॥७७५॥
तासु स्वहृदयाम्भोजात्पुष्पाञ्जलिपुरस्सरम् ।
अग्राह्यमपरिच्छेद्यममूर्तममलं महत् ॥७७६॥
नित्यशुद्धमनौपम्यं सुसूक्ष्ममचलं स्फुटम् ।
सच्चिद्रूपं त्वसामान्यं भास्वरं सुदृढं महत् ॥७७७॥
तेजस्तु संक्रमय्याथ दण्डवत्प्रणिपत्य तु ।
विनिवेद्य विभोः सर्वं कृतं कर्म द्विजोत्तमाः! ॥७७८॥

उत्थाप्योत्सवबिम्बादीन् पूर्ववन्मङ्गळैः सह।
महाकुम्भं च पुरतो वाहयन् मूर्तिपादिभिः ॥७७९॥
करकास्त्रं समादाय त्वाचार्यः पुरतो व्रजेत्।
शलाकामात्रयाऽच्छिन्नधारया सेचयन् भुवम् ॥७८०॥
प्रादक्षिण्येन धामान्तः प्रवेश्य मुनिपुङ्गवाः!।
महोत्सवोक्तमार्गेण कुम्भप्रोक्षणमाचरेत् ॥७८१॥
द्वारावरणदेवांश्च आलयाश्रयवर्तिनः।
खगेशविष्वक्सेनादीन् परिवारांश्चसर्वशः ॥७८२॥
कुम्भावशिष्टतोयेन प्रोक्षयेत्सर्वतः क्रमात्।
अवशिष्टं कुम्भतोयं बलिपीठेऽभिषेचयेत् ॥७८३॥
एवं संप्रोक्ष्य विधिवत्प्रासादान्तः प्रविश्य च।
करस्थं कौतुकं चाथ हृदयेन विसृज्य तु ॥७८४॥
गोभूहेमादिकं दत्वा सर्वदोषप्रशान्तये।
देवमर्घ्यादिनाभ्यर्च्य हविरन्तं विशेषतः ॥७८५॥
ब्राह्मणान् भोजयेत्पश्चात्सहस्रं शतमेव वा।
सद्यो वा सकलं त्वेवं कुर्यात्सम्प्रोक्षणं विभोः ॥७८६॥
पुष्पाङ्कुरपुरस्कन्तु तत्तद्दोषप्रशान्तये ।
न तिथिर्न च नक्षत्रं कालवेळा न विद्यते ॥७८७॥
सद्यः सम्प्रोक्षणं विप्राः! निशि वा दिवसेपि वा।
प्रायश्चित्तविळम्बे तु कुर्यात्कालनिरीक्षणम् ॥७८८॥
इति सम्प्रोक्षणं प्रोक्तं सर्वं चापि द्विजोत्तमाः!।
प्रायश्चित्तं तु वै कुर्यात्सञ्जाते तन्निमित्तके ॥७८९॥
तत्तदैवाथ कर्मान्ते त्रिदिनाभ्यन्तरेपि वा।
तद्गुरुत्वानुगुण्येन पञ्चसप्तदिनान्तरे ॥७९०॥
तदारम्भसमाप्तिर्वा ह्यन्यथा द्विगुणं चरेत्।

प्रायश्चित्तं तु सर्वत्र स्वयंव्यक्तादिके स्थले ॥७९१॥
अथातः संप्रवक्ष्यामि ग्रामशान्तिविधिं द्विजाः! ।
राज्यक्षोभावसाने च शून्ये ग्रामे च हेतुना ॥७९२॥
ग्रामे च वह्निना दग्धे वात्यासारादिदूषिते ।
पुनः समाहिते रक्तमधुवर्षादिसम्भवे ॥७९३॥
ग्रामे बहुब्रह्मवधे तथा गोवधसम्भवे ।
चण्डालशबराद्यैस्तु ग्रामे बहुदिनोषिते ॥७९४॥
महामार्यादिरोगेण संघातमरणादिके ।
ग्रामशान्तिं प्रकुर्वीत सर्वदोषप्रशान्तये ॥७९५॥
तद्ग्रामे मुनिशार्दूलाः! सर्वत्रैकत्र वा क्षितिम् ।
खात्वा मृदं समुद्धृत्य बहिः प्रक्षिप्य शुद्धया ॥७९६॥
सम्पूर्य च समीकृत्य कुशाद्भिः परिमृज्य च ।
पर्यग्निकरणं विप्रैः कारयित्वा समन्ततः ॥७९७॥
संसिच्य गोमयाम्भोभिः पुण्याहोद्घोषपूर्वकम् ।
पञ्चगव्येन चाभ्युक्ष्य गोगणं तत्र वासयेत् ॥७९८॥
वाचयित्वा महाशान्तिं ब्राह्मणैर्वेदपारगैः ।
भोजयित्वा द्विजांस्तत्र तेभ्यो दद्यात्तु दक्षिणाम् ॥७९९॥
कृत्वैवं स्थलसंशुद्धिं शान्तिं कुर्यादनुक्रमात् ।
देवगेहपुरोभागे बहिर्द्वारस्य सन्निधौ ॥८००॥
मण्टपं कारयेत्पूर्वं चतुर्द्वारादिसंयुतम् ।
तन्मध्ये वेदिकां कुर्यादूर्ध्वकुण्डसमन्विताम् ॥८०१॥
परितः कल्पयेत्कुण्डानष्टौ वा चतुरोपि वा ।
मध्यकुण्डेपि वा सर्वं होमं कुर्याद्द्विजोत्तमाः! ॥८०२॥
सर्वांश्च यागसम्भारान् सम्भृत्य सुसमाहितः ।
निशामुखे प्रवृत्ते तु कृतस्नानः कृताह्निकः ॥८०३॥

देवगेहं समासाद्य ऋत्विग्भिः सह देशिकः।
देवदेवं समभ्यर्च्य तदनुज्ञापुरस्सरम् ॥८०४॥
सर्वैः परिजनैः सार्धं यागगेहं प्रविश्य तु।
द्वारकुम्भादिकांस्तत्र परिकल्प्य यथाविधि ॥८०५॥
वेदिकोर्ध्वे तु कुण्डस्य दक्षिणे करकान्वितम्।
महाकुम्भं च विन्यस्य वामे शान्तिघटं न्यसेत् ॥८०६॥
करशुद्ध्यादिकं सर्वं कृत्वा ह्यागपश्चिमम्।
पुण्याहं वाचयित्वा तु सम्भारान् प्रोक्ष्य कृत्स्नशः ॥८०७॥
द्वारार्चनपुरस्कृत्तु महाकुम्भे यथाविधि।
अभ्यर्च्य देवमर्घ्याद्यैर्हविरन्तैस्तथास्नपम् ॥८०८॥
परितो वासुदेवादीन् ततः शान्तिघटे द्विजाः!।
शान्तिं पुष्टिं च तुष्टिं च समभ्यर्च्य यथाविधि ॥८०९॥
वास्तुदेवगणांश्चापि तत्रैव परिपूजयेत्।
तदष्टदिक्षु कुम्भेषु कुमुदादीन् समर्चयेत् ॥८१०॥
अथोर्ध्वकुण्डे विधिवत्प्रतिष्ठाप्य हुताशनम्।
तत्र देवं तु सन्तर्प्य समिद्भिः सप्तभिः क्रमात् ॥८११॥
अष्टोत्तरसहस्राख्यसंख्यया सघृतैस्तिलैः।
तर्पयित्वा तु शान्त्यर्थमुद्धृत्याग्निगणं ततः ॥८१२॥
दिक्कुण्डेषु विनिक्षिप्य विदिक्कुण्डेषु च क्रमात्।
प्रागादिदिक्षु चतुरो ऋत्विजः सन्निवेश्य तु ॥८१३॥
वासुदेवादिभिर्मन्त्रैः समित्सप्तकपूर्वकम्।
सहस्रसंख्यया देवान् तर्पयेत्सघृतैस्तिलैः ॥८१४॥
एवमप्ययोगेन वाय्वादीशावसानकम्।
ऋग्वेदाद्यांश्च चतुरः सन्निवेश्य यथाक्रमम् ॥८१५॥
तैश्चापि वैष्णवैः सूक्तैः शान्तिसूक्तैश्च पावनैः।

सहस्रसंख्यया साज्यतिलहोमं तु कारयेत् ॥८१६॥
शान्तिं पुष्टिं च तुष्टिं च वास्तुदेवगणांस्तथा ।
कुमुदादिगणांश्चापि मध्यकुण्डे यथाक्रमम् ॥८१७॥
प्रत्येकमष्टाहुतिभिस्तर्पयेद्घृतधारया ।
ब्रह्मा मरीचिरत्रिश्च विवस्वान् पृथिवीश्वरः ॥८१८॥
चित्रश्चैवापवत्सश्च सन्धिता च सविलकः ।
रुद्रो रुद्रजयश्चैव इन्द्र इन्द्रजयस्तथा ॥८१९॥
ईशश्चैवाथ पर्जन्यो जयन्तश्च महेन्द्रकः ।
भानुः सत्यो भृगुश्चैव अन्तरिक्षश्च पूर्वकः ॥८२०॥
अग्निः पूषा कृशो भानुर्गुहः क्षेत्राधिपस्तथा ।
गन्धर्वो भृङ्गराजश्च मृत्युश्चैव तथान्तकः ॥८२१॥
पितृदौवारिकश्चैव सुग्रीवः पुष्पदन्तकः ।
वरुणश्च भृशश्चापो यक्षमासमनोजवः ॥८२२॥
योगो नागश्च मृत्यन्तो भल्लाटः सोम एव च ।
अदितिर्वास्तुनाथश्च ग्रामवास्तुगणाः स्मृताः ॥८२३॥
एतांस्तु स्वस्वनाम्नैव स्वाहान्तेन हुनेत्क्रमात् ।
ग्रामाश्रितांस्तथादेवान् नगराश्रितदेवताः ॥८२४॥
भूपालाश्रितदेवांश्च चैत्यप्रासाददेवताः ।
उद्यानोपवनस्थांश्च पर्वतद्रुमसंस्थितान् ॥८२५॥
सर्वानभ्यागतान् देवान् तर्पयेद्घृतधारया ।
सम्पाताज्यं तु संगृह्य शान्तिकुम्भे तु सेचयेत् ॥८२६॥
कुम्भस्थं देवदेवं तु पुनरभ्यर्च्य देशिकः ।
गेहादिग्राममध्यान्तं बलिदानं समाचरेत् ॥८२७॥
रात्रिशेषं समाप्याथ प्रभाते देशिकोत्तमः ।
नित्यकर्माणि निर्वर्त्य गत्वा वै यागमन्दिरम् ॥८२८॥

द्वारार्चनपुरस्कन्तु महाकुम्भादिषु स्थितान्।
देवानर्घ्यादिभिर्भोगैर्हविरन्तं यजेत्क्रमात् ॥८२९॥
ततस्तु मूर्तिपैः सार्धं मध्यकुण्डादिषु क्रमात्।
देवं सन्तर्प्य विधिना पूर्वोक्तेन मुनीश्वराः! ॥८३०॥
पूर्णाहुत्यादिकं सर्वं विधाय च यथाविधि।
अग्निमध्यस्थितं देवं विसृज्य स्वहृदि क्रमात् ॥८३१॥
द्वारदेवान् विसृज्याथ बलिदानपुरस्सरम्।
महाकुम्भादिकान् सर्वान् वाहयन्मूर्तिपादिभिः ॥८३२॥
पठद्भिः शान्तिसूक्तानि ब्राह्मणैः सह देशिकः।
शंखादिमङ्गळरवैर्घण्टारवसमन्वितैः ॥८३३॥
देवगेहं समासाद्य देवमर्घ्यादिभिर्यजेत्।
पुंसूक्तेन प्रोक्षयेच्चं महाकुम्भस्थतोयतः ॥७३४॥
प्रासादद्वारमारभ्य बलिपीठान्तिमं क्रमात्।
कुम्भावशिष्टतोयेन प्रोक्षयेत्पूर्ववद्द्विजाः! ॥७३५॥
शान्तिकुम्भजलेनाथ शान्तिसूक्तैः समन्ततः।
ग्रामं संप्रोक्षयेद्विप्राः! सर्वदोषप्रशान्तये ॥८३६॥
ततो गेहं समासाद्य सम्पूज्य पुरुषोत्तमम्।
महाहविर्निवेद्याथ होमान्तं सर्वमाचरेत् ॥८३७॥
ततस्तु बलिबिम्बं तु यानमारोप्य देशिकः।
नित्योत्सवविधानेन यात्रोपकरणैः सह ॥८३८॥
द्वारावरणदेवानां बलिं दत्वा विशेषतः।
कुमुदादिबलिं दद्याद्ग्रामेपि च यथाविधि॥८३९॥
बलिबिम्बं ततोऽभ्यर्च्य स्वस्थाने सन्निवेश्य तु।
मूलबिम्बं समभ्यर्च्य प्रणिपत्य क्षमापयेत् ॥८४०॥
गोभूहेमादिकं दद्यात्तत्काले सर्वशान्तये।

आचार्यमृत्विगादींश्च दक्षिणाभिः प्रतोषयेत् ॥८४१॥
ब्राह्मणान् भोजयेत्पश्चात्सहस्रं शतमेव वा ।
तेभ्यश्च दक्षिणां दद्याद्राजराष्ट्रसुखावहः ॥८४२॥
ग्रामशान्तिविधिस्त्वेष कथितो मुनिपुङ्गवाः! ।
अथातः संप्रवक्ष्यामि शान्तिहोमविधिक्रमम् ॥८४३॥
सर्वदोषप्रशमनं सर्वच्छिद्रप्रपूरणम् ।
सर्वैश्वर्यप्रदं नृणां सर्वारिष्टविनाशनम् ॥८४४॥
कर्तुः कारयितुश्चैव प्रजानां वांछितप्रदम् ।
अतिवृष्ट्यावनावृष्टौ दुर्भिक्षे रोगसम्भवे ॥८४५॥
दुस्स्वप्नादौ दुर्निमित्ते महोत्पातेषु सत्सु च ।
आराधनाङ्गवैकल्ये गळिते चोत्सवाङ्गके ॥८४६॥
प्रतिष्ठास्नपनादीनामङ्गवैकल्यसम्भवे ।
बिम्बोपकरणादीनामस्पृश्यस्पर्शनादिके ॥८४७॥
पूर्वोक्तेषु निमित्तेषु सर्वेषु मुनिपुङ्गवाः! ।
शान्तिहोमं प्रकुर्वीत तत्तद्दोषप्रशान्तये ॥८४८॥
प्रासादस्याग्रतो वापि प्रथमावरणादिके ।
तदर्थं मण्टपं कुर्याच्चतुर्द्वारसमन्वितम् ॥८४९॥
यद्वा पूर्वं कृते विप्राः! कुत्र चिन्मण्टपादिके ।
यागार्थमन्दिरे वापि पचनालय एव वा ॥८५०॥
गोष्ठागारादिके वापि उद्यानोपवनादिषु ।
द्विहस्तमेकहस्तं वा वृत्तं वा चतुरश्रकम् ॥८५१॥
कुण्डं प्रकल्पयेद्यद्वा स्थण्डिले होममाचरेत् ।
कुण्डस्य दक्षिणे पार्श्वे धान्यपीठे सलक्षणम् ॥८५२॥
सोपकुम्भं सकरकं महाकुम्भं तु विन्यसेत् ।
शान्तिकुम्भं च तत्पार्श्वे विन्यस्य तु सलक्षणम् ॥८५३॥

कृत्वा मानसयागान्तं करशुध्यादिकं द्विजाः! ।
पुण्याहं वाचयित्वाथ सम्भारान्प्रोक्ष्य कृत्स्नशः ॥८५४॥
अर्घ्यादीन् परिकल्प्याथ द्वारार्चनपुरस्सरम् ।
महाकुम्भे योगपीठं परिकल्प्य यथाविधि ॥८५५॥
तत्रावाह्य नृसिंहं तु सर्वदोषप्रशान्तिदम् ।
सकळीकृत्य विधिवल्लयभोगादिकं क्रमात् ॥८५६॥
कृत्वासनादिभिर्भोगैर्हविरन्तं समर्चयेत् ।
सुदर्शनं च करके प्रागादिकलशेषु च ॥७५७॥
वासुदेवादिकां चेष्ट्वा प्रभवाप्ययोगतः ।
शान्तिं पुष्टिं च तुष्टिं च शान्तिकुम्भे समर्चयेत् ॥८५८॥
कुण्डं संस्कृत्य तत्राग्निं प्रतिष्ठाप्य यथाविधि ।
तत्रापि नृहरिं देवं समावाह्य यथाविधि ॥८५९॥
समिद्भिः सप्तभिश्चापि सन्तर्प्याथ स्वमन्त्रतः ।
विशेषेण हुनेद्दोषशान्त्यर्थं मुनिपुङ्गवाः ! ॥८६०॥
ओं क्ष्रौं नमश्चेतिमन्त्रसंयुक्तेनादितो द्विजाः! ।
ओंनमोभगवतेनारसिंहायेत्यनेन तु ॥८६१॥
एतद्दोषं जहिजहि स्वाहेत्यन्तेन देशिकः ।
मध्वाज्यक्षीरसंमिश्रान् सफलांस्तु तिलान् द्विजाः! ॥८६२॥
शतं सहस्रं साष्टं वा यथाशक्त्यथवा हुनेत्।
पालाशं खादिरं चैव बिल्वमौदुम्बरं तथा ॥८६३॥
अश्वत्थप्लक्षन्यग्रोधमपामार्गमिति द्विजाः ! ।
समिधामष्टकं कलसं मधुक्षीरान्वितैर्घृतैः ॥८६४॥
अष्टाक्षरेण जुहुयात्पृथगष्टोत्तरं शतम् ।
द्वादशाक्षरमन्त्रेण केवलाज्यं हुनेत्तथा ॥८६५॥
षडक्षरेण मन्त्रेण तिलं साज्यं हुनेच्छतम् ।

बीजानि विष्णुगायत्र्या हुत्वा चाष्टोत्तरं शतम् ॥८६६॥
चरुं पुरुषसूक्तेन जुहुयाद्देशिकोत्तमः ।
कृत्वाथ स्विष्टकृद्धोमं प्रायश्चित्ताहुतीस्तथा ॥८६७॥
नारसिंहेन मन्त्रेण दद्यात्पूर्णाहुतिं ततः ।
सम्पाताज्यं समादाय सेचयेत्कुम्भमध्यतः ॥८६८॥
पुनः कुम्भे स्थितं देवं समभ्यर्च्य यथाविधि ।
शान्तिकुम्भं तु संस्पृष्ट्वा ब्राह्मणैः सह देशिकः ॥८६९॥
नारसिंहेन मन्त्रेण शान्तिसूक्तैश्च मन्त्रयेत् ।
ततश्च द्वारदेवेभ्यो बलिं दद्याद्यथाविधि ॥८७०॥
एवं पूर्वदिने रात्रौ कृत्वा देशिकसत्तमः ।
परेद्युः प्रातरुत्थाय कृतस्नानः कृताह्निकः ॥८७१॥
इष्ट्वा कुम्भस्थितं देवं सन्तर्प्याग्नौ यथाविधि ।
द्रव्यैः पूर्वोदितैश्चापि अष्टाविंशतिसंख्यया ॥८७२॥
पूर्णाहुतिं च कृत्वाथ विसृज्याग्निस्थितं विभुम् ।
विसृज्य द्वारदेवांश्च बलिदानपुरस्सरम् ॥८७३॥
महाकुम्भं शान्तिकुम्भं वाहयन् ब्राह्मणैः सह ।
वेदघोषैर्वाद्यघोषैर्घण्टारवसमन्वितैः ॥८७४॥
आसाद्य देवसदनं समभ्यर्च्य जगत्प्रभुम् ।
पुंसूक्तेन महाकुम्भतोयेन प्रोक्षयेद्विभुम् ॥८७५॥
शान्तिकुम्भजलेनाथ देवं वा मन्दिरादिकम् ।
सर्वोपकरणं वापि दूषितं दोषशान्तये ॥८७६॥
प्रोक्षयेच्छान्तिसूक्तेन दोषशान्तिर्भविष्यति ।
यजमानो गुरुं पश्चात्तोषयेद्दक्षिणादिभिः ॥८७७॥
सद्यःकालेपि वा ह्येवं तत्तद्दोषानुसारतः ।
शान्तिहोमं प्रकुर्वीत सर्वदोषप्रशान्तये ॥८७८॥

कुम्भार्चनं विना वापि केवलं होममाचरेत् ।
महोत्सवाद्युत्सवेषु प्रतिष्ठास्नपनादिके ॥८७९॥
तत्तत्कर्माङ्गभूतेऽग्नौ शान्तिहोमं समाचरेत् ।
इति सर्वं समाख्यातं किमन्यच्छ्रोतुमिच्छथ ॥८८०॥

इति श्रीपाञ्चरात्रे ईश्वरसंहितायां
प्रायश्चित्तविधिर्नाम
एकोनविंशोऽध्यायः ।

---

## अथ विंशोऽध्यायः ।

मुनयः ।

भगवन्मुनिशार्दूल सर्वशास्त्रविशारद ।
भवता तत्र तत्रेह स्वयंव्यक्तादिभेदतः ॥१॥
विशेषः कीर्तितः पूर्वं जीर्णोद्धारादिकर्मसु ।
किं किं भुवि स्वयंव्यक्तं महत्त्वं तस्य कीदृशम् ॥२॥
तत्सर्वं विस्तरेणैव प्रकाशय दयानिधे! ।

नारदः ।

स्वयंव्यक्तादिभेदं च तन्माहात्म्यं च कृत्स्नशः ।
प्रवक्ष्यामि शृणुध्वं तत्सावधानेन चेतसा ॥३॥
क्षेत्रेषु पुष्कराद्येषु वासुदेवो जगत्पतिः ।
स्वयं व्यक्तिं समभ्येत्य भक्तानां हितकाम्यया ॥४॥
स्थितः सन्निहितो देवः स्वयंव्यक्तो मुनीश्वराः ! ।
क्षेत्रेषु केषुचिद्देवः स्थापितो देवरोत्तमैः ॥५॥
तथैव केषुचित्सिद्धैः केषुचिदृषिपुङ्गवैः ।
गन्धर्वैश्चापि यक्षैश्च तथाविद्याधरोत्तमैः ॥६॥

असुरै राक्षसैश्चैव मनुजेन्द्रैश्च केषु चित् ।
स्थापितो विधिवद्देवः सन्निधत्ते जगत्प्रभुः ॥७॥
एवं भगवदाकारैर्नानासंस्थानलक्षणैः ।
नानाविशेषरूपैश्च नानाकार्यवशेन तु ॥८॥
विश्वमापूरितं सर्वं सर्वानुग्रहकाम्यया ।
भगवद्भक्तिनिरतैर्मनुजेन्द्रैः प्रतिष्ठितात् ॥९॥
माहात्म्यं स्याद्दशगुणं राक्षसेन्द्रप्रतिष्ठिते ।
ततः शतगुणं प्रोक्तमसुरैः स्थापिते विभौ ॥१०॥
सहस्रगुणितं प्रोक्तं विद्याधरकृते द्विजाः ! ।
ततो दशगुणं विप्राः ! माहात्म्यं यक्षकल्पिते ॥११॥
ततो दशगुणं प्रोक्तं गन्धर्वैश्च प्रतिष्ठिते ।
आर्षे कोटिगुणं प्रोक्तं सैद्धे दशगुणं ततः ॥१२॥
कोटिकोटिगुणं दिव्ये स्वयंव्यक्ते मुनीश्वराः! ।
माहात्म्यं स्यादसंख्यातमिति शास्त्रेषु निश्चितम् ॥१३॥
तस्माद्द्वेधा स्वयंव्यक्तबिम्बं भगवतो विभोः! ।
सालग्रामशिलारूपैरितरैस्तु शिलादिभिः ॥१४॥
उभयत्र समानं स्याद्धरेः सान्निध्यमुत्तमम् ।
साळग्रामशिलाबिम्बे तत्तन्मूर्तिविनिर्णयम् ॥१५॥
तत्तद्व्यवस्थितैश्चिह्नैः ज्ञात्वा कार्यं समर्चनम् ।
क्षेत्रेषु पुष्कराद्येषु स्वयमेव जगत्पतिः ॥१६॥
अर्चारूपेणावतीर्य व्यक्तैश्चक्रादिलांछनैः ।
समन्वितः सन्निधत्ते भक्तानां हितकाम्यया ॥१७॥
तत्तत्क्षेत्रस्थितान् देवान् प्रवक्ष्यामि मुनीश्वराः! ।
यत् ज्ञात्वा मनुजो लोके सर्वपापैः प्रमुच्यते ॥१८॥
पुष्करं क्षेत्रमाश्रित्य पुण्डरीकाक्षसंज्ञया ।
वासुदेवस्तु भगवान् नित्यं सान्निहितः स्थितः ॥१९॥

एवं क्षेत्रवरे दिव्ये श्रीरङ्गे नैमिशाह्वये ।
क्षेत्रेष्वन्येषु च तथा वासुदेवादिसंज्ञया ॥२०॥
चतुर्मूर्तिस्थितो देवो लोकरक्षणहेतुना ।
केशवः केशिहा लोके कुरुक्षेत्रादिषु स्थितः ॥२१॥
नारायणो मुनिश्रेष्ठाः! स्थितो नारायणाचले ।
माधवो वेङ्कटगिरौ गोविन्दः पुरुषोत्तमः ॥२२॥
भूभागपदमाश्रित्य संस्थितो नाभसाह्वये ।
स्थाने वृन्दावनाख्येपि द्विधैव कमलोद्भव! ॥२३॥
विष्णुर्लोभापहे विप्राः! स्थितो विष्णुपदेपि च ।
मन्दराख्यं गिरिं चैव आसाद्य मधुसूदनः ॥२४॥
भूतानामनुकम्पार्थमवतीर्य च संस्थितः ।
यामुनं जलमाश्रित्य देवदेवस्त्रिविक्रमः ॥२५॥
स्थितः कमलसम्भूत! तरणं सुगतिप्रदम् ।
मूर्त्यन्तरं वामनाख्यं सिंहाद्रौ कमलोद्भव! ॥२६॥
स्वसत्त्वादेत्य विश्रान्तं भाविनां शोकशान्तये ।
नर्मदाख्यं हि चाक्रम्य जलं पापक्षयंकरम् ॥२७॥
श्रीधरः संस्थितो देवः कौण्डलेपि श्रिया सह ।
हृषीकेशस्तु भगवान् संस्थितोप्यात्मना भुवि ॥२८॥
धराधरे ध्वजाख्ये तु क्षेत्रे कुब्जाम्रकेऽब्जज! ।
पद्मनाभस्तु देवेशस्त्ववतीर्य च संस्थितः ॥२९॥
दक्षिणां दिशमाश्रित्य समीपे जलधिक्षितेः ।
गिरौ रैवतके विप्र स्वसत्त्वादेत्य वर्तते ॥३०॥
दामोदरस्तु भगवान् हितार्थं भावितात्मनाम् ।
एभिर्मूर्त्यन्तरैः सार्धं मूर्तिभिर्विश्वमन्दिरम् ॥३१॥
समाक्रान्तं द्विजश्रेष्ठ अतोन्येषां च संस्थितिम् ।

निबोधतु महाबुद्धे! सावधानेन चेतसा ॥३२॥
सिद्धामराश्रितं विद्धि श्वेतद्वीपे तु हंसराट् ।
मत्स्यात्मा भगवानप्सु अश्वात्मा वडबामुखे ॥३३॥
रसातले तु कूर्मात्मा विन्ध्यारण्ये तु पौष्कर! ।
विज्ञातव्यो मृगेन्द्रात्मा पापहा सर्वदेहिनाम् ॥३४॥
सौकरीयेण रूपेण क्षेत्रे तत्संज्ञके तु वै ।
गाङ्गे शुभजले कूले सुरसिद्धनिषेविते ॥३५॥
हेमोत्तमांगधृग्देवो हेमशैलमहान्तरे ।
नौबन्धनगिरावेवं मीनवक्त्रः स्थितः प्रभुः ॥३६॥
कृष्णाश्वेऽश्वशिरा देवः क्षितिक्षेत्रे च शर्चिते ।
लवणोदधिपर्यन्ते भूभागे सिद्धसेविते ॥३७॥
कूर्मवक्त्रश्च भगवान् संस्थितः शंखचक्रधृक् ।
नृहरिः कृतशौचे तु उज्जयिन्यामपिद्विजाः! ॥३८॥
विशालमूलसंज्ञे तु स्थाने त्वेवं स्थितस्त्रिधा ।
कोकामुखे वराहन्तु वाराहे तु नगोत्तमे ॥३९॥
मन्दमाले विवैतस्ते कुलकुक्षौ हिमाचले ।
वामनः खर्वमूर्तिश्च वैश्वरूप्येण संस्थितः ॥४०॥
मध्यदेशे तु गङ्गायाः कुरुक्षेत्रे तु पौष्कर! ।
यामुनं कूलमाश्रित्य प्रादुर्भावान्तरं महत् ॥४१॥
स्थितं त्रिविक्रमाख्यं यत् त्रैलोक्याक्रान्तविग्रहम् ।
नगोत्तमे महेन्द्राख्ये परश्वथकरं द्विज! ॥४२॥
रामसंज्ञश्च भगवान् संस्थितः क्षत्रियान्तकः ।
धराधरे चित्रकूटे रक्षःक्षयकरो महान् ॥४३॥
संस्थितश्चापरो रामः पद्मपत्रायतेक्षणः ।
चर्गान्यः सीरपाणिर्वै यामुनं भ्रामयन् जलम् ॥४४॥

संस्थितो मानुषीयेषु भूभागेषु शुभेषु च ।
सामुद्रेपि ततो द्वीपे द्वारकाख्येऽमरार्चिते ॥४५॥
वर्तते भगवान् कृष्णः सर्वात्मा परमेश्वरः ।
कल्की विष्णुश्च भगवान् स्तूयमानो द्विजैः स्थितः ॥४६॥
समासाद्य विपाशां च नदीं नियतमानसः ।
धर्ममूर्तिर्महात्मा वै धर्मारण्ये सुरार्चिते ॥४७॥
अनुग्रहपरस्त्वास्ते लोकानां लोकपूजितः ।
नरसंज्ञो जगन्नाथः सिद्धैः सम्पूजितेषु च ॥४८॥
भूभागेषु च रम्येषु नित्यंसन्निहितस्थितिः ।
गिरौ गोवर्धनाख्ये तु देवः सर्वेश्वरो हरिः ॥४९॥
संस्थितः पूजिते स्थाने गवां निष्क्रमणेषु च ।
सालग्रामे च भगवान् राजेन्द्राख्ये वने द्विजाः! ॥५०॥
तथैव वसुधांशे च स्थितो देवव्रताभिधे ।
कृष्णोपरश्चतुर्मूर्तिरवतीर्य धरातले ॥५१॥
स्थितः पिण्डारके विप्र मोचयन् दुष्कृताज्जनान् ।
श्वेतद्वीपे कुरुक्षेत्रे हिमवन्ताचलेऽब्जज! ॥५२॥
वेदिकायामपि तटे विश्वरूपः स्थितः प्रभुः ।
क्षीरोदधौ पद्मनाभः शेषाहिशयनो हरिः ॥५३॥
स्थितो नन्वब्जसम्भूत! यस्माच्चेदं पितामह! ।
चतुर्थी रूपमाश्रित्य विश्वेस्मिन् सैव वर्तते ॥५४॥
हिताय सर्वलोकानां यथावदवधारय ।
आसाद्य शयनं ब्रह्मन् पाताळतलसंस्थितः ॥५५॥
वटमादाय चाग्नेयं योन्ते संहरते जगत् ।
वटमूलं समाश्रित्य प्रयागे सुरपूजिते ॥५६॥
जगदेकार्णवं कृत्वा दिव्यमासाद्य पादपम् ।
सन्तिष्ठते स भगवान् तस्मिन् तीरे क्षितौ द्विजाः! ॥५७॥

न्यग्रोधशायिनं चैव ध्यायेद्दिव्यगतिप्रदम् ।
हिमाचलैकदेशे तु तुङ्गे वै भृगुसंज्ञके ॥५८॥
मधुकैटभमाथी च संस्थितः सोवनीतले ।
क्षीरोदकक्षितिक्षेत्रे सुरासुरनिषेविते ॥५९॥
मन्दराद्रिकरो देवो वर्तते देवपूजितः ।
तत्रैवामृतचिद्देवः संस्थितः सिद्धसेवितः ॥६०॥
कान्तारूपधरश्चैव सुधाकलशधृक्प्रभुः ।
सिद्धानां च मुनीनां च देवानां मृत्युजित् स्थितः ॥६१॥
द्विधा कर्ता गणोपेतो देवो गरुडवाहनः ।
सालवृक्षभुजोद्देशे सालग्रामे स्थितो विभुः ॥६२॥
त्रिकूटगिरिपृष्ठे तु गम्ये गगनचारिणाम् ।
गजोद्धृतिच्छलेनैव अप्रमेयाख्यया स्थितः ॥६३॥
श्वेतद्वीपपतिर्देव अवतीर्य च संस्थितः ।
गङ्गासमुद्रसंयोगे क्षित्युद्देशे मनोरमे ॥६४॥
यज्ञभुग्भगवान् देवो नैमिशे सिद्धपूजिते ।
सैन्धवारण्यमाश्रित्य अनन्तो भगवान् स्थितः ॥६५॥
शार्ङ्गपाणिस्तु देवेशो दण्डकारण्यसंज्ञके ।
उत्पलावर्तके देशे शौरिसंज्ञोऽच्युतः स्थितः ॥६६॥
क्षितौ समुद्रवन्ध्येऽब्धेः सङ्गमे सिद्धसेविते ।
ज्ञानोपदेष्टा भगवान् संस्थितो दुःखशान्तये ॥६७॥
आसाद्य सूकरक्षेत्रं देवो गरुडवाहनः ।
संस्थितो गरुडारूढः पारिजातकराङ्कितः ॥६८॥
सिद्धैः सुरगणैः सार्धं गगने चापि पौष्कर ।
देवदेव जगन्नाथ हस्तिपर्वतमस्तके ॥६९॥
एकदेशं समासाद्य सर्वस्य वरदः स्थितः ।
मात्स्योदपाणिर्वैकुण्ठो मागधायां महामते! ॥७०॥

उद्गीय पुण्यभूभागे संस्थितः पुरुषोत्तमः ।
अचिन्त्यात्माथ भगवान् पर्वते गन्धमादने ॥७१॥
शिपिविष्टाख्यया देवो शिपिविष्टावृतः स्थितः ।
प्राक्समुद्रापयाने तु भूभागे शुभलक्षणे ॥७२॥
कापिलीं मूर्तिमासाद्य वासुदेवः स्थितः प्रभुः ।
अवतीर्य स्वसत्वाद्य ब्रह्मसंज्ञः प्रजापतिः ॥७३॥
मणिबन्धं समासाद्य नित्यं सन्निहितः स्थितः ।
मगधामण्डले विप्र महाबोधधराश्रयः ॥७४॥
संस्थितो लोकनाथात्मा देवदेवो जनार्दनः ।
देवदक्षिणगाक्ष्णो वै यो ऽभिमानतनुर्द्विज ॥७५॥
सूर्यसंज्ञस्तु भगवान् हेमशैलोपरि स्थितः ।
आच्युते वामनेत्रे तु योऽभिमानतनुर्विभुः ॥७६॥
भगवान् सोमसंज्ञस्तु सोमतीर्थाश्रमेपि च ।
अग्निस्वरूपमजितं संस्थितं वाडवानले ॥७७॥
वस्वात्मा भगवान् विप्र! भासते त्वसुरान्तकृत् ।
विष्णुनाम्ना पुनर्देवस्त्वनेकायुधमण्डितः ॥७८॥
जयाख्ययोज्जयिन्यां वै स्थितः पापजयो नृणाम् ।
काश्मीरमण्डले पुण्ये क्षेत्रे चक्रधराभिधे ॥७९॥
चक्रपाणिस्तु भगवान् भक्तानां मोक्षदः स्थितः ।
सुरोत्तमाभिधानं च गदापाणिं तु पौष्कर! ॥८०॥
सदासन्निहितं विद्धि गङ्गाद्वारे सुरैः सह ।
चतुर्भुजश्चतुर्मूर्तिश्चतुर्वक्त्रश्चतुर्गतिः ॥८१॥
स्थितः पिण्डारके देवो विष्वक्सेनः सनातनः ।
शुभमासाद्य भूभागं प्राग्ज्योतिषपुरे तथा ॥८२॥
देवं विश्वेश्वराख्यं च स्थितिमेत्य स्वगोचरात् ।

सातनाभिधक्षेत्रे सिद्धविद्याधरान्विते ॥८३॥
स्वामिसंज्ञो जगन्नाथः स्थितो मन्दाकिनीतटे ।
भद्रातके महायोगे ध्यायिनामपवर्गदः ॥८४॥
धरातले नृसिंहाख्ये देविकायान्तटाश्रिते ।
रिपुक्षयाख्यया विप्र ! देवः सर्वेश्वरः स्थितः॥८५॥
शङ्कराख्ये तु भूभागे सर्वदेवनिषेविते ।
ज्ञानमूर्तिर्जगन्नाथः संस्थितः शुभकृन्नृणाम् ॥८६॥
पृथिव्यां तु पितृक्षेत्रे मोचयन्नृणत्रयात् ।
जनार्दनाख्यया ब्रह्मन् ! विश्वात्मा भगवान् स्थितः ॥८७॥
एतेऽवताराः कथिता लेशतः कमलोद्भव ।
एभिः क्षितितलं व्याप्तं पौनःपुन्येन च स्वयम् ॥८८॥
संसारिणां जनानां तु अनुग्रहधियाब्जज! ।
सङ्कीर्तनमगम्यानां त्रिसन्ध्यं नित्यमाचरेत् ॥८९॥
मतिं चक्रे च गम्यानां सेवने दर्शनेपि च ।
म्लेच्छानां तेषु देशेषु क्षितौ क्षेत्रादयो हि ये ॥९०॥
साङ्कर्यपरिहारेण द्रष्टव्यास्ते सदैव हि ।
ऋषिभिः सामरैः सिद्धैः स्वाश्रमेषु महत्सु च ॥९१॥
जलाशयेषु पुण्येषु पृथिव्यां विविधेषु च ।
सर्वे भगवदाकारा विभवव्यूहलक्षणाः ॥९२॥
उक्ता गताश्च ये चान्ये समुत्प्रेक्ष्य धिया स्वयम् ।
प्रतिष्ठिताश्च विधिवत्समन्त्राः सत्यविक्रमाः ॥९३॥
स्थित्या नानाप्रकारा ये भूतभव्यादिकाख्यया ।
सौम्याग्नेयोभयाख्येन सन्निवेशवशेन वै ॥९४॥
लीलारुचिमयेनैव चित्तसौख्यप्रदेन च ।
भुजाद्यायुधसन्धानकेतुभेदेन वै सह ॥९५॥

अलंकृतं च भूभागं मनुजैस्त्वेवमेद हि ।
शक्तैरनुगृहीतैश्च सिद्धाचैश्च यथोदितम् ॥९६॥
आदिदेवादयश्चैते तत्रेशाः समुदीरिताः ।
परस्मिन् भगवत्तत्त्वे त्वभेदेन व्यवस्थिताः ॥९७॥
सूर्यस्य रश्मयो यद्वद्वह्नेरार्चिगणा यथा ।
जलधेरूर्मयोयद्वत्तद्वद्देवाब्जसम्भव ! ॥९८॥
चित्सामान्या नित्यशुद्धा व्यापकाः परमेश्वराः ।
तत्वसत्तां समाश्रित्य ज्ञानाद्यैः समलंकृताः ॥९९॥
अणिमाद्यष्टकोपेताः संस्थिता स्वात्मना तु वै ।
अष्यावनिषु सर्वासु नित्यं कुर्वन्ति संनिधिम् ॥१००॥
मुक्तये सर्वभूतानां विशेषेण तु वै भुवि ।
आविश्वप्रभवात्कालादारभ्य प्रळयावधि ॥१०१॥
क्षेत्रेषु तीर्थतीरेषु शब्दब्रह्ममयात्मना ।
सामान्येनापि मन्त्रेण तद्विवर्तेन आत्मना ॥१०२॥
ततो व्यक्तेतरं रूपमाश्रयन्ति च पार्थिवम् ।
हितार्थं सर्वलोकानामवतीर्णमनश्वरम् ॥१०३॥
जगत्यायतनाख्यायामत्र सिध्यन्ति योगिनः ।
कालान्तरेण व्यक्तीनां मज्जनं जायते यदि ॥१०४॥
सान्निधिं शक्तिभावेन नित्यं कुर्वन्ति तत्र च ।
योगेश्वरामराः सिद्धाः स्मृत्वाकारं तदात्मकम् ॥१०५॥
शैलमृद्दारुधातूत्थां व्यक्तिं संस्थापयन्ति च ।
यत्रानुवेदं कुरुते मन्त्रशक्तिधरास्तु ये ॥१०६॥
येनाच्युतीयनाम्ना वै वदत् स्थानान्तरं स्मृतम् ।
सन्निधिस्तत्र वैरूपाः शब्दमूर्तिधरस्य च ॥१०७॥
भिन्नात्मनां स्वयंव्यक्तरूपेष्वव्यक्तेषु च ।

सन्निरुद्धेषु मन्त्रेषु इच्छाशक्तिगतेषुच ॥१०८॥
आकाराः सन्निवेशाश्च पारमेश्वरमन्यथा ।
अन्यथा वै जगत्यस्मिन् ख्याताख्यातं च शाश्वतम् ॥१०९॥
एवमायतनानां च नित्यत्वं संप्रकाशितम् ।
अनादित्वमसंख्यं च महत्त्वमपि पौष्कर ! ॥११०॥
एवं क्षेत्रस्थिता मूर्तिभेदाः सम्यक्प्रकीर्तिताः ।
क्षेत्रेष्वेतेषु योगीन्द्रास्सारभूतं चतुष्टयम् ॥१११॥
श्रीरङ्गं वेङ्कटाद्रिश्च हस्तिशैलस्त्वनन्तरम् ।
ततो नारायणाद्रिश्च मम धामचतुष्टयम् ॥११२॥
एवमुक्तं भगवता साक्षान्नारायणेन हि ।
अस्मिन् क्षेत्रचतुष्केतु संस्थितं पुरुषोत्तमम् ॥११३॥
महाभक्तिसमायुक्ताः सेवन्ते ये नरोत्तमाः ।
सर्वक्षेत्रस्थिता देवास्सेवितास्तैर्न संशयः ॥११४॥

मुनयः ।

भगवन्मुनिशार्दूल सर्वज्ञ वदतां वर ! ।
नारायणाद्रिमहात्म्यं श्रोतुमिच्छामहे वयम् ॥११५॥
इह नारायणस्यैव ध्यानमाराधनादिकम् ।
कथितं हि त्वया पूर्वं न तु नारायणो हरिः ॥११६॥
कथं प्राप्तो गिरिवरं महत्ता तस्य कीदृशी ।
तत्सर्वं विस्तरेणैव वदस्व वदतां वर ॥११७॥

नारदः ।

साधु पृष्टं महाभागाः भवद्भिर्मुनिपुङ्गवाः ! ।
नारायणाचलस्थस्य हरेर्माहात्म्यमुत्तमम् ॥११८॥
सङ्क्षेपेण प्रवक्ष्यामि शृणुध्वमवधानतः ।
आदौ नारायणः श्रीमान् स्वस्य नाभीसरोरुहात् ॥११९॥
चतुर्मुखं समुत्पाद्य सर्वसंस्कारसंस्कृतम् ।

वेदशास्त्रार्थतत्त्वज्ञं कृत्वा तं पुरुषोत्तमः ॥१२०॥
सृष्टौ नियोज्य ब्रह्माणं" ततस्त्वन्तर्हितोऽभवत् ।
तस्मिन्नन्तर्हिते देवे विपर्यस्तमतिर्विधिः ॥१२१॥
इतिकर्तव्यतामुग्धो बभूवोद्विग्नमानसः ।
तदासौ तप आतिष्ठद्द्रष्टुकामो जगत्पतिम् ॥१२२॥
बहुकालेष्वतीतेषु तप्यमाने पितामहे ।
आविरास जगन्नाथो ब्रह्मणः पुरतो द्विजाः! ॥१२३॥
तं दृष्ट्वा कमलाकान्तं परमाश्चर्यसंयुतः ।
तुष्टाव विविधैः स्तोत्रैः श्रुतिसिद्धैश्चतुर्मुखः ॥१२४॥
तेन स्तुतो जगद्धाता करुणापूर्णमानसः ।
ब्रह्माणं समुवाचेदं मेघगम्भीरया गिरा ॥१२५॥
त्वया वत्स कुतस्त्वेवं तपस्तप्तं सुदुस्तरम् ।
तुष्टोहं तपसा तेऽद्य किं तवाभीप्सितं वद ॥१२६॥

ब्रह्मा ।

नान्यदस्ति फलं देव भवतो दर्शनादृते ।
त्वया नियोजितोहं हि जगत्सृष्टौ पुरा विभो! ॥१२७॥
स्रष्टुं जगदिदं सर्वं का शक्तिर्मम माधव! ।
अत्रापायं समाचक्ष्व करुणामृतवारिधे ॥१२८॥
इत्युक्तो ब्रह्मणा देवो मन्त्रमष्टाक्षरं परम् ।
तस्योपादिश्य भगवान् तदर्थांश्च विशेषतः ॥१२९॥
अष्टाक्षरमिमं मन्त्रं सन्ततं हृदि चिन्तयन् ।
मन्त्रस्यास्य प्रभावेण जगत्स्रष्टुं त्वमर्हसि ॥१३०॥
सर्गकर्मणि संवृत्ते एतन्मन्त्रप्रभावतः ।
आविर्भविष्यति पुरः साक्षान्नारायणो विभुः ॥१३१॥
तमभ्यर्चय देवेशं मन्त्रेणानेन पद्मज! ।

ततस्त्वदधिकारान्ते मत्पदं प्राप्स्यसि ध्रुवम्॥१३२॥
इत्युक्त्वान्तर्दधे देवः ततस्तुष्टश्चतुर्मुखः ।
जपमानो मूलमन्त्रं चेतनाचेतनात्मकम् ॥१३३॥
सृष्ट्वा जगदिदं सर्वं विरञ्चिर्मुनिपुङ्गवाः! ।
नारायणं द्रष्टुकामस्तपस्तेपे सुदुस्तरम् ॥१३४॥
आविरासीत्ततो दिव्यं विमानं शुभलक्षणम् ।
श्रीवैकुण्ठाच्चतुर्वक्त्र तपःफलमिवाद्भुतम् ॥१३५॥
अनेककोटिमार्ताण्डविलसत्तेजसावृतम् ।
अनन्तविहगेशानविष्वक्सेनपुरोगमम् ॥१३६॥
श्रिया सुदर्शनेनापि पार्श्वयोः समनुद्रुतम् ।
कुमुदाद्यैः परिवृतं सर्वावयवशोभितम् ॥१३७॥
वृत्ताकारं शुभकरं सर्वालङ्कारशोभितम् ।
तं दृष्ट्वा सहसोत्थाय सन्तुष्टः कमलासनः ॥१३८॥
पुलकाञ्चितसर्वाङ्गः सन्तोषोद्भ्रान्तलोचनः ।
प्रणम्य प्राञ्जलिः स्थित्वा विमानमवलोकयत् ॥१३९॥
पीठाद्येषु शिखान्तेषु विमानावयवेषु च ।
भूराद्यं सत्यपर्यन्तं लोकानां सप्तकं क्रमात् ॥१४०॥
अध्वनां भुवनाध्वादिषट्कं वर्णाध्वपश्चिमम् ।
धरादिपुरुषान्तं च तत्त्ववृन्दं मुनीश्वराः ! ॥१४१॥
सत्तारूपमवस्थाय संस्थितं सन्ददर्श ह ।
ततस्तु देवतावृन्दं क्रमेण समलोकयत् ॥१४२॥
घटाधारशिलाधस्तादनन्तममितद्युतिम् ।
चक्रं तदूर्ध्वे सामर्थ्यशक्तिं चापि शिलान्तरे ॥१४३॥
मन्त्रनाथं मध्यकुम्भे प्रागादिकलशाष्टके ।
वासुदेवादिकांश्चैव प्रभवाप्यययोगतः ॥१४४॥

संस्थितान् तत्पिधानेषु मध्यादीशदिगन्तिमम् ।
ज्ञानभासादिकानां च शक्तीनां नवकं क्रमात् ॥१४५॥
धर्मादीनामष्टकं च तथा पादशिलाष्टके ।
अकारादिक्षकारान्तं वर्णचक्रं तदन्तरे ॥१४६॥
सर्वाधारमयं चक्रं शाखामूलं समाश्रितम् ।
ज्ञानक्रियात्मके तत्वे शाखयोः परमेश्वरम् ॥१४७॥
आद्यं ह्युदुम्बरस्योर्ध्वे तत्पृष्ठे धर्ममेव च ।
कवाटयोस्तु कालाग्निं वरुणं च मुनीश्वराः ! ॥१४८॥
शङ्खपद्मनिधी चैव तदग्रद्वारपार्श्वयोः ।
ततो जंघासमूहे तु तथैवान्तरभूमिषु ॥१४९॥
कालादिवसुधांतांश्च भावोपकरणामरान् ।
जंघाग्रे केशवादीनां द्विपद्कं प्रस्तरस्थले ॥१५०॥
चक्राद्यायुधसंघं च सत्तारूपेण संस्थितम् ।
नासाचतुष्कस्थानेषु वराहादि चतुष्टयम् ॥१५१॥
सशक्तिकं तु पत्राद्यैर्भूषिते वेदिकातले ।
सुदर्शनं शिखाकुम्भे वासुदेवं परात्परम् ॥१५२॥
तदग्रदेशे हेतीशं सूर्यकोटिसमप्रभम् ।
सर्वलोकमयं विप्राः ! सकलाध्वमयं तथा ॥१५३॥
सर्वतत्वमयं चैव सर्वदेवमयं तथा ।
आनन्दमयसंज्ञं तद्विमानं कमलासनः ॥१५४॥
एवं क्रमेणावलोक्य प्रणिपत्य पुनःपुनः ।
तथा प्रदक्षिणीकृत्य विष्वक्सेनाभ्यनुज्ञया ॥१५५॥
विमानान्तः सम्प्रविश्य जपन्नष्टाक्षरं मनुम् ।
अभ्यन्तरे विमानस्य गर्भभूमौ तु मध्यतः ॥१५६॥
सरसीरुहमास्थाय संस्थितं पुरुषोत्तमम् ।

प्रावृड्जलदसन्दोहविलसद्दिव्यविग्रहम् ॥१५७॥
सर्वदेवमयं देवं सर्वेषां तेजसान्निधिम् ।
सर्वलक्षणसम्पूर्णं सार्वज्ञ्यादिगुणैर्युतम् ॥१५८॥
वपुषा सुन्दरेणैव दिव्येनाविष्कृतेन च ।
मुञ्चन्तमनिशं देहादालोकं ज्ञानलक्षणम् ॥१५९॥
प्रयत्नेन विना ज्ञाननाशकृद्ध्यायिनां महत् ।
घनकुञ्चितनीलालिदलितांजनसन्निभैः ॥१६०॥
कर्पूरधूसरैर्दिव्यैः पुष्पसंवलितान्तरैः ।
किरीटमकुटाक्रान्तैः शोभितं स्वशिरोरुहैः ॥१६१॥
बालचन्द्रप्रतीकाशफालोद्यत्तिलकोज्वलम् ।
सुभ्रुवं सुनसं शान्तं सविलासस्मिताधरम् ॥१६२॥
किंचिदारक्तगोक्षीरशुद्धनीलाब्जलोचनम् ।
शीतलैर्दृष्टिपातैस्तु जगदाप्यायकारिणम् ॥१६३॥
विलसद्गण्डफलकं श्रवणोज्वलकुण्डलम् ।
मुखसौन्दर्यनिष्यन्दचुबुकस्थलशोभितम् ॥१६४॥
विकचाब्जशरच्चन्द्रविलसन्मुखमण्डलम् ।
कम्बुग्रीवं पीवरांसं दीर्घबाहुं महोरसम् ॥१६५॥
चतुर्भुजमुदाराङ्गं विलसत्पाणिपङ्कजम् ।
पीतकौशेयवसनं निम्ननाभि तनूदरम् ॥१६६॥
चारूरुयुगळं चारुजंघाद्वितयमुज्वलैः ।
मणिनूपुरभूषाद्यैर्विलसत्पदपङ्कजम् ॥१६७॥
दिव्यगन्धानुलिप्ताङ्गं दिव्याम्बरधरं तथा ।
दिव्यस्रग्वेष्टनोपेतं दिव्यालङ्कारमण्डितम् ॥१६८॥
अनेकरत्नखचितकिरीटमकुटोज्वलम् ।
कौस्तुभेनोरसिस्थेन श्रीवत्सेनाप्यलंकृतम् ॥१६९॥

रक्तकाञ्चनसन्मुक्तायुक्तया वनमालया ।
सब्रह्मसूत्रया चैव शोभितं परमेश्वरम् ॥१७०॥
मुख्यदक्षिणहस्तेन भीतानामभयप्रदम् ।
श्रोणीतटनिविष्टेन वामहस्तेन लीलया ॥१७१॥
भ्रियमाणं गदां गुर्वीं निषण्णां धरणीतले ।
पश्चाद्दक्षिणहस्तेन चक्रं कालानलद्युति ॥१७२॥
प्रणवध्वनिगर्भं तु हिमाद्रिशतशोभिकम् ।
शङ्खं वामकरेणापि दधानमतुलप्रभम् ॥१७३॥
स्वदेहतेजस्सम्भूतज्वालामण्डलमध्यगम् ।
करुणापूर्णहृदयं जगदुद्धरणोद्यतम् ॥१७४॥
अभिन्नपूर्णषाड्गुण्यविभवेनोपबृंहितम् ।
योगिध्येयमजस्त्रित्यं जगज्जन्मादिकारणम् ॥१७५॥
साक्षाल्लक्ष्मीपतिं देवं नारायणमनामयम् ।
दृष्ट्वा प्रहृष्टहृदयः प्रणिपत्य मुहुर्मुहुः ॥१७६॥
तुष्टाव कमलाकान्तं स्तोत्रैर्नानाविधैर्विधिः ।
ततस्तत्स्तोत्रसन्तुष्टो नारायण उदारधीः ॥१७७॥
पितामहमुवाचेदं मेघगम्भीरया गिरा ।
सन्तुष्टस्तपसा तेऽहमष्टाक्षरपरायण! ॥१७८॥
समभ्यर्चय मामत्र युगानामयुतं विधे! ।
ततो भुवं गमिष्यामि केन चित्कारणेन तु ॥१७९॥
इत्युक्तः स चतुर्वक्त्रो हर्षेण महतान्वितः ।
विमानं तत्समादाय स्थापयित्वा निजे गृहे ॥१८०॥
सात्वतोक्तविधानेन मनुनाष्टाक्षरेण तु ।
पूजयामास विधिवद्भोगैर्नानाविधैर्विभुम् ॥१८१॥
एवं बहुषु कालेषु व्यतीतेषु मुनीश्वराः! ।

सनत्कुमारो योगीन्द्रः कदाचित्क्षीरसागरात् ॥१८२॥
सत्यलोकं समासाद्य तत्र नारायणं प्रभुम् ।
दृष्ट्वा श्रिया समोपेतं सर्वचित्तापहारिणम् ॥१८३॥
प्रणम्य प्राञ्जलिस्तिष्ठन्नुवाचेदं चतुर्मुखम् ।
भवान् गुरुः पिता चापि मम वात्सल्यवारिधे! ॥१८४॥
त्वत्तोन्यो नास्ति मे लोके गतिः सर्वार्थदायक! ।
इयन्तं कालमीशोयं श्रीमान्नारायणो विभुः ॥१८५॥
भवताराधितः सम्यग्भोगैर्नानाविधैरपि ।
अद्याहं यष्टुमिच्छामि भवदाराधितं विभुम् ॥१८६॥
नारायणं जगन्नाथं दातुमर्हसि मे पितः! ।
इति संप्रार्थितो ब्रह्मा पुत्रवात्सल्यवानपि ॥१८७॥
विप्रयोगभिया विष्णोश्चिन्तापरवशोऽभवत् ।
तदा नारायणः श्रीमान् चिन्ताव्याकुलमानसम् ॥१८८॥
दृष्ट्वाब्जसम्भवं प्रीत्या वाक्यमेतदुवाच ह ।
चिन्तां जहि महाबुद्धे! विश्लेषान्मम पद्मज! ॥१८९॥
अर्चान्तरमिदं मेपि ददामि तव संप्रति ।
मामादाय मुनीन्द्रोयं संप्राप्य धरणीतलम् ॥१९०॥
संस्थाप्य पूजयेन्नित्यं पद्मकूटाभिधे गिरौ ।
यत्र मां द्रष्टुमनिशं तपस्यन्ति मुनीश्वराः ॥१९१॥
इत्युक्त्वा भगवान् देवो रूपं स्वं हृदयोद्भवम् ।
श्रिया पुष्ट्या च सहितं प्रायच्छद्ब्रह्मणे तदा ॥१९२॥
पितामहस्तदादाय रूपं श्रीपुष्टिसंयुतम् ।
अभ्यार्चयद्विशेषेण भोगैर्विस्मितमानसः ॥१९३॥
ततः सनत्कुमारं तमाहूय कमलोद्भवः ।
सन्तोषोत्फुल्लनयनः प्रोवाचेत्थं मुनीश्वराः! ॥१९४॥
सनत्कुमार हे वत्स! सत्पुत्रोसि भवान्मम ।

साक्षान्नारायणो देवो यतः सानुग्रहस्त्वयि ॥१९५॥
इत्युक्त्वाथ मुनीन्द्राय दिव्यमष्टाक्षरं मनुम् ।
उपदिश्य तदर्थांश्च तथा सात्वतसंज्ञकम् ॥१९६॥
महोपनिषदं तन्त्रं ग्राहयामास योगिनम् ।
यो मूलवेदो विख्यातस्तादृक्तस्मात्परिस्रुतम् ॥१९७॥
सिद्धिमोक्षप्रदं विप्राः ! सर्वशास्त्रार्थगर्भितम् ।
यत्र शान्ततरं व्यूहं शान्तोदितमनन्तरम् ॥१९८॥
सुषुप्तिसंज्ञं स्वप्नाख्यं जाग्रद्व्यूहं यथोदितम् ।
मूर्त्यन्तरं केशवाद्यं प्रादुर्भावान्तरं तथा ॥१९९॥
हृत्पद्मपद्मपीठादौ लक्ष्मीपुष्ट्यादिशक्तिभिः ।
लांछनैः शङ्खचक्राद्यैर्गरुडप्रमुखैरपि ॥२००॥
भूतसिद्धादिभिः शास्त्रपर्यन्तैः पूजनं हितम् ।
विश्वत्रातृनृसिंहस्य दीक्षापूर्वं तथा परम् ॥२०१॥
विभवव्यूहसूक्ष्माख्यमधिकारं यथाक्रमम् ।
समयीपुत्रकादीनां चतुर्णामभिषेचनम् ॥२०२॥
तथैव समयाचारं मूर्तीनां स्थापनक्रमः ।
मन्त्रमण्डलमुद्राणां कुण्डादीनां च लक्षणम् ॥२०३॥
यत्र प्रोक्तं भगवता लोकोज्जीवनहेतुना ।
तदर्थांश्चोपदिश्याथ तत्प्राप्तिं च व्यवर्णयत् ॥२०४॥
इदं हि सात्वतं तन्त्रं वासुदेवाज्जगत्प्रभोः ।
सङ्कर्षणेन सम्प्राप्तं तस्मात्सङ्कर्षणात्मनः ॥२०५॥
प्रद्युम्नाख्येन सम्प्राप्तमनिरुद्धेन वै ततः ।
अनिरुद्धान्मया प्राप्तं मत्तो रुद्रादिभिस्तथा ॥२०६॥
सर्वेषु दिव्यशास्त्रेषु नास्त्यस्मादधिकं मुने ! ।
यथा सर्वेषु मन्त्रेषु नास्ति चाष्टक्षरात्परम् ॥२०७॥

एतदुक्तविधानेन नारायणममुं मुने! ।
समभ्यर्चय लोकेशं भोगैः सांस्पर्शिकादिभिः ॥२०८॥
वैकुण्ठवर्धनं नाम क्षेत्रमस्ति महीतले ।
तत्रास्ति पद्मकूटाख्यः कश्चिद्गिरिवरो महान् ॥२०९॥
कावेर्या उत्तरे भागे मुने योजनमात्रतः ।
अप्राकृतं हि तत्स्थानं भूवैकुण्ठमिति श्रुतम् ॥२१०॥
पुरा भगवदाज्ञप्तः साक्षाच्छेषो हि शैलताम् ।
सम्प्राप्यागमनं विष्णोः प्रतीक्षन् वर्तते धुना ॥२११॥
विरजाप्यंशभागेन तद्गिरेरुत्तरेतटे ।
प्रवहत्यमला नित्यं सर्वदोषप्रणाशिनी ॥२१२॥
तथैवानेकतीर्थानि क्षेत्राणि विविधानि च ।
सन्ति तत्र गिरिश्रेष्ठे सेव्यानि विबुधोत्तमैः ॥२१३॥
कलौ युगेपि तत्रत्या न दूष्यन्ति कदा चन ।
तस्य प्रळयकालेपि नाशो नास्ति गिरेर्मुने! ॥२१४॥
ततस्तत्सदृशं स्थानं ब्रह्माण्डान्तर्न किञ्चन ।
तस्मिन् गिरौ मुनिवरा बहवः संशितव्रताः ॥२१५॥
नारायणममुं द्रष्टुं तपस्यन्त्यमलाशयाः ।
तेष्वप्यनुग्रहो जातो देवस्यास्य कृपानिधेः ॥२१६॥
तस्माद्विमानमेतत्त्वं समादाय समाहितः ।
तस्मिन् गिरिवरे स्थाप्य यज नारायणं प्रभुम् ॥२१७॥
एवमुक्तो मुनिवरः सन्तुष्टहृदयस्ततः ।
पितामहाद्देवदेवं लब्ध्वा नारायणं प्रभुम् ॥२१८॥
फाल्गुन्यां पौर्णमास्यां हि हस्तर्क्षे मुनिसत्तमाः! ।
तमानीय गिरिश्रेष्ठं तन्मूर्ध्नि मुनिसेविते ॥२१९॥
तीरे तीर्थवरस्यैतद्विमानममितप्रभम् ।

संस्थापयामास तदा तत्रत्या मुनिपुङ्गवाः ॥२२०॥
दृष्ट्वा नारायणं देवं हर्षेण महतान्विताः ।
अस्माकमिह कल्याणं कल्याणमिति चोचिरे ॥२२१॥
ततः कल्याणतीर्थं तत्प्रवदन्ति मनीषिणः ।
ततः सनत्कुमारस्तु सात्वतोक्तविधानतः ॥२२२॥
समर्चयन् जगन्नाथं सन्तुष्टहृदयोऽभवत् ।
यतो नारायणस्तत्र गिरौ वसति सन्ततम् ॥२२३॥
नारायणाचल इति ततःप्रभृति कथ्यते ।
तत्र नारायणस्यैवमवतारः समीरितः ॥२२४॥
अर्चान्तरन्तु यत्प्रोक्तं नारायणहृदुद्भवम् ।
तच्चापि तं गिरिं प्राप कुतश्चित्कारणात्पुरा ॥२२५॥
तद्वृत्तमिह वक्ष्यामि शृणुध्वं मुनिपुङ्गवाः ! ।
पुरा नारायणः श्रीमान् लोकरक्षणहेतुना ॥२२६॥
अवतीर्य रघोर्वंशे रामो रक्षःकुलान्तकः ।
पितृवाक्यापदेशेन दण्डकारण्यवासिनाम् ॥२२७॥
मुनीनां रक्षणार्थाय तत्र तत्राश्रमे वसन् ।
लक्ष्मणेन च लावण्यपूर्णया सीतयान्वितः ॥२२८॥
नारायणगिरिं प्राप्य कदाचिन्मुनिसेवितम् ।
कृतातिथ्यो मुनिगणैः कौतूहलसमन्वितैः ॥२२९॥
अधित्यकायां तस्याद्रेस्तुङ्गशृङ्गे ऽतिमञ्जुले ।
सीतावारिविहारार्थं सुमित्रासूनुना क्षणात् ॥२३०॥
धनुष्कोट्या कृते खाते सद्यस्सञ्जातवारिणि ।
विहृत्य सीतयासार्थं निमज्यान्तर्जले जपन् ॥२३१॥
ऋचोऽघमर्षणीस्तत्र ददर्श परमाद्भुतम् ।
रूपं भगवतः पश्चादुन्मज्यालोच्य राघवः ॥२३२॥

पर्यटन् परितश्शैलं विस्मयाविष्टमानसः ।
पारे कल्याणतीर्थस्य पद्मपत्रायतेक्षणम् ॥२३३॥
पश्यन्नारायणं देवं प्रणम्य शिरसाऽसकृत् ।
पूजयन् कतिचिन्मासानुवास तदनन्तरम् ॥२३४॥
उवाच भगवान् रामं परितुष्टोस्मि पूजया ।
दत्ताभयो मुनीनां त्वं जित्वा राक्षसपुङ्गवान् ॥२३५॥
सर्वैः परिजनैः सार्धं साकेतपुरमाविश ।
तत्रांशेनागमिष्यामि तदा मां यष्टुमर्हसि ॥२३६॥
इत्युक्तो रघुशार्दूल इन्दिरारमणाज्ञया ।
कृत्वा निष्कण्टकां पृथ्वीं साकेतनगरे वरे ॥२३७॥
अभिषिक्तः स्वभक्ताय राक्षसेन्द्राय धीमते ।
स्ववंशाराधितं देवं दत्वा रङ्गेश्वरं विभुम् ॥२३८॥
नीते रङ्गाधिपे तेन चिन्ताविष्टोभवत्तदा ।
तद्विदित्वा चतुर्वक्त्रः श्रीभूमिसहितं विभुम् ॥२३९॥
नारायणांशमादाय साकेतनगरीं जवात् ।
समभ्येत्य च रामाय ददौ स्वाराधितं हरिम् ॥२४०॥
ततो रामः संप्रहृष्टः श्रीभूमिसहितं विभुम् ।
अर्चयामास विधिवच्चिरं निजगृहे द्विजाः ! ॥२४१॥
अतो रामप्रिय इति तस्य नामाभवद्द्विजाः ! ।
ततः कुशो रामपुत्रः स्वपित्राराधितं विभुम् ॥२४२॥
पूजयन् स्वसुतां कांचिद्यदुवंश्याय भूभृते ।
दत्वा तया प्रार्थितः सन् प्रादात्तस्यै तमच्युतम् ॥२४३॥
लब्ध्वा धन्यां च तं देवं यदुशेखरसंज्ञकः ।
मधुरानगरीमेत्य तत्रैव निजमन्दिरे ॥२४४॥
संस्थाप्य कमलाकान्तं रामस्यार्चयदादरात् ।

ततस्तु तत्क्रमाल्लब्ध्वा यदुवंशसमुद्भवः ॥२४५॥
कृष्णः श्रियःपतिं देवं पूजयन् विनतासुतात् ।
प्राप्तं किरीटमतुलं कलशार्णवशायिनः ॥२४६॥
समर्प्य तस्मै देवाय विविधोत्सवमातनोत् ।
ततः कदाचिन्मुसली तीर्थयात्रानिमित्ततः ॥२४७॥
गत्वा नारायणगिरिं तत्र कल्याणनामके ।
तीर्थे तथाष्टतीर्थेषु स्नात्वा तच्छैलमूर्धनि ॥२४८॥
योगासनसमासीनं योगानन्दं जगत्प्रभुम् ।
सर्वदेवमयं देवं सर्वेषां तेजसां निधिम् ॥२४९॥
सर्वलक्षणसम्पूर्णं सार्वज्ञ्यादिगुणैर्युतम् ।
निष्टप्तकनकाभंच सम्पूर्णाङ्गं महातनुम् ॥२५०॥
घोरशार्दूलवदनं चण्डमार्ताण्डलोचनम् ।
सौदामिनीचयप्रख्यैर्लोमभिःपरिपूरितम् ॥२५१॥
अरुणाम्भोजपत्राभवज्राधिककरेरुहम् ।
चलत्फणीश्वरसटं चन्द्रकोटितटिद्युतिम् ॥२५२॥
प्रळयांबुधिनिर्घोषमुद्गिरन्तं स्ववाचकम् ।
युगान्तहुतभुग्ज्वालामण्डलान्तर्व्यवस्थितम् ॥२५३॥
जान्वासक्तभुजद्वन्द्वं योगपट्टविभूषितम् ।
रथाङ्गशंखधर्तारं पश्चाद्बाहुद्वयेन च ॥२५४॥
मार्ताण्डकोटिसदृशकिरीटमकुटोज्वलम् ।
कौस्तुभेनोरसिस्थेन श्रीवत्सेनाप्यलंकृतम् ॥२५५॥
रत्नकाञ्चनसन्मुक्तायुक्तया वनमालया ।
सब्रह्मसूत्रया चैव शोभितं परमेश्वरम् ॥२५६॥
दिव्यगन्धानुलिप्ताङ्गं दिव्याम्बरधरं तथा ।
दिव्यस्रग्वेष्टनोपेतं दिव्यालङ्कारमण्डितम् ॥२५७॥

सुभीषणं सौम्यरूपं स्वाश्रिताभीष्टसिद्धिदम् ।
देवं नरहरिं दृष्ट्वा नत्वा तत्पादपङ्कजे ॥२५८॥
स्तोत्रैर्नानाविधैः स्तुत्वा सन्तुष्टहृदयो हली ।
तस्मिन् गिरिवरे विप्रास्तत्र तत्र च संचरन् ॥२५९॥
आनन्दमयमध्यस्थं सौन्दर्यामृतवारिधिम् ।
दृष्ट्वा नारायणं देवं निमग्नो विस्मयाम्बुधौ ॥२६०॥
नत्वा तत्पादकमले तुष्टावेत्थं जगत्पतिम् ।
जितन्ते पुण्डरीकाक्ष जितन्ते भक्तवत्सल ॥२६१॥
जितन्ते कमलाकांत जितन्ते पुरुषोत्तम ।
नारायण नमस्तेऽस्तु वासुदेव नमोऽस्तु ते ॥२६२॥
नमोऽस्तु विष्णवे तुभ्यं नमस्ते सर्वरूपिणे ।
नमस्ते पररूपाय नमस्ते व्यूहरूपिणे ॥२६३॥
नमो विभवरूपाय नमस्तेत्वन्तरात्मने ।
नमस्तेऽर्चावताराय नानाकाराय ते नमः ॥२६४॥
भवान् हि लोकरक्षार्थं लक्ष्म्या कारुण्यरूपया ।
सुदर्शनेनापि युक्तो विहरस्यत्र भूधरे ॥२६५॥
अद्य मे सफला दृष्टिः सौन्दर्यामृतवारिधिः ।
यद्भवान् सर्वलोकेशो मम दृष्टिपथं गतः ॥२६६॥
पुण्यक्षेत्रेषु सर्वेषु सर्वेष्वायतनेषु च ।
न पश्यामि जगन्नाथ भगवन्तं भवादृशम् ॥२६७॥
शरणं त्वां प्रपन्नोस्मि शरणागतवत्सल ।
कटाक्षैः करुणापूर्णैः समालोकय मां विभो ॥२६८॥
एवं नानाविधैः स्तोत्रैः स्तुतो नारायणो हरिः ।
उवाच बलभद्रं तं करुणापूर्णमानसः ॥२६९॥
बलभद्र भवान्भक्तः शेषोसि मम किङ्करः ।

अभीप्सितं किं भवतो ब्रूहि तत्प्रददामि ते ॥२७०॥
इत्युक्तो बलभद्रोयं प्रत्युवाच जगत्प्रभुम् ।
नारायण दयाम्भोधे तव कैङ्कर्यतो विना ॥२७१॥
किमस्त्यभीप्सितं नाथ त्वामिहार्चयितुं विभो ।
अभीप्सामि रमाकान्त पूरयास्य मनोरथम् ॥२७२॥
इति सम्प्रार्थितो देवः प्रत्युवाच बलं तदा ।

श्रीनारायणः ।

अस्ति ते विमलाभक्तिः मयि यादवनन्दन॥!२७३॥
प्रथमं शेषरूपो मे कैङ्कर्यमकरोद्भवान् ।
ततस्तु लक्ष्मणो भूत्वा मामाराधितवानिह ॥२७४॥
इदानीमपि मां यष्टुं बलभद्र त्वमर्हसि ।
कलावपि युगेभूयः कश्चिद्भूत्वा द्विजोत्तमः ॥२७५॥
नानाविधैर्भोगजालैरर्चनं मे करिष्यसि ।
इत्युक्तो देवदेवेन बलभद्रः प्रहृष्टधीः ॥२७६॥
पूजयामास विधिवद्भोगैर्नानाविधैर्हरिम् ।
तदर्चनेनातितुष्टः श्रीमान्नारायणो विभुः ॥२७७॥
उत्सवादीन् कर्तुकामं बलदेवमुवाचह ।
श्रिया भूम्या च सहितं रूपं मम हृदुद्भवम् ॥२७८॥
मधुरायां भवद्गेहे पूज्यते किल यादव! ।
तदानीयोत्सवार्चां मे कृत्वा नानाविधोत्सवान् ॥२७९॥
कर्तुमर्हसि भक्त्या त्वं तेन तुष्याम्यहं हलिन् ।
एवमुक्तो रौहिणेयः त्वरया मधुरां पुरीम् ॥२८०॥
एत्य कृष्णाय तद्वृत्तं विस्तरेण न्यवेदयत् ।
तच्छ्रुत्वा भगवान् कृष्णो बभूवातीव विस्मितः ॥२८१॥
ततो यदूद्वहौ कृष्णबलरामौ श्रियःपतिम् ।

शिविकायां समारोप्य सर्वाभरणभूषितम् ॥२८२॥
यात्रोपकरणैः सर्वैश्चतुरङ्गबलैः सह ।
माघमासे तु चित्रर्क्षे सुमुहूर्ते मनोहरे ॥२८३॥
नीत्वा गिरिवरं तत्र नारायणपुरोभुवि ।
संस्थाप्य च महाऽऽनन्दात्पूजयामासतुर्हरिम् ॥२८४॥
ततस्तु देवदेवस्य कर्तुकामौ महोत्सवम् ।
बल्यर्चां स्नपनार्चां च प्रतिष्ठाप्याज्ञया हरेः ॥२८५॥
महोत्सवं तु विधिवत्कृत्वा देवस्य शार्ङ्गिणः ।
फाल्गुने मासि हस्तर्क्षे सर्वतीर्थसमाश्रिते ॥२८६॥
तस्मिन् कल्याणसरसि चक्रातेऽवभृथोत्सवम् ।
यतस्तत्रार्चितो देवो यादवाभ्यां रमासखः ॥२८७॥
तदाप्रभृतितच्छैलो यादवाद्रिरितीर्यते ।
इति नारायणस्यास्य महात्म्यं कीर्तितं मया ॥२८८॥
इतः परं यच्छ्रोतव्यं कथ्यतां तन्मुनीश्वराः! ।

मुनयः ।

सर्वज्ञ मुनिशार्दूल तत्र यादवभूधरे ॥२८९॥
अस्ति कल्याणतीर्थं यत्तदुत्पत्तिं तथैव हि ।
तच्छैलाग्रे संस्थितस्य नृहरेर्वैभवं वयम् ॥२९०॥
आकर्णयितुमिच्छामस्तदपि त्वं प्रकाशय ।

नारदः ।

साधु पृष्टं महाभागा भवद्भिः सारवेदिभिः ॥२९१॥
कल्याणतीर्थमहात्म्यं वक्ष्यामि शृणुताधुना ।
पुरा वराहो भगवान् मग्नामब्धौ वसुन्धराम् ॥२९२॥
समुद्धृत्य यथापूर्वं संस्थाप्याथ महीधरे ।
तस्मिन् शेषात्मके देव्या भूम्या सह समास्थितः ॥२९३॥

तदा देवाङ्गसंलग्नाः समुद्रजलबिन्दवः ।
गलितास्तत्रतत्तीर्थं कल्याणमभवद्द्विजाः ॥२९४॥
तदा देवाः पुष्पवर्षैः समाकीर्य जगत्पतिम् ।
तुष्टुवुर्विविधैः स्तोत्रैः ननृतुश्चाप्सरोगणाः ॥२९५॥
दिव्यदुन्दुभयो नेदुः बभूव मुदितं जगत् ।
ततो ब्रह्मादयो देवाः सर्वे देवर्षिपुङ्गवाः ॥२९६॥
तत्रागत्य वराहन्तं प्रार्थयामासुरच्युतम् ।

देवाः ।

देवदेव जगन्नाथ सर्वलोकैकरक्षक! ॥२९७॥
त्वया हतो महादैत्यो वसुधापि समुद्धृता ।
वयं च रक्षिता देव करुणामृतवारिधे! ॥२९८॥
इहानेनैव रूपेण भवान् भूम्या समन्वितः ।
स्थातुमर्हसि लोकेश भक्तानुग्रहकाम्यया ॥२९९॥
इति देवैः प्रार्थितोयं वराहो भगवान् हरिः ।
स्वाङ्के वसुन्धरां न्यस्य तस्या उपदिशन् मनुम् ॥३००॥
प्राग्भागे तस्य तीर्थस्य ह्यद्याप्यास्ते मुनीश्वराः ! ।
तत्र तेन वराहेण स्वाज्ञप्तः पतगेश्वरः ॥३०१॥
श्वेतद्वीपाच्छुद्धमृदं समाहृत्य सरस्तटे ।
पुरा निक्षिप्तवान् सा हि मृत्तिका लोकपूजिता ॥३०२॥
फाल्गुने मासि कल्याणसंज्ञे तस्मिन् सरोवरे ।
गङ्गाद्याः सकला नद्यो भजन्ते सन्निधिं द्विजाः! ॥३०३॥
तन्मासि पौर्णमास्यां हि ब्रह्माद्या देवतोत्तमाः ।
स्नातुं कल्याणसरसि समागच्छन्ति भक्तितः ॥३०४॥
दिव्यं कल्याणतीर्थं तद्ये पश्यन्ति स्मरन्ति वा ।
प्रदक्षिणं वा कुर्वन्ति प्रणमन्ति भजन्ति वा ॥३०५॥

ये वा तत्तीर्थमाहात्म्यं भक्त्या शृण्वन्ति मानवाः ।
स्नानं वा तत्र कुर्वन्ति तत्तीर्थन्तु पिबन्ति वा ॥३०६॥
ये वार्चयन्ति पुष्पाद्यैस्ते जना लोकपावनाः ।
आयुरारोग्यमैश्वर्यं विद्यां तेजो जयं यशः ॥३०७॥
सत्सुतांश्चापि सन्तोषं यद्यदिष्टमिह द्विजाः ! ।
तत्सर्वमचिरादेव लभन्ते नात्र संशयः ॥३०८॥
तस्य तीर्थस्य माहात्म्यं ब्रह्माद्यैरपि दैवतैः ।
सम्यङ्न शक्यते ज्ञातुं किं पुनः खलु मादृशैः॥३०९॥
इत्युक्तं लेशतस्तीर्थमाहात्म्यं मुनिपुङ्गवाः ! ।
अथ श्रीनरसिंहस्य माहात्म्यं वक्ष्यते द्विजाः! ॥३१०॥
प्रह्लादो नृहरेर्भक्तः पुरा वैष्णवसत्तमः ।
तपसाराधितुं देवं नृसिंहं भक्तिसंयुतः ॥३११॥
अन्वेषमाणो विमलं तपःस्थानं धरातले ।
नारायणाचलं प्राप्य दृष्ट्वा तद्रामणीयकम् ॥३१२॥
नास्त्यस्मादधिकं स्थानं भुवीति कृतनिश्चयः ।
तत्र कल्याणसरसि स्नात्वा तत्तीरगां शुभाम् ॥३१३॥
श्वेतमृत्स्नां समादाय धृत्वा चैवोर्ध्वपुण्ड्रकान् ।
तच्छैलशिखरं प्राप्य विविक्तमतिनिर्मलम् ॥३१४॥
यमादिनियमैर्युक्तो नृसिंहैकाक्षरं शुभम् ।
तथैवानुष्टुभं मन्त्रं जपमानस्तदेकधीः ॥३१५॥
द्रष्टुं नरहरिं भूयस्तपस्तेपे सुदुस्तपम् ।
ततस्तत्तपसा तुष्टो नृहरिर्भक्तवत्सलः ॥३१६॥
प्रादुरासीज्जगन्नाथः तस्य शैलस्य मूर्धनि ।
प्रह्लादस्स्वतपःफलं नरहरिं वात्सल्यवारानिधिं
श्रीवत्साङ्कितवक्षसं शुभगुणं चक्राब्जभास्वत्करम् ।

तच्छैलाग्रशिलातले शुभतरे योगासनस्थं परं
दृष्ट्वा हृष्टतनूरुहो मुनिवरा वल्गं ननर्तादरात् ॥३१७॥
तुष्टाव चेत्थं नृहरिं विस्मयाविष्टमानसः।
नमस्ते श्रीनृसिंहाज ! नमस्ते दैत्यसूदन ! ॥३१८॥
नमस्ते जगतां नाथ ! नमस्ते भक्तवत्सल ! ।
रक्षकस्त्वं हि लोकस्य त्वदात्मकमिदं जगत् ॥३१९॥
ब्रह्माद्याः सकला देवा भवत्पादाब्जसेवकाः।
नास्ति त्वत्तोऽधिका लोके देवता पुरुषोत्तम! ॥३२०॥
वेदान्तेषु विचिन्वन्ति त्वां मुनीन्द्राः सनातनम्।
स भवान् करुणाम्भोधे मम दृष्टिपथं गतः ॥३२१॥
शरणं त्वां प्रपन्नोऽस्मि आत्मसात्कुरु मां विभो।
इति नानाविधैः स्तोत्रैः स स्तुतो नरकेसरी ॥३२२॥
उवाचामृतवर्षिण्या गिरा प्रह्लादसंज्ञकम्।
प्रह्लाद ! तेव तपसा तुष्टोऽहं वरमीप्सितम् ॥३२३॥
वृणीष्व तत्प्रदास्यामीत्युक्तः प्रह्लादनामकः।
बद्धांजलिपुटो भूत्वा प्रत्युवाच महामतिः ॥३२४॥
भवान् गुरुः पिता माता सुहृद्बन्धुश्च मे विभो ! ।
विद्या धनं च सकलं नास्ति त्वत्तोपरं यतः ॥३२५॥
त्वां विनाहं क्षणमपि वस्तुं नेच्छे भुवीश्वर ! ।
तस्मान्निरन्तरं देव भवत्पादाब्जसेवनाम् ॥३२६॥
दातुमर्हसि देवेश त्विति संप्रार्थितो विभुः।
प्रह्लादानुग्रहार्थाय तस्मिन्नेव महीधरे ॥३२७॥
कृतावासो नरहरिस्तेन सम्पूजितो भृशम्।
अद्यापि राजते तत्र स्वाश्रिताभीष्टसिद्धिकृत् ॥३२८॥

एवं नारायणगिरेर्माहात्म्यं लेशतो मया ।
सङ्कीर्तितं मुनिवराः! किमन्यच्छ्रोतुमिच्छथ ॥३२९॥

इति श्रीपाञ्चरात्रे ईश्वरसंहितायाम्
यादवाचलमाहात्म्यं नाम
विंशोऽध्यायः ।

## अथ एकविंशोऽध्यायः ।

मुनयः ।

भगवन्मुनिशार्दूल सर्वज्ञ वदतां वर! ।
अदीक्षितानां पूजादौ प्रागुक्तानधिकारिता ॥१॥
तस्माद्दीक्षाविधिं सम्यग्वदस्व मुनिपुङ्गव! ।

नारदः ।

शृणुध्वं मुनयः! सर्वे भवन्ति भगवन्मयाः ॥२॥
ब्राह्मणः क्षत्रियो वैश्यः शूद्रो वा मुनिपुङ्गवाः! ।
पूर्वोक्तलक्षणो ज्ञाता कश्चिद्दृढतरः पुमान् ॥३॥
संसारभयभीतस्तु निर्वाणमभिवाञ्छति ।
वैराग्यधीरचपलश्चिरकालं गुरोर्गृहे ॥४॥
संस्थितो दासभावेन खेदोद्वेगविवर्जितः ।
ज्ञात्वा तस्यार्थितं नूनमाहूयाग्रे निवेश्य च ॥५॥
कृताकृतं च प्रष्टव्य आजनेस्तल्लक्षणावधि ।
ज्ञात्वा दोषबलं सम्यक्प्रायश्चित्तैर्यथोदितैः ॥६॥
कृच्छ्रातिकृच्छ्रपूर्वैस्तु छेदनीयं प्रयत्नतः ।
बहूनां परिपीडानामसामर्थ्यात्तु लाङ्गलिन्! ॥७॥
मनःप्रसादपर्यन्तं कालं वा द्वादशाह्निकम् ।
नियोक्तव्यो मिते पूते ऽयाचिते नक्तभोजने ॥८॥

स्तुतिसम्मार्जनस्नानपुष्पाद्याहरणोद्यमे ।
आश्रमे वैष्णवानां तु दिव्यालयतने विभोः ॥९॥
अनिशं भगवद्बिम्बस्यापीठादवलोकने ।
अभिजाततनुर्यः प्राग्दुष्कृतैर्मलिनीकृतः ॥१०॥
सांप्रतं भगवद्भक्त्या पवित्रीकृतमानसः ।
अहोरात्रोषितो भूत्वा नखकेशादिलुण्ठितः ॥११॥
पञ्चगव्यमथापाद्य हृदाद्यैः सकुशोदकम् ।
मन्त्रैस्तद्वासुदेवाद्यैः समावर्त्य चतुश्शतम् ॥१२॥
एवं दिनचतुष्कं तु स्नापयेत्तेन तं सुधीः ।
प्रत्यहं चतुरो वारानाप्रभातान्निशागमम् ॥१३॥
ब्रह्मतीर्थचतुष्कं त्वापूर्यापूर्य समं पिबेत् ।
क्रमात्सद्योदितैर्मन्त्रैः समाचम्यान्तरान्तरा ॥१४॥
अतृप्तमशनं कुर्यादन्ते क्षीराज्यभावितम् ।
सेवयेत्फलमूलैर्वा अहोरात्रचतुष्टयम् ॥१५॥
इति भक्त्या प्रपन्नानामाजीवमपि दुष्कृतात् ।
कथितं विरतानां च देहशुद्धिकरं परम् ॥१६॥
ब्रह्मकूर्चसमेतं तु प्रायश्चित्तं मयाद्य ते ।
ज्ञात्वा महत्त्वं दोषाणां त्रिविधानां तु वै पुरा॥१७॥
सम्भवे सति हेमादिदानं सततमाचरेत् ।
पूर्वोक्ताद्विहितात्कालाल्लघुदुष्कृतिनां क्रमात् ॥१८॥
चतुर्थांशेन ह्रासस्तु ब्रह्मकूर्चं पिबेत्ततः ।
कालेन वर्णोत्कर्षेण सह सामान्यमुच्यते ॥१९॥
प्रायश्चित्तं हि सर्वेषां सर्वकल्मषनाशनम् ।
उत्तरोत्तरतां बुध्वा प्रथमं दुष्कृतस्य च ॥२०॥
क्षपयेत्तद्द्विजेन्द्रस्तु मासैर्द्वित्रिचतुर्गुणैः ।

नृपविट्छूद्रजातीय एकैकं वर्धयेत्क्रमात् ॥२१॥
मासमेकादिकान् कालान् समारभ्य यथाक्रमात् ।
दुराचारोऽपि सर्वाशी कृतघ्नो नास्तिकः पुरा ॥२२॥
समाश्रयेदादिदेवं श्रद्धया शरणं यदि ।
निर्दोषं विद्धि तं जन्तुं प्रभावात्परमात्मनः ॥२३॥
किं पुनर्योऽनुतापार्तः शासनेऽस्मिन् हि संस्थितः ।
विरतः कुकृताच्चैव भक्तिच्छायां समाश्रितः ॥२४॥
एवं संशुद्धदोषाणां बहुजन्मार्जितस्य च ।
कल्मषस्य विघातार्थं नारसिंहीं महामते! ॥२५॥
कृत्वा वै सांप्रतं दीक्षां दद्याद्वै मन्त्रपूर्वकम् ।
अराधनं हि तस्यैव वैभवीयस्य वै विभोः ॥२६॥
सबाह्याभ्यन्तरं चैव सम्यङ्मासचतुष्टयम् ।
मासाष्टकं वत्सरं वा बुध्या भावबलं पुरा ॥२७॥
ज्ञात्वा भव्याशयानां च प्रसादं पारमेश्वरम् ।
विभवव्यूहसूक्ष्माख्यां दीक्षां कुर्यात्तदन्तरम् ॥२८॥
अथ दीक्षाविधिं वक्ष्ये शृणुध्वं मुनिसत्तमाः! ।
सम्प्राप्तप्रत्ययानां च द्विजादीनां च सांप्रतम् ॥२९॥
सम्यक्प्रक्षीणपापानामारूढानामिह क्रमे ।
शुभेऽनुकूले नक्षत्रे तिथौ लग्ने शुभे क्षणे ॥३०॥
भक्तानामधिवासार्थं क्ष्मापरिग्रहमाचरेत् ।
पुण्यदेशेऽनुकूले च मनोज्ञे साधुसेविते ॥३१॥
मृद्वारिफलपुष्पाढ्येकशब्देनसमन्विते ।
गोसस्यशालिसुभगे क्षुद्रप्राणिविवर्जिते ॥३२॥
तत्र वर्णानुरूपां क्ष्मां भजेत्पूर्वोक्तलक्षणाम् ।
सर्वदोषविनिर्मुक्तां सत्पक्षिमृगसेविताम् ॥३३॥

या शुभायतनोद्देशे मठगोष्ठापणैर्गृहैः ।
तोयाशयाश्रमक्षेत्रैः सद्वृत्तैरन्तरीकृता ॥३४॥
जलाद्ययविनिर्मुक्ता बलाद्युक्ता च सज्जनैः ।
वनैरुपवनैर्ग्रामैः नगराद्यैः समावृता ॥३५॥
अलाभे सति लाभे वा स्वभूर्गेर्ब्राह्मणादिषु ।
स्वमन्त्रेणार्चनात्स्वत्वं कुर्याद्वर्णव्यपेक्षया ॥३६॥
उद्धृतां कृतखातां च ज्ञात्वा दोषान्वितां पुरा ।
शुभमृत्पूरितां कृत्वा लब्धश्गभिरथान्तरात् ॥३७॥
ततश्च कुट्टयेत्पश्चात्पञ्चगव्येन सेचयेत् ।
युक्तां हेमादिसद्रत्नैः समीकृत्योपलिप्य च ॥३८॥
तत्रार्चनं विभोःकुर्याद्धवनान्तं च पूर्ववत् ।
भूतानां बलिदानं च सुरभीणां च तर्पणम् ॥३९॥
द्विजानां दक्षिणान्तं वै ततस्तत्र समापयेत् ।
प्राग्दिक्षु सिद्धिपूर्वं तु मण्टपं मण्डनान्वितम् ॥४०॥
स्तम्भद्विद्वितयेनैव कोणकेनोपशोभितम् ।
पार्थिवेन च पीठेन मध्यगेन विराजितम् ॥४१॥
विस्ताराच्तु द्विजादीनां शूद्रान्तानां समं स्मृतम् ।
अष्टाश्रमथ वा वृत्तं तुर्याश्रं सोपपीठकम् ॥४२॥
अष्टाङ्गुलात्समुत्सेधादेकापायेन लक्षितम् ।
स्वोन्नत्यर्थेनोपपीठं सर्वेषां परिकल्पयेत् ॥४३॥
विस्तारमुपपीठानामुच्छ्रायाद्विगुणं समम् ।
उपपीठस्य संलग्नात्तन्मानेन तु चोन्नता ॥४४॥
आप्यदिक्स्थागृहस्था च सम्पाद्यासनपिण्डिका ।
नैवेद्यमुपपीठे तु विनिवेश्य निधाय च ॥४५॥
तस्य दक्षिणदिग्भागे त्वन्तर्गमनसंयुतम् ।

विविक्ते लोचनोपेतंपिण्डिकाकुण्डभूषितम्॥४६॥
सकवाटार्गळोपेतं कुर्याद्भवनमण्टपम्।
उपलिप्यास्त्रजप्तेन वारिणा गोमयेन तु॥४७॥
विधिवच्छोभनं कुर्यादित्येवं मण्टपद्वयम्।
विहितो वित्तविरहादधिवासो द्विजालये॥४८॥
शैष्ये वाचार्यभवने तत्र कुर्यात्परिग्रहम्।
प्राग्वदर्चनपूर्वं तु भूततर्पणपश्चिमम्॥४९॥
ओदनं दधिलाजाज्यमधुतोयपरिप्लुतम्।
भूततर्पणमित्युक्तं तद्विना तत्र तेऽनिशम्॥५०॥
सन्तिष्ठन्ते बहिः क्रुद्धाः काङ्क्षमाणाः परं पदम्।
अथश्च विहितं यत्नात् स्थाने क्षेत्रीकृते सति॥५१॥
निर्विघ्नसिद्धये दद्याद्बलिं सर्वत्र सर्वदा।
कृत्वैवं मङ्गळार्थं तु दीर्घघण्टारवोपमम्॥५२॥
स्वपदात्प्राग्वदुत्थाप्य प्रोच्चार्य प्रणवं महत्।
प्रवेशयेत्ततस्तस्माल्लाजन् सिद्धार्थकान् शुभान्॥५३॥
फलानि श्रीफलादीनि चन्दनादीनि रोचनाम्।
श्वेतपूर्वाः सुमनसस्तन्महीरुहमञ्जरीम्॥५४॥
साम्रान् हरितदर्भांश्च सर्वरत्नानि काञ्चनम्।
सर्वौषधीत्वगेलाद्यं सुगन्धनिचयं शुभम्॥५५॥
पद्मकं शङ्खपुष्पं च विष्णुक्रान्तां च कुन्दकम्।
सप्त सप्त च धान्यानि बीजानि च समानि यद्॥५६॥
शालिश्यामाकनीवारतण्डुलं भूरि सम्भृतम्।
गोसम्भवानि वै पञ्च पत्रेष्वौदुम्बरेषु च॥५७॥
तत्स्राववर्जितान्यानि तान्येव सुबहून्यपि।
प्रतिक्षणोपयोगार्थं माण्डेष्वभिनवेषु च॥५८॥

पाद्याचमनमर्घ्यार्थं दध्यन्तं विनिवेदने ।
हेमाद्युत्थानि पात्राणि मृदुपर्णपुटानि वा ॥५९॥
पाण्डुराणि दुकूलानि वस्त्रयुग्मद्वयं नवम् ।
उपवीतं सोत्तरीयं सुसिते धौतवाससी ॥६०॥
कौशेयानि पवित्राणि कङ्कणं साङ्गुळीयकम् ।
स्फाटिकं चाक्षसूत्रं तु पद्माक्षन्तु गणित्रकम् ॥६१॥
पञ्चलोहमयं चक्रं सशङ्खं द्वादशारकम् ।
कुतपं योगपट्टं च नेत्रवस्त्रं मृगाजिनम् ॥६२॥
ब्रुसिकां शाटकं पट्टं पादुके च उपानहौ ।
दण्डं प्रतिग्रहच्छत्रं चूर्णं गोधूममापजे ॥६३॥
चतुर्वर्णानि माल्यानि सुन्दरं पावनं लघु ।
नीलशाड्वलसम्मिश्रं हरितं पत्रसञ्चयम् ॥६४॥
गुग्गुलं मृष्टधूपं च दीपतैलं च वर्तयः ।
दर्पणं धूपपात्रं च घण्टां कूर्चं च दर्भजम ॥६५॥
रजांसि करणीयुग्मं पालिकां घटिकां सिताम् ।
पंचाङ्गुलं तु सुदृढं हेमाद्यं कुशपंचकम ॥६६॥
अलक्तरंजितं सूत्रं सुसितं कर्तरीक्षुरम् ।
काण्डान्यष्टौ तु साग्राणि बर्हिपक्षान्वितानि च ॥६७॥
प्रोन्नतानि स्थिरास्थीनि लोहमृत्काष्ठजानि वा ।
रंजितानि सुधाद्यैस्तु तदाधाराणि यानि च ॥६८॥
मल्लकान्यम्बुकुम्भानि भृङ्गारकरवीं शुभाम् ।
अकाममूलं निर्दाहं साधारं कलशं तथा ॥६९॥
स्थालीकमण्डलुं दर्वी तत्पिधानं तु चुल्लिकाम् ।
भद्रपीठं चतुष्पादं चतुरश्रायतं नवम् ॥७०॥
मात्रावित्तं सताम्बूलं दन्तधावनसञ्चयम् ।

शुष्कगोमयसंयुक्तामरणीं चाग्निदं मणिम् ॥७१॥
पलाशपूर्वाः समिधः साग्राः परिधयस्तु वै ।
प्रभूतमिन्धनं शुष्कमाज्याक्तं तिलतण्डुलम् ॥७२॥
प्रागुक्तं स्रुक्स्रुवाद्यं च होमोपकरणं च यत् ।
सर्वं पक्ष्मकपर्यन्तं बृहत्पात्रद्वयान्वितम् ॥७३॥
पूर्वोक्तानां च भोगानां मध्याद्यस्थण्डिलार्चने ।
संयाति चाङ्गभावं तत्र ज्ञात्वा सर्वं प्रवेशयेत् ॥७४॥
अधिवासदिनात्पूर्वदिने कृत्वाङ्कुरार्पणम् ।
अधिवासदिने पूर्वं कृत्वा वै कौतुकं शिशोः ॥७५॥
अनुग्रहधियाचार्यो भक्तानां भाविनां विभोः ।
दिव्यभोगफलेप्सूनां निश्रेयसपदार्थिनाम् ॥७६॥
प्रत्येकैकं हि यागाङ्गं वर्धयेद्दिव्यमूर्तिना ।
नित्येनाव्यक्ततत्वेन सम्मन्त्रब्रह्मणा सह ॥७७॥
स्वात्मकर्मद्रुमद्रव्यं मन्त्रव्यूहं यथागमम् ।
फलदं स्यात्सकामानामकामानां हि मोक्षदम् ॥७८॥
सहसा यस्ततस्तत्र प्राग्वत्स्नात्वा कृताह्निकः ।
सम्प्रविश्याप्यादिक्संस्थः प्राङ्मुखः प्रविशेत्ततः ॥७९॥
पद्मासनादिना मार्गे चर्मण्यास्यात्प्रपूर्वकम् ।
कुर्याद्यदविकारेण मन्त्रेणानुग्रहं शिशोः ॥८०॥
तेनाङ्गसहितेनैव सर्वकर्म समाचरेत् ।
समस्तवैभवैर्मन्त्रैः कार्यो वानुग्रहो यदि ॥८१॥
सर्वाराधनदानार्थं द्विपट्कावाप्तये तदा ।
दिशाख्यूपमन्त्रेण कुर्यात्तद्द्वारणद्वयम् ॥८२॥
तद्बीजेन तनुं व्याप्य प्राग्वत्तदभिमन्त्रितैः ।
पुराहृतैर्यथाशक्ति मण्डलं च समाचरेत् ॥८३॥

प्राक्समालभनैर्वस्त्रैः कटकाद्यङ्गुलीयकैः ।
सितोष्णीषेण महता सितमाल्येन वै सह ॥८४॥
मुखवासैस्सताम्बूलैर्ललाटतिलकेन च ।
कृत्वा शुभेन शारीरं योगपट्टेन संस्थितम् ॥८५॥
हृत्पुण्डरीकमध्ये तु सन्न्यसेद्बीजमैश्वरम् ।
करयोः पद्मनाभीयं प्रवाल्यमथ विग्रहे ॥८६॥
शेषैरालभ्य पादान्तमामूर्ध्नश्चापि पूर्ववत् ।
हस्तयोर्विग्रहे साङ्गं विन्यसेद्बीजमैश्वरम् ॥८७॥
मुद्रावसानं कृत्वैनं सम्यक्तदनु चाहरेत् ।
पाणिभ्यां शङ्खचक्रे द्वे स्वमन्त्रेणाभिमन्त्रिते ॥८८॥
भूत्वा तदात्मना पश्चात्तौ निधाय धरातले ।
अवलोक्याखिलं तत्स्थं प्रवर्तेताथ कर्मणि ॥८९॥
अस्त्राभिमन्त्रितं कृत्वा कर्मागारान्तरे स्थितः ।
तेनोपलिप्य सम्मार्ज्य यागस्थानं निघृष्य च ॥९०॥
तद्ब्रह्माख्यपर्यायभूयस्तेजसो अभिवृद्धये ।
हेमपूर्वाणि रत्नानि बीजानि विनिवेश्य च ॥९१॥
प्राग्वदर्घ्यादिपात्राणि परिकल्प्य यथाविधि ।
मुख्यार्घ्यवारिणा प्रोक्ष्य पृथग्भाण्डस्थितं पुरा ॥९२॥
पञ्चगव्यं ततः प्राग्वत्कल्पनीयं हृदादिकैः ।
कुशोदकं तदस्त्रेण दत्वाद्येनाभिमन्त्र्य च ॥९३॥
अथ पाणिद्वयेनैव अग्नीषोमात्मकेन च ।
योग्यतापदवीं नीत्वा प्रोक्षयेद्यत्पुराहृतम् ॥९४॥
साम्भसा तेन वै सर्वं विष्टराग्रगतैः कुशैः ।
सर्वबीजानि धान्यानि सिद्धार्थयुतानि च ॥९५॥
कृत्वास्त्रपरिजप्तानि ध्यात्वा चास्त्रसमानि च ।

विघ्नोपशान्तये भोगाद्दशदिक्षु विनिक्षिपेत् ॥९६॥
संहृत्य वर्द्धिकूर्चेन प्राच्यां दिशि निधाय वै ।
तद्गर्भीकृत्य संलिप्य हैतिराट् चन्दनादिना ॥९७॥
करकं कुम्भसंयुक्तमलंकृत्य यथापुरा ।
भोगैः प्रावरणान्तैश्च मूर्तिभृतौ विचिन्त्य च ॥९८॥
अस्त्रमन्त्रं तु तन्मध्ये ध्यात्वाभ्यर्च्य यथाविधि ।
ध्वंसयन्तं च विघ्नानां कालं कर्मावसानकम् ॥९९॥
इदमभ्यर्थ्य भगवान् साक्षो बद्धाञ्जलिः स्थितः ।
यागालयं हि विश्वेश ! गृहाण रचितं मया ॥१००॥
आसमाप्तेर्भज विभो! क्रियाङ्गानां च सन्निधिम् ।
तदस्त्रोदकधारां चाप्यच्छिन्नां भित्तिगां नयेत् ॥१०१॥
प्रादक्षिण्येन प्राग्भागात्तत्पदान्तं च संस्मरेत् ।
तन्निधायाथ कुम्भेन सह कुर्यात्प्रदक्षिणम् ॥१०२॥
अर्घ्यदानं तयोः कृत्वा प्राग्भागे विकिरोर्ध्वगम् ।
पूजितं वाससा च्छन्नं चक्रमन्त्राभिमन्त्रितम् ॥१०३॥
निदध्याद्भद्रपीठं तु तत्राधारगतं न्यसेत् ।
साङ्गं हि मन्त्रकलशमर्चयित्वा प्रणम्य च ॥१०४॥
दिगीश्वरगणं दिक्षु पूर्वोक्तं विन्यसेत्ततः ।
निरोधं सार्चनं तेषां कृत्वास्त्रेण हृदा सह ॥१०५॥
प्रणवेन स्वनाम्ना च नमस्कारानुगेन वै ।
तोरणध्वजपूर्वाणां कार्यमर्घ्यादिनार्चनम् ॥१०६॥
ततो हवनभूमध्ये ध्यात्वा पीठं पुरोदितम् ।
तत्रार्चनं विभोः कुर्यात्पूर्वोक्तेन क्रमेण तु ॥१०७॥
पूर्णान्तं तर्पणं कुर्यात्प्रागग्रकुण्डे तु पूजिते ।
ततस्तु भगवद्भूतान् क्षेत्रनाथसमन्वितान् ॥१०८॥

अर्घ्यपुष्पादिनाभ्यर्च्य बलिमादाय पात्रगम् ।
इदमुक्त्वा च तदनु क्षिपेद्यागगृहाद्बहिः ॥१०९॥
ये विष्णुभाविनो भूता ये च तेष्वनुयायिनः ।
आहरंतु बलिं तुष्टाः प्रयच्छंतु शुभं मम ॥११०॥
प्रक्षालितांघ्रिस्त्वाचान्तस्संविशेद्यागमन्दिरम् ।
अग्निगेहेथ संस्कृत्य चुल्लीं प्राग्दिश्यवस्थिताम् ॥१११॥
पचनालयमुत्सृज्य स्वदेशात्कुण्डमध्यगाम् ।
स्थालीं चास्त्रेण संक्षाल्य बाह्यतो गोमयादिना ॥११२॥
विलिप्यान्तस्सुगन्धैस्तु प्रताप्य ज्वलितैः कुशैः ।
सन्ताड्य कुसुमास्त्रेण सितसूत्रेण कण्ठतः ॥११३॥
चतुर्धा वर्मजप्तेन संवेष्ट्याघ्यादिनार्च्य च ।
चुल्यां कृत्वा समारोप्य तस्यां मधु घृतं पयः ॥११४॥
परिशुद्धे शृते क्षीरे त्वस्त्रेणारोप्य तण्डुलान् ।
पाचयेन्मूलमन्त्रेण दृष्ट्वा नेत्रेण संस्कृतम् ॥११५॥
हृदावतार्याभिघार्य शिखामन्त्रेण घट्टयेत् ।
शिरसालिप्य संक्षाल्य सुप्रसन्नेन वारिणा ॥११६॥
भूतिना चन्दनाद्येन भूषयेदूर्ध्वपुण्ड्रकैः ।
विष्टरोपरि चान्यत्र निदध्यान्मण्डलान्तरे ॥११७॥
होमं च सिद्धये कृत्वा पूर्णान्तमथ वै चरौ ।
आघारदानमाज्येन कुर्यात्तेजोमृतात्मकम् ॥११८॥
ईशाब्जनाभरुद्धेन हंसार्णेन सबिन्दुना ।
तद्वद्वौपड्वषट्कारप्रणवद्वितयेन च ॥११९॥
यतो विना भावितोत्र स्थितिर्द्वाभ्यां च साम्प्रतम् ।
अतः पुरोदितेनैव तदन्नं सम्पुटेन च ॥१२०॥
अत ऊर्ध्वं च संछन्नं स्मरेदादाय वै हृदि ।

द्रव्यसम्पातहोमेथ पूर्णान्ते तु कृते सति ॥१२१॥
उद्धृत्याहुतियोगेन पात्रत्रयगतं तु यत् ।
स्थण्डिले फलकोग्नौ च विनियुज्य यथाविधि ॥१२२॥
तदाज्यभावितं शेषं कुशाक्रान्तं विधाय च ।
क्रमान्मूलास्त्रनेत्रेण जुहुयाच्च शतत्रयम् ॥१२३॥
नीत्वा सम्पूर्णभावं च पूर्णया पुनरेव हि ।
ततश्चोत्तरदिक्कुर्यान्मण्डलं गोमयादिना ॥१२४॥
प्राक्सान्तं विष्टरं तत्र दद्याद्वार्भं ह्रदन्तरे ।
तन्मध्ये विन्यसेच्छिष्यं समांघ्रिं स्तब्धविग्रहम् ॥१२५॥
प्राङ्मुखं यतवाक्चित्तमृत्विरूपं धृताञ्जलिम् ।
अस्त्रेण पूर्ववत्कुर्यात्प्रोक्षणं तस्य चाम्भसा ॥१२६॥
तेनैव ताडयेन्मूर्ध्नि दीप्तैः सिद्धार्थकैस्तिलैः ।
अनादिवासनोत्थानां बन्धानां चालनाय च ॥१२७॥
फडन्तेनाथ चास्त्रेण कुशाग्रेणांघ्रिगोचरात् ।
समुल्लिख्य शिखान्तं च ऋज्वर्थं मार्गसन्ततेः ॥१२८॥
जालवन्मन्त्रजालेन व्याप्तं स्मृत्वा च सांप्रतम् ।
बध्नीयान्नेत्रमन्त्रेण तस्य नेत्रे च वाससा ॥१२९॥
वस्त्रर्घ्यकुसुमैर्गन्धैः कृत्वा पूर्णाजलिं पुरा ।
पाणिनादाय चाज्ञेति निधायाग्रे स्थितं वटुम् ॥१३०॥
प्रक्षेपयेद्देवधाम्नि नतमूर्ध्नांजलिञ्चतम् ।
तस्योद्घाटितनेत्रस्य त्वदृष्टस्येतरैर्जनैः ॥१३१॥
कुशलाध्वनिविष्टस्य दृष्ट्वा वै भक्तिलक्षणम् ।
रोमाञ्चौत्सुक्यहर्षाढ्यमानन्दाश्रुसमन्वितम् ॥१३२॥
सप्रणामजयालापदिक्प्रदक्षिणसंयुतम् ।
पूतान्तःकरणं बुध्वा योग्योयमिति भावयेत् ॥१३३॥

यदा तदाच्युताख्या यानुगृहीतो धिया तया ।
स्मरेद्दक्षिणपाणौ तु चक्राम्बुरुहमध्यगम् ॥१३४॥
प्रधानदेवतावृन्दं स्वे स्वे धाम्नि परे स्थितम् ।
स्वमरीचिगणेनैव द्योतयन्तं तु चाखिलम् ॥१३५॥
तेनाच्युतकरेणैव सोदकेनालभेत तम् ।
पुष्पपूर्णाञ्जलौ पृष्ठे तस्य तन्त्रितथाश्रितम् ॥१३६॥
कृत्वा मन्त्रगणान्तं वै मोक्षविघ्नोपशान्तये ।
पुनरप्यर्चयेन्नीत्वा मन्त्रेण परमेश्वरम् ॥१३७॥
आधाराधेयभावेन बुध्यान्तस्संस्थितं पुरा ।
क्ष्मादीनां बुद्धिनिष्ठानां वासनानां तथात्मनाम् ॥१३८॥
ततः कुर्याच्च विश्लेषं तेषां ध्यानार्चनादिना ।
आत्मसत्यं समाश्रित्य कर्मचक्रं हि वर्तते ॥१३९॥
तच्चक्रमवलम्ब्यास्ते बुद्धिनिष्ठं हि सप्तकम् ।
अज्ञानव्यापकत्वं च सुखदुःखनिवेदनम् ॥१४०॥
सर्वज्ञस्यात्मतत्वस्य कर्मचक्रावलम्बनात् ।
चपलं कर्मचक्रं तद्भ्रमभ्रमानं सदैव हि ॥१४१॥
क्ष्माद्यमाधारमाश्रित्य तावदेवावतिष्ठते ।
यावत्स सर्वं शक्त्या वै कर्मात्मा न प्रबोधितः ॥१४२॥
प्रबुद्धस्तस्य संरोधं कर्तुं शक्नोति सर्वदा ।
मन्त्राराधनरूपेण ज्ञाननिष्ठेन कर्मणा ॥१४३॥
अतो य आश्रयः क्ष्माद्यस्त्वसाधारो हि पौरुषम् ।
नीरसंचोरिणीं भूतं कुर्यात्संस्थाप्य सांप्रतम् ॥१४४॥
निर्मुक्ताचित्फलो येन कर्मवृक्षो विनश्यति।
शुध्यर्थमात्मनस्तस्मात्सर्वज्ञस्याग्रतः स्थले ॥१४५॥
भूतादिदेवमन्त्राणां कुर्याद्वै पूजनं क्रमात् ।

चित्तनुं विद्धि सामान्यं मन्त्रनाथैरधिष्ठितम् ॥१४६॥
क्ष्माद्यध्वानं तु बुध्यन्तं ध्यात्वा षट्पत्रवत्पुरा ।
तत्र मध्ये ऽब्जजाग्रं च प्राग्भागे केसरोर्ध्वगम् ॥१४७॥
षट्कं तु विश्वरूपाद्यं क्ष्माधरान्तं तु विन्यसेत् ।
नीत्वा स्वनाम्न आद्यर्णं क्ष्मान्तानां बीजतां गतम् ॥१४८॥
तेन तेषां दळान्तं प्राग्विन्यासं संस्मरेत्क्रमात् ।
क्ष्माबीजं च दळाग्रेषु मूलनिष्ठेषु सत्सु च ॥१४९॥
सर्वं सर्वेन्द्रियाधारमित्यभिन्नं पुरा ततः ।
चिन्वानः स्कन्दवृन्देन खभूतेनान्तरीकृतम् ॥१५०॥
उपर्युपरि योगेन बुध्यन्तं समुपासितम् ।
भेददृष्ट्या यजेत्सम्यग्भूयः संहारवर्त्मना ॥१५१॥
सवज्रं स्वेन बीजेन पीतं तुर्याश्रलक्षणम् ।
हेमाब्जभूषितं ध्यात्वा क्ष्मातत्वं तत्र मध्यतः ॥१५२॥
वाराहं सम्यजेन्मन्त्रं साङ्गं सावरणं क्रमात् ।
तत्कारणाश्रितं कृत्वा परिवारसमन्वितम् ॥१५३॥
अधस्तान्मण्डलोर्ध्वस्थमर्धेंदुसदृशं सितम् ।
पुरं पद्माङ्कितं स्मृत्वा सितपद्मोदरं महत् ॥१५४॥
सरश्शयं तदन्तस्थमभिसन्धाय संयजेत् ।
तेजोमयं तदूर्ध्वे तु त्रिकोणं भावयेत्पुरम् ॥१५५॥
रक्तज्वालागणाकीर्णं स्वस्तिकैरुपलाञ्छितम् ।
नृसिंहं पूजयेत्तत्र मध्ये रक्तच्छविं विभुम् ॥१५६॥
तस्योपर्यसितं वृत्तं पुरं तारागणाङ्कितम् ।
स्मृत्वा नीलांबुजाक्रांतं स्मरेत्तत्र खगासनम् ॥१५७॥
नीरूपं खं तदूर्ध्वे तु स्मरेच्छब्दैकलक्षणम् ।
ध्यायेत्तदन्तः सूर्याभं प्राग्वद्वर्णं तु पङ्कजम् ॥१५८॥

तत्र वागीश्वरं देवमभ्यर्च्य विधिवत्ततः ।
तत्कर्णिकोदराकाशे नानारत्नरुचिं ततः ॥१५९॥
संस्मरेत्कमलाकारं चिच्छक्तिमयं तु यत् ।
यजेत्तन्मध्यगं विश्वरूपं तु मनसस्पतिम् ॥१६०॥
तदूर्ध्वेऽमृतगर्भं तु शीतांशुकरकोटिवत् ।
पद्मं स्वेनात्मनात्मानं धारयन्तं विभाव्य च ॥१६१॥
समभ्यर्च्यस्तदन्तस्थो ह्यब्जनाभो धियां पतिः ।
एवं गन्धरसरूपस्पर्शशब्दमनोधियाम् ॥१६२॥
क्रमेणाधीशसंघं तु अवतार्य परायजेत् ।
अर्चयित्वार्चयित्वा च न्यसेत्तत्रैव तं पुनः ॥१६३॥
ये वर्णा भूतयोनीनां रश्मयः कमलोपगाः ।
संस्थितिं संस्मरेत्तेषामस्मिन् शक्तौ तथागतम् ॥१६४॥
अनादिवासनारूपां त्वभेदेनात्मनि स्थिताम् ।
निश्शेषबीजैरभ्युत्थां पद्मनाभविधारिणीम् ॥१६५॥
निर्गतां चैपयात्सर्वाद्वियुक्तां स्वामिना कृताम् ।
स्फुरद्रूपां परिभ्रष्टां निराधारां च संस्मरेत् ॥१६६॥
प्रणवेन समभ्यर्च्य दीक्षाकाले ह्युपस्थिते ।
साधिभूताधिदैवं च इत्थं भूतसतकम् ॥१६७॥
स्वयमभ्यर्चयेत्पश्चाच्छिष्यमञ्जलिना च तम् ।
ततोऽग्नेः सान्निधिं गत्वा ध्यात्वा धामत्रयोपरि ॥१६८॥
दक्षिणेनात्मनो दार्भविष्टरे चक्रमंलिते ।
सकुशेन स्वहस्तेन दक्षिणं चरणं गुरोः ॥१६९॥
अवलम्ब्य समास्ते वै स्पर्शनाद्यैकतात्मना ।
बीजनाघ्रेशिशखान्तं च स्मरेत्तेजोमयं विभुम् ॥१७०॥
विश्लेषयन्तं सहसा ह्यनाद्युत्थमविग्रहम् ।

संसारचक्रं विविधं प्रेरकं दुःखवर्त्मनि ॥१७१॥
नाड्यैक्यमभिसन्धानमभिसन्धाय चेतसा ।
विश्लेषं कर्मणां तद्वद्वर्णमालेण होमयेत् ॥१७२॥
क्रमेण सघृतानां च तिलानां द्वादशाहुतिम् ।
अनुसन्धाय सम्पाद्यो मथार्थं वै परात्मनि ॥१७३॥
दद्यादाहुतिकाश्चाष्टौ मूलेन सघृताः पुरा ।
तदुत्तमाङ्गं संस्पृश्य स्रुवेणाज्यान्वितेन च ॥१७४॥
हुत्वा ज्ञानाय तेनैव भूयस्सर्वगुणात्मना ।
प्राक्संख्यमाचरेद्धोममन्तरान्तरयोगतः ॥१७५॥
अग्नेरुपादद्यात्सर्वं नेत्रान्तं ह्येवमेव हि ।
इति सम्पातहोमे वै सम्पन्ने सति जायते ॥१७६॥
कर्तव्यो मन्त्रमाहात्म्यात्संस्कारैर्निखिलैर्युतः ।
साम्प्रतं शक्तिरादीनां गुणानामुत्तरत्र तु ॥१७७॥
विभोराराधनात्सम्यग्योग्याभ्यासाच्च भाजनम् ।
कृते सम्पातहवने आज्येनाथ सकृत्सकृत् ॥१७८॥
मन्त्राणां तर्पणं कृत्वा सार्चनं श्रावयेद्विभुम् ।
अस्य कर्मोत्थमत्तत्रस्य कर्मबन्धं सवासनम् ॥१७९॥
तदनेकप्रकारं तु त्वच्छक्त्या स्तम्भितं मया ।
प्रायश्चित्तनिमित्तं तु जुहुयात्तदनन्तरम् ॥१८०॥
बीजेनान्तर्निरुद्धेन स्वाहेनाहुतिकाष्टकम् ।
एतावता महाबुद्धेर्जन्तोर्जन्माश्रितस्य च ॥१८१॥
याति व्यामिश्ररूपस्य हेयरूपस्य सङ्क्षयः ।
मोक्षैकफलदो धर्म उपादेयस्त्वनन्तरम् ॥१८२॥
योसौ सांमुख्यमायाति विधिवस्तस्य चाच्युतः ।
येनान्तर्लीनमभ्येति ह्यज्ञानं सहसा क्षयम् ॥१८३॥

अथादायारुणं सूत्रं कृत्वा नैकगुणं पुरा ।
निरीक्ष्य तं दृशा चास्त्रवारिणा परिशोधितम् ॥१८४॥
तदङ्गुष्ठावधिं यावच्छिखायाः सम्प्रसार्य च ।
संस्मरेत्सर्वदुःखानां सबन्धानां तदास्पदम् ॥१८५॥
संविश्य देवयानेन शिशुचैतन्यसन्निधिम् ।
हुंफडन्तं च शिष्यस्य नाम च प्रणवादिकम् ॥१८६॥
हृन्मन्त्रसम्पुटस्थं च कृत्वा वै पितृवर्त्मना ।
आनीय सह सूत्रेण नयेन्नेत्रेण साम्यताम् ॥१८७॥
अभ्यर्च्यार्घ्यादिनावेष्ट्य कवचेन महात्मना ।
ओं हुं अदन्यैहुंस्वाहेत्यनेनाहुतिसप्तकम् ॥१८८॥
हुत्वास्त्रमन्त्रजप्तेन सितेन रजसा ततः ।
सन्ताड्य शैशवं कायं त्रिशेत्पादावधिं तथा ॥१८९॥
विश्लेषयामुकं ब्रूयात्पदं वीर्यपदानुगम् ।
तं ज्ञानवाचकेनाथ त्वाचन्तेन विकृष्य च ॥१९०॥
स्वबुध्यानुगतं कृत्वा ध्यात्वा नक्षत्रगोळवत् ।
सन्धायाभ्यन्तरे सूत्रे हंसार्णेन सबिन्दुना ॥१९१॥
नतिप्रणवगर्भेण रुद्धशक्तिं च विग्रहे ।
वासनामयमित्येवमातिवाहिकसंज्ञकम् ॥१९२॥
सूत्रात्मकं वपुः स्मृत्वा आत्मशक्त्या विभावितम् ।
बलमन्त्रेण संरुद्धं तदर्थं जुहुयात्ततः ॥१९३॥
उक्त्वा ओमात्मनेस्वाहा द्विषट्कपरिसंख्यया ।
आदाय भाविनो बन्धान्व्यापकान् शुद्धभोगदान् ॥१९४॥
ज्ञानादयः समाश्रित्य येत्र तिष्ठंति सर्वदा ।
स्वस्थानेषु स्वमन्त्रेभ्यस्तांस्तु तत्रैव योजयेत् ॥१९५॥
यथाक्रमेणोचितानां कृत्वा तेषां च तर्पणम् ।

अथ संस्कारचक्रस्य तत्त्ववृन्दाश्रितस्य च ॥१९६॥
सर्वगस्यापि वै विद्धि स्थितिं नियतलक्षणाम् ।
तत्कल्पासिश्च तेनैव शरीरे पाञ्चभौतिके ॥१९७॥
गुल्फजानुकटीवक्षःकण्ठभ्रूकावटावधि ।
बुध्यन्तानां धरादीनां क्रमादवनिसप्तकम् ॥१९८॥
अहङ्कारस्तदुत्थास्तु ये भेदा विविधा अपि ।
चित्तजा अपि ये चान्ये तिष्ठन्ति मनसा सह ॥१९९॥
सङ्कालोत्थास्तथाबोधास्तत्पूर्वास्त्वपरे च ये ।
अनेकभेदभिन्नास्तु स्थिता आश्रित्यते धियम् ॥२००॥
द्विसप्तभुवनं विश्वमनेकरचनान्वितम् ।
शतकोटिप्रविस्तीर्णमष्टयोन्यार्थसेवितम् ॥२०१॥
स्थितं धराश्रितं भूयो बोद्धव्यं सर्वदैव हि ।
चतुष्कं जाग्रदाद्यं यत्पदानामप्सु वर्तते ॥२०२॥
मन्त्रकोटिसहस्राणां विविधानां महामते! ।
योगसिद्धिसमेतानां संस्थितिस्तैजसे पदे ॥२०३॥
चातुरात्मीयतत्त्वानां ज्ञेयं कैवल्यदेहिनाम् ।
शान्तोदितस्वरूपाणां सन्निवेशो मरुत्पदे ॥२०४॥
अनेकशक्तिभूतानां ज्ञानादीनां च लाङ्गलिन् ! ।
कालानामाश्रयो व्योम या सा मूर्तिर्न लक्ष्यते ॥२०५॥
संस्थिताश्चाधयो वर्णाः पदे षष्ठे तु मानसे ।
अस्मिन्मात्राद्यमुक्तानि कीर्तितेऽस्मिन् षडध्वनि ॥२०६॥
क्षिपंस्तु चाहरंस्त्वेवं शुद्ध्यर्थं लीलयैव हि ।
स्थितः कर्मात्मतत्त्वानि बुद्धिशक्तिपदे प्रभुः ॥२०७॥
निरस्तदोषं कृत्वा प्राक् समाविश्य तदैव हि ।
स्वां शक्तिमुपसंहृत्य शान्तिमभ्येति शाश्वतीम् ॥२०८॥

मधुसूदनपर्यन्तं पाताळशयनादथ ।
सप्तक सप्तकं षट्कं संपश्येत् क्ष्मादिपञ्चके ॥२०९॥
मनस्यवस्थितं चैवं शक्तीशाश्रितयं हि यत् ।
बुद्धौ कमलनाभात्मा देवः सर्वेश्वरः प्रभुः ॥२१०॥
पुनः स्वसिद्धैर्युक्तानां सर्वेषां पार्थिवे पदे ।
द्विसप्तभेदभिन्ने तु बोद्धव्या संस्थितिः शुभा ॥२११॥
तीव्रमन्दादिकं बुध्वा भावं शक्तिसमन्वितम् ।
आलम्भनवशात्कुर्यात्सर्वेषां स्वपदे स्थितिम् ॥२१२॥
एष वैभवदीक्षायामधिवासनकर्मणि ।
क्रम उक्तस्त्वथेदानीमपरायां निबोध तु ॥२१३॥
आपादान्नाभिदेशान्तं महाभूतैर्धरादिकैः ।
व्याप्तं चतुर्धा वाय्वन्तैस्तदूर्ध्वं नभसा पुनः ॥२१४॥
पूरितं हृदयांतं च तदुद्देशाच्छिखावधि ।
विभाव्य मनसा व्याप्तमनेनैव क्रमेण तु ॥२१५॥
स्थितास्सङ्कर्षणान्ताश्चाप्यनिरुद्धादयस्तु वै ।
समाक्रम्याध्वषट्कन्तु अध्वातीतस्तु बुद्धिगः ॥२१६॥
समना आत्मतत्त्वं च प्राग्वदभ्येत्य मूर्तताम् ।
व्यापिका मूर्तयस्त्वेताः पृथङ्मुक्तपरायणैः ॥२१७॥
तदाकारैरसङ्ख्यैस्तु संवृताः क्ष्मावनीषु च ।
प्राक्संख्यासु च तिष्ठन्ति सर्वास्सर्वासु सर्वदा ॥२१८॥
स्मृत्वा ह्यभेदभावेन षट्कं नोदकवत्पुरा ।
शिखान्तं क्ष्मादिना तेन सर्वं व्याप्तं विचिन्तयेत् ॥२१९॥
चतुरात्मानमव्यक्तं शब्दमूर्तिं निराकृतिम् ।
गुणमात्रैर्विभिन्नं च खं च तत्रैव भावयेत् ॥२२०॥

संक्रांतेन तु वै बुद्धौ सर्वं समुदितेन तु ॥२२१॥
स्वशक्त्या वै ह्यनिच्छातो जीवमादायसोर्ध्वगम् ।
स्वसामर्थ्यं स्वशक्त्या तच्छान्तत्गात्ते विलाप्य च ॥२२२॥
शुद्धाशयानां भक्तानां तत्पदैकाभिलाषिणाम् ।
तत्सामर्थ्यानुविद्धानां सर्वत्र व्यक्तिमेति च ॥२२३॥
अतस्तु यद्यत्संवेद्यं हेयं परिमितन्त्वपि ।
तत्तदाथत्मनाभ्येति सर्वदा भावितात्मनाम् ॥२२४॥
इत्यादौ सर्वसामान्यो नित्यो विद्याख्य आश्रयः ।
बोद्धव्यः सोपि तदनु ह्यसामान्यतया गतः ॥२२५॥
आमोक्षादङ्गभावंच जीवानां स्वयमेव हि ।
वज्रवत्सूक्ष्मरूपेण संपूज्येन महागते ॥२२६॥
दीक्षाकाले तु शिष्याणां परिज्ञेयं यथोदितम् ।
एवमेव विजानीयाद्भूयः सौत्रे तु विग्रहे ॥२२७॥
सप्तधा तु विभज्यादौ सन्धीन्वै कुङ्कुमादिना ।
चित्रीकृत्य तदुद्देशात्प्रणवाद्यन्तगैस्ततः ॥२२८॥
स्वनामपदसंयुक्तं ग्रथनीयं स्वकारणैः ।
एवं व्याप्तिमयैर्भोगैर्हृदा पूर्णान्तिमे कृते ॥२२९॥
नीत्वा वै मण्डलस्थस्य विभोस्तं सन्निवेदयेत् ।
वर्मणा च्छादितं कृत्वा निधाय कलशाग्रतः ॥२३०॥
सशिष्योऽथार्चनं कुर्यात्पुनर्विश्वात्मनो विभोः ।
प्रदक्षिणैः प्रणामैस्तु नानास्तुतिपदैः सह ॥२३१॥
तत्रोपलिप्ते भूभागे मण्डलान्तं च तं बहिः ।
स्थानभेदस्थितं कृत्वा नेत्रहृन्मत्रंमन्त्रितैः ॥२३२॥
पञ्चगव्ये चरौ दन्तधावने विनियोज्य तम् ।
भक्तोज्झिते दन्तकाष्ठे कुर्यात्सिद्धिविचारणम् ॥२३३॥

सौम्यवारुणईशाने यदि पूर्वदिगाननम् ।
तत्सिद्धिसूचकं विद्धि विपरीतमतोऽन्यथा ॥२३४॥
तत् ध्वंसनाय जुहुयाद्वीर्यमन्त्रेण वै शतम् ।
धूपानुलेपनादीनि रजांसि घटिकादयः ॥२३५॥
साज्यानि च तिलादीनि योग्यान्यन्यानि लाङ्गलिन् ।
उद्धृत्योत्तरतः कृत्वा चर्मजसेन वाससा ॥२३६॥
अभुक्तेनाहतेनैव त्वाच्छाद्य सुसिरेन च ।
समभ्यर्च्यास्त्रमन्त्रेण पुष्पधूपानुलेपनैः ॥२३७॥
क्षान्त्वा स्थलस्थितं देवगर्भौ वा कलशे न्यसेत् ।
अथ शुद्धे तु भूभागे ह्यन्मन्त्रितकुशास्तरे ॥२३८॥
कृत्वा प्राङ्मस्तकं शिष्यं वलजक्षांशुकेन तु ।
हृदावकुण्ठिततनुं मुख्यमन्त्रमनुस्मरन् ॥२३९॥
स्वापयेत्स्वप्नलाभाय ततो ह्यन्मन्त्रितैस्तिलैः ।
सिद्धार्थकयुतैः तस्य निदध्यात्परितो बहिः ॥२४०॥
सर्वाहिंपक्षं मन्त्रेण प्राग्वदिप्वष्टकं न्यसेत् ।
प्रदक्षिणेन तत्रापि सितसूत्रेण वर्मणा ॥२४१॥
चतुर्धा वेष्टयित्वा तु मण्टपान्निष्क्रमेद्बहिः ।
दन्तकाष्ठादिकं कर्म विनिष्पाद्य स्वयं स्वपेत् ॥२४२॥
कुतपे दर्भशय्यायां कृत्वा दक्षिणतश्शिरः ।
संस्पृशेत्स्वांघ्रियुग्मेन शिशुं शयनसंस्थितम् ॥२४३॥
भगवन्तं हि मनसा प्रार्थयन्नपवर्गदम् ।
ओमादीश जगन्नाथ सर्वज्ञ हृदयेशय ॥२४४॥
तत्राहं योजयाम्येनं सत्कर्म त्वत्परायणम् ।
प्राप्तानुज्ञस्तु शिष्याणां कुर्याद्वै तत्र योजनम् ॥२४५॥
यत्र यत्र च तत्तेषामवश्यं शाश्वतं भवेत् ।

इत्थं दीक्षाधिवासस्य विधानं सम्प्रकीर्तितम् ॥२४६॥
एकानेकस्वरूपा तु दीक्षेदानीं प्रकीर्त्यते ।
आसाद्य यां समायान्ति देहान्तेऽभिमतं पदम् ॥२४७॥
कैवल्यफलदा होका भोगकैवल्यदा परा ।
भोगदैव तृतीया च प्रवुद्धानां सदैव हि ॥२४८॥
आचार्यानुमताः सर्वाः कार्याः सम्यक् फलाप्तये ।
भक्तिभावानुविद्धानां शिष्याणां भविनां तु वै ॥२४९॥
वृद्धानामज्ञनानां च वालानां भावितात्मनाम् ।
विनाचारसमूहेन दुःशकेन च ता हिताः ॥२५०॥
पुरा धिया विचार्यैवम्रुपसन्नेन वै सह ।
तदीयमाशयं ज्ञात्वा सम्पाद्यैका महामते ! ॥२५१॥
अथातीतेर्धरात्रे तु उत्थाय शयनाद्गुरुः ।
कमण्डलुं समादाय बहिराचम्य संविशेत् ॥२५२॥
संस्मरेदग्रतश्चास्त्रं हुतभुग्राशिसन्निभम् ।
तदन्तस्संविशेदेवं स्नानं मांत्रं कृतं भवेत् ॥२५३॥
निद्रामोहमलं येन शश्वदायाति सङ्क्षयम् ।
शङ्कून्वै घटिकासूत्रं रजांस्यस्त्रवरेण तु ॥२५४॥
समादाय च संस्कृत्य निष्पिष्याघ्यैर्महीतले ।
शुष्कगोमयसंस्पृष्टे मण्डलं यत्पुरोदितम् ॥२५५॥
भद्रत्वपरिरक्षार्थं न्यस्याः कोणेषु शङ्कवः ।
कमलं भ्रमसिद्ध्यर्थमेकं मध्ये निवेश्य च ॥२५६॥
ईषन्नायाति वैषम्यं तद्रात्रिसमये यथा ।
महान्यूनाधिके दोषः सशिष्यस्य यतो गुरोः ॥२५७॥
अतस्तद्रक्षणीयं च यत्नेन महता सदा ।
निर्वर्त्य नित्यं प्रत्यूषे पुरा वै स्नानपूर्वकम् ॥२५८॥

शिष्यमादाय सम्बोध्य स्वप्नप्राप्तिं शुभाशुभाम् ।
चतुर्मूर्तिसमूहं तु यथादिक्संस्थितं तु वै ॥२५९॥
पश्येत्पङ्क्तिनिविष्टं च उपविष्टं तु चोत्थितम् ।
तन्मध्याद्भगवत्तत्वमेकं वा भिन्नलक्षणम् ॥२६०॥
प्रादुर्भावसमूहं च तल्लाञ्छनगणश्च यः ।
देवीयं वनितावृन्दं सर्वमेकतमाथ वा ॥२६१॥
भवोपकरणव्रातमशेषं वा पृथक्स्थितम् ।
रुद्रेन्द्रचन्द्रसूर्याम्बुहुतभुग्वातलक्षणम् ॥२६२॥
पञ्चरात्रविदो विप्रा आराधनपरायणाः ।
त्रयीमुद्घोषयन्तश्च निगदन्तश्च वा द्विजाः ! ॥२६३॥
यतयः शुद्धसत्वाश्च सद्ब्रह्मपदसंस्थिताः ।
नगस्रक्चन्दनाद्यानि सुगन्धानि तरूत्तमः ॥२६४॥
उद्यानवनितारामवापीहर्म्यं महालयाः ।
फलबीजौषधीसाम्बुकुम्भो वा पाकनिर्गतः ॥२६५॥
गोगजाश्वनदीयानं कन्या सालंकृता शिशुः ।
मङ्गल्यगीतिमधुरा भेरी वंशश्च वल्लरी ॥२६६॥
ससारसं सरः पद्मैः पूर्णं छत्रं सितं ततम् ।
हेमादिधातवो रत्नजालं गोसम्भवानि च ॥२६७॥
नवो नेत्रचयश्शुक्लं वस्त्रवृन्दमनाहतम् ।
राजापुरोधाः सामन्तो राजपत्नी च दर्पणम् ॥२६८॥
तुषारपातसद्वृष्टिमहामेघोदयो दिवि ।
शोणितं चार्द्रमांसानि स्वप्लुतिर्मदिरादयः ॥२६९॥
सत्पक्षिमृगसंघातसुरार्चा चामरं सितम् ।
एवमादीनि चान्यानि विद्धि सिद्धिप्रदानि च ॥२७०॥
स्वप्नानि यान्यनिष्टानि तानि मे लेशतश्शृणु ।

म्लानता क्षितिकम्पश्च उपरागोतिभीषणः ॥२७१॥
नीहार उल्कापातश्च निर्घातश्चित्तभङ्गकृत् ।
गर्तप्रवेशो दध्यन्नं स्विन्नमांसस्य भक्षणम् ॥२७२॥
नर्तनं रथविध्वस आज्यं स्वाङ्गाद्विजच्युतिः ।
खरोष्ट्रं चोत्कटं हास्यं कपिऋक्षाकुलं वनम् ॥२७३॥
स्थानं धूमाकुलं दग्धमसितांबरवेष्टितम् ।
शुष्कत्वं सरिदादीनां प्रतिस्रोतस्त्वमेव च ॥२७४॥
पोतयानं ध्वजच्छत्रतरुभङ्गोप्यसिद्धिकृत् ।
अवतारो नगाद्वृक्षाद्भ्रमत्वं प्रेतदर्शनम् ॥२७५॥
वचाकज्जलतैलाज्यलेपोसत्कर्दमे स्थितिः ।
महिषोहिर्नरः कृष्णो दक्षिणाशागमः क्षुधा ॥२७६॥
लुण्ठनं नखकेशानामस्थिभङ्गाधिकाद्रुतम् ।
एवमादीनि चान्यानि अशुभानि महामते ॥२७७॥
प्राप्ते शुभाशुभे स्वप्नेप्यभिसन्धाय वै हृदि ।
औत्सुक्यादशिवध्वंसि पूजाहोमं समाचरेत् ॥२७८॥
यथोक्तविधिना देवमवतार्य क्रमाद्यजेत् ।
तर्पयित्वा यथान्यायं पूर्णांतं चार्चयेत्पुनः ॥२७९॥
ईशकोणे ऽथवा सौम्ये पदे यागगृहस्य च ।
मण्डले पूर्वनिर्दिष्टे वृत्ते वा चतुरश्रके ॥२८०॥
स्नातं स्रग्वस्त्रभृच्छिष्यं कृतन्यासं निवेशयेत् ।
निरीक्ष्य ताड्य संप्रोक्ष्य दर्भैरालभ्य पूर्ववत् ॥२८१॥
संस्कृत्य मूर्तिवत्किंतु अनुगृह्य धरागतम् ।
आपादान्मन्त्रहस्तेन परामृश्याथ मूर्धनि ॥२८२॥
मन्त्रहस्तं ज्वलद्रूपं दद्याद्यो दुःखबीजजित् ।
अतः शिष्यस्य वै कुर्यात्संस्कारान् पञ्च च क्रमात् ॥२८३॥

तापः पुण्ड्रस्तथा नाम मन्त्रो यागश्च पंचमः ।
तत्र तापविधानं तु शृणुध्वं मुनिपुङ्गवाः! ॥२८४॥
आचार्यो वैष्णवान् सभ्यान् पूज्य तेषामनुज्ञया ।
गत्वा कुण्डसमीपं तु शिष्येण सहितो गुरुः ॥२८५॥
चक्रशङ्खौ समभ्यर्च्य तत्तन्मन्त्रैः प्रतिष्ठितौ ।
पूर्वं स्वगुरुणा दत्तौ स्वदीक्षावसरे द्विजाः! ॥२८६॥
मूलमन्त्रेण जुहुयाच्छतमष्टोत्तरं घृतैः ।
वैष्णव्या चापि गायत्र्या तद्विष्णोरिति वै ऋचा ॥२८७॥
ततः कुण्डानले चक्रशंखौ निक्षिप्य पूजयेत् ।
ततस्तु चक्रमन्त्रेण शंखमन्त्रेण च द्विजाः! ॥२८८॥
हुत्वा चाष्टोत्तरशतं अष्टाविंशतिमेव वा ।
पवित्रन्तेति मन्त्रेण प्र ते विष्णो इति त्वृचा ॥२८९॥
हुत्वा ततस्तु देवेशं ध्यात्वा गुरुपरम्पराम् ।
शिष्यस्य दक्षिणं बाहुमूलं चक्रेण चाङ्कयेत् ॥२९०॥
शङ्खेन प्रतोरसव्यबाहुमूलं मुनीश्वराः! ।
ततश्चक्रं च शंखं च अभिषिच्य स्वमन्त्रतः ॥२९१॥
संपूज्य मूलमन्त्रेण हुनेत्पूर्णाहुतिं द्विजाः! ।
ततस्तु चोर्ध्वपुण्ड्राणि धारयेन्मुनिपुङ्गवाः ॥२९२॥
तद्विधानं प्रवक्ष्यामि शृणुध्वं सावधानतः ।
गृहीत्वा वैष्णवक्षेत्राद्विमलां श्वेतमृत्तिकाम् ॥२९३॥
हस्तौ प्रक्षाल्य चाचम्य प्राङ्मुखं वाप्युदङ्मुखम् ।
उपविश्यासने शुद्धे वामहस्ततले द्विजाः! ॥२९४॥
संक्षाल्य चास्त्रमन्त्रेण तत्र वै श्वेतमृत्तिकाम् ।
प्रणवेन तु विन्यस्य गन्धद्वारेति तां मृदम् ॥२९५॥
जलेन सेचयित्वाथ कृत्वा दिग्बन्धनं द्विजाः! ।

मूलमन्त्रेणाभिमन्त्र्य वामहस्तस्थितां मृदम् ॥२९६॥
तन्मध्ये नारसिंहस्य बीजमालिख्य मन्त्रवित् ।
अङ्गुल्या मृदमादाय ललाटादिषु धारयेत् ॥२९७॥
पुष्टिप्रदेनाङ्गुष्ठेन तर्जिन्या मुक्तिसिद्धये ।
वांछितार्थप्रदायिन्या तथा नामिकयाथ वा ॥२९८॥
आयुष्कामी मध्यमया चांगुल्या च मुनीश्वरा ! ।
एताभिरंगुलीभिस्तु धारयेन्न नखैः स्पृशेत् ॥२९९॥
ऊर्ध्वपुण्ड्रमृजुं रम्यं विष्णोः पादद्वयाकृतिम् ।
सान्तराळं सुपार्श्वं च द्व्यङ्गुळं त्र्यङ्गुळं वा ॥३००॥
विस्तीर्णमथ चायामे चतुरङ्गुळसम्मितम् ।
ललाटेधारयेत्कुक्षौ चतुरङ्गुलविस्तृतम् ॥३०१॥
अष्टाङ्गुळायतं यद्वा प्रादेशपरिसम्मितम् ।
धारयेदूर्ध्वपुण्ड्रं तु तावन्मानसमन्वितम् ॥३०२॥
ऊर्ध्वपुण्ड्रं तु हृदये धारयेल्लक्षणान्वितम् ।
ततस्त्र्यंगुलविस्तीर्णं चतुरंगुलमायतम् ॥३०३॥
ऊर्ध्वपुण्ड्रं कण्ठदेशे ततो वै दक्षिणोदरे ।
ऊर्ध्वपुण्ड्रं तु पूर्वोक्तकुक्षिपुण्ड्रसमं द्विजाः! ॥३०४॥
ततस्तु दक्षिणे बाहुमध्ये त्वष्टांगुळायतम् ।
चतुरंगुळविस्तीर्णमूर्ध्वपुण्ड्रं तु धारयेत् ॥३०५॥
ततस्तु दक्षिणांसे तु कण्ठपुण्ड्रसमं भवेत् ।
वामकुक्षौ तूर्ध्वपुण्ड्रं कुक्षिपुण्ड्रसमं भवेत् ॥३०६॥
वामबाहौ भवेत्पुण्ड्रं दक्षबाहूक्तलक्षणम् ।
वामांसे तु ततःपुण्ड्रं कण्ठपुण्ड्रसमं भवेत् ॥३०७॥
पृष्ठे त्वष्टांगुळायामं चतुरंगुळविस्तृतम् ।
ऊर्ध्वपुण्ड्रं ककुद्देशे चतुरंगुळमायतम् ॥३०८॥

तथा ह्यंगुलविस्तारं धारयेन्मुनिपुङ्गवाः! ।
एवं द्वादश पुण्ड्राणि धृत्वा चैव यथाक्रमम् ॥३०९॥
हस्तक्षाळनतोयं तु मूर्ध्नि संप्रोक्षयेत् द्विजाः! ।
ततस्तु चोर्ध्वपुण्ड्राणां मध्ये विष्णुसमर्पितम् ॥३१०॥
धारयेद्रजनीचूर्णं लक्ष्मीसान्निध्यसिद्धये ।
वर्तिंदीपाकृतिं चैव वेणुपत्राकृतिं तु वा ॥३११॥
एवं धृते ह्यूर्ध्वपुण्ड्रे लक्ष्म्या सार्धं जगत्पतिः ।
क्रीडते सततं तत्र ततो बद्धाञ्जलिर्द्विजाः! ॥३१२॥
नामभिः केशवादीनां तदर्थध्यानपूर्वकम् ।
तत्तच्छक्तिसमेतांस्तु केशवादीन् स्मरेद्बुधः ॥३१३॥
ललाटे केशवं ध्यायेन्नारायणमथोदरे ।
माधवं हृदये चैव गोविन्दं कण्ठकूबरे ॥३१४॥
उदरे दक्षिणे पार्श्वे विष्णुं ध्यायेन्मुनीश्वराः! ।
तत्पार्श्वे बाहुमध्ये तु चिन्तयेन्मधुसूदनम् ॥३१५॥
त्रिविक्रमन्तु तत्स्कन्धे वामकुक्षौ तु वामनम् ।
श्रीधरं वामबाहौ तु हृषीकेशं तदंसके ॥३१६॥
अपरे पद्मनाभं तु त्रिके दामोदरं स्मरेत् ।
इत्येवमूर्ध्वपुण्ड्रस्य विधानं सुप्रकीर्तितम् ॥३१७॥
एवं शिष्यस्योर्ध्वपुण्ड्रं धारयित्वा यथा विधि ।
नाम कुर्याच्च शिष्यस्य तद्विधानमिहोच्यते ॥३१८॥
तमादाय कराद्देवधामसन्निकटं व्रजेत् ।
कृत्वात्मनो वामभागे भूयः संछाद्य लोचने ॥३१९॥
प्रक्षेपयेत्तथा सार्घ्यमञ्जलिं मुक्तलोचनः ।
सम्पश्येत्परमं धाम मान्तमिच्छाफलप्रदम् ॥३२०॥
तस्मिन्नवसरे कुर्यान्नाम यस्य यथोचितम् ।

रहस्यसंज्ञं मुख्यं च गौणं वास्य यथास्थितम् ॥३२१॥
सामान्यं वासुदेवाद्यं नाम स्यात्स्वचतुर्ष्वपि ।
सर्वेषां सविशेषं वा यथाचानुक्रमेण तु ॥३२२॥
द्विपद्क्रमूर्त्यङ्कितं च स्वाम्यन्तं ब्राह्मणेषु च ।
देवान्तं क्षत्रियाणां च कुर्याद्द्वादशधा पुनः ॥३२३॥
पाण्यन्तं धरनिष्ठं वा लाञ्छनाख्यपुरस्सरम् ।
ध्वजलाञ्छनसंज्ञं च यथावस्थं नृपेषु च ॥३२४॥
एवं वर्धननिष्ठं च मूर्तिलाञ्छनपूर्वकम् ।
विहितं चापि वैश्यानां दासान्तं शूद्रजन्मनाम् ॥३२५॥
अथोत्थाय नमस्कृत्य मण्डलं कलशं गुरुम् ।
यायात्कुण्डसमीपं तु शिशुना सह देशिकः ॥३२६॥
कृतस्य कर्मणोच्छिद्रसिद्धये च हुते सति ।
सन्ताड्यात्मको भूत्वा प्राग्वत्तद्धृदयं विशेत् ॥३२७॥
प्राणशक्तिवियुक्तं च कृत्वाऽऽनीय समासतः ।
सम्प्रवेश्य स्वकं स्थानं तत्नाभिकणवच्च तम् ॥३२८॥
नीत्वा सम्यक्पृथग्भावं विरेच्य सह वायुना ।
स्वभूमौ वाममार्गेण हृदाद्यन्तं निरोधितम् ॥३२९॥
जन्मग्रहगमनेनैव मन्त्रयुक्तेन कर्मणा ।
भावध्यानानुविद्धेव पितृमातृमयं त्यजेत् ॥३३०॥
ततः कवचमन्त्रेण दद्यात्सप्ताभिमन्त्रितम् ।
तस्योपवीतमपरमुदितं चापि यस्य तत् ॥३३१॥
सर्वथा दासभावत्वमापन्नस्य च तत्वतः ।
अमद्यपान्वयोत्थस्य लोकधर्मोज्झितस्य च ॥३३२॥
आसवद्ब्रह्मनिष्ठस्य कर्मतन्त्ररतस्य च ।
गोदानं शूद्रजातेर्वै विहितं चैव तान्यथा ॥३३३॥

वौषट्स्वाहावषट्कारनिष्ठानां तु प्रतिक्रिया ।
नमस्कारेण मन्त्राणां कार्ये प्रासे ह्यनुग्रहे ॥३३४॥
तदीयमर्घ्यपुष्पाद्यं यत्किञ्चिद्यागसाधनम् ।
सुसंस्कृतमसिद्धं वा भक्त्या कर्मण्यतां व्रजेत् ॥३३५॥
अतोऽन्येषां तु भक्तानां विहिता यागसाधने ।
सम्यक्सत्त्वनिवृत्तिः प्राग्दर्शनप्रोक्षणान्वितम् ॥३३६॥
मूर्तौ वा मण्डलाग्रे तु पुष्पक्षेपं महामते ।
नक्तं वा परिपीडं च भूतार्थं चैवमेव हि ॥३३७॥
एवं संस्कारसंशुद्धं कृत्वा वर्णगणं पुरा ।
साङ्गेन विभुना कुर्यात्प्रायश्चित्ततर्पणम् ॥३३८॥
सदशांशं सहस्रं तु यथा चानुक्रमेण तु ।
गत्वा चाभ्यर्थ्यकुम्भेशं सूत्रमादाय तत्र स्थितम् ॥३३९॥
ऋजुभूतं शिशुं कृत्वा तद्वत्सूत्रं प्रसार्य च ।
व्यक्तरूपं च मन्त्रेशं संस्मरेदग्निमध्यगम् ॥३४०॥
पश्येद्वह्नौ शिशुं सूत्रे स्वात्मन्यध्यानमञ्जसा ।
तत्राध्यात्मस्वरूपं च संस्मरेन्मन्त्रदेहगम् ॥३४१॥
अधिदैवस्वभावं च तत्स्वात्मन्यवतार्य च ।
अधिभूतमयं सूत्रे त्रिविधं शिष्यविग्रहे ॥३४२॥
मूलमन्त्रावसाने तु सनमस्कं परात्मने ।
पदं कृत्वा तु जुहुयादाहुतीनां चतुष्टयम् ॥३४३॥
तथा सूक्ष्मात्मने चोक्त्वा ततःस्थूलात्मने तु वै ।
सर्वात्मने च तदनु ततोऽध्वनिचयं हितम् ॥३४४॥
आ पादाग्राच्छिखान्तं च सर्वं ध्यात्वा स्वदेहगम् ।
यथोद्दिष्टक्रमेणैव विभिन्नं त्रिविधं त्वपि ॥३४५॥
रचना सन्निवेशो यः क्ष्मादीनां चाधिभूतता ।

बोद्धव्यमधिदैवत्वं सामर्थ्यं यस्य यत्स्वकम् ॥३४६॥
तदधिष्ठातृमन्त्राणामध्यात्मत्वं विधीयते ।
अथ मार्गद्वयं त्यक्त्वा द्वादशान्तं समाश्रयेत् ॥३४७॥
मूलमन्त्रमयो भूत्वा संव्रजेत्त्वधिया ततः ।
ब्रह्मद्वारपदं शैव्यं ततस्तन्मध्यवर्त्मना ॥३४८॥
पार्थिवं पादमाक्रम्य कुर्यात्तच्छक्तिमात्मसात् ।
बीजभूतां च हृन्मन्त्रसंरुद्धां गन्धविग्रहाम् ॥३४९॥
नानाण्डबीजसंरुद्धामनेकरचनान्विताम् ।
एवमादाय वै सर्वा बुद्धिनिष्ठास्तु शक्तयः ॥३५०॥
पृथक् पृथक् क्रमेणैव तस्मिन् हृन्मन्त्रसंपुटे ।
स्वेनाध्यात्मगणेनैव परेण व्यापकात्मना ॥३५१॥
तद्देहं धारयन्तं च स्मरेत्तदुभयात्मकम् ।
कालं भोगक्षयान्तं च तत्कालाच्च महामते! ॥३५२॥
कृत्वैवं भूतशक्तीनां संहारं शिशुविग्रहात् ।
सौत्रं देहमथाक्रम्य सौम्यं तेनैव वर्त्मना ॥३५३॥
प्रोल्लसंस्तद्व्रजेत्तत्र व्यञ्जयेत्तु धिया तु यत् ।
आदायाध्यात्ममन्त्रांश्च भूतभूतान्वितानथ ॥३५४॥
नित्यञ्च लक्षणैः शुद्धैः समन्त्रैस्तत्स्थितानपि ।
अथ सूत्राद्विनिष्क्रम्य प्रयायादनलाश्रयम् ॥३५५॥
तत्रावयवन्धथानान्मन्त्रसाम्यं समाचरेत् ।
समाहृतानां मन्त्राणां परे सर्वज्ञलक्षणे ॥३५६॥
व्यापके सर्वसामान्ये कृत्वा स्वे स्वे पदे स्थितिम् ।
स्वशरीरमथासाद्य ब्रह्मद्वारेण देशिकः ॥३५७॥
स्रुवमादाय सन्तर्प्य मन्त्रवृन्दं यथोदितम् ।
तत्त्वच्छन्दसमेतं च स्वनाम्ना प्रणवादिना ॥३५८॥

भूयः संसृष्टियोगेन द्विषट्कपरिसंख्यया ।
पूरकेन समाकृष्य शिष्यं हृत्कमलाद्धृदि ॥३५९॥
अथ व्यक्तिनिरस्तां च क्ष्माबीजं परलक्षणम् ।
सुशक्त्या ज्ञानसंरुद्धं कृत्वादायानलाद्धृदि ॥३६०॥
प्रणवासनविश्रान्तं विरेच्याब्जे तु शैशवे ।
स्मृत्वाथ शिष्यचैतन्यमेकमेव द्विरूपधृत् ॥३६१॥
शक्तिमच्छक्तिभावेन शक्तित्वेन तु संस्मरेत् ।
क्ष्मातत्त्वान्तर्गतं कुण्डे शक्तिमत्त्वेन तत्पुनः ॥३६२॥
रंचयित्वा स्वसाज्ञा च विग्रहे मध्यवर्मना ।
नियोज्य तत्समाधौ तु जपध्यानैकलक्षणे ॥३६३॥
तदेवं पार्थिवं बीजं हुदा वै होमकर्मणा ।
सम्यक्तस्योपकारार्थं नेतव्यं सूक्ष्मदेहताम् ॥३६४॥
स्वाहान्तं भोगसिध्यर्थं नमोन्तं मोक्षसिद्धये ।
भोगमोक्षाप्तये वापि तदेवोभयलक्षणम् ॥३६५॥
कर्मणामवसाने तु संपाद्यपदं न्यसेत् ।
एवं तद्विग्रहे सूक्ष्मे तद्धृत्पद्मगतस्य च ॥३६६॥
शिरसा चाधिकारं तु तस्यापाद्य यथास्थितम् ।
शिखामन्त्रेण तद्भोगं निर्वर्त्य शतसंख्यया ॥३६७॥
वर्मणा तत्फलप्राप्तिं तल्लयत्वमपि स्मरेत् ।
स्वतृप्तिमयनेत्रेण कुर्यात्तेनैव तत्स्थितम् ॥३६८॥
तत्त्यागश्चास्त्रमन्त्रेण विश्लेषेण यतो भवेत् ।
मूलेनाथ गृहीत्वा तत्कुर्याच्चैवात्मसात्पुनः ॥३६९॥
तद्वच्छक्तिं तदीयां च कुण्डाद्व्यापकलक्षणाम् ।
क्ष्मातत्त्वस्याथ साध्यस्य ह्यसाधारस्य शान्तये ॥३७०॥
पूर्वसंख्यं तु चास्त्रेण कृत्वा होमं महामते ! ।

सुवमाज्येन सम्पूर्य स्कन्दसूत्रात्तु पार्थिवम् ॥३७१॥
विकर्त्य पूर्णया सार्धं विज्ञाप्याग्नौ स्वके पदे ।
मूलमन्त्रेण रहसा [illegible] प्रेरितेन तु ॥३७२॥
स्वदेहाद्रेचकेनाथ प्रेर्य शक्तिं च शशदीम् ।
तयाक्रान्तमधस्थं च संस्मरेद्व्यतिरिक्तया ॥३७३॥
कंबिन्दुनो बाळजपत्रमाथाध्वानं च गौचनम् ।
शिष्यदेहे निरुद्धस्य व्यक्तिक्रोडीकृतस्य च ॥३७४॥
स्वशक्तिपरिपूर्णस्य.क्ष्माबीजस्य त्वथोपरि ।
विरेच्यशक्तिमन्तं च व्यस्तधर्मेण पूर्ववत् ॥३७५॥
तत्क्षणेबीजसंस्थं तु अध्वानं तु यथास्थितम् ।
प्रकाशयन्तं कृपया तन्नाथन्तस्य सिद्धये ॥३७६॥
विरक्तं भावयेच्छिष्यं चिन्मयन्तमिदं धिया ।
इदं तत्पार्थिवं तत्त्वं मुधा वै दुःखपञ्जरम् ॥३७७॥
भावतत्त्वगतं चास्य सुसहत्त्वं च साम्प्रतम् ।
कथमत्र त्वहं चासं यस्य मे न तता हमाः ॥३७८॥
विमुक्तः पंजराग्रद्धसुखमास्ते विहङ्गमः ।
ऊर्ध्वपाती तदारूढस्त्वेवं मन्त्रबलाच्छिशुः ॥३७९॥
समूहमथ विज्ञाप्य तत्प्रभुत्वेन यत्स्थितः ।
सन्निरुद्धो भवेत्त्वस्य सर्वतः सर्वदैव हि ॥३८०॥
युष्मत्प्रसादसामर्थ्याद्यथास्त्यार्थिवो गुणः ।
देहान्तं गन्धतन्मात्रं भवेदासीनमस्य वै ॥३८१॥
सम्यक्सम्प्रतिपन्नस्य शासने पारमेश्वरे ।
हे धराधिपते नाथ ! अस्याद्यप्रभृति त्वया ॥३८२॥
ध्वंसाय मोक्षविघ्नानां भवितव्यञ्च कर्मणः ।
इति विज्ञाप्य चाज्ञाप्य आपाद्याहुतयः क्रमात् ॥३८३॥

सह शक्त्या समाकृष्य भूयस्तत्पूरकेण तु ।
तद्देहे चाम्मयं बीजं साधारं पूर्ववन्न्यसेत् ॥३८४॥
कुण्डमध्ये तु सन्धाय जीवशक्तिं च पूर्ववत् ।
विरेच्य शक्तिमांस्तत्र नियोज्य तदनन्तरम् ॥३८५॥
तत्समाधौ यथापूर्वं कुम्भकेन महामते ! ।
अथाप्यं देहमासाद्य होमध्यानादिना परम् ॥३८६॥
तत्राधिकारपूर्वं तु सर्वं निर्वर्त्य तस्य वै ।
आप्येन सूत्रस्कन्धेन सह पूर्णां निपात्य च ॥३८७॥
असत्त्वं पदसंयुक्तं तेनाक्रान्तं स्मरेत्तथा ।
तत्स्थं मन्त्रसमूहं तु सह तत्पतिना तु वै ॥३८८॥
पूर्ववच्छ्रावयित्वा च रसमज्ञाप्य गन्धवत् ।
मनोवसानं नीत्वैवं तं वर्णाध्वोर्ध्वगोचरम् ॥३८९॥
निष्ठाङ्गेन महाबुद्धे ! तेजसास्त्रेण चेच्छया ।
समुद्धृत्याथ वै प्राग्वत्पोक्तव्यं बुद्धिगोचरे ॥३९०॥
षडध्वमुक्तं मूलेन प्राप्तसंज्ञं च तं शिशुम् ।
तत्त्वकञ्चुकनिर्मुक्तं शान्तात्मन्यैकतां गतम् ॥३९१॥
स्मृत्वा शक्त्यात्मनाग्नौ तु लब्धलक्षं परे पदे ।
ऐश्वरेण तु बीजेन प्रोक्तसत्त्वान्वितेन च ॥३९२॥
ततः संवेद्य निर्मुक्ते समाधौ विनियोज्य च ।
न वेत्ति यत्र संलीनः स्वानन्दं द्वैतमात्रकम् ॥३९३॥
आहुतीनां शतं हुत्वा तदापादनकर्मणि ।
नीत्वा सनातनं सर्वं तेनैव स्वधियाखिलम् ॥३९४॥
सह संवेद्यजालेन वाक्प्रबन्धं यथास्थितम् ।
निस्तरङ्गमयो भूत्वा दद्यात्पूर्णाहुतिं पराम् ॥३९५॥
अथास्मितां प्राप्य गुरुः प्रदद्यादाहुतिं पुनः ।

बीजनाथेन शिष्यस्य त्वपमोक्षनिवृत्तये ॥३९६॥
पदैरोङ्कारसंरुद्धैः पदावस्थितमानसः ।
सर्वज्ञो भव चोक्त्वैवं जुहुयाद्द्वादशाहुतिम् ॥३९७॥
भवैवमेवभगवान्निरवद्यो निराश्रयः ।
सर्वेश्वरः सर्वशक्तिः सुसम्पूर्णोऽच्युतो हरिः ॥३९८॥
व्यापी निरुद्धषाड्गुण्यो निर्विकारो निरंजनः ।
नित्यो नित्योदितोनूनो नित्यानन्दः सुनिष्कळः ॥३९९॥
अनाद्यन्तो ह्यनिधनो वासुदेवो विभूतिमान् ।
हुत्वैवं च ततः कुर्यात्पूर्णया पुनरेव हि ॥४००॥
स्थितं वैभवदीक्षायां मुमुक्षोरैश्वरे पदे ।
यत्रस्थो धाम चाभ्येति ह्यचिरात्परमेश्वरम् ॥४०१॥
ईश्वरेच्छावशेनैव देहपातान्महामते ! ।
भोगेच्छोः पद्मनाभीय उभयेप्सोः पदद्वये ॥४०२॥
शक्तिमच्छक्तियोगेन त्वथ बुद्धिमयेऽध्वनि ।
निवेश्यो देहपातन्तं कालमुद्धृत्य तत्पदात् ॥४०३॥
अन्तर्गूढो यथा काष्ठात्पावकश्च पृथक्कृतः ।
न भूयः सह काष्ठेन साम्यमेति तथा पुमान् ॥४०४॥
योजितोध्वान्तरे भूयो नैति तन्मयतां ततः ।
समाधिप्रच्युतिं कृत्वा विनिवेश्यात्मनोग्रतः ॥४०५॥
यथावदुपदेष्टव्यस्तस्याध्वा च सितासितः ।
संस्थितो यस्त्वभेदेन भिन्नरूपः परात्मनि ॥४०६॥
वेद्यवेदकनिर्मुक्तमच्युतं ब्रह्म यत्परम् ।
तच्छब्दब्रह्मभावेन स्वशक्त्या स्वयमेव हि ॥४०७॥
मुक्तयेऽखिलजीवानामुदेति परमेश्वरः ।
तदव्यक्ताक्षरं विद्धि तन्त्रशब्दो यथा कळः ॥४०८॥

पृथग्वर्णात्मना याति स्थितये न तथा स्वयम् ।
नो यान्ति निश्चयं यत्र चातुरात्म्यादनुग्रहात् ॥४०९॥
ऋते वेदविदो विप्रास्त्वेतस्मिन् प्रथमेश्वरे ।
स शब्दमूर्तिर्भगवानभ्येति च कलात्मना ॥४१०॥
तद्गृहो युज्यते येन तन्निष्ठानां हि कर्मणा ।
न षाड्गुण्यकलोत्था च यावन्मूर्तिर्निरंजना ॥४११॥
वद केनान्यथा मूर्तं तद्गृहीतुं नियुज्यते ।
तत्वाः कलामयाः सर्वे प्रभवाप्ययलक्षणाः ॥४१२॥
पूर्वोक्ता वासुदेवाद्या अध्यक्षान्ता यथोदिताः ।
तत्वेभ्यो निर्गता मन्त्रास्त्वणिमादिगुणैर्युताः ॥४१३॥
षट्कलांगलवैर्युक्ता येषु संख्या न विद्यते ।
व्यञ्जिता तैस्त्वनिर्माणं तुर्याद्यं पदसंज्ञकम् ॥४१४॥
कर्मणामात्मलाभार्थं मोहार्थं तत्क्षयाय च ।
द्विसप्तभुवनं विश्वं गुणत्रयमयं हि यत् ॥४१५॥
तदशुद्धं जडं नित्यं भोग्ये व्याप्यं पृथक्स्थितम् ।
इत्यध्वषट्कमुद्दिष्टं हेयोपादेयलक्षणम् ॥४१६॥
भुवनाध्वा पदाध्वा च विना तुर्यपदेन तु ।
हेयशेषमुपादेयं कर्मणां तदपेक्षया ॥४१७॥
व्यपेक्षयाप्युपेयश्च हेयपक्षे प्रयाति च ।
किं तु तत्प्राप्त्युपायं वै निस्तरङ्गे परे पदे ॥४१८॥
विवेकपदसंस्थस्य दीक्षया संस्कृतस्य च ।
विचार्यमाण एवं हि विश्रमो यत्र वै स्फुटम् ॥४१९॥
जायते तत्परं ब्रह्म वासुदेवाख्यमव्ययम् ।
अम्बरं परमाणूनां जुहूनामास्पदं यथा ॥४२०॥
तथा चाद्यः प्रबुद्धानां जीवानां हि निकेतनम् ।

विज्ञेयं भुवनानां च पदानामन्तरं हि यत् ॥४२१॥
येनेश्वरेच्छया तेषां मन्त्रा वै क्रीडयन्ति च ।
मायीयेध्वद्वये तस्मिन् सुखदुःखमयैः फलैः ॥४२२॥
ईश्वरेच्छानुविद्धानां भक्तानां परमेश्वरे ।
गुरूणां दीक्षितानां चाप्याराधनरतात्मनाम् ॥४२३॥
भवन्त्यध्वद्वयोर्ध्वस्था मन्त्राश्चाज्ञाप्रतीक्षकाः ।
नयन्ति कर्मिणः सम्यङ्मायायोध्वद्वयाद्बलात् ॥४२४॥
स्वस्थानमणिमादीनां भोगानां प्राप्तये तु वै ।
विरक्तस्य च तद्भोगात्स्वशक्त्या प्रेरयन्ति च ॥४२५॥
स्वव्यापारवशेनापि तत्वाध्वन्यमृतोपमे ।
यत्राणिमादिर्मन्येत तृणानीव च संस्थितः ॥४२६॥
अनुग्रहपरास्तस्य तत्वाध्यक्षादयोमलाः ।
नयन्त्यप्ययतां सम्यक्सकलाध्वनि शाश्वते ॥४२७॥
स षाड्गुण्यमथो ब्रह्म वासुदेवोऽध्वमूर्तिभृत् ।
नित्ये स्वात्मनि सम्बन्धे शब्दब्रह्माभिधेध्वनि ॥४२८॥
करोति योजनान्तस्य यत्रस्थः स्वयमेव हि ।
प्राप्नोति तत्परिज्ञानात्सुशान्तं भगवत्पदम् ॥४२९॥

सङ्कर्षणः ।

देव! वर्णाध्वविज्ञानं वद क्लिलक्षणं मम ।
प्राप्नोति यत्परिज्ञानादध्वी सद्वासुदेवताम् ॥४३०॥

श्रीभगवान् ।

पञ्चाध्वकोशमुक्तस्य लब्धसत्वाय चात्मनः ।
योऽनुभूतिरदं याति धारासन्तानरूपधृक् ॥४३१॥
भिन्नवर्णमयः शब्दः पूर्वलक्षणलक्षितः ।
स चातुरात्म्यनिचये विज्ञेयो हि तदात्मना ॥४३२॥

प्रभवाप्ययोगेन शब्दभास्वरलक्षणः ।
सकारान्तस्त्वकाराच्च हकारादान्त एव हि ॥४३३॥
प्रभवेद्द्वादशान्तस्तु हकारश्चतुरात्मनाम् ।
अकारस्त्वप्यये चैव तुल्यतालोनयोः स्मृता ॥४३४॥
वर्णव्यूहसमूहेऽस्मिन् ज्ञेयं ज्ञानसमाधिना ।
विश्राम उदयो व्याप्तिर्व्यक्तिराद्वासुदेवता ॥४३५॥
अत्रैकैका परिज्ञेया मूर्तिर्वै त्वेवमेव हि ।
युक्ता विश्रमपूर्वेण चतुष्केण समासतः ॥४३६॥
दण्डवत्सन्निवेशेन संस्थिता ह्येवमेव हि ।
द्विषट्कं धारणानां च द्वादशात्मलक्षणम् ॥४३७॥
सोपानभूतं यत्क्रान्ता द्वादशान्तं विशेत्परम् ।
नीत्वैवं व्यक्तिभावेन हृत्पद्मोदरसंस्थितम् ॥४३८॥
वर्णाध्वानं दीक्षितस्य शब्दब्रह्मेति यः स्थितः ।
संसेव्य हुतभुग्भूमिं प्रणीतेनोदकेन तु ॥४३९॥
सह शिष्येण चात्मानं तेनैवाच्छिद्रसिद्धये ।
पूर्ववद्भूतिना कृत्वा लक्ष्म चाग्निं प्रणम्य च ॥४४०॥
समुत्थाय ततो यायात्तं गृहीत्वाच्युतालयम् ।
पूजयित्वा जगन्नाथं निवेद्य नियमाच्छिशोः ॥४४१॥
सविशेषात्समासेन सान्तरान्योग्यतावशात् ।
यथावदुपदेष्टव्यं ततस्तस्यार्चनं हृदि ॥४४२॥
मुद्रासमन्वितो मन्त्रो न्यासध्यानपुरस्सरः ।
इतिकर्तव्यता शास्त्रसङ्क्षिप्ता च सविस्तरा ॥४४३॥
तत्सम सन्ततस्तेन सर्वं कार्यं यथा स्थितम् ।
गुर्वर्चनं ततः कुर्यादात्मना च धनादिना ॥४४४॥
पूरयित्वांभसा पाणिमर्घ्यपात्रात्तु दक्षिणम् ।

षडङ्गमन्त्रसंजप्तं क्षेप्तव्यं तस्य मस्तके ॥४४५॥
मण्डलं प्रणवेनाथ पाणौ सूर्यप्रभं स्मरेत् ।
तत्राभिन्नं न्यसेत्प्राग्वद्वैभवं देवतागणम् ॥४४६॥
कृत्वा धियार्जितं दद्यात्साशिषं तस्य मूर्धनि ।
यथोक्ता च यथाशीघ्रा त्वचिरादेव पुत्रक ! ॥४४७॥
तवास्तु वैभवी सिद्धिः मोक्षलक्ष्मीसमन्विता ।
इति वैभवदीक्षाया लक्षणं समुदाहृतम् ॥४४८॥
तत्प्रयुक्तस्य सामान्यं सर्वमन्त्रगणस्य च ।
येन येन हि मन्त्रेण दीक्षा कार्याथ कस्यचित् ॥४४९॥
तस्य तस्य तदीयानां पूर्वोद्दिष्टेन वर्त्मना ।
कार्योऽत्रावयवानां तु विनियोगो यथोदितः ॥४५०॥
समूहवद्धृदादीनां मूलान्तानां समाचरेत् ।
सह तत्वगणेनैव सर्वदाध्यात्मरूपताम् ॥४५१॥
सम्यग्गृह्य ततः कुर्यात्प्राग्वदभ्यर्चनं तु वै ।
नेत्रकर्माणि हृद्बीजं पश्चाङ्गानां विधीयते ॥४५२॥
निरङ्गानां तु मन्त्राणामङ्गमन्त्रोक्तकर्मणाम् ।
प्रणवो विनियोक्तव्यः सह कर्मपदेन ॥४५३॥
सम्पाद्या विधिनानेन व्यूहदीक्षार्थिनां तु सा ।
किंतु वै तत्र योक्तव्यं प्रत्येकस्मिन् हि कर्मणि ॥४५४॥
चतुष्कं वासुदेवाद्यं बीजानां तत्पुरोदितम् ।
एवमेवाद्यमन्त्रस्तु निश्शेषः कर्मसंग्रहे ॥४५५॥
योक्तव्यो ब्रह्मदीक्षायां षोढा भक्त्वा च पूर्ववत् ।
स्वरूपेण यथावस्थमुक्तेष्ववसरेषु च ॥४५६॥
किं त्वेकवचनेनात्र देवानां प्रार्थना मता ।
योजना त्वधिवासोक्ता विज्ञातव्या समासतः ॥४५७॥

नित्यदीक्षाद्वयस्यास्य नान्यन्मोक्षादृते फलम् ।
तत्रापि चातुरात्मीया दीक्षा शाक्कमलेक्षण ! ॥४५८॥
बलाद्ददाति षाड्गुण्यभोगार्सिं भावितात्मनाम् ।
फलं स्रक्चन्दनादीनां होमद्रव्यस्य चापि यत् ॥४५९॥
प्रकृत्या सहसाभ्येति निलयं ब्रह्मदीक्षया ।
एवं दीक्षात्रयं चापि दद्यादेकस्य वा क्रमात् ॥४६०॥
सर्वाराधनयोग्यत्वसिद्धये मुनिपुङ्गवाः ! ।
यद्वाष्टाक्षरमन्त्रादौ व्यापकत्रितये द्विजाः ! ॥४६१॥
एकेन सर्वसामान्यं दीक्षां कुर्याद्यथाविधि ।
तेनाङ्गसहितेनैव सर्वकर्म समाचरेत् ॥४६२॥
तदापि विभवव्यूह परमन्त्रास्तथा द्विजाः! ।
शक्तिभूषणवाहास्त्रमन्त्रांश्चोपदिशेद्गुरुः ॥४६३॥
इत्थं दीक्षाविधिः सम्यक्कीर्तितो मुनिपुङ्गवाः ! ।
अथ मण्डलदृष्टस्य शास्त्रज्ञस्य यथार्थतः ॥४६४॥
समाराधनसक्तस्य पुत्रकत्वं गतस्य च ।
सिद्ध्यर्थं सर्वमन्त्राणामधिकाराप्तये तु वा ॥४६५॥
तत्कालं गुरुणा कार्यं यच्छिष्यस्याभिषेचनम् ।
भगवत्तत्ववेत्तॄणां पञ्चकालरतात्मनाम् ॥४६६॥
संहितापारगाणां च आचार्याणां च सन्निधौ ।
यतीनां बद्धलक्षाणां बोधकानां महात्मनाम् ॥४६७॥
देवस्य पुरतः कुर्याच्चतुरश्रं च मण्टपम् ।
सर्वोपकरणोपेतं मध्ये भद्रासनान्वितम् ॥४६८॥
तस्मिन् कुर्यादनन्ताद्यं सन्धानश्चासनोदितम् ।
पूजयित्वार्घ्यपुष्पाद्यैः ततो देवस्य संमुखम् ॥४६९॥
बद्धपद्मासनं शिष्यं तत्रारोप्य कृताञ्जलिम् ।

कान्ताभिर्गीयमानं तु स्तूयमानं च वन्दिभिः ॥४७०॥
शङ्खाद्यैर्ध्मायमानं तु पठ्यमानं तु मङ्गलैः ।
जपमानं परं मन्त्रं ध्यायमानमिवाच्युतम् ॥४७१॥
अष्टाङ्गेनार्चयित्वा तु कुम्भमादाय वैष्णवम् ।
स तत्रस्थेन मन्त्रेण सम्यक्सिद्धिव्यपेक्षया ॥४७२॥
सहस्रावर्तितं कृत्वा शतावर्तितमेव वा ।
सिद्धये हुतशेषाभं स्मृत्वा तमभिषिच्य च ॥४७३॥
स्वाहान्तं मन्त्रमुच्चार्य प्लुतं हृत्कमलोदरात् ।
एवमुक्त्वा नमोऽस्तु ध्यात्वा तं स्फटिकामलम् ॥४७४॥
समुत्क्षीर्य खरन्ध्रेण तस्य हृत्पद्मगं स्मरेत् ।
अशक्तिविग्रहं ब्रह्म त्वाह्लादानन्दलक्षणम् ॥४७५॥
समारोप्य धिया सम्यक् स्वाधिकारं तु चाखिलम् ।
समासाद्यार्चितंशुद्धं दिव्यमागमसञ्चयम् ॥४७६॥
शुभमाराधनाधारमक्षसूत्रं च किङ्किणीम् ।
स्रुक्स्रुवौ योगपट्टं च शङ्खचक्रं कमण्डलुम् ॥४७७॥
चमसं कुसुमञ्चार्घ्यपात्रं कृष्णाजिनं ततः ।
पादुके पादपीठं च छत्रमासनदर्पणम् ॥४७८॥
मयूरव्यजनं शुक्लं चामरं भगवद्ध्वजम् ।
यथार्हदण्डसहितं काषाये क्षौमवाससी ॥४७९॥
समुत्थाप्यासनात्सर्वमाहृत्य स्नानजं जलम् ।
विनिक्षिप्य शुचौ स्थाने देवमभ्यर्च्य वै ततः ॥४८०॥
तादर्थ्येन तु सन्तर्प्य पूर्णान्तं चाभिमध्यगम् ।
क्षान्त्वा पूर्वोक्तविधिना सकुण्डान् मण्डलान्तरात् ॥४८१॥
अर्घ्यपात्रसमूहाच्च बलिदानं समाचरेत् ।
सोदकेन च भूतानामोदनेनाम्लमुच्चरन् ॥४८२॥

बलिमण्डलकं कृत्वा यागागाराच्च बाह्यतः ।
कृत्वान्तर्बलिदानं तु प्रादक्षिण्येन वै पुरा ॥४८३॥
अथ ऊर्ध्वं इदं चोक्त्वा शेषं तन्मण्डले बहिः ।
नमोऽस्त्वच्युतभूतेभ्यः सर्वेभ्यः सर्वदैव हि ॥४८४॥
सदिक्पतिभ्यः साङ्गेभ्यः शान्तये स्वस्य वै शिशोः ।
पूजाद्यमुपसंहृत्य दत्तशिष्टेण पूर्ववत् ॥४८५॥
वृत्तमण्डलमध्ये तु सितपद्मोदरे ततः ।
दत्तशिष्टैर्यजेद्देवं सर्वदेवगुरुं प्रभुम् ॥४८६॥
तर्पयित्वाग्निमध्ये तु कुर्यात्तस्य विसर्जनम् ।
तदीयमथ निक्षिप्य क्ष्मापटे नवा जलान्तरे ॥४८७॥
यागावनौ च तच्चक्रं द्वादशारं विचिन्त्य च ।
न्यस्यात्मन्यर्घ्यपुष्पाद्यैः समभ्यर्च्य तदन्तरे ॥४८८॥
करकं वारिसम्पूर्णमादाय विनिवेश्य च ।
तत्रेष्ट्वा वीर्यमन्त्रेण मध्ये मन्त्रास्त्रमुत्तमम् ॥४८९॥
मध्वम्बुपयसा पूर्णमपरं शुभलक्षणम् ।
तदग्रतोर्घ्यऽकलशं तन्मध्येऽस्त्रं च चक्रगम् ॥४९०॥
तदभ्यर्च्य यथान्यायं कृत्वाष्टशतमन्त्रितम् ।
वषट्पदनिरुद्धेन मूलमन्त्रेण तं पुनः ॥४९१॥
दद्यात्तदन्तः साङ्गेण प्राग्वद्दीयूषधारणाम् ।
निर्वज्रीकरणं कुर्यात्तत्रैषां मन्त्रवारिणा ॥४९२॥
तदम्बुधारादानेन ध्यानोच्चारयुतेन च ।
संविभज्याथ चैतेषां मन्त्रपानं सुधामयम् ॥४९३॥
सम्पाद्यास्त्रपरं पश्चात्समन्ताच्चक्रगं न्यसेत् ।
आदाय तत्तोयकुम्भमस्त्रमन्त्रमुदीरयन् ॥४९४॥
धारयेत्पूर्ववद्धारामथ मध्ये निधाय तम् ।

सुपूर्णमुदकेनैव कृत्वा फलसमन्वितम् ॥४९५॥
गुरुश्यागमतःकुर्याच्छिष्यः प्रयतमानसः ।
भगवद्यागवद्भक्त्या कर्मणा मनसा गिरा ॥४९६॥
यागोपयुक्तसम्भारं तस्मै सर्वं निवेद्य च ।
सशिरः पाणियुग्मं तु कृत्वा चैव तदंघ्रिगम् ॥४९७॥
क्षन्तव्यः सुप्रसन्नेन श्रद्धापूतेन चेतसा ।
पञ्चरात्रविदस्तद्वद्यतींश्च स्नातकादयः ॥४९८॥
सम्पूज्य विधिवद्द्यात्तेषां शक्त्या च दक्षिणाम् ।
संवाहनपरात्कालाल्लब्ध्वानुज्ञां तु गौरवीम् ॥४९९॥
भ्रातृभिः सह चाश्नीयाद्बहुभिः पूर्वदीक्षितैः ।
तथान्यैर्भगवद्भक्तैः सुहृत्सम्बन्धिबान्धवैः ॥५००॥
व्रजन्तं सह शिष्यैस्तु काले ह्यन्यत्र तत्र वा ।
तदिच्छयाप्यनुव्रज्य निवर्तेताथ वै यदा ॥५०१॥
कृत्वा तु पादपतनं बहुधा सप्रदक्षिणम् ।
आमोक्षात्सर्वसिद्धीनां भक्तानां भावितात्मनाम् ॥५०२॥
परा गतिर्गुरुर्यस्मात्प्रसाद्यस्तत एव सः ।
इत्येवमभिषेकस्तु भवेन्मुख्याधिकारिणाम् ॥५०३॥
स्वार्थे परार्थयजने उभयत्राधिकारिणाम् ।
अन्ये तु दीक्षामात्रेण संस्कार्या मुनिपुङ्गवाः ॥५०४॥

मुनयः ।

किं स्वार्थं च परार्थं किं के च तत्राधिकारिणः ।
तदेतन्मुनिशार्दूल वदस्व वदतां वर ॥५०५॥

नारदः ।

स्वगृहे स्थापितो देवः स्वार्थ इत्यभिधीयते ।
पर्वताग्रे नदीतीरे सिन्धुतीरे वनादिके ॥५०६॥

ग्रामे वा नगरे चापि स्वयव्यक्तादिभेदतः ।
संस्थितो भगवान् विप्राः! परार्थ इति कथ्यते ॥५०७॥
परार्थस्सूर्यसदृशः स्वार्थस्तु गृहदीपवत् ।
उत्कृष्टः परशब्दोयमर्थो मोक्षादिलक्षणः ॥५०८॥
यस्मात्सलभ्यते सोयं परार्थः परिकीर्तितः ।
स एव सर्वफलदः सर्वेषामपि यत् द्विजाः! ॥५०९॥
तस्मात्सर्वजनैः सेव्यः परार्थःपुरुषोत्तमः ।
स्वार्थः स्वस्वगृहे पूज्यः स्वस्वाभीष्टफलप्रदः ॥५१०॥
स्वार्थस्यापि परार्थस्य पूजायामधिकारिणः ।
शाण्डिल्या ह्यन्वये जाता गुरोर्लब्धाभिषेचनाः ॥५११॥
अन्ये तु केवलं स्वार्थपूजने ह्यधिकारिणः ।

मुनयः ।

शाण्डिल्याद्यास्तु के योगिन् तद्वंश्या एव केवलम् ।
कथं परार्थयजने भवन्ति ह्यधिकारिणः ॥५१२॥
तत्सर्वं विस्तरेणैव ब्रूहि नो मुनिपुङ्गव! ।

नारदः ।

शाण्डिल्यादिमुनीन्द्राणां शृणुध्वं वैभवं द्विजाः! ।
पुरा कृतयुगस्यादौ वासुदेवः परः पुमान् ॥५१३॥
स्वाराधनार्थं भूलोके सद्धर्माणां प्रवृत्तये ।
लोकसंरक्षणार्थं च स्वस्य पञ्चायुधाभिधान् ॥५१४॥
समालोक्य भवन्तोद्य ह्यवतीर्य धरातले ।
आद्यमेकायनं वेदं मोक्षैकफललक्षणम् ॥५१५॥
प्रकाशयध्वं सर्वेषां सद्धर्मांश्च विशेषतः ।
तत्र तत्रावतीर्णं मां स्वयंव्यक्तादिभेदतः ॥५१६॥
संपूजयध्वं सर्वेषां मोक्षलाभाय भूतले ।

इत्यादिश्यंततस्ते वै विष्णोराज्ञानुवर्तिनः ॥५१७॥
सुदर्शनाद्या हेतीशाः पञ्च नरशरीरूपतः ।
समुत्पन्नाः क्षितितले पौण्ड्रवर्धनस्थलादिषु ॥५१८॥
पञ्चायुधांशास्ते पञ्च शाण्डिल्यश्चौपगायनः ।
मौञ्जायनः कौशिकश्च भारद्वाजश्च योगिनः ॥५१९॥
ते मिळित्वा समालोच्य विष्णोराराधनेच्छया ।
अभिसंगम्य तोताद्रौ तपश्चक्रुस्सुदुस्तरम् ॥५२०॥
तेषां तु तपसा तुष्टो वासुदेवो जगत्पतिः ।
लक्ष्म्या सार्धं खगेशानमधिरुह्य कृपानिधिः ॥५२१॥
आजगाम गिरिश्रेष्ठं यत्र सन्ति मुनीश्वराः ।
ततस्ते मुनिशार्दूला दृष्ट्वायान्तं जगत्पतिम् ॥५२२॥
शङ्खचक्राङ्कितकरं कोटिसूर्यसमप्रभम् ।
पुळकाञ्चितसर्वांगा आनन्दाश्रुसमन्विताः ॥५२३॥
प्रणर्तन्तस्तुवन्तश्च गायन्तश्च परस्परम् ।
प्रदक्षिणं च कुर्वन्तः प्रणेमुः पुरुषोत्तमम् ॥५२४॥
आनन्दाम्बुधिसम्मग्नानेतान्वीक्ष्य श्रियःपतिः ।
उवाच करुणं वाक्यं मेघगम्भीरयागिरा ॥५२५॥

श्रीभगवान् ।

ऋषयस्तपसायुष्मत्कृतेनानन्यचेतसा ।
सन्तुष्टोऽस्मि प्रसन्नोऽस्मि वृणीध्वमभिवाञ्छितम् ॥५२६॥
इति तद्वचनं श्रुत्वा ऋषयो हृष्टमानसाः ।
बद्धाञ्जलिपुटाः सर्वे प्रत्यूचुर्विनयान्विताः ॥५२७॥
अधीताः सकला वेदाः शास्त्राणि विविधानि च ।
मोक्षोपायं न जानीमस्ततस्त्वां शरणं गताः ॥५२८॥
इत्थैवानुग्रहं कर्तुमर्हसि त्वं दयानिधे ।

इति संप्रार्थितो देवः करुणामृतवारिधिः ॥५२९॥
तदानीमेव योगीन्द्रान् शाण्डिल्यादींस्तु दीक्षया ।
संस्कृत्य चाभिषिच्याश्च स्वयमेव जगत्पतिः ॥५३०॥
आद्यमेकायनं वेदं रहस्याम्नायसंज्ञितम् ।
दिव्यमन्त्रक्रियोपेतं मोक्षैकफललक्षणम् ॥५३१॥
पञ्चापि पृथगेकैकदिवारात्रं जगत्प्रभुः ।
अध्यापयामास यतस्ततस्तन्मुनिपुङ्गवाः ॥५३२॥
शास्त्रं सर्वजनैर्लोके पञ्चरात्रमितीर्यते ।
तदर्थांश्चोपदिश्याथ तानुवाचेदमच्युतः ॥५३३॥
एष एकायनो वेद उपदिष्टो मया द्विजाः ! ।
मोक्षायनाय वै पन्था एतदन्यो न विद्यते ॥५३४॥
तस्मादेकायनं चैनं प्रवदन्ति मनीषिणः ।
एतदुक्तविधानेन दिव्यक्षेत्रादिषु स्थितम् ॥५३५॥
स्वयंव्यक्तादिरूपेण यजध्वं मुनिपुङ्गवाः! ।
स्वार्थे परार्थयजने यूयं मुख्याधिकारिणः ॥५३६॥
युष्मद्वंश्याश्च ये विप्राः! तेभिषेच्या यथाविधि ।
तेपि स्वार्थे परार्थे च भवेयुरधिकारिणः ॥५३७॥
एष कार्तयुगो धर्मः प्रतिबुद्धैर्निषेवितः ।
त्रेतादौ मन्दसञ्चारो भविष्यति मुनीश्वराः ! ॥५३८॥
त्रेतायुगादौ सर्वेपि नानाकामसमन्विताः ।
व्यामिश्रयाजिनो भूत्वा त्यजन्त्याद्यं सनातनम् ॥५३९॥
अन्तर्दधाति सर्वोयं वेद एकायनाभिधः ।
ततो योग्याय भगवान् प्रादुर्भावयति स्वयम् ॥५४०॥
इत्युक्त्वान्तर्दधे देवो वासुदेवः सनातनः ।
तत्र प्रभृति ते सर्वे शाण्डिल्याद्या मुनीश्वराः ॥५४१॥

आद्यं भागवतं धर्ममाविर्भूते कृते युगे ।
अनुतिष्ठन्ति सर्वेऽपि मानवाश्च मुनीश्वराः ॥५४२॥
ततस्त्रेतायुगे जाते नानाकामवशाज्जनाः ।
त्यक्त्वा भागवतं धर्मं बभूवुर्मिश्रयाजिनः ॥५४३॥
ततश्चैकायनो वेदो मन्दचारो बभूव च ।
तदा मुनीन्द्रः शाण्डिल्यो दृष्ट्वा कामरतान् जनान् ॥५४४॥
लोकसंरक्षणार्थाय तपस्तेपे सुदुस्तरम् ।
अनेकानि सहस्राणि वर्षाणां तपसोऽन्ततः ॥५४५॥
द्वापरस्य युगस्यान्ते आदौ कलियुगस्य च ।
साक्षात्सङ्कर्षणो देवः प्राप्य प्रत्यक्षतां मुनेः ॥५४६॥
परित्यज्य परं धर्मं मिश्रधर्ममुपेयुषाम् ।
भूयस्तत्पदकाङ्क्षाणां श्रद्धाभक्ती उपेयुषाम् ॥५४७॥
अनुग्रहार्थं वर्णानां योग्यतापादनाय च ।
तथा जनानां सर्वेषामभीष्टफलसिद्धये ॥५४८॥
मूलवेदानुसारेण सारं संगृह्य सर्वतः ।
अनुष्टुप्छन्दोबन्धेन प्रोक्तानि हरिणा स्वयम् ॥५४९॥
सात्वतादीनि शास्त्राणि भोगमोक्षप्रदानि च ।
उपदिश्याथ मुसली तत्रैवान्तरधीयत ॥५५०॥
लब्ध्वैवं सात्वतादीनि शास्त्राणि मुनिपुङ्गवाः ! ।
शाण्डिल्योऽध्यापयामास मुनिश्चैवौपगायनम् ॥५५१॥
तथा मौञ्जायनादींश्च सनकाद्यांश्च योगिनः ।
ततःप्रभृति ते सर्वे शाण्डिल्याद्या मुनीश्वराः ॥५५२॥
सात्वताद्युक्तमार्गेण हरेराराधनादिकम् ।
कुर्वन्तः स्वस्ववंश्यांश्च शिष्यांश्चापि सहस्रशः ॥५५३॥
काण्वीं शाखामधीयानान् वेदवेदान्तपारगान् ।

संस्कृत्य दीक्षया सम्यक्सात्वताद्युक्तमार्गतः ॥५५४॥
अभिषिच्य च तान् सर्वान् कृत्वा स्वार्थपरार्थयोः।
पूजाधिकारिणो विप्रा! तैरेतत्सात्वतादिकम् ॥५५५॥
शास्त्रं प्रवर्तयामासुस्ते हि मुख्याधिकारिणः।
इत्युक्त्वा मुनिशार्दूलाः शाण्डिल्यादिमहात्मनाम् ॥५५६॥
माहात्म्यं लेशतो ह्यत्र अधिकारप्रसङ्गतः।
एवं दीक्षा चाभिषेको यतिसङ्क्रान्तेन पूर्वतः ॥५५७॥
प्राप्तस्तेनैव मार्गेण कार्यो नान्योक्तमार्गतः।
सिद्धान्तसङ्करं नैव कुर्याच्छास्त्रविशारदः ॥५५८॥

मुनयः।

सिद्धान्तं नाम किं को वा भेदस्तस्य मुनीश्वर!।
तत्सर्वं विस्तरेणैव वदस्व वदतांवर ॥५५९॥

नारदः।

चतुर्धा भेदभिन्नोयं पाञ्चरात्राख्य आगमः।
पूर्वमागमसिद्धान्तं द्वितीयं मन्त्रसंज्ञितम् ॥५६०॥
तृतीयं तन्त्रमित्युक्तमन्यत्तन्त्रान्तरं भवेत्।
आद्यं नित्योदितव्यूहस्थापनादिप्रकाशकम् ॥५६१॥
अपौरुषेयं सद्ब्रह्मवासुदेवाख्ययाजिनाम्।
लक्ष्यभूतं द्विजेन्द्राणां हृदिस्थमधिकारिणाम् ॥५६२॥
ब्रह्मोपनिषदाख्यं च दिव्यमन्त्रक्रियान्वितम्।
विवेकदं परं शास्त्रमनिच्छातोपवर्गदम् ॥५६३॥
एवं नित्योदिताख्यस्य नित्याकारस्य च प्रभोः।
वासुदेवाभिधानस्य षाड्गुण्यादिगुणोदधेः ॥५६४॥
प्रथमं लक्षणं विद्धि हृदयाद्यङ्गशब्दवत्।
एतदागमसिद्धान्तं श्रुतिरूपं तु विद्धि तत् ॥५६५॥

एष कार्तयुगो धर्मस्सर्वधर्मोत्तमः स्मृतः ।
ततस्त्रेतायुगस्यादौ भोगमोक्षप्रसिद्धये ॥५६६॥
तस्माद्‌ागमसिद्धान्तान्निस्सृतं बहुभेदकम् ।
मन्त्रसिद्धान्तसंज्ञं तज्जाग्रद्व्यूहादिमूर्तिना ॥५६७॥
समुत्कीर्णं द्वितीयस्य सात्वतस्य महात्मनः ।
तेन प्रद्युम्नसंज्ञस्य तेन तुर्यात्मनो विभोः ॥५६८॥
तेन वागीश्वराख्यस्य तस्माद्दीपाख्यविग्रहे ।
संक्रान्तं च ततः पश्चाद्रुद्रेन्द्रादित्यवह्निषु ॥५६९॥
तथैव नारदाद्येषु देवतानां गणेष्वपि ।
संक्रान्तं मन्त्रसिद्धान्तं भेदभिन्नमनेकधा ॥५७०॥
यत्र शान्ततरं व्यूहं शान्तोदितमनन्तरम् ।
सुषुप्तिसंज्ञं स्वप्नाख्यं जाग्रद्व्यूहं यथोदितम् ॥५७१॥
मूर्त्यन्तरं केशवाद्यं प्रादुर्भावं तथान्तरम् ।
हृत्पद्मपद्मपीठादौ लक्ष्मीपुष्ट्यादिशक्तिभिः ॥५७२॥
लांछनैश्शङ्खचक्राद्यैर्गरुडप्रमुखैरपि ।
मूलसिद्धादिभिः शास्तृपर्यन्तैर्यजनं हितम् ॥५७३॥
विश्वत्रातृनृसिंहस्य दीक्षा पूर्वं तथापरम् ।
विभवव्यूहसूक्ष्माख्यमधिकारं यथाक्रमम् ॥५७४॥
सामग्रीपुत्रिकादीनां चतुर्णामभिषेचनम् ।
तथैव समयाचारं मूर्तीनां स्थापनक्रमम् ॥५७५॥
मन्त्रमण्डलमुद्राणां कुण्डादीनां च लक्षणम् ।
कर्मणामेवमादीनां विधानं यत्र पुष्कलम् ॥५७६॥
मन्त्रसिद्धांतसंज्ञं तद्बहुभेदसमन्वितम् ।
परव्यूहादिभेदेन विनैकैकेन मूर्तिना ॥५७७॥
साङ्गेन केवलेनाथ कांताव्यूहेन भूषणैः ।

तथास्त्रैर्विग्रहोपेतैरावृतं तन्त्रसंज्ञितम् ॥५७८
नृसिंहकपिलक्रोडहंसवागीश्वरादयः ।
मुख्यानुवृत्तिभेदेन केवलायाङ्गसंयुताः ॥५७९॥
चक्राद्यस्त्रवरैश्चाथ भूषणैर्मकुटादिभिः ।
कांतागणैश्च लक्ष्म्याद्यैः परिवारैः खगादिकैः ॥५८०॥
पूजिता विधिना यत्र तत्तन्त्रांतरमीरितम् ।
ये जन्मकोटिभिः सिद्धास्तेषामन्तोत्र संस्थितिः ॥५८१॥
यस्मात्तस्माद्विवेदैष सिद्धान्ताख्यो यथार्थतः ।
शास्त्रमन्त्रक्रियादीनां मूर्तीनां भवनस्य च ॥५८२॥
देशिकस्याभिजातस्य यथापूर्वं परिग्रहः ।
तथैव यावत्कालं तु नाचर्तव्यं तदन्यथा ॥५८३॥
विपरीतकृते चात्र राजराष्ट्राद्यनर्थकृत् ।
ततस्सिद्धांतसाङ्कर्यं नाचर्तव्यं कृतात्मभिः ॥५८४॥
यद्यदिष्टतमं लोके पूर्वसिद्धाविरोधि तत् ।
प्रतिग्राह्यमतोन्योन्यविरुद्धं सन्त्यजेद् बुधः ॥५८५॥
वैखानसेषु तन्त्रेषु शैवपाशुपतेषु च ।
विहितान्यत्र जातानि विरुद्धानीति किं पुनः ॥५८६॥
एवं सिद्धांतभेदश्च कीर्तितोयं यथाश्रुतम् ।
इतोन्यच्छ्रोतुमिच्छा चेत्कथ्यतां मुनिपुङ्गवाः । ॥५८७॥

इति श्रीपाञ्चरात्रे ईश्वरसंहितायां

दीक्षाविधिर्नाम

एकविंशोध्यायः ।

—○—

## अथ द्वात्रिंशोऽध्यायः ।

मुनयः ।

नियमा उपदेष्टव्याः शिष्यस्येति पुरा त्वया ।
प्रोक्तं हि मुनिशार्दूल! नियमांस्तान् प्रकाशय ॥१॥

नारदः ।

एतदेव पुरा पृष्टो देवः सङ्कर्षणेन हि ।
प्रोवाच नियमांस्तांस्तु प्रवक्ष्यामि मुनीश्वराः! ॥२॥

श्रीभगवान् ।

प्रत्येकस्मिन् हि नियमे निर्गते तु गुरोर्मुखात्
ब्रूयाद्वै बाढमित्येवं शिष्यः शोकाभिशान्तये ॥३॥
नाक्रम्या गौरवी च्छाया दैवी यानगता त्वपि ।
गुरुवद्गुरुवर्गश्च द्रष्टव्यो नित्यमेव हि ॥४॥
शयनासनयानाद्यं तदीयमभिवन्दयेत् ।
अतन्द्रितः सदा कुर्याद्व्यापारं तद्गृहेऽखिलम् ॥५॥
नासने तत्समक्षं च योगाभ्यासश्च धारणा ।
सुयन्त्रितः संयतवाक्तदाज्ञासंप्रतीक्षकः ॥६॥
तत्सन्निधौ तु नान्येषां प्रत्युत्थानं समाचरेत् ।
कुर्यात्संशयविच्छित्तिं न तदादेशतो विना ॥७॥
व्याख्यानमागमानांच योगाभ्यासश्च धारणा ।
अवश्यकार्याण्येतानि स्वगृहे न गुरोर्गृहे ॥८॥
न शङ्खचक्रपद्माङ्के भोक्तव्यं भाजने तु वै ।
तल्लक्ष्म चोपलं काष्ठं लोष्टं वा फलकादिकम् ॥९॥
क्रमणीयं न पादेन कल्प्यं नैवासनार्थतः ।
भगवच्छासनज्ञानामाराधनरतात्मनाम् ॥१०॥
यथोचिता यथाशक्ति पूजा कार्या सदैव हि ।

प्रासादं देवदेवीयमाचार्यं पाञ्चरात्रिकम् ॥११॥
अश्वत्थं च वटं धेनुं रत्नसमूहं गुरोर्गृहम् ।
दूरात्प्रदक्षिणीकुर्यान्निकटे प्रतिमां विभोः ॥१२॥
दण्डवत्प्रणिपातैस्तु नगरं कुर्याच्चतुर्दिशम् ।
न यानपादुकारूढो न सोपानहपादभृत् ॥१३॥
न विक्षिप्तमना भूत्वा संविशेद्भगवद्गृहम् ।
न व्याख्यावसरे कुर्यात्प्रत्युत्थानाभिवादने ॥१४॥
नाभक्तानां न मूर्खाणां नास्तिकानां विशेषतः ।
दातव्यः संप्रदेयश्च नोपहासरतात्मनाम् ॥१५॥
नापूजितं समुद्धाट्यं शासनं पारमेश्वरम् ।
समक्षं नान्यभक्तानां न तत्सन्देहशान्तये ॥१६॥
प्रकाशनीयं तल्लोभान्न चान्यायेन नोभयात् ।
सुगन्धफलपुष्पाद्यमपूर्वमुचितं च यत् ॥१७॥
अभोज्यं गुरुदेवाग्निविनिवेदितवर्जितम् ।
तस्करात्पतिताच्चण्डाद्दम्भलोभमदान्वितात् ॥१८॥
मात्रावित्तं न गृह्णीयादभक्तादुपचारतः ।
गृहीत्वा भगवद्बिम्बं वृत्त्यर्थमटतीति यः ॥१९॥
नगरापणवीथीनां तस्य देवलकस्य च ।
दर्शनं स्पर्शनं नैव कुर्यात्संभाषणं तथा ॥२०॥
गायेत्तु भगवद्गाथां यो ग्रामे नगरान्तरे ।
तं प्रभुस्तावकं चैव पूजयेच्चैव सर्वदा ॥२१॥
विष्णुव्रतपरं चैव विष्ण्वायतनवासिनम् ।
विष्ण्वालापकथासक्तं विष्ण्वायतनमार्जकम् ॥२२॥
श्रावकं वैष्णवानां च विष्णुधर्मपरायणम् ।
पर्येष्टिकृद्वैष्णवानां मान्यो वै विष्णुवत्सदा ॥२३॥

प्रातरुत्थाय चिन्वीयात्स्वारामात्स्वयमेव हि ।
पूजार्थमङ्गमन्त्रेण पुष्पादीन् प्रयतः सदा ॥२४॥
ग्रामादरण्यमथ वा निर्बाधं हि तदार्जने ।
अकण्टकद्रुमोत्थाश्च कण्टकद्रुमजा अपि ॥२५॥
हृद्याः सुगन्धाः कर्मण्या ग्राह्याः सर्वे सितादयः ।
उग्रगन्धा ह्यकर्मण्यास्त्वप्रसिद्धास्तथैव च ॥२६॥
चतुष्पथशिवावासश्मशानावनिमध्यगाः ।
क्षता अशनिपाताद्यैः कृमिकीटसमावृताः ॥२७॥
वर्जनीयाः प्रयत्नेन पत्रपुष्पफलादयः ।
अम्बुजानि सुगन्धीनि सितरक्तादिकानि च ॥२८॥
योक्तव्यानि पवित्राणि नित्यमाराधने तु वै ।
साङ्कुराणि च पत्राणि भूगतान्येवमेव हि ॥२९॥
विहितान्यर्चने नित्यं यथर्तुप्रभवानि च ।
न गृहे करवीरोत्थैः कुसुमैरर्चनं हितम् ॥३०॥
विशेषतः सकामस्य सिद्धिभूतियुतस्य च ।
अतोऽन्यथा न दोषोऽस्ति दोष उन्मत्तकादिभिः ॥३१॥
सद्यो हृतानां विहितः स्वम्लानानां यथा क्रयः ।
प्रदानमम्बुसिक्तानां तेषां कुर्यान्न चान्यथा ॥३२॥
निर्दोषतां प्रयान्त्याशु मन्त्रिणामवलोकनात् ।
भवन्ति भक्तिपूतानि हृन्मन्त्रनिरतात्मनाम् ॥३३॥
न कांस्यपात्रे भोक्तव्यं न तत्र निनिवेदयेत् ।
देवाय मधुपर्कार्थं तथा वै सति सम्भवे ॥३४॥
मृण्मयायसपात्राणां न धूपमपि निर्दहेत् ।
धूपार्थं गुग्गुलुः साज्यो देयश्चाभावतोऽपरः ॥३५॥
सह घण्टारवेणैव दीपार्थं परिवर्जयेत् ।

मेषो मज्जातसीतैलं घृतं तैलविमिश्रितम् ॥३६॥
नाविकं मधुपर्कार्थे दधिक्षीरादिकं शुभम् ।
कौलत्थः कोद्रवः कृष्णः शाल्युत्थो नोदनो हितः ॥३७॥
नापकान्नं न मांसन्न आरनाळविभावितम् ।
न चाराधनकाले तु समुत्तिष्ठेत्त्वरान्वितः ॥३८॥
आसनास्तिक्रियां चैव उपरोधेन केनचित् ।
आधाराद्भगवद्बिम्बाद्भद्रपीठान्मलच्युतिः ॥३९॥
न कार्या कण्टकैर्लोहैर्मृदुकूर्चादिना विना ।
न स्नायान्न स्वपेन्नग्नो न मौनञ्चाचरेद्गुरौ ॥४०॥
नोच्छिष्टं संस्पृशेत्किञ्चिन्नाश्नीयाद्भगवद्गृहे ।
अग्निकर्षेण चाग्नेस्तु न गृहे मद्यसङ्करे ॥४१॥
भक्तानां कृतदीक्षाणां व्यञ्जनः शास्त्रार्थ एव हि ।
अन्येषां धर्मशास्त्रं न लोभनिर्मुक्तया धिया ॥४२॥
शिष्याणां विष्णुभक्तानां नित्यं कुर्याच्च संग्रहम् ।
मानमात्सर्यकार्पण्यलोभमोहादयो गुणाः ॥४३॥
नेतव्यास्तानवं सर्वे यावज्जीवावधिं क्रमात् ।
अकस्मादुपपन्नानां देशान्तरनिवासिनाम् ॥४४॥
इष्टोपदेशः कर्तव्यो नारायणरतात्मनाम् ।
यो न वेत्त्याच्युतं तत्वं पञ्चरात्रार्थमेव च ॥४५॥
तथा स वैष्णवीं दीक्षां नानाशास्त्रोक्तलक्षणाम् ।
.नेन सह सम्बन्धः कार्यो भिन्नक्रमेण तु ॥४६॥
. शास्त्रार्थस्य शास्त्राणां बुद्धिपूर्व उपप्लवः ।
आचर्तव्य इहाज्ञानात्पारम्पर्यगतं विना ॥४७॥
प्रष्टव्यो भगवद्भक्त आप्तो लक्षणकोविदः ।
प्रसिद्ध आर्जवे दृष्ट्वा नष्टं शास्त्रार्थलक्षणम् ॥४८॥

मुद्रामण्डलमन्त्राणां निस्सन्देहपरेण च ।
भवितव्यं गुरूणाञ्च सकाशात्सर्वदैव हि ॥४९॥
न च सर्वज्ञमन्त्राणां विना भावांशकेन तु ।
आनुकूल्यं गवेष्टव्यं शुक्त्वा मण्डलदर्शनात ॥५०॥
नाभिचक्रे तु हृत्पद्मे कन्दमूले गळावटे ।
भ्रमध्ये ब्रह्मरन्ध्रे च स्थानेष्वेतेषु मन्त्रराट् ॥५१॥
स्मर्तव्यसूर्यः सङ्काशः प्रवासे शयनेध्वनि ।
मृगसूकरमांसानि नाद्यान्मीनोत्थितानि च ॥५२॥
नाहंसकच्छपीयानि न शृङ्गाटफलानि च ।
न तथा पद्मबीजानि न वटाग्रं समारुहेत् ॥५३॥
छेद्यमानं न तं पश्येत्तद्दळं वाङ्घ्रिणा स्पृशेत् ।
पुण्यक्षेत्रे महातीर्थे सिद्धाश्रममनुत्तमम् ॥५४॥
वैष्णवीं पर्षदं वापि व्यक्तिस्थानं तथाच्युतम् ।
आसाद्य मण्डलं कृत्वा चक्रं वा द्वादशारकम् ॥५५॥
निर्वहणीयं विधिवच्चातुर्मास्यं महामते ! ।
गृहे संयमपूर्वं वा चक्रं कृत्वा तु कुल्यगम् ॥५६॥
चतुर्विधेन रजसा प्रतिमाया अथाग्रतः ।
संयुक्तानपि पूर्वोक्तैरेतांश्च समयान् सदा ॥५७॥
निर्वाहकाणां भक्तानां प्रयच्छेत्सततंगुरुः ।
ज्ञात्वा निर्वाहकं भक्तं तस्यादौ देशिकेन तु ॥५८॥
समुद्दिष्टाश्च ते सर्वे निर्वहत्यथ येषु च ।
तेषु तेषु नियोक्तव्यो यथा न च्यवते पुनः ॥५९॥
भवन्ति समयस्थस्य अविघ्नाः सविनाशकाः ।
विमुखाः सिद्धयो यान्ति ह्यापदो हि भवन्तिच ॥६०॥
ज्ञात्वैवं सावधानेन भवितव्यं हि तां प्रति ।

सारमादाय वै बुध्या निर्मथ्य नियमोदधिम् ॥६१॥
कृपया गुरुणा देवमठानां च पावकम्।
भक्तिरग्नौ गुरौ मन्त्रे शास्त्रे तदधिकारिणि ॥६२॥
नियतं पञ्चकस्यास्य यथावत्परिपालनात्।
अनुष्ठानात्तु नान्येषां स्वतन्त्रेण यथेच्छया ॥६३॥
भक्तानां मनसोभीष्टाः प्रवर्तन्ते हि सिद्धयः।
येऽनिर्मलेन मनसा उपरोधात्तु कुर्वते ॥६४॥
पालनं समयानाञ्च ते मज्जत्यासितेध्वनि।
सुप्रसन्नेन मनसा यथैतत्परिपाल्यते ॥६५॥
तथा प्रसादमभ्येति स्व आत्मा तु क्षितेपिणाम्।
नूनं कालुष्यमुक्तानां स्थितानामिह सत्पथे ॥६६॥
समयी साधकाचार्य पुत्राणां च भवेच्छुभम्।
इत्येवमुक्ता नियमा इतः किं श्रोतुमिच्छथ ॥६७॥

इति श्रीपाञ्चरात्रे ईश्वरसंहितायाम्
नियमविधानं नाम
द्वाविंशोऽध्यायः।

---

## अथ त्रयोविंशोऽध्यायः।

मुनयः।

भगवन्नारदमुने सर्वज्ञ वदतां वर!।
स्वरूपं दिव्यशास्त्रादेर्मन्त्राणां लक्षणं तथा ॥१॥
मुद्राणां लक्षणं मूर्तिध्यानं कुण्डादिलक्षणम्।
इविरादिविधानं च यद्यदत्रोपयुज्यते ॥२॥
तत्सर्वं विस्तरेणैव वदस्वानुग्रहादिना ॥

नारदः ।

शास्त्रं दिव्यं च मुन्युक्तं पौरुषं चेति वै त्रिधा ।
प्रोक्तं तत्तत्स्वरूपं तु प्रवक्ष्यामि मुनीश्वराः ! ॥३॥
यदर्थाद्यमसंदिग्धं स्वच्छन्दस्याक्षरं स्थिरम् ।
चातुरात्म्यस्वरूपेण संस्थितस्य विभोः सदा ॥४॥
स्वाभाविकं परत्वं तु यत्र यत्र समीरितम् ।
अन्यासां मन्त्रमूर्तीनां यत्र चौपाधिकं तु यत् ॥५॥
तुर्यादिजाग्रत्पर्यन्तः पदभेदः प्रकाशितः ।
भक्तानामनुकम्पार्थं यत्र वै चतुरात्मनः ॥६॥
शक्तीशस्य विभोर्यत्र विभवः संप्रकाशितः ।
अङ्गलांछनभूषाणां शक्तीनां विहगेशितुः ॥७॥
लयादिभेदभिन्नं तु स्वरूपं यत्र भावितम् ।
बीजपिण्डपदाद्येन चातुर्विध्येन सत्तमाः ॥८॥
मन्त्राः प्रवर्तिता यत्र यत्र स्थापनकर्मणि ।
अनुवेधक्रियाप्रोक्ता यत्र वै नित्यपूजनम् ॥९॥
मूलमूर्तौ तु सम्पूर्णं प्रोक्तं प्राधान्यतो द्विजाः! ।
तत्र कर्तुमशक्यं यत्स्नानाद्यं तावदेव तु ॥१०॥
बिम्बान्तरे तदर्थं तु कर्मबिम्बपुरस्सरे ।
विहितं दर्पणाद्येषु तदभावान्महामते ! ॥११॥
क्ष्माजलानलवाय्वाख्यनाभसीयेन वै द्विजाः! ।
धारणापञ्चकेनैव धारणाद्वितयेन च ॥१२॥
दहनाप्यायनाख्येन यत्र शुद्धिश्च भौतिकी ।
आगमश्रुतिमूलत्वं स्वस्य यदुपपादकम् ॥१३॥
तत्पारमेश्वरं वाक्यमाज्ञासिद्धं हि मोक्षदम् ।
एवमादेयवाक्यार्थं आगमो यो महामते! ॥१४॥

सन्मार्गदर्शनं कृत्स्नं विधिवादं च विद्धि तत् ।
तत्प्राधान्यात्तु यत्किञ्चित्समभ्यूह्य यथार्थतः ॥१५॥
पूर्वापराविरोधेन निर्वाक्यविचारतः ।
सर्वेषां रञ्जकं गूढं निश्चयीकरणक्षमम् ॥१६॥
पारमेश्वरवाक्योक्तमर्थजालं यथास्थितम् ।
प्रत्यभिज्ञापकं यच्चैतत्सात्त्विकं मुनिभाषितम् ॥१७॥
प्रशंसकं यत्सिद्धीनां सम्प्रवर्तकमप्यथ ।
मूलमूर्तिमनादृत्य कर्मार्चायां तु पुष्कलम् ॥१८॥
नित्यसम्पूजनं प्रोक्तं प्राधान्येन तु यत्र वै ।
ब्रह्मरुद्रादिबिम्बानां प्रमाणं लक्षणं तथा ॥१९॥
स्थापनं यत्र निर्दिष्टं यत्र वै जगतां पतेः ।
पूजनं तु समुद्दिष्टं प्राकृतानां जडात्मनाम् ॥२०॥
तत्त्वानामपि विप्रेन्द्र ! दिशां कालस्य वाचकैः ।
परमेष्ठ्यादिभिर्मन्त्रैः पंचभिर्यत्र वै क्रमात् ॥२१॥
स्थापनादिप्रतिष्ठान्तं पंचकं समुदीरितम् ।
यागपूर्वा हरिस्तोमपर्यन्ताः सप्त कीर्तिताः ॥२२॥
यागा यत्र तथा सप्त तत्क्रमादधिकारिणः ।
उक्तं यत्र प्रतिष्ठायां षोडशन्यासकल्पनम् ॥२३॥
एवं जानीहि तत्सर्वं राजसं मुनिभाषितम् ।
भगवन्तं समुद्दिश्य शक्तभावं विनैव तु ॥२४॥
ब्रह्मरुद्रमुखानां तु विबुधानां तथैव च ।
मातृणामपि दुर्गायाः स्वातन्त्र्येण तु यत्र वै ॥२५॥
मन्त्रध्यानं प्रमाणं च लक्षणं स्थापन तथा ।
निर्दिष्टं तामसं नाम मुनिवाक्यं तु विद्धि तत् ॥२६॥
अनर्थकमसम्बद्धमल्पार्थं शब्दडम्बरम् ।

अनिर्वाहकमाद्योक्तेर्वाक्यं तत्पौरुषं स्मृतम् ॥२७॥
हेयं चानर्थसिद्धीनामाकरं नरकावहम् ।
पारमेश्वरवाक्यार्थैर्यद्विरोधि न तत् द्विज! ॥२८॥
संग्राह्यं सात्त्विकाद्येषु मुनिवाक्येषु यत्नतः ।
यदप्यपेक्षितं विप्र! संग्राह्यमविरोधि तत् ॥२९॥
सात्त्विकादिक्रमाद्येषु समभ्यूह्यं महामते! ।
प्रसिद्धार्थमुपादाय सङ्गतार्थं विलक्षणम् ॥३०॥
अपि चेत्पौरुषं वाक्यं ग्राह्यं तन्मुनिवाक्यवत् ।
एवं दिव्यादिशास्त्राणां भेदं ज्ञात्वा यजेद्धरिम् ॥३१॥
यो न ज्ञात्वा तु साङ्कर्यं पूजाद्यमनुतिष्ठति ।
स हि सर्वस्य जगतः साङ्कर्यं कुरुते सदा ॥३२॥
विशेषात्स्वस्य वंशस्य तस्मादापद्यपि द्विजाः! ।
न कुर्याच्छास्त्रसांकर्यं हितैषी शास्त्रकोविदः ॥३३॥
स्वयंव्यक्तं तथा सैद्धं विबुधैश्च प्रतिष्ठितम् ।
मुनिमुख्यैस्तु गन्धर्वैर्यक्षैर्विद्याधरैरपि ॥३४॥
रक्षोभिरसुरैर्मुख्यैः स्थापितं मन्त्रविग्रहम् ।
दिव्यशास्त्रोक्तविधिना पूजयेच्छास्त्रकोविदः ॥३५॥
स्थापितं मनुजैर्देवं मुनिवाक्योक्तमार्गतः ।
पूजयेद्द्विज! तत्रापि ज्ञानिभिस्तत्त्वदर्शिभिः ॥३६॥
वासुदेवैकनिष्ठैस्तु देवतान्तरवर्जितैः ।
व्यामिश्रयागमुक्तैस्तु तीव्रभक्तिसमन्वितैः ॥३७॥
स्थापितं मनुजेन्द्रैस्तु ह्यनुवेधादिकोविदैः ।
अर्चयेद्देवदेवेशं दिव्यशास्त्रोक्तवर्त्मना ॥३८॥
मुनिवाक्योक्तमार्गेण पूजनं यत्र वर्तते ।
तत्रापि दिव्यमार्गाच्चेत्पूजनं कर्तुमिच्छति ॥३९॥

मुनिमार्गं परित्यज्य दिव्यमार्गेण पूजयेत् ।
भवेत्सन्निधिमाहात्म्यं कालं कल्पक्षयावधि ॥४०॥
दिव्यमार्गेण पूजाद्यं वर्तते यत्र नित्यशः ।
तत्र दिव्यं परित्याज्यं न कदाचिन्महामते! ॥४१॥
मुनिवाक्योक्तमार्गेण न कुर्यात्पूजनादिकम् ।
कुर्याद्वा यदि सम्मोहाद्द्विजः सम्मूढचेतनः ॥४२॥
संप्रयात्यचिरात्तस्य भक्तिर्वर्जिन वै सह ।
समन्तं कर्मतन्त्रं च सिद्धयश्च पराङ्मुखाः ॥४३॥
इहैव शीघ्रं विप्रेन्द्र! देहान्ते गतसन्ततिः ।
घोरं प्रयाति नरकं राजा राष्ट्रं च नश्यति ॥४४॥
तस्मात्सर्वप्रयत्नेन दिव्यमार्गं तु न त्यजेत् ।
तामसेन तु मार्गेण पूजनं यत्र वर्तते ॥४५॥
तत्रापि राजसेनैव पूजनं सिद्धिदं भवेत् ।
राजसेन तु पूजाद्यं वर्तते यत्र नित्यशः ॥४६॥
तत्रापि सात्त्विकेनैव पूजनं शुभदं सदा ।
सात्त्विकेन तु पूजाद्यं वर्तते यत्र चान्वहम् ॥४७॥
तत्र राजसमार्गेण न कुर्यात्पूजनादिकम् ।
यत्र राजसमार्गेण प्रवृत्तं त्वर्चनादिकम् ॥४८॥
तत्र तामसमार्गेण न कुर्यादर्चनादिकम् ।
त्रिविधानां राजसानामन्योन्यं स्यान्न सङ्करः ॥४९॥
सर्वत्र पौरुषे वाक्ये तद्ग्राह्यमविरोधि यत् ।
केवलं तद्विधानेन न कुर्यात् स्थापनादिकम् ॥५०॥
एवं दिव्यादिशास्त्रस्य स्वरूपं कथितं मया ।
मन्त्रस्वरूपमधुना कथ्यते मुनिपुङ्गवाः! ॥५१॥
सर्वेषु विष्णुमन्त्रेषु मन्त्राः स्युर्व्यापकास्त्रयः ।

आद्यं नारायणाष्टार्णं द्वितीयं द्वादशाक्षरम् ॥५२॥
वासुदेवस्य योगीन्द्रास्ततो विष्णुषडक्षरम् ।
साधारणास्त्विमे मन्त्रास्त्रयः सर्वासु मूर्तिषु ॥५३॥
अन्ये तु मनवस्तत्तन्मूर्तिमात्रपरा द्वतः ।
व्यापकत्रितयेनार्च्याः सर्वा अपि च मूर्तयः ॥५४॥
मन्त्रैरन्यैस्तु सम्पूज्यास्तत्तन्मूर्तय एव हि ।
तस्मात्सर्वेषु मन्त्रेषु व्यापकत्रितयं वरम् ॥५५॥
त्रिष्वप्येषु व्यापकेषु मन्त्रो ह्यष्टाक्षरोऽधिकः ।
अष्टाक्षरादिमन्त्राणामुद्धारं शृणुतादरात् ॥५६॥
उद्धरेत्प्रणवं पूर्वं नमःशब्दमनन्तरम् ।
ततो नारायणायेति ह्येतदष्टाक्षरो मनुः ॥५७॥
प्रणवान्ते नमःशब्दं तुर्यान्तं भगवत्पदम् ।
वासुदेवाय वै दद्यात्पदं पञ्चाक्षरं ततः ॥५८॥
वासुदेवस्य देवस्य मन्त्रोऽयं द्वादशाक्षरः ।
चतुर्थ्यन्तं विष्णुपदं तारेण नमसान्वितम् ॥५९॥
आदावन्ते च तन्मन्त्रः षडक्षर उदीरितः ।
ज्ञानादिगुणसंयुक्तैरक्षरैर्बिन्दुभूषितैः ॥६०॥
हृदयाद्यङ्गक्लृप्तिः स्याच्छिष्टवर्णान्यपि द्विजाः ! ।
नेत्रेण योजयेदेवमङ्गक्लृप्तिः प्रकीर्तिता ॥६१॥
ततस्तु मूर्तिमन्त्राणामुद्धारक्रम उच्यते ।
प्रशस्ते विजने गुप्ते गन्धलिप्ते धरातले ॥६२॥
सुधूपितेऽर्घ्यपुष्पाढ्ये वर्णचक्रं प्रसार्य च ।
यस्मिन् प्रतिष्ठितं विश्वमाब्रह्मभुवनादिकम् ॥६३॥
येनोदितेन जगतः प्रभवः समनन्तरम् ।
स्वात्मन्युपरते तस्मिन् प्रळयः सम्प्रजायते ॥६४॥

प्रेरकं चन्द्रसूर्याभ्यां सबाह्याभ्यन्तरं तु यत् ।
नित्योदितं यथाक्षस्थं वर्णनिम्नभ्रामकम् ॥६५॥
यत्र स्थानाकभागेन वर्णात्मा भगवान् स्थितः ।
अकाराद्यो विसर्गान्तः सौरचान्द्रकलागणः ॥६६॥
ह्रस्वदीर्घविभागेन नाभौ यत्र द्विरष्टकः ।
कादिभान्तोप्यरांशस्थः प्राकृतस्तत्त्वसंचयः ॥६७॥
पृथिव्यादिप्रकृत्यन्तो युग्मयोगेन लाङ्गलिन् ! ।
कलनादेहभृत्कालो नेमिगो नवलक्षणः ॥६८॥
मकाराद्यो हवर्गान्तो यत्र प्रथिगणे स्वयम् ।
कालवैश्वानरः साक्षान्मार्ताण्डायुतदीधितिः ॥६९॥
ज्वालायुतसहस्राढ्यो वर्णान्तो भगवान् स्थितः ।
आमध्यात्प्रथिपर्यन्तात्क्रमोन्तां वर्णसन्ततिम् ॥७०॥
उच्चार्यार्घ्यादिनाभ्यर्च्य विद्याबीजं हि चक्रराट् ।
ततः समुद्धरेन्मन्त्रं परमात्मनि वाचकम् ॥७१॥
गळन्तममृतप्रख्यमचिरान्मोक्षसिद्धिदम् ।
अक्षस्थमुद्धरेत्पूर्वं नेमिषष्ठमनन्तरम् ॥७२॥
नाभिद्वितीयेनाक्रान्तं द्वितीयमिदमक्षरम् ।
द्वितीयं दशसंख्याच्च तदधश्चाष्टमात्परम् ॥७३॥
नाभेस्त्रयोदशोपेतं तृतीयमिदमक्षरम् ।
अथ द्वितीयं नवमान्नाभितुर्यादिनान्वितम् ॥७४॥
द्वितीयमष्टमाद्वर्णं केवलं विद्धि पञ्चमम् ।
विज्ञानपदमादाय त्र्यक्षरं तदनन्तरम् ॥७५॥
आद्यमेकादशाद्वर्णं भिन्नं नाभ्यपरेण तु ।
नेमेस्तृतीयवर्णस्य ततस्तदुपरि न्यसेत् ॥७६॥
मन्त्रार्णं नवमं ह्येतद्दशमं मे निबोध तु ।

नाभिद्वितीयेनाक्रान्तं गाग्वर्णं चाग्रगारतम् ॥७७॥
नेमेर्द्वितीयं तदनु नेमेरादाय चाष्टमम् ।
तदुद्देशात्तृतीयं च स्थितं तत्पञ्चगोपरि ॥७८॥
त्रयोदशमिदं विद्धि नवमादपरं ततः ।
षष्ठस्य नेमिवर्णस्य ऊर्ध्वे तन्नितयं न्यसेत् ॥७९॥
युक्तं नाभितृतीयेन अथ षोडशमुच्यते ।
द्वितीयं दशमाद्वर्णान्नाभ्येकादशसंयुतम् ॥८०॥
चैतन्यायपदं दद्यात्सनमस्कमतः परम् ।
द्वाविंशार्णो ह्ययं मन्त्रः पदैः षड्भिरलंकृतः ॥८१॥
तत्रैकार्णं पदं ज्ञानं चतुर्वर्णं पदं बलम् ।
षडक्षरैश्चाप्यैश्वर्यं वीर्यं पञ्चाक्षरं परम् ॥८२॥
चतुर्वर्णं पदं तेजः शाक्तं स्याद्व्यक्षरं च यत् ।
तेजो वीर्यं बलं शक्तिरैश्वर्यं ज्ञानमेव च ॥८३॥
दृगस्त्रं कवचं शैखं शिरो हृत्षड्यथाक्रमम् ।
मन्त्रः समाधिविषये नानाभूमिजयेषु च ॥८४॥
निराकारो निरङ्गश्च स्मर्तव्यो ब्रह्मलक्षणः ।
तत्प्राप्त्युपाये प्रथमे यागहोमादिके तु वै ॥८५॥
साकारं संस्मरेत्साङ्गं परिवारेण चावृतम् ।
आनीता व्यक्ततां येन स्वयं ज्ञानादयो गुणाः ॥८६॥
शश्वद्यागसमाप्त्यर्थं कर्मणामनुकम्पया ।
सोनङ्गः संस्मृतो मन्त्रो भक्तिश्रद्धावशेन तु ॥८७॥
फलं यच्छति वै नूनं नित्यं तद्भावितात्मनाम् ।
प्राधान्येन त्वथैश्वर्यं मोक्षो यत्रानुषङ्गतः ॥८८॥
तत्र तद्विघ्नशान्त्यर्थमलान्तं विद्धि मन्त्रपम् ।
विपर्ययेतु नेत्रान्तो मन्त्रो यस्मान्महामते! ॥८९॥

दृग्दृष्टिशुद्धिमार्गाणां क विशाः शान्तचेतसाम् ।
स्वकमन्तर्गतं तेजः स्वातन्त्र्याच्च बहिष्कृतम् ॥९०॥
येन येन हि मन्त्रेण स च नेत्रान्वितःस्मृतः ।
स्वप्रकाशस्त्वनुपमो येन येन हृदन्तरे ॥९१॥
सितासितः समाकृष्य: स स तद्वाचकोन्वितः ।
अथ मन्त्रचतुष्कं तु भिन्नषाड्गुण्यवाचकम् ॥९२॥
कर्मणां मोक्षदं शश्वत्पूर्वोद्दिष्टं निबोध तु ।
आदायाक्षगतं बीजं नाभिपूर्वमतःपरम् ॥९३॥
अरादेकादशात्पूर्वं तस्याधो विनिवेशयेत् ।
वर्णं नेमेस्तृतीयं यत्तृतीयमिदमक्षरम् ॥९४॥
द्वितीयमष्टमाद्वर्णं नाभेस्तुर्यादिनान्वितम् ।
ततस्तु नवमं नेमेः केवलं विद्धि पञ्चमम् ॥९५॥
अष्टमादपरं वर्णं द्वितीयस्वरसंयुतम् ।
षष्ठमेतद्विजानीयात्सप्तमं दशमात्परम् ॥९६॥
अथ द्वितीयं दशमादादायोर्ध्वे तु विन्यसेत् ।
अष्टमात्तु द्वितीयस्य मन्त्रार्णमिदमष्टकम् ॥९७॥
द्वितीयात्प्रथमं वर्णमष्टमादपरं ततः ।
नाभ्येकादशमोपेतं द्वितीयं नेमिमण्डलात् ॥९८॥
पूर्वमेकादशाच्छुद्धं तादृङ्नेमेस्तृतीयकम् ।
नेमिपूर्वं च तदनु नाभेरेकादशाङ्कितम् ॥९९॥
नेमे षष्ठमथादाय स्थितं तत्पञ्चमोपरि ।
ततो नाभिद्वितीयेन युक्तं नेमेस्तृतीयकम् ॥१००॥
द्वितीयं केवलं नेमेरादाय च महामते! ।
कर्मनमःपदं पश्चाद्योजयेच्चतुरक्षरम् ॥१०१॥
एकविंशतिभिर्वर्णैरयं मन्त्र उदाहृतः ।

अभिन्नः पदभेदेन भवेदेकाधिकस्तु वै ॥१०२॥
प्राग्वर्णेन पदं पूर्वं पञ्चार्णं द्वितमं भवेत् ।
षडक्षरं तृतीयं तु चतुर्थं तद्वदेव तु ॥१०३॥
द्व्यक्षरं पंचमं विद्धि तद्वत् षष्ठं महामते ।
अथापरं महामन्त्रं द्वितीयमवधारय ॥१०४॥
यत् ज्ञात्वा न पुनर्जन्म भवत्याराधकस्य च ।
आदायाक्षस्य मध्यस्थं नाभिपूर्वमतःपरम् ॥१०५॥
पूर्वं नेमेस्तु तस्यैव योज्यं नाभित्रयोदशम् ।
द्वितीयादपरं वर्णं सर्वशक्त्यात्मनेपदम् ॥१०६
द्वितीयं द्वादशाद्वर्णं द्वितीयात्प्रथमं ततः ।
पंचमं च वहिष्टेभ्यस्त्रीनेतान्विद्धि केवलान् ॥१०७॥
नाभ्येकादशसंभिन्नं द्वितीयं चाष्टमात्ततः ।
नमोनमः पदयुतो मन्त्रश्चाष्टादशाक्षरः ॥१०८॥
अस्यैकार्णं पदं पूर्वं त्र्यक्षरं तदनन्तरम् ।
षडक्षरं तृतीयं तु चतुर्थं चतुरक्षरम् ॥१०९॥
द्वितीयं द्व्यक्षरंचान्त्यपदयोः संप्रकीर्तितम् ।
तृतीयमथ वक्ष्यामि मन्त्रं मन्त्रविदां वर! ॥११०॥
यत ज्ञात्वा मानसं शुद्धिं परमां याति कर्मिणाम् ।
बीजमादाय मध्यस्थमाद्यमेकादशात्ततः ॥१११॥
नेमेस्तृतीयं तदथ ऊर्ध्वं नाभ्यपरं तु वै ।
अथाद्यमष्टमाद्वर्णं द्वितीयस्वरसंयुतम् ॥११२॥
तद्वेकादशादाद्यं वर्णमन्यं समाहरेत् ।
दशमादपरंवर्णं नेमेरष्टकमन्ततः ॥११३॥
युक्तं नाभिद्वितीयेनत्वाद्यं नेम्यक्षरं तु यत् ।
नाभित्रयोदशोपेतमादाय दशमात्परम् ॥११४॥

द्वितीयं नवमाद्वर्णं युक्तं नाभ्यपरेण तु ।
तत्संख्यं दशमाच्छुद्धं ततो बाह्यात्तु पञ्चमम् ॥११५॥
नेमेर्द्वितीयं तदधो युक्तं नाभेः परेण तु ।
द्वितीयं दशमाद्वर्णं प्राणाय त्र्यक्षरं पदम् ॥११६॥
ततस्त्वेकादशाद्याद्यं केवलं च समाहरेत् ।
अथ नाभिद्वितीयेन युक्तं नेमेस्तृतीयकम् ॥११७॥
नाभित्रयोदशोपेतं बहिष्ठेप्यपरं ततः ।
नेमेस्तृतीयस्योर्ध्वे तु नवमादपरं न्यसेत् ॥११८॥
ततो नाभिद्वितीयेन युक्तं प्राङ्नेमिमण्डलात् ।
द्वितीयमथ वै बाह्यात्तनयकं हि केवलम् ॥११९॥
त्रयोविंशतिभिर्वर्णैरुपेतोप्येव मन्त्रराट् ।
पदैः पूर्वोक्तसंख्यैस्तु तेषां भेदोप्यथोच्यते ॥१२०॥
पूर्वमेकाक्षरं विद्धि द्वितीयं तु नवाक्षरम् ।
तृतीयं द्व्यक्षरं चैव चतुर्थं त्र्यक्षरं स्मृतम् ॥१२१॥
षडक्षरमथोर्ध्वस्थं द्व्यक्षरं तदनन्तरम् ।
चतुर्थमधुना मन्त्रं निबोध गदतो मम॥१२२॥
येन विज्ञातमात्रेण संविदुल्लसते वरा ।
आद्याद्यादौ यदक्षरं नाभिपूर्वमनन्तरम् ॥१२३॥
ततस्तृतीयादपरं वर्णमादाय लाङ्गलिन् ! ।
नेमिद्वितीयं तस्याप्यवदधो नाभिपंचमम् ॥१२४॥
द्वितीयमष्टमाद्वर्णं तत्संख्यं नेमिमण्डलात् ।
आद्यावैतद्वयं कुर्याद्युक्तं नाभ्यपरेण तु ॥१२५॥
अथ नाभितृतीयेन युक्तं बाह्यात्तु पंचमम् ।
आद्यात्पूर्वमथादाय नाभिसप्तमसंयुतम् ॥१२६॥
द्वितीयमष्टमाद्वर्णं द्वितीयं नेमिमण्डलात् ।

आदायाभ्यां नियोक्तव्यं द्वितीयं नाभिगोचरात् ॥१२७॥
अथ द्वितीयं दशमात्केवलं वर्णमाहरेत् ।
द्वितीयमष्टमाद्वर्णं तदूर्ध्वे दशमात्परम् ॥१२८॥
नाभिद्वितीयमस्यैव योजयेत्तदनन्तरम् ।
ततो नेमिद्वितीयं तु केवलं वर्णमाहरेत् ॥१२९॥
अथ नाभेर्यन्दादिस्थं प्राग्वर्णं दशमादरात् ।
तदधो द्वितयं बाह्यात्प्रथिवर्णमनन्तरम् ॥१३०॥
युक्तं नाभिद्वितीयेन त्वादाय तदनन्तरम् ।
नेमिद्वितीयसंख्यं यन्नमस्कारपदं ततः ॥१३१॥
अष्टादशाक्षरो ह्येष द्व्यधिकः पदसंख्यया ।
एकार्णं पदमाद्यं तु द्वितीयं चतुरक्षरम् ॥१३२॥
पंचाक्षरं तृतीयं तु चतुर्थं चतुरक्षरम् ।
तथैव पंचमं विद्धि ह्यन्तस्थं द्व्यक्षरं स्मृतम् ॥१३३॥
यत्र यत्र पदानां च वर्णाधिक्यमुदाहृतम् ।
तत्रादौ नाभिपूर्वं तु व्याहृत्याद्यं पदं न्यसेत् ॥१३४॥
अथाभिन्नतनोर्मन्त्रं देवस्यास्य महात्मनः ।
विशाखयूपसंज्ञस्य वक्ष्ये विद्याविवेककम् ॥१३५॥
वर्णमक्षस्थमादाय त्वाद्यमेकादशात्ततः ।
भिन्नं नाभिद्वितीयेन तृतीयं नेमिमण्डलात् ॥१३६॥
द्वितीयं केवलं बाह्यात्तेजोरूपाय वै पदम् ।
ततस्त्वेकादशात्पूर्वं केवलं तु समाहरेत् ॥१३७॥
तृतीयमक्षरं बाह्याद्युक्तं नाभिपरेण तु ।
दशमादपरं वर्णं पूर्वमेकादशात्ततः ॥१३८॥
एकादशस्वराक्रान्तमुद्धरेत्तदनन्तरम् ।
ततो नाभिद्वितीयेन युक्तं मध्यक्षरं हि यत् ॥१३९॥

केवलं द्वितयं चाद्यादाद्यमेकादशात्तथा ।
नेमेस्तृतीयं तदनु द्वितीयस्वरसंयुतम् ॥१४०॥
दशमाद्परं शुद्धं पूर्वमेकादशात्ततः ।
नाभ्येकादशसंयुक्तं तदन्तेऽमललोचन! ॥१४१॥
नाभेस्तृतीयसंयुक्तं प्रथिवर्णं समाहरेत् ।
अथ नाभिद्वितीयेन युक्तं यत्परमष्टमात् ॥१४२॥
नेमेर्द्वितीयं तदनु नमस्कारसमान्वितम् ।
चतुर्विंशतिभिर्वर्णैर्युक्तो मन्त्रोऽयं महान् ॥१४३॥
प्रणवेन पदं चास्य पूर्वमेकाक्षरं स्मृतम् ।
द्वितीयं त्र्यक्षरं प्रोक्तं पंचार्णं तदनन्तरम् ॥१४४॥
षडक्षरं चतुर्थं तु सप्तार्णं चात्र पंचमम् ।
पदं तु व्यक्षरं षष्ठं मन्त्रस्यास्य महामते! ॥१४५॥
नानामन्त्रस्वरूपेण ह्यादिदेवः परः प्रभुः ।
आदिमध्यावसानेषु स्थितः सर्वस्य सर्वदा ॥१४६॥
चतुर्व्यूहचतुष्के स्वे शान्तादिव्यक्तलक्षणे ।
प्राधान्येन त्रयाणां च देवानामवतिष्ठते ॥१४७॥
यथाम्बरस्थः सविता त्वेक एव महामते! ।
जलाश्रयाणि चाश्रित्य वाह्वात्म्यं सम्प्रदर्शयेत् ॥१४८॥
एवमेकोपि भगवान् नानामन्त्राश्रयेषु च ।
तुर्यादिपदसंस्थेषु बहुत्वमुपयाति च ॥१४९॥
अनुग्रहार्थं भक्तानां नानाश्रद्धावशेन तु ।
चतुष्कमथ मन्त्राणां निबोध गदतो मम ॥१५०॥
सितादिवर्णव्यक्तीनां वाचकत्वेन वै क्रमात् ।
अक्षस्थं नाभिपूर्वं च वर्णं यद्दशमात्परम् ॥१५१॥
नेमिपूर्वमथो नाभेस्त्रयोदशसमन्वितम् ।

द्वितीयं द्वादशाद्वर्णं द्वितीयात्प्रथमं ततः ॥१५२॥
पंचमं च बहिष्टेभ्यश्चैतान्विद्धि केवलान् ।
ततोऽष्टमाद्द्वितीयं तु नाभ्येकादशवेदितम् ॥१५३॥
पंचार्णं वासुदेवाख्य पदं च तदनन्तरम् ।
त्रयोदशाक्षरो ह्येष प्रथमः परिकीर्तितः ॥१५४॥
क्रमेण वक्ष्याम्यन्येषामुद्धारं तु यथास्थितम् ।
अक्षस्थमक्षरं नाभेर्द्वितीयं तदनन्तरम् ॥१५५॥
पूर्वमन्त्रानुसारेण ततो दद्यात्पदत्रयम् ।
अथात्र पंचदशमं नाभेरोङ्कारपूर्वकम् ॥१५६
पदत्रयेण तेनैव संयुक्तं विद्धि मन्त्रकम् ।
अथ षोडशसंख्यं यन्नाभेः प्रथमपूर्वकम् ॥१५७॥
पूर्वोक्तलक्षणानां तु पदानां प्राङ्निवेशयेत् ।
अस्मान्मन्त्रत्रयाद्विद्धि द्वयं प्राङ्मन्त्रसंख्यया ॥१५८॥
एक एकार्णरहितः पदभेदगतः शृणु ।
पदद्वयं तु सर्वेषामाद्यमेकाक्षरं स्मृतम् ॥१५९॥
द्व्यक्षरं च तृतीयं तु चतुर्थं चतुरक्षरम् ।
पंचाक्षरं पंचमं वै त्रयाणां समुदाहृतम् ॥१६०॥
तदेकस्य चतुर्वर्णं प्रद्युम्नाख्यस्य लाङ्गलिन् ।
एवं स्वप्नपदस्थस्य समासात्परिकीर्तितम् ॥१६१॥
क्रमशोऽथ चतुर्णां वै वक्ष्ये मन्त्रगणं शृणु ।
अक्षान्तर्गतमादाय नाभेः पूर्वगतः परम् ॥१६२॥
भिन्नं नाभिद्वितीयेन नेमिपूर्वमनन्तरम् ।
नाभिपंचमसंयुक्तं दशमात्प्रथमं ततः ॥१६३॥
तृतीयं च द्वितीयं च नेमेरादाय चाङ्कयेत् ।
नाभिद्वितीयबीजेन नवमादपरं ततः ॥१६४॥

तदधो विनियोक्तव्यं द्वितीयं द्वादशात्तु यत् ।
पंचमेनाथ वै नाभेर्युक्तं कुर्यादनन्तरम् ॥१६५॥
अष्टमादपरं शुद्धं नेमिपूर्वं तथाविधम् ।
युक्तं नाभिद्वितीयेन द्वितीयं नेमिमण्डलात् ॥१६६॥
भूयस्तत्केवलं दद्यात्पदं योगेश्वराय वै ।
तदन्ते चक्रिणे शब्दमथ नेमेर्यदष्टमम् ॥१६७॥
पञ्चमेनान्वितं नाभेस्तदन्ते विनिवेश्य च ।
शुद्धमेकादशात्पूर्वमाद्यं तदनु चाष्टमात् ॥१६८॥
नेमेस्तृतीयेनाक्रान्तं ध्वजायेति पदं न्यसेत् ।
भिन्नमेकादशात्पूर्वं नाभितुर्येण वै ततः ॥१६९॥
अष्टमादपरं शुद्धं पञ्चमं नेमिमण्डलात् ।
द्वितीयस्वरसंयुक्तं सप्तत्र्यक्षरं पदम् ॥१७०॥
वासुदेवाय तदनु सनमस्कं पदं भवेत् ।
षट्त्रिंशदक्षरो मन्त्रो भेदस्तस्याधुनोच्यते ॥१७१॥
पदमेकादशार्णं तु प्रथमं परिकीर्तितम् ।
पञ्चाक्षरं द्वितीयं तु तृतीयं त्र्यक्षरं स्मृतम् ॥१७२॥
षडक्षरं चतुर्थं तु पञ्चार्णं पञ्चमं तु वै ।
षष्ठं सप्ताक्षरं विद्धि पदं पदविदां वर ! ॥१७३॥
प्रणवान्ते त्वथादाय द्वितीयं नाभिमण्डलात् ।
चतुर्दशेन वै नाभेर्युक्तं नेम्यष्टकं ततः ॥१७४॥
द्वितीयं दशमाच्छुद्धमथ भूयः समाहरेत् ।
तदधो नवमादन्त्यं नाभेस्तुर्यादिनान्वितम् ॥१७५॥
एकादशस्वराक्रान्तं द्वितीयं दशमात्ततः ।
बाह्यादथाष्टमं नाभेर्युक्तं पञ्चदशेन तु ॥१७६॥
केवलं पञ्चमं नेमेर्द्वितीयं चाष्टमात्ततः ।

नेमेस्तृतीयेनाक्रान्तं वर्णमेतत्समाहरेत् ॥१७७॥
युक्तं नाभेस्तृतीयेन प्रागरात्प्रथमं तु वै ।
द्वितीयं दशमाद्वर्णं नाभेरेकादशाङ्कितम् ॥१७८॥
पञ्चाक्षरं पदं दद्याद्यदन्ते तालकेतवे ।
भूयस्तदवसाने तु पञ्चार्णं नीलवाससे ॥१७९॥
प्रथमात्प्रथमं चाथ द्वितीयस्वरसंयुतम् ।
केवलं नेमिपूर्वं तु आद्यमेकादशात्ततः ॥१८०॥
बहिष्ठेभ्यश्चतुर्थं तु द्वाभ्यां नाभेः परं न्यसेत् ।
केवलं द्वितीयं बाह्यात्सङ्कर्षणाय वै पदम् ॥१८१॥
तृतीयं प्रथमं नेमेरादायाकारसंयुतम् ।
द्वितीयमपि वै बाह्याच्छुद्धं तदनु वै नमः ॥१८२॥
षट्त्रिंशाक्षरसंयुक्तस्त्वयं मन्त्रो महामते ! ।
षड्वर्णं पदमस्याद्यं पञ्चार्णं तदनन्तरम् ॥१८३॥
दशाक्षरं तृतीयं तु त्रीणि पञ्चाक्षराण्यतः ।
अथादायाक्षरं बीजं नाभेः पञ्चदशं ततः ॥१८४॥
शार्ङ्गधृते पदं दद्याच्चतुर्वर्णमतः परम् ।
नेमिपूर्वमथादाय प्रागरात्प्रथमं ततः ॥१८५॥
तृतीयं च बहिष्ठेभ्यः पदं त्र्यर्णं ध्वजाय वै ।
अथो तृतीयं बाह्यात्तु प्रथमात्प्रथमं ततः ॥१८६॥
तदधो विनियोक्तव्यं द्वितीयं वर्णमष्टमात् ।
द्वितीयस्वरसंयुक्तमथ बाह्यात्तु पंचमम् ॥१८७॥
अष्टमं तु तदुद्देशात्केवलं पुनरेव तत् ।
नाभेरेकादशाक्रान्तं षडक्षरमनन्तरम् ॥१८८॥
पदं सनत्कुमाराय पंचाक्षरमनन्तरम् ।
पदं जगत्प्रियायेति प्रद्युम्नाय नमस्ततः ॥१८९॥

चतुस्त्रिंशाक्षरः सोयं मन्त्रः शृणु पदान्यपि ।
आद्यं षडक्षरं ज्ञेयं द्वितीयं तद्वदेव हि ॥१९०॥
पंचाक्षरं तृतीयं तु चतुर्थं तु षडक्षरम् ।
पंचार्णं पंचमं विद्धि षड्वर्णं षष्ठमेव हि ॥१९१॥
अक्षरस्थं षोडशं नाभेर्द्वितीयं दशमात्तु वै ।
केवलं ह्यथ तेनैव आक्रांतं नवमात्परम् ॥१९२॥
अथादाय च तस्यान्ते प्रथमात्प्रथमं परात् ।
युक्तं नाभिद्वितीयेन वर्णमेतन्महामते ! ॥१९३॥
वर्णद्वयं पदस्यादौ तदेवास्तेस्य वै पुनः ।
अथ द्वितीयं नवमात्प्रथमात्प्रथमं ततः ॥१९४॥
तृतीयमथ वै नेमेर्द्वितीयस्वरसंयुतम् ।
द्वितीयं केवलं बाह्यात्सप्तमं नाभिमण्डलात् ॥१९५॥
अथ षष्ठेन वै नेमेराक्रान्तं द्वितयं न्यसेत् ।
प्राग्वर्णं दशमाद्योगेः पञ्चमस्योर्ध्वगं तथा ॥१९६॥
चतुर्थादपरं वर्णं द्वितीयं नेमिमण्डलात् ।
द्वाभ्यां नाभिद्वितीयं तु योजयेत्तदनन्तरम् ॥१९७॥
दशमादपरं वर्णं तृतीयस्वरसंयुतम् ।
तृतीयमथ वै नेमेर्नाभिपञ्चमसंयुतम् ॥१९८॥
द्वितीयस्वरसंयुक्तं द्वितीयं नवमादरात् ।
अस्यैवाथो नियोक्तव्यं दशमात्प्रथमं हि यत् ॥१९९॥
शुद्धं नेमेर्द्वितीयं तु पदं स्वसितवाससे ।
विष्वक्सेनाय तदनु नमस्कारसमन्वितम् ॥२००॥
द्वात्रिंशार्णो ह्ययं मन्त्रः पदभेदेन वै पुनः ।
एकाधिकस्तु भवति पदान्यथ निबोध मे ॥२०१॥
द्व्यक्षरं तु पदं पूर्वं द्वितीयं त्वष्टवर्णकम् ।

त्रीणि पञ्चाक्षराण्यन्यत्षष्ठं सप्ताक्षरं स्मृतम् ॥२०२॥
अप्ययावसरे प्राप्ते स्मरणे चार्चने विभोः ।
शृणु मन्त्रचतुष्कं तु पुनरन्यत्समासतः ॥२०३॥
आद्यमेकादशाद्वर्णं पञ्चमस्वरसंयुतम् ।
युक्तं स्वरेण तेनैव तृतीयं नेमिमण्डलात् ॥२०४॥
द्वितीयस्वरसंयुक्तमथ बाह्यात्तु सप्तमम् ।
द्वितीयं केवलं नेमेरायन्ते प्रणवो नमः ॥२०५॥
शुद्धं त्वथाष्टमं बाह्याद्द्वितीयमथ चाष्टमात् ।
अथो नेमेर्द्वितीयेन युक्तं नाभ्यक्षरेण तु ॥२०६॥
केवलं द्वितयं बाह्यान्नमस्कारं ततः परम् ।
अथाक्षरं नाभिपूर्वं द्वितीयं त्रितयादरात् ॥२०७॥
तदधो द्वितयं बाह्यान्नाभिपंचमसंयुतम् ।
अथ नाभिद्वितीयेन युक्तं यत्परमष्टमात ॥२०८॥
केवलं द्वितयं बाह्यान्नमस्कारमतःपरम् ।
अक्षरबीजं तदनु द्वितीयं द्वादशादरात् ॥२०९॥
द्वितीयात्प्रथमं चाथ पंचमं नेमिमण्डलात् ।
केवलं द्वितयं हेतद्द्वितीयं च तथाष्टमात् ॥२१०॥
एकादशस्वराक्रान्तं वासुदेवाय वै नमः ।
सप्ताक्षरस्तु प्राङ्मन्त्रो द्वितीयस्तु षडक्षरः ॥२११॥
पूर्वतुल्यस्तृतीयस्तु चतुर्थो द्वादशाक्षरः ।
पदभेदविनिर्मुक्तमेतन्मन्त्रचतुष्टयम् ॥२१२॥
गोपनीयं प्रयत्नेन विधिज्ञैः सिद्धिमीप्सुभिः ।
शान्त षष्ठस्वरारूढमनुस्वारविभूषितम् ॥२१३॥
बीजमाद्यन्य च विभोर्वासुदेवस्य कीर्तितम् ।
तदेव बीजं बीजस्थं षष्ठस्वरविवर्जितम् ॥२१४॥

द्वितीयस्वरसंयुक्तं सङ्कर्षणस्य बीजराट् ।
उभयोरन्तरे रेफमाद्यबीजस्य योजयेत् ॥२१५॥
बीजं प्रद्युम्ननाथस्य तृतीयं सर्वकामदम् ।
जीवारूढं हकारं तु लान्तस्योपरि विन्यसेत् ॥२१६॥
विसर्गसहितं बीजमनिरुद्धस्य वाचकम् ।
हकारं च सकारस्थं कृत्वा षोढा निवेश्य च ॥२१७॥
द्वितीयतुर्यषष्ठाष्टद्विषट्कदशकैः क्रमात् ।
सर्वं नियोजयेद्विद्धि हृदाद्यान्वेलपश्चिमान् ॥२१८॥
चातुरात्मीयमन्त्राणां साधनत्वेन सर्वदा ।
ततस्तु केशवादीनां मन्त्रांश्च शृणुतादरात् ॥२१९॥
त्रिधा हकारं कृत्वादौ जीवबीजं तथैव च ।
ककारं च क्षकारं च लिखेत्तद्वत्रिधा त्रिधा ॥२२०॥
द्विषट्कमेवं बीजानां क्रमेणादौ निवेश्य च ।
ततो वारिधरावारिसंज्ञं यद्याक्षरत्रयम् ॥२२१॥
पौनःपुन्येन सर्वेषामथोभागे नियोजयेत् ।
सर्वे षष्ठस्वरारूढा अनुस्वारविभूषिताः ॥२२२॥
बोद्धव्याः केशवादीनां बीजास्त्वेते पृथक् पृथक् ।
प्रणवाद्यैर्नमोन्तैस्तैस्तुर्यान्तैर्नामभिः सह ॥२२३॥
केशवः प्रथमो वाच्यस्ततो नारायणः परः ।
माधवश्चैव गोविन्दो विष्णुश्च मधुसूदनः ॥२२४॥
त्रिविक्रमो वामनाख्यः श्रीधरः पद्मलोचनः ।
हृषीकेशः पद्मनाभो दामोदर इति श्रुतः ॥२२५॥
बीजैर्दीर्घस्वरोपेतैः प्राग्वदङ्गानि कल्पयेत् ।
अथ मन्त्रान् केशवादि देवीनां शृणुत द्विजाः! ॥२२६॥
क्षहसत्रितयं ह्येतच्चतुर्धा विलिखेत्क्रमात् ।

तस्माद्वै सत्यभिन्नं तु बीजं तदुपरि न्यसेत् ॥२५२॥
स्वविवर्तेन बीजस्य मूर्त्युत्थानं प्रकल्पयेत् ।
प्राप्तेज्यावसरे नित्यं सम्पन्ने यजने सति ॥२५३॥
तप्तोपले जलं यद्वद्वद्विप्रलयं स्मरेत् ।
भानुप्रसरसङ्कोचतुल्यमेतन्महामते! ॥२५४॥
क्रियावशात्तु किं त्वत्र भेदमात्रोपलक्षणम् ।
न यत्र बीजं पिण्डं वा तत्र वै प्रणवादनु ॥२५५॥
प्राग्वर्णं पदमन्त्रस्य यत्तदालोकवाचकम् ।
तच्छिष्टं विग्रहं वर्णैस्तस्मादुत्थाप्य वृक्षवत् ॥२५६॥
केवलं यत्र वै बीजं पिण्डं वा पदवर्जितम् ।
तत्राकाराख्यवर्णस्य क्षेत्रज्ञत्वं विधीयते ॥२५७॥
क्षेत्रत्वमवशिष्टानां वर्णानां पिण्डरूपिणाम् ।
केवलस्य हि बीजस्य स्वस्थितिर्ब्रह्मवर्णता ॥२५८॥
स्वभावप्रच्युतिर्बीजं बीजोच्चारस्तथा कृतिः ।
बीजवत्पिण्डमन्त्राणां परिज्ञेयः सदोदयः ॥२५९॥
यद्बीजलक्षणं मन्त्रं सामर्थ्यं वैष्णवं महत् ।
असंख्येयमसंख्यानां वाच्यानां भिन्नरूपिणाम् ॥२६०॥
तद्यथावत्परिज्ञानाज्जपध्यानात्समर्चनात् ।
हवनात्तन्मयत्वाच्च निर्बीजं पदमृच्छति ॥२६१॥
इष्टाभिमतसिद्ध्यस्य साधकानां सदैव हि ।
पिण्डादिभगवन्मन्त्रमूर्तीनामेवमेव हि ॥२६२॥
परिज्ञानाद्भवेत्किंतु पिण्डात्तत्स्थैर्यमुत्तमम् ।
नानात्वं नाममन्त्राच्च नानालोकान्तरोत्थितम् ॥२६३॥
भवेत्सर्वपदप्राप्तिः परिज्ञानात्पदाभिधात् ।
सबीजं वा सपिण्डं वा मन्त्राणां यत्परं द्वयम् ॥२६४॥

विदधाति फलं स्वं स्वं किं त्वाद्यं भावयेत्पदम् ।
मन्त्रक्षेत्रज्ञरूपत्वाद्यस्मात्सर्वेश्वरोऽच्युतः ॥२६५॥
व्याप्यव्यापकरूपेण वर्ततेऽनुग्रहेच्छया ।
व्याप्यरूपेण भूलोकाद्भोगादारभ्य चाखिलात् ॥२६६॥
षाड्गुण्यमहिमान्तं च ददाति फलमुत्तमम् ।
स्वपदं भोगखिन्नस्य दिव्यदेहस्य कर्मिणः ॥२६७॥
क्षेत्रज्ञबीजपिण्डात्मा निरावरणलक्षणः ।
ज्ञानं यदमलं शुद्धं संयच्छत्यात्मलाभदम् ॥२६८॥
शक्तिव्यक्तिमयत्वं च जाग्रद्वृत्तोपदात्मनः ।
एवं संज्ञात्मनः स्वप्नवृत्तेरेकत्वमस्ति च ॥२६९॥
सुषुप्तिवृत्तेः पिण्डाख्यमन्त्रस्यैव महामते! ।
बीजात्मनस्तुर्यवृत्तेः शक्तिव्यक्तित्वमस्ति वै ॥२७०॥
व्यक्तिज्ञानफलोपेता नियता यद्यपि स्मृता ।
भगवन्मन्त्रमूर्तीनां तथापि परमात्मनः ॥२७१॥
आद्यस्य चातुरात्म्यस्य केवलस्याथ वा विभोः ।
चतुष्प्रकारं यन्मन्त्रं विद्धि तन्मोक्षभूतिदम् ॥२७२॥
अतोन्यथा यदुद्दिष्टममिश्रं मिश्रमेव हि ।
फलं भाववशाच्चैव तत्तथा विद्धि नान्यथा ॥२७३॥
शृणुध्वमथ बीजानि सावधानेन चेतसा ।
शुचौ देशे मनोज्ञे च सुलिप्ते पुष्पभूषिते ॥२७४॥
चन्दनक्षोदसंयुक्ते सुधूपेनाधिवासिते ।
विलिख्य मातृकाचक्रं भेदेनानेन वै पुनः ॥२७५॥
येन सन्दृष्टमात्रेण शतधा याति कल्मषम् ।
प्रागादौ पञ्चवर्गांतान् मध्यान्तं मध्यतो लिखेत् ॥२७६॥
यादयो नव नाभिस्था आदयः षोडशारगाः ।

कादयो नेमिगाः सर्वे पूर्वचक्रे यदक्षगम्‌ ॥२७७॥
तदस्मिन्‌ प्रभिभूतं तु पूजयेद्विधिना ततः ।
शब्दब्रह्ममयं चक्रमर्घ्यपुष्पादिकैः क्रमात्‌ ॥२७८॥
तन्मध्यादुद्धरेदादौ सर्वेषां कारणं हि यत्‌ ।
उदक्स्थमक्षरं चाक्षादरान्ताद्येनभूषितम्‌ ॥२७९॥
विद्धि सर्वेश्वरस्येदं बीजं निर्बीजकारणम्‌ ।
एतदेवाब्जनाभस्य विसर्गसहितं स्मृतम्‌ ॥२८०॥
नेमिवर्गाद्द्वितीयं वै ततोरात्पष्ठमक्षरम्‌ ।
अष्टमं नाभिदेशाच्च तत्संख्यं नेमिमण्डलात्‌ ॥२८१॥
नेमिपूर्वमतो नाभेः सप्तमं पञ्चमारगम्‌ ।
अराच्चतुर्दशं त्वक्षात्पश्चिमाशागतं हि यत्‌ ॥२८२॥
नेमेरेकादशं चाथ षोडशं च त्रयोदशम्‌ ।
पञ्चमं नाभिदेशाच्च नेमेरेकोनविंशकम्‌ ॥२८३॥
तदन्तं सप्तमं चैव नवमं हि महामते! ।
नाभेस्तृतीयं तदनु नेमेस्तत्संख्यमेव च ॥२८४॥
द्वादशश्च बहिष्ठेभ्यो दशमं षोडशारपरम्‌ ।
नाभिपूर्वं ततो वर्णं नेमेः पञ्चदशं हि यत्‌ ॥२८५॥
तुर्यसंख्यमराद्बीजं ततो नाभिचतुर्थकम्‌ ।
षष्ठं नेमेश्चतुर्थं च मध्यमक्षात्तथा हरेत्‌ ॥२८६॥
तत्रैव पूर्वदिक्स्थं यद्वाद्याद्वै पञ्चमं ततः ।
अक्षाद्दक्षिणदिक्संस्थं नेमेरष्टादशं ततः ॥२८७॥
द्वितीयं नाभिदेशाच्च तदन्ते सप्तमारगम्‌ ।
चतुर्दशमतो नेमेः षष्ठं नाभेस्तथाहरेत्‌ ॥२८८॥
सर्वे कारणवन्मूर्ध्ना योजनीयाः समासतः ।
प्रणवाद्या नमोन्ताश्च तेजसातीव विभसः ॥२८९॥

पद्मनाभादयो देवा वाच्यास्तेषां क्रमेण तु।
पद्मनाभो ध्रुवोऽनन्तः शक्त्यात्मा मधुसूदनः ॥२९०॥
विद्याधिदेवः कपिलो विश्वरूपो विहङ्गमः।
क्रोडात्मा वडवावक्त्रो धर्मो वागीश्वरस्तथा ॥२९१॥
देव एकार्णवशयः कूर्मः पातालधारकः।
वराहो नारसिंहश्चाप्यमृताहरणस्तु वै ॥२९२॥
श्रीपतिर्दिव्यदेहोथ कान्तात्माऽमृतधारकः।
राहुजित्कालनेमिघ्नः पारिजातहरो महान् ॥२९३॥
लोकनाथस्तु शान्तात्मा दत्तात्रेयो महाप्रभुः।
न्यग्रोधशायी भगवानेकशृङ्गतनुस्ततः ॥२९४॥
देवो वामनदेहस्तु सर्वव्यापी त्रिविक्रमः।
नरो नारायणश्चैव हरिः कृष्णस्तथैव च ॥२९५॥
ज्वलत्परशुधृग्रामो रामश्चान्यो धनुर्धरः।
वेदविद्भगवान् कल्की पातालशयनः प्रभुः ॥२९६॥
प्रादुर्भावगणो मुख्य इत्युक्तस्ते समासतः।
यथाक्रमोदितानां च देवानां विनिबोध तु ॥२९७॥
पिण्डमन्त्रगणं मत्तः सावधानेन चेतसा।
नाभेरष्टमबीजं यत् स्थितं तत्सप्तमोपरि ॥२९८॥
तदधश्चोत्तरं चाक्षादरान्तेन विभूषयेत्।
अथोत्तरं चाक्षदेशादादाय तदधो न्यसेत् ॥२९९॥
बीजं नेमिद्वितीयं यन्मध्यान्मध्यं तदासने।
अथारषष्ठसंरुद्धं कुर्याद्वै नाभि सप्तमम् ॥३००॥
अष्टमं च तदूर्ध्वे तु एतद्विद्धि तृतीयकम्।
नाभ्यष्टममथादाय अरात् षष्ठासनस्थितम् ॥३०१॥
ततो नाभिद्वितीयस्य क्रमेणाधो निवेश्य च।

तदुद्देशात् तृतीयं च सप्तमं तुर्यमेव च ॥२०२॥
अथादाय च नेमेः प्राक् तदधो नाभिसप्तमम् ।
तस्याप्यधस्तदुद्देशात् तृतीयं विनिवेश्य च ॥२०३॥
ततस्तु नवमं नाभेस्तस्योर्ध्वाधोगतं न्यसेत् ।
तत्रैव यद्द्वितीयं तु तत्पिण्डं विद्धि सप्तमम् ॥२०४॥
अरात् षष्ठस्य चोर्ध्वे तु नाभिपूर्वं तु विन्यसेत् ।
सप्तमं चाष्टमं चापि ह्युपर्युपरि वै क्रमात् ॥२०५॥
अथाष्टमं नाभिदेशादारूढं सप्तमोपरि ।
तदधो मध्यगं चाक्षान्नवमं परिकीर्तितम् ॥२०६॥
भूयोरात् षष्ठमस्योर्ध्वे दद्यान्नाभितृतीयकम् ।
बाह्यात्तृतीयं तन्मूर्ध्नि पिण्डोयं दशमः स्मृतः ॥२०७॥
द्वितीयं नाभिदेशाच्च तत्तृतीयं तदूर्ध्वगम् ।
नेमेराद्यन्तमूर्ध्वे तु स्मृतमेकादशं त्विदम् ॥२०८॥
अथो नाभिचतुर्थस्य सप्तमं विनिवेश्य च ।
तदधो नेमिपूर्वं तु एतद्द्वादशमं स्मृतम् ॥२०९॥
नेमेस्त्रिदशमादाय तदधो योजयेत्क्रमात् ।
सप्तमं च चतुर्थं च पूर्वं नाभेर्महामते! ॥२१०॥
अरषष्ठासनाः सर्वे पिण्डमेतत् त्रयोदशम् ।
नाभेश्चतुर्थमादाय तदूर्ध्वे सप्तमं न्यसेत् ॥२११॥
नवमं चापि तन्मूर्ध्नि एतद्विद्धि चतुर्दशम् ।
नेमेश्चतुर्थसंज्ञस्य ऊर्ध्वाधोभ्यां निवेश्य च ॥२१२॥
वर्णं नाभिद्वितीयं यत्तत्पञ्चदशमं स्मृतम् ।
यद्द्विशसंख्यकं बाह्यादादायाराख्यमण्डलात् ॥२१३॥
सान्तिमेन च षष्ठेन युक्तं कुर्यादनन्तरम् ।
नेमेः सप्तमवर्णस्य ऊर्ध्वाधोभ्यां निवेश्य च ॥२१४॥

नाभिदेशाद्द्वितीयं यद्विद्धि सप्तदशं तु तत् ।
नवमं नाभिदेशाच्च सप्तमस्योपरि न्यसेत् ॥२१५॥
अथाष्टमं नाभिदेशात्कुर्यात्सप्तगमूर्ध्वगम् ।
द्वितीयमपि तस्याधस्तस्माद्वै नाभिमण्डलात् ॥२१६॥
अरात्त्रयोदशं चोर्ध्वे न्यूनविंशतिमं हि तत् ।
नाभेश्चतुर्थं तस्योर्ध्वे तत्तृतीयं तदूर्ध्वगम् ॥२१७॥
तत्रैव सप्तमं यद्वै विद्धि विंशतिमं त्विदम् ।
द्वितीयस्याष्टमं नाभेर्वर्णस्योर्ध्वे नियोज्य च ॥२१८॥
अरात् षष्ठं च तस्याधः कुर्यात्तदनु लाङ्गलिन् ।
नवमं नाभिदेशाच्च तृतीयस्योपरि न्यसेत् ॥२१९॥
द्वितीयं तदधः कुर्या त्रयोविंशतिमं शृणु ।
अष्टमं सप्तमं नाभेर्द्वितीयं प्रथमं ततः ॥२२०॥
क्रमेण योजयेच्चैव अरात् षष्ठस्य मूर्धनि ।
नेमेस्सप्तममादाय तदधो नाभिसप्तमम् ॥२२१॥
तत्तृतीयं च तस्याधश्चतुर्विंशतिमं स्मृतम् ।
नाभेस्तृतीयं तस्योर्ध्वे द्वितीयं तस्य चोपरि ॥२२२॥
निवेश्य नेमिपूर्वं तु षड्विंशमधुनोच्यते ।
अरात् षष्ठासनं कुर्याद्वर्णं नाभितृतीयकम् ॥२२३॥
तदूर्ध्वे सप्तमं चैव अतोन्यमवधारय ।
न्यूनं विंशतिनेमेस्तु तस्योर्ध्वाधोगतं न्यसेत् ॥२२४॥
सप्तमं नाभिवर्णेभ्यस्त्वरवर्णाच्च पञ्चमम् ।
नेमेराद्यं द्वितीयं च आदाय तदधो न्यसेत ॥२२५॥
मध्यमक्षान्महाबुद्धे अष्टाविंशतिमं स्मृतम् ।
नवमं सप्तमं नाभेस्तृतीयं च द्वितीयकम् ॥२२६॥
अथोत्तरस्थमक्षाच्च आदाय तदधो न्यसेत् ।

तृतीयं च द्वितीयं च नाभिदेशादनन्तरम् ॥३२७॥
नाभिद्वितीयमादाय सप्तमं तुर्यमेव च ।
तृतीयस्याथ वै नाभेर्वाद्यादाद्यन्तमूर्ध्वगम् ॥३२८॥
ततस्तु नवमं नाभेरक्षमध्यस्थमूर्ध्वगम् ।
अष्टमस्याथ वै नाभेरध ऊर्ध्वे द्वितीयकम् ॥३२९॥
दद्यात्तदन्वरात्षष्ठं तस्यैवाधोगतं तु वै ।
अरात् षष्ठस्य चोर्ध्वेथ नाभिपूर्वंतु तत्परम् ॥३३०॥
विनिवेश्याष्टमं चापि षट्त्रिंशमवधारय ।
सप्तमं च तृतीयं च चतुर्थं नाभिमण्डलात् ॥३३१॥
योजयित्वा तदूर्ध्वे त्वप्यरार्णं त्रिदशं न्यसेत् ।
अथ यन्नवमं नाभेस्तृतीयं च द्वितीयकम् ॥३३२॥
तत्सप्तत्रिंशकं विद्धि नाभिदेशादथाहरेत् ।
अरात् षष्ठासनं पूर्वं द्वितीयं च तदूर्ध्वतः ॥३३३॥
नवमं चापि तस्योर्ध्वे पिण्डास्त्वित्यादिमं विना ।
अरान्ताद्येन वै मूर्ध्ना सर्वे कार्या ह्यलंकृताः ॥३३४॥
नमोन्ताः प्रणवाद्याश्च युक्तास्संज्ञापदैस्स्वकैः ।
अरान्ताद्यं विना यस्य यदूर्ध्वे वर्तते स्वरः ॥३३५॥
अधो वा नाभिपूर्वेण सह वा केवलं हितम्।
अपास्य च ततः कुर्यात्सर्वेषां पूजनाय च ॥३३६॥
स्वेन स्वेन तु पिण्डेन सिद्ध्यच्चाङ्गकल्पनाम् ।
नमःप्रणवसंज्ञाढ्या जातिः कर्मवशात्पुनः ॥३३७॥
आतदुक्तानुयजनान्मोक्षनिष्ठस्समाचरेत् ।
बीजपिण्डपदोत्थानां विनियोगं तु चाखिलम् ॥३३८॥
किन्त्वेषां वैभवी मुद्रा देयाराधनकर्मणि ।
तदङ्गमुद्राश्चाङ्गानां योज्या मन्त्रैस्स्वकैस्सह ॥३३९॥

सर्वं साधारमुद्दिष्टं सैंहमन्त्रोदितं मया ।
दीक्षापूर्वं हि मन्त्राणां चतुर्वर्गं हि साधनम् ॥३४०॥
लक्षणं पदमन्त्राणामथेदानीं निबोधतु ।
यैर्विना लब्धसत्तानामर्चनं हि न जायते ॥३४१॥
विश्वातीताय विमलपदं विद्याविधायिने ।
पद्मनाभाय विश्वव्यापिने च तदनन्तरम् ॥३४२॥
चतुर्विंशाक्षरं विद्धि एतत्संख्यं परंशृणु ।
ज्योतीरूपाय पञ्चार्णं पदं गगनमूर्तये ॥३४३॥
ध्रुवाय दद्यात्तदनु परमं त्र्यक्षरं ततः ।
पदप्राप्तिचतुर्वर्णं हेतवे त्र्यक्षरंत्विति ॥३४४॥
अनन्तायपदंदद्यात्ततोपरिमिताय च ।
सर्वाश्रयाय तदनु तदन्ते धृतशक्तये ॥३४५॥
एतद्विंशतिसंख्यं च द्वाविंशार्णमतः शृणु ।
नमो भगवते कृत्वा वासुदेवाय वै ततः ॥३४६॥
सर्वशक्त्यात्मनेऽनन्तमूर्तये तु पदंत्विति ।
वीर्यात्मनो महाशब्दं पुरुषाय पदं तु तत् ॥३४७॥
मोहमायापदं चैव ततो विध्वंसिने तु वै ।
सदोदितायशब्दं तु सर्वशक्ते पदं ततः ॥३४८॥
नियोक्तव्यश्चतुर्वर्णः सप्तविंशाक्षरःस्मृतः ।
पदं वेदविदे विश्वरञ्जकाय ततो भवेत ॥३४९॥
तदन्ते विश्वपतये ततो वै परमात्मने ।
एष विंशतिभिर्वर्णैः शृणु सप्तदशाक्षरम् ॥३५०॥
ज्ञानात्मनेपदंकुर्यात्संविच्छब्दमतःपरम् ।
पदं प्रकाशाशयाय शान्तरूपाय वै ततः ॥३५१॥
अनन्तशक्तये सर्वव्यापिने तदनन्तरम् ।

जगन्मयाय तदनु विश्वरूपाय वै पदम् ॥३५२॥
एकविंशतिभिर्वर्णैरयमुक्तोपरंशृणु ।
सत्सत्वपदमादाय गुहाशयपदं ततः ॥३५३॥
ततःपरमहंसाय ततो मानसचारिणे ।
न्यूनविंशत्यक्षरश्चैव ततो यज्ञमूर्तये ॥३५४॥
पदमादाय तदनु विश्वान्तर्वर्तिने तु वै ।
ततो भुवनशब्दं तु वराहाय पदं त्वथ॥३५५॥
विभूतिस्वामिने चेति चतुर्विंशाक्षरस्त्वयम् ।
नमो भगवते दद्यात्ततो वै बडवाग्नये ॥३५६॥
जगज्जलेन्धनपदं प्रदीप्तं पदमेव तु ।
वीर्यायफट् तदन्ते तु एतत्संख्यस्त्वयं स्मृतः ॥३५७॥
सर्वान्तश्चारिणे दद्यात्प्रसन्नपदमेव च ।
मूर्तयेथ पदं चैव दद्याद्धर्मात्मने पदम्॥३५८॥
षोडशाक्षरमेतद्वै अतो गुह्यमतश्शृणु ।
सर्वविद्येश्वरायाथ दद्याद्वाक्पतये ततः ॥३५९॥
पदंपदवदादाय ततो वाग्विभवं त्विति ।
न्यूनविंशाक्षरो ह्येप त्वपरं कथयामि ते॥३६०॥
योगैश्वर्यप्रदायाथ योगनिद्रारसाय वै ।
नीरदाय पदंदद्याद्भगवन् जलशायिने ॥३६१॥
त्रिरष्टवर्णसंख्यश्च अयमेकाधिकस्तु वै ।
भगवत्पदमादाय अनन्तबलशक्तये ॥३६२॥
तेजोमयाय भुवनधृतेथ ह्यक्षरं पदम् ।
तदन्ते विनियोक्तव्यं पदं वै कृच्छ्रपात्मने ॥३६३॥
षड्विंशार्णकमं विद्धि मन्त्रं मन्त्रविदां वर ।
यज्ञाङ्गदेहमादाय महापदमतःपरम् ॥३६४॥

वराहाय ततो दद्यात्पुराणपुरुषाय वै ।
दद्यात्ततः प्रजाशब्दं तदन्ते पतयेपदम् ॥३६५॥
चतुर्दिशाक्षरं मन्त्रमेतन्मन्त्रविदां वर ।
नमो भगवते कृत्वा नारसिंहाय वै ततः ॥३६६॥
तेजोनिधे पदं दद्यात्पदं हन हनेति च ।
ततो विकर्मजात्यं वै शब्दंपञ्चाक्षरं भवेत् ॥३६७॥
दुष्कृतं हि तदन्ते वै सप्तविंशाक्षरस्त्वयम् ।
आदायामृतमूर्ते वै ततो ज्ञानपरात्मने ॥३६८॥
सर्वेश्वराय भगवन्न्यूनविंशाक्षरस्त्वयम् ।
आदायपुण्डरीकाक्ष पदं वै परमेश्वर ॥३६९॥
ततस्सकलशब्दंतु सुखसौभाग्य वै पदम् ।
निधे वांछितशब्दं तु ततस्सिद्धिप्रदेति वै ॥३७०॥
पदं चाखिलदुःखेति ततस्तु शमनाभये ।
आनन्दसुन्दरपदं ततो लक्ष्मीपदं न्यसेत ॥३७१॥
पतये शब्दमुच्चार्य पञ्चाशार्णं त्रिरुज्झितम् ।
सदसत्पदमादाय मूर्तये तदनन्तरम् ॥३७२॥
विश्वोत्तमाय तदनु ततोऽमृतनिधे तु वै ।
षोडशार्णस्त्वयंमन्त्र उक्तः कान्तात्मने विभो ॥३७३॥
पुरुषोत्तमाय शब्दंतु ततो ऽप्रतिहतेति च ।
शक्तयेथ पदं दद्यात्सर्वेश्वरपदं ततः ॥३७४॥
समग्रोग्रहयेत्यत्र निवारण ततः परम् ।
सप्तविंशाक्षरो मन्त्र उक्तश्चातः परं शृणु ॥३७५॥
नियन्तेपदमुद्धृत्य तदन्ते विश्वहेतवे ।
परब्रह्मसमेतं च सेतवे ओमनन्तरम् ॥३७६॥
मन्त्रो द्विरष्टवर्णश्च कथितोयं ततः परम् ।

पदमप्रतिमेत्यादौ प्रभावं तदनन्तरम् ॥३७७॥
महाविभूते तदनु महामायापदं ततः ।
अथ दर्शकशब्दं तु तदन्ते तालकेतवे ॥३७८॥
चतुर्विंशाक्षरो मन्त्रस्स्वयमुक्तस्समासतः ।
शान्तात्मने पदं दद्यात्तदन्तेयमविन्यसेत ॥३७९॥
नियमाश्रयाय तद्दद्यात्परमप्रदयाय च ।
नारायणाय शब्दं तु पूर्वसंख्यासमं स्मृतम् ॥३८०॥
भवभङ्गपदं चैव कारिणे तदनन्तरम् ।
ततो भगवते शब्दं दत्तात्रेयाय वै ततः ॥३८१॥
वर्णाश्रमपदं चाथ धर्मशब्दमतःपरम् ।
परिग्रहाय प्रणवमष्टाविंशाक्षरः स्मृतः ॥३८२॥
सलोकमायामायेति सर्वज्ञाय पदं ततः ।
(शब्दं विश्वात्मने चाथ विमलेतिपदं ततः ॥३८३॥
सर्वेश्वराय न्यग्रोधशयनाय पदं त्वथ ।
त्रयोविंशत्यक्षरश्च त्वथचान्यं निबोधतु ॥३८४॥
भूतशब्दमथादाय भावनाय पदं ततः । )
शब्दं विश्वात्मने चाथ विमलेतिपदं ततः ॥३८५॥
निकेतनाय तदनु कन्धरायपदं ततः ।
अयं विंशतिभिर्वर्णैर्ध्यधिकैर्मन्त्रराट्स्मृतः ॥३८६॥
विष्णवे पदमादाय निरस्ताख्याय वै ततः ।
पदं ब्रह्मनयायाथ जटिने दीण्डने ततः ॥३८७॥
दद्याद्विदितशब्दं वै तदन्ते विभवाय च ।
षड्विंशार्णस्स्वयंमन्त्रः परमस्मान्निबोधतु ॥३८८॥
सर्वशब्दमथादाय व्यादिने तदनन्तरम् ।
पदं सहस्रार्चिषे च दद्यात्पञ्चाक्षरं शुभम् ॥३८९॥

त्रिविक्रमायाथ पदं ततोपरिमिताय वै ।
प्रभावायपदं दद्यात्तूयोविंशाक्षरः स्मृतः ॥३९०॥
नरनाथाय शब्दं तु पुरुषप्रवराय वै ।
आत्मध्यानपरायेति णाय वै त्र्यक्षरं ततः॥३९१॥
एकविंशाक्षरो मन्त्रस्त्वतोन्यमवधारय ।
नारायणाय शब्दं तु दद्यान्निरति वै पदम् ॥३९२॥
शयानन्दमयायेति पदं निरभिमान वै ।
पदसक्ताय तदनु पञ्चविंशाक्षरस्त्वयम् ॥३९३॥
परस्य पदमादाय ततो वै परमात्मने ।
योगेश्वराय हरये मन्त्रोयं षोडशाक्षरः ॥३९४॥
सप्तार्णं पदमादाय प्राङ्नमः परमात्मने ।
कृष्णाय शब्दं तदनु कमलं त्र्यक्षरं ततः ॥३९५॥
दळशब्दं तु विततं नेत्राय तदनन्तरम् ।
बृम्हिष्ठाय ब्रम्हणे वै अष्टाविंशाक्षरस्त्वयम् ॥३९६॥
भगवत्पदमादाय युगान्तदहनेति च ।
हसयेथ पदं दद्यात्संसारपदमेव हि ॥३९७॥
बन्धविच्छेदकेत्र वै द्वाविंशार्णस्त्वयं स्मृतः ।
दद्याद्विशदशब्दं वै परमार्थपदं ततः ॥३९८॥
पदं चतुर्मूर्तये वै चतुर्गतिमयाय च ।
शरशार्ङ्गभृते दद्याच्छरदिन्दीवरत्विषे ॥३९९॥
ततो भगवते दद्यादभिरामपदं ततः ।
शरीरायपदं चैव त्वष्टत्रिंशाक्षरं स्मृतम् ॥४००॥
दद्याद्विशदशब्दं वै परमार्थपदं ततः ।
ततो वेदविदे शब्दं विदुषे व्यापकाय च ॥४०१॥
स्वामिंस्तदनु वै दद्याद्व्यक्षरं चापरं पदम् ।

अयं विंशतिभिर्वर्णैरुक्तस्त्वन्यमतश्शृणु ॥४०२॥
दद्याद्गरुडशब्दंतु तदन्ते वाहनेति च ।
सर्वशस्त्रास्त्रोद्यतेति शमयाशुभमेवं च ॥४०३॥
ततोधुनधुनादाय कर्मबन्धांस्तथोच्चरेत ।
धर्मं पाहि ततोदद्याज्जह्यधर्मं ततोद्धरेत् ॥४०४॥
चतुस्त्रिंशाक्षरो मन्त्र एष वक्ष्याम्यतः परम् ।
संहारमूर्तये शब्दं कालवैश्वानरार्चिषे ॥४०५॥
पाताळशयनायेति त्वज्ञाननिगळेतिवै ।
निचयं हन वीप्सातः प्रणवं तदनन्तरम् ॥४०६॥
पञ्चत्रिंशाक्षरो ह्येष सर्वसिद्धिकरः स्मृतः ।
प्रणवालंकृतास्सर्वे नमस्कारविभूषिताः ॥४०७॥
संस्कृताः पूजिताश्चैव ध्यानजप्ता विशेषतः ।
तन्नास्ति यच्च यच्छन्ति भक्त्यासत्कर्मणांभुवि ॥४०८॥
अथ लांछनमन्त्राणां शास्त्राणां लक्षणं शृणु ।
सहस्रदीधितिपदं दद्याच्छुरिति वै ततः ॥४०९॥
विग्रहाय दशार्णं च त्र्यधिकं मकुटस्य च ।
आदाय वांछितपदं तदसिध्यप्रदाय वै ॥४१०॥
महाचिन्तापदंदद्यान्मणये तदनन्तरम् ।
विद्धि पञ्चदशार्णं च दशार्णमपरं शृणु ॥४११॥
सर्वलक्षणशब्दं तु ततस्सम्पत्प्रदायवै ।
सौभाग्यशब्दमादाय जननि त्र्यक्षरं ततः ॥४१२॥
सर्वंप्रदेतु तदनु अयमेव दशाक्षरम् ।
प्राणात्मनेथ सत्याय विद्धि सप्ताक्षरं त्विदम् ॥४१३॥
कालकर्त्रेथ चक्राय फडष्टार्णं प्रकीर्तितम् ।
विश्वात्मने पदं दद्यात्ततो विश्वप्रदाय च ॥४१४॥

नवाक्षरमिदं विद्धि परमष्टाक्षरं शृणु ।
समादाय पदं विश्वे ततो विश्वेश्वरार्चिते॥४१५॥
प्राक्शब्दमूर्तये कुर्याच्छब्दायाष्टाक्षरः स्मृतः ।
पदं रसनिधिं कुर्याद्भीमशब्दमतःपरम् ॥४१६॥
भीषणाय तदन्ते वै दशाक्षरमिदं स्मृतम् ।
प्राग्भुवनाधिपतये स्तम्भभूताय वै पदम् ॥४१७॥
त्रयोदशाक्षरं विद्धि ततोन्यमवधारय ।
पदमिन्द्रियकोशाय इन्द्रियाय दशाक्षरम् ॥४१८॥
कल्पान्तानिलघोषाय विद्युल्लसित वै पदम् ।
प्रभाय षोडशार्णं तु नवाक्षरमतश्शृणु ॥४१९॥
महामायापदं दद्याद्बन्धवर्णद्वयं ततः ।
ध्वंसिने पदमादाय एतत्संख्यं परं शृणु ॥४२०॥
सर्वास्त्रग्रसनादाय पराय तदनन्तरम् ।
सन्तापकाय शब्दं तु दर्पविध्वंसिने ततः ॥४२१॥
एकादशाक्षरंविद्धि नवाक्षरमथोच्यते ।
अज्ञानखण्डनपदं पराय तदनन्तरम् ॥४२२॥
त्रैलोक्यमोहनपदं मूर्तये तु नवाक्षरम् ।
सर्वाकर्षणकरंपदं महामायामयेति वै ॥४२३॥
द्वादशाक्षरसंख्यस्तु नवाक्षरमथोद्धरेत् ।
प्रागखण्डितशब्दंतु तदन्ते विनियोज्य च॥४२४॥
पराक्रमाय शब्दं तु सप्ताक्षरमतश्शृणु ।
दर्पप्रशमकर्त्रे तु पञ्चार्णं विनिबोध वै ॥४२५॥
तेजोमालिनि चेत्येते द्वाविंशत्यनुकीर्तिताः ।
प्रागवदाद्यन्तसंरुद्धा स्वनामपदभूषिताः ॥४२६॥
संख्यानिष्ठाक्षरस्यान्ते दद्यात्संज्ञापदं सदा ।

चक्रवच्चास्त्रमन्त्राणां कुर्यान्नामावसानकम् ॥४२७॥
क्रमाच्चतुर्दशानान्तु शक्त्यन्तानां च पद्पदम् ।
अथ वक्ष्ये नृसिंहस्य विश्वत्रातुर्मनूत्तमम् ॥४२८॥
वर्णचक्रं तु पूर्वोक्तं सुगुप्ते वसुधातले ।
उपलिप्ते तु संलिख्य पूजयित्वा यथाविधि ॥४२९॥
समुद्धरेत्ततो मन्त्रमनेकाद्भुतविक्रमम् ।
प्रणवं पूर्वमादाय तदन्ते विनियोज्य च ॥४३०॥
नवमं नाभिवर्णेभ्यस्तदूर्ध्वैराच्चतुर्दशम् ।
तस्योपरि तदन्तस्थवर्णं गोळकवन्न्यसेत् ॥४३१॥
नमोऽन्तंवर्णमेतद्धि वाचकं परमात्मनः ।
ज्ञानादयो गुणाष्षड्भ्यः प्रागुक्ता हृदयादयः ॥४३२॥
तदर्थमेव वर्णं तं षोढा संलिख्य केवलम् ।
द्वितीयतुर्यपष्ठैश्च द्वादशेनान्तिमेन च ॥४३३॥
चतुर्दशेनाराद्वर्गात्क्रमाद्धि विनियोजयेत् ।
बीजवच्छिरसा सर्वान् लांछयेत्पञ्चमं विना ॥४३४॥
सर्वेषां प्रणवं पूर्वं स्वसंज्ञान्ते नियोज्य च ।
स्वकीया जातयश्चान्ते चौषडन्ताः क्रमेण तु ॥४३५॥
ओन्नमो भगवते नारसिंहायेत्यनेन तु ।
द्वादशाक्षरमन्त्रेण स्मृत्वा विग्रहवत्पुरा ॥४३६॥
सबाह्याभ्यन्तरस्थेन साङ्गेनाद्येन पूजयेत् ॥

इति श्रीपाञ्चरात्रे ईश्वरसंहितायां
मन्त्रोद्धारविधिर्नाम
त्रयोविंशोध्यायः ।

—o—

## अथ चतुर्विंशोऽध्यायः।

—•—

नारदः।

अथ मुद्राविधिं वक्ष्ये शृणुध्वं मुनिपुङ्गवाः!।
मुदं कर्मात्मतत्त्वानां ददात्यमलयाजिनाम् ॥१॥
द्रावयन्तिच दोषाणां बाह्याभ्यन्तरचारिणाम्।
तेन मुद्रा समाख्याता कृतस्यापि च मुद्रणात् ॥२॥
तस्मात्स्वाभाविकं कृत्वा बन्धं वा मानसं पुरा।
स्वेन स्वेन तु मन्त्रेण स्मरेद्व्यासं सदैव हि ॥३॥
चैतन्येनानुविद्धो यश्शाखासंवश्च यद्यपि।
तत्रापि मन्त्रोऽत्राध्यक्षस्तत्कार्यं सम्प्रयच्छति ॥४॥
गन्धदिग्धौ करौ कृत्वा मुद्राबन्धं समाचरेत्।
मध्यमानामिकाभ्यांतु द्वन्द्वयुक्तं करद्वयात् ॥५॥
पराङ्मुखं च सुस्पष्टं कृत्वायोज्यं परस्परम्।
आमूलान्नखपर्यन्तं नैरन्तर्येण यत्नतः ॥६॥
सम्मुखाने करतले शेषाश्चांगुलयस्तथा।
अधरोत्तरयोगेन वामदक्षिणतस्तथा ॥७॥
तर्जन्यामूर्ध्वतोंगुष्ठे सम्मुखे सम्प्रसार्य च।
निविष्टा हृदये कार्या मुद्रैषा मुनिपुङ्गवाः! ॥८॥
चातुरात्म्यार्चने योज्या सर्वसिद्धिप्रदायिनी।
शिष्टौ विकसितौ हस्तौ योज्यौ च मणिबन्धनात् ॥९॥
तद्बाहुकूर्परौ द्वौ च नाभौ संरोध्य दण्डवत्।
ईषद्दे डोळयेत्पश्चादग्र ऊर्ध्वे तु तौ करौ॥१०॥
गुप्तिं कृत्वा तु योज्यैषा मुद्राराधनकर्मणि।
मूर्तीनां केशवादीनां ततोऽन्यां शृणुत द्विजाः! ॥११॥

श्लेष्य पाणितले द्वे प्राङ्‌नम्रं कुर्याल्लतागणम् ।
विमुक्तमन्तरीकृत्य सहांगुष्ठद्वयेन तु ॥१२॥
मणिबन्धद्वयं कुर्यात्सुलग्नमतिनिश्चलम् ।
करयुग्मं सगर्भं तु सन्धार्थं स्वशिराचलम् ॥१३॥
ऊरुमध्ये निषण्णे तु कुर्याद्वे बाहुकूर्परे ।
गुप्तां कृत्वा प्रयत्नेन बन्धमस्याः समाचरेत् ॥१४॥
एषा विश्वदेवानां मुद्रिका वैभवी द्विजाः ।
प्रणवेन प्रयोज्येयं सहस्रांशुसमप्रभा ॥१५॥
विश्वत्रातृनृसिंहस्य मुद्राद्वयमथोच्यते ।
ध्यात्वा त्रेताग्निरूपं तु दक्षिणादंगुलत्रयम् ॥१६॥
स्पष्टमूर्ध्वमुखं चैव ज्येष्ठाक्रान्ता कनीयसी ।
अथाखिलाध्वरूपा चाप्यध्वातीतोग्निरूपधृक् ॥१७॥
देवो गुणत्रयातीतस्तथा मार्गत्रयातिगः ।
धर्मस्थूलतरैर्मुक्तो योयं व्यक्तो धियार्चितः ॥१८॥
परस्परमुखौ श्लिष्टौ शाखाक्रान्तौ परस्परम् ।
किन्तु वै दक्षिणं हस्तमूर्ध्वं चाप्यपरेपरम् ॥१९॥
अविद्यादळनीक्षेप्या मुद्रा पूर्वमुदाहृता ।
ततो हृदादिमन्त्राणां मुद्राषट्कन्तु कथ्यते ॥२०॥
सम्पुटं हृदयोद्देशे बध्वा हस्तद्वयेन तु ।
निरन्तराभ्यां शाखाभ्यां मुद्रैषा हार्द्रधीस्मृता ॥२१॥
अङ्गुष्ठादि कनिष्ठान्तं शाखायुग्मं पृथक् पृथक् ।
सान्तरं सम्पुटादस्मात्कनिष्ठादौ तथा भवेत् ॥२२॥
शिरश्शिखातनुत्राणनेत्रमुद्रा यथा क्रमम् ।
हस्तौ मुकुलितौ कृत्वा न्यसेच्छिरसि मन्त्रतः ॥२३॥
ज्ञेया किरीटमुद्रेयं मार्ताण्डायुतसन्निभा ।

ततः श्रीवत्समुद्रा तु पद्ममुद्रैव कीर्तिता ॥२४॥
मध्यमानामिकान्यूना मुष्टिवत्पाणिमध्यगा।
उभयोर्हस्तयोर्विप्र पश्चान्मुष्टिद्वयं तु यत् ॥२५॥
श्लेषयेत्समरन्ध्रेण तर्जन्यौ द्वे प्रसार्य च।
ततः संश्लेषयेदग्रादङ्गुष्ठाग्रे नियोजयेत् ॥२६॥
मध्यतस्तर्जनीभ्यां तु अन्योन्येन क्रमेण तु।
मुद्रैषा कौस्तुभस्योक्ता मालामुद्रामथो शृणु ॥२७॥
शाखाष्टकं कराभ्यां यदग्रस्तमग्रादपूरतः।
संश्लक्ष्णं लम्बमानं च उपविष्टोथ वा स्थितः ॥२८॥
कुर्याद्बाहुद्वयं विप्र ऊरुमध्यावलम्बिनम्।
मणिबन्धावधौ सम्यङ्मालामुद्रा प्रकीर्तिता ॥२९॥
अङ्गुष्ठौ सङ्गतौ लग्नौ अङ्गुल्यो विरलास्थिताः।
पाद्मी ह्येषा भवेन्मुद्रा पुष्टिसौभाग्यदायिका ॥३०॥
मुष्टिना ग्राहयेद्वाममंगुष्ठं दक्षिणेन तु।
अंगुलीर्वामहस्तात्तु दक्षिणस्योपरि न्यसेत ॥३१॥
वामतर्जनिकाग्रं तु अंगुष्ठाग्रं च दक्षिणात्।
परस्परं सम्मुखं तु सुश्लिष्टं विनियोजयेत् ॥३२॥
शङ्खस्यैषा भवेन्मुद्रा उत्तानातु यथा स्थिता।
स्पष्टौ प्रसारितौ हस्तौ परस्परनियोजितौ ॥३३॥
भ्रमणाच्चक्रवत्तौ तु चक्रमुद्रेति कीर्तिता।
नाशिनी सर्वदुःखानां मुद्राणां भेदिनीपरा ॥३४॥
बध्वा मुष्टिं दक्षिणेन वामांगुष्ठस्य मूर्धनि।
कृत्वैवं दर्शयेदेषा कौमोदक्यास्सुशोभना ॥३५॥
गदामुद्रेति विख्याता दोषसैन्यप्रमर्दिनी।
प्रसार्या वाममुत्ताना अङ्गुल्यो विरलस्थिताः ॥३६॥

कार्यास्त्वाकुञ्चिता प्रान्तादंगुष्ठं सेतुवद्भवेत् ।
संमुखं तासु संलग्नं करशाखासु मध्यतः ॥३७॥
हृत्सम्मुखात्तु बध्नीयाच्छक्तिमुद्रां सुखप्रदाम् ।
प्रादिशिन्यादितो विद्धि कनिष्ठान्तं श्रियादिषु ॥३८॥
प्रसार्य संहितं कृत्वा पुरा पाणिद्वयं द्विज ।
अनामामूलदेशाभ्यामंगुष्ठाग्रद्वयं न्यसेत् ॥३९॥
अधोमुखं तु पतितं मणिबन्धस्य सम्मुखम् ।
सुस्पष्टमुच्छ्रितं लग्नं पुच्छवत्कन्यसायुगम् ॥४०॥
पक्षिराजस्य मुद्रैषा केवलस्य महात्मनः ।
सामान्या सर्वमन्त्राणामेका मुद्रांजलिः स्मृता ॥४१॥
स्वेन स्वेन तु मन्त्रेण संयुक्तां तां प्रयोजयेत् ।
दक्षे करतले रक्तपङ्कजे भास्करं स्मरन् ॥४२॥
द्रव्याणि संस्पृशेत्तेन मुद्रैषा दहनात्मिका ।
वामहस्ततले श्वेतपङ्कजे शशिनं स्मरन् ॥४३॥
द्रव्याणि संस्पृशेत्तेन मुद्रैषाप्यायनात्मिका ।
ग्रथितौ द्वौ करौ कृत्वा सुश्लिष्टौ चाप्यधोमुखौ ॥४४॥
कनीयसौ तदंगुष्ठौ सुश्लेषेण नियोज्य च ।
मध्यमांगुलियुग्मं तु अन्योन्यकरपृष्ठगम् ॥४५॥
विक्षिप्तानामिकायुग्मं तर्जनीयुगळं तथा ।
मुद्रैषा कामधेन्वाख्या सर्वेच्छा परिपूरिणी ॥४६॥
अथ चासनमन्त्राणां मुद्राबन्धस्तु वक्ष्यते ।
आधेमुखस्य वामस्य अनामा तर्जनी उभे ॥४७॥
आकुञ्च्य पृष्ठलग्ने तु मध्यमायां तु संस्थिते ।
तयोरधस्तान्मध्याभ्यामृज्वीं कुर्यादधोमुखाम् ॥४८॥
कनिष्ठिका तु सांगुष्ठा कार्या सुप्रसृता मुने ।

अनन्तासनमुद्रेयं मन्त्रोनास्यायतो द्विज! ॥४९॥
सर्वं जगदिदं ह्येषा क्रोडीकृत्य च वर्तते ।
करद्वयमसंलग्नं कृत्वा तदनु योजयेत् ॥५०॥
मुखे मुखं तर्जनीभ्यां न मुञ्चेदथ मध्ययोः ।
कुर्यात्तादृग्विधं बन्धं तं त्यक्त्वानामिकाद्वये ॥५१॥
उपसंहृत्य तं चापि द्वे कनिष्ठे नियोजयेत् ।
प्रत्येकबन्धे संलग्नमंगुष्ठयुगळं न्यसेत् ॥५२॥
धर्मादेश्चाप्यधर्मादेरिदं मुद्राचतुष्टयम् ।
तदूर्ध्वस्थस्य पद्मस्य प्रागुक्ता मन्त्रयोगतः ॥५३॥
दक्षिणस्य तु हस्तस्य तर्जन्यङ्गुष्ठमेळनम् ।
कृत्वा तदनु तद्बन्धं विकास्य च शनैश्शनैः ॥५४॥
समुत्थानं पृथक्कुर्याच्छाखासंघं पृथक् स्थितम् ।
धामत्रयस्य मुद्रैषा गणेशादेस्तथोच्यते ॥५५॥
वामहस्तकनिष्ठाद्यास्तिस्रस्स्वतलमध्यगाः ।
तासामंगुष्ठतः पृष्ठे तर्जनी प्रोन्नता भवेत् ॥५६॥
नासावंशप्रदेशस्था ततो दक्षिणपाणिना ।
अंगुळी त्रितयेनैव मुष्टिं बध्वा तु पूर्ववत् ॥५७॥
तर्जनीं द्विगुणी कृत्य अंगुष्ठाग्रे नियोजयेत् ।
प्रोद्यतो दक्षिणोबाहुश्चक्रक्षेपे यथोद्यतः ॥५८॥
विष्वक्सेनस्य मुद्रैषा विश्वबन्धनिकृन्तनी ।
संमुखौ सम्पुटीकृत्य द्वौ हस्तौ सम्प्रसारितौ ॥५९॥
विनियोज्यौ ललाटाग्रे शिरसावनतेन तु ।
गुर्वादित्रितयस्यैषा मुद्रा चेतःप्रसादिनी ॥६०॥
करद्वयं समुत्तानं नाभिदेशे नियोजयेत् ।
वामस्य दक्षिणं पृष्ठे मुद्रैषा सिद्धसन्ततेः ॥६१॥

तदन्येषां तु सर्वेषां मुद्रा स्यादञ्जलिर्द्विजाः! ।
तथैव परिवाराणां द्वारावरणवासिनाम् ॥६२॥
स्वमन्त्रयुक्ता चान्येषामर्चितानां यथा क्रमम् ।
पुनः पुनः प्रयोक्तव्या हार्द्रधीशिरसा सह ॥६३॥
पद्माकारौ करौ कृत्वा अंगुष्ठे च कनिष्ठके ।
संमील्य चाग्रदेशात्तु कर्णिकेव यथा द्विजाः! ॥६४॥
तर्जन्यादित्रयं शेषमूर्ध्वगं च करद्वयात् ।
असंलग्नं तु निक्षिप्य मुद्राग्रेः सम्प्रकीर्तिता ॥६५॥
किञ्चिदाकुञ्चयद्धस्तं दक्षिणं हृदयोपगम् ।
अंगुष्ठौ विरलौ स्पष्टौ मुद्रा ह्यावाहने स्मृता ॥६६॥
उत्तानौ संहतौ पाणी कृत्वांगुष्ठद्वयेन तु ।
स्वां स्वां कनिष्ठां विसृजेदेषा सन्निधिमुद्रिका ॥६७॥
अनामयोर्मध्यमयोः कुर्यादुन्मार्जनं ततः ।
संस्तम्भसन्निरोधौ च द्वौ कृतौ भवतस्तथा ॥६८॥
पाणिभ्यामंजलिं कुर्याद्दीपद्विकसितं द्विजाः ! ।
एषा सांमुख्यमुद्रा हि सम्मुखीकुरुते विभुम् ॥६९॥
खड्गधारासमाकारौ विरळांगुलिकावुभौ ।
अंगुष्ठौ दण्डवत्कृत्वा मुष्टिबन्धं शनैश्शनैः ॥७०॥
कुर्यात्कनिष्ठिकादिभ्यो मुद्रैषा स्याद्विसर्जने ।
अनेन विधिना मुद्रां यो बध्नाति विधानवित् ॥७१॥
तेनेदं मुद्रितं विश्वं पुनर्भवति सिद्धिदम् ।
अथ प्रागुक्तमन्त्राणां ध्यानं वक्ष्ये क्रमाद्द्विजाः! ॥७२॥
प्रथमं त्वेकमूर्तेर्वै शृणुध्वं ध्यानमुत्तमम् ।
ध्येयः परो जगन्नाथो देवोनन्तसमन्वितः ॥७३॥
वरदाभयदेनैव शंखचक्राङ्कितेन तु ।

त्रैलोक्योद्धृतिदक्षेण युक्तः पाणिद्वयेन तु ॥७४॥
शान्तः संवित्स्वरूपस्तु भक्तानुग्रहकाम्यया ।
अनौपम्येन वपुषा ह्यमूर्तो मूर्ततां गतः ॥७५॥
विश्वमाप्याययन्कान्त्या पूर्णेन्द्वयुततुल्यया ।
रश्मिभिर्भास्करो यद्वत्समुद्र इव वीचिभिः ॥७६॥
स्वमूर्तिभिरमुक्ताभिरच्युतादिभिरन्वितः ।
दीप्तिमद्भिरमूर्तैस्तु सुधाकल्लोलसंकुलः ॥७७॥
पूर्ण आभरणैः सर्वैर्निर्विकाराङ्घ्रिविग्रहः ।
ततः सुपुप्तिव्यूहस्य वक्ष्ये ध्यानमनुत्तमम् ॥७८॥
वेदकत्वेन भगवान् ब्रह्मसंवलिताकृतिः ।
स्तम्भवत्कर्णिकामध्ये स्थित्वा वेद्यत्वमेति च ॥७९॥
स्वयमेवोपकाराय कर्मिणां ब्रह्मयाजिनाम् ।
प्राग्भागादुत्तरं यावद्गुणभेदेन लाङ्गलिन् ! ॥८०॥
विभजत्यात्मनात्मानं वासुदेवः परः प्रभुः ।
अनुज्झितस्वरूपस्तु प्राग्भागे षड्गुणात्मना ॥८१॥
बलसंवलितेनैव ज्ञानेनास्तेऽथ दक्षिणे ।
ऐश्वर्येण च वीर्येण प्रत्यग्भागे प्रतिष्ठितः ॥८२॥
तेजश्शक्त्यात्मना सौम्ये संस्थितः परमेश्वरः ।
यद्यप्यरूपो भगवान् व्यूहात्मा गुणलक्षणः ॥८३॥
अत्रापि पूर्वमेवोक्तं रूपमस्योपचर्यते ।
किं तु द्वितीयमूर्तेर्वै शुभे पाणितलद्वये ॥८४॥
स्फुटो रेखामयः शंखः सुव्यक्तं लाङ्गलं महत् ।
रम्येषुणा तृतीयस्य दक्षिणश्चिह्नितः करः ॥८५॥
तुर्यस्यासिवरेणैव शङ्ख आभ्यां करद्वये ।
अवाङ्मुखःकरवशादूर्ध्ववक्त्रः स्वभावतः ॥८६॥

एतावता लक्षणेन व्यक्तिभावं गतेन च ।
भावस्थितिं निबध्नाति व्यूहेऽस्मिन् साधकस्य तु ॥८७॥
सादृश्यात्षड्गुणत्वाच्च समत्वाच्च विशेषतः ।
शान्तत्वान्निष्क्रियत्वाच्च न भेदो विद्यते यतः ॥८८॥
गुणद्वयद्वयेनैव यद्यप्युक्तः पुरा मया ।
एकैकं भगवद्रूपं मुख्यवृत्त्या तथापि हि ॥८९॥
चतुष्कमविशिष्टं यद्गुणानां समवस्थितम् ।
यद्व्रजेतानुवृत्तिं च एकैकस्य च सर्वदा ॥९०॥
स्वप्नव्यूहध्यानमथ शृणुध्वं मुनिसत्तमाः ! ।
येनात्मा स्वप्न एवात्मा कर्मिणामनुकम्पया ॥९१॥
क्रमेण व्यक्ततां नीतो वाग्वर्णकमलोपरि ।
अभिन्नपूर्णषाड्गुण्यविभवेनोपबृंहितः ॥९२॥
भाभिः सितादिभिर्दीप्तमभिन्नाभिर्निरन्तरम् !
अवलोक्यामलन्देवमुदितत्वेन तेजसा ॥९३॥
कर्णिकाग्रं समाश्रित्य दिव्यं मन्त्रतनुं पुनः ।
पश्येत्स्वयं स्वशक्त्या वै कालेनालक्ष्यमूर्तिना ॥९४॥
संहरन्तं च तद्रूपं व्यक्तं पूर्वोक्तलक्षणम् ।
एवं मन्त्रमयं देहमुपसंहृत्य लाङ्गलिन्! ॥९५॥
आमूलात्कर्णिकाग्रं च सम्पूर्यास्ते स्वतेजसा ।
त्र्यक्षयूपस्वरूपेण त्वाक्रम्य स्वं महामते! ॥९६॥
सौम्यमूर्तिचतुष्कन्तु सर्वदिक्प्रसृतं च यत् ।
प्राच्यां सितेन वपुषा सूर्यकान्त्यधिकेन तु ॥९७॥
व्यक्तिमभ्येति भगवान् वासुदेवात्मना स्वयम् ।
पद्मरागसमानेन तेजसा तदनन्तरम् ॥९८॥
उदेति दक्षिणस्यां वै प्रभुः सङ्कर्षणात्मना ।

घर्मांशुरश्मिसन्तप्तशतधामाधिकेन तु ॥९९॥
रूपेण पश्चिमस्यां च व्यक्तं प्रद्युम्नसंज्ञया ।
शरद्गगनसङ्काशवर्णेन परमेश्वरः ॥१००॥
समास्त उत्तरस्यां चाप्यनिरुद्धात्मना ततः ।
संस्थान आदिमूर्तिर्वै सर्वेषां तु समं स्मृतम् ॥१०१॥
सूर्यकोटिप्रभाः सर्वे तेजसा कमलेक्षण! ।
दन्तज्योत्स्नावितानैस्तु प्रकटीकृतदिङ्मुखाः ॥१०२॥
पूर्णचन्द्रायुताकारा मुक्ताहाराद्यलंकृताः ।
लसत्पीयूषसदृशैः स्वाम्बरैः स्रग्वरैर्युताः ॥१०३॥
वरायुधोद्यतकराः स्वकैश्चिह्नैरनुज्झिताः ।
लेखोस्थितैस्तु कल्हारैः पादपत्रतलाङ्किताः ॥१०४॥
निमग्नजनसन्तापशमनव्यपृताननाः ।
करुणापूर्णहृदया जगदुद्धरणोद्यताः ॥१०५॥
स्वदेहतेजस्सम्भूतज्वालामण्डलमध्यगाः ।
एवमेवैष भगवान् सन्तर्प्यः प्राक्प्रयोगतः ॥१०६॥
एकैकेन तु भागेन प्रभवेन क्रमेण तु ।
पुनरेवानिरुद्धादि प्राङ्मूर्त्यन्तं महामते ! ॥१०७॥
क्रमान्निरन्तरैर्भोगैरभ्यर्च्यः परमेश्वरः ।
प्रणवद्वितयेनैव बुध्या तु सुविशुद्धया ॥१०८॥
अप्ययाख्येन विधिना ह्यागनिरतैर्बुधैः ।
ततस्तु जाग्रद्व्यूहस्य वक्ष्ये ध्यानक्रमं द्विजाः ! ॥१०९॥
अनन्तसरसि क्षार्णे विश्रान्तं यन्महामते! ।
अकाराक्षरमूलं तु नित्यं सर्वाश्रयाम्बुजम् ॥११०॥
अकाराक्षरनाळं तु शेषसर्वार्णपल्लवम् ।
दिगष्टकं समाश्रित्य यत्तु तिष्ठति चक्रवत् ॥१११॥

तत्पत्रमध्ये भगवान् जाग्रत्संज्ञे पदे त्वथ ।
यष्टव्यो भावनीयश्च यथा तदधुनोच्यते ॥११२॥
परः प्रणवबीजेन सम्पूर्णः स्वेन तेजसा ।
स्थितस्त्वाकर्णिकोर्ध्वाच्च केसरान्तर्निरीक्ष्य च ॥११३॥
ततः प्रणवपूर्वं तु ब्रह्मबीजचतुष्टयात् ।
कदम्बपुष्पसदृशान्मरीचिशतसङ्कुलात् ॥११४॥
दिक्क्रमेणोदितं ध्यायेद्विभोर्मूर्तिचतुष्टयम् ।
सुव्यक्तलक्षणं मान्त्रं विभवेनावृतं बहिः ॥११५॥
स्फुलिङ्गकणतुल्येन समुद्भूतेन वै परात ।
वाचकान्तर्निविष्टेन व्यक्ततामागतेन च ॥११६॥
तत्राद्यं भगवद्रूपं हिमकुन्देन्दुकान्तिमत् ।
चतुर्भुजं सौम्यवक्त्रं पुण्डरीकनिभेक्षणम् ॥११७॥
पीतकौशेयवसनं सुवर्णध्वजशोभितम् ।
मुख्यदक्षिणहस्तेन भीतानामभयप्रदम् ॥११८॥
विद्याकोशस्तु वामेन संगृहीतश्च शङ्करात् ।
पृष्ठगे ह्यपरस्मिंस्तु प्रोद्यतं दक्षिणो त्वरि ॥११९॥
तथाविधे गदा वामे निषण्णा वसुधातले ।
सिन्दूरशिखराकारमेकवक्त्रं चतुर्भुजम् ॥१२०॥
अतसीपुष्पसङ्काशवासो भृत्तालला्छितम् ।
मुख्येन पाणियुग्मेन तुल्यमाद्यस्य वै विभोः ॥१२१॥
सीरं तच्चक्रहस्तेस्य मुसलं तु गदाकरे ।
प्रावृण्णिशासमुदितखद्योतचयदीधिति ॥१२२॥
रक्तकौशेयवसमं मकरध्वजशोभितम् ।
एकवक्त्रं चतुर्बाहुं तृतीयं परमेश्वरम् ॥१२३॥
मुख्यहस्तद्वयं चास्य प्राग्वद्ध्येयं महामते ! ।

वामे परस्मिन् शार्ङ्गं च दक्षिणे बाणपञ्चकम् ॥१२४॥
अञ्जनाद्रिप्रतीकाशं सुसिताम्बरवेष्टितम् ।
चतुर्भुजं विशालाक्षं मृगलांछनभूषितम् ॥१२५॥
आदिवत्पाणियुगळमाद्यमस्यापि कीर्तितम् ।
दक्षिणादिक्रमेणाथ द्वाभ्यां वै खड्गखेटकौ ॥१२६॥
वनमालाधराः सर्वे श्रीवत्सकृतलक्षणाः ।
शोभिताः कौस्तुभेनैव रत्नराजेन वक्षसि ॥१२७॥
किरीटमकुटै रम्यैर्हारकेयूरनूपुरैः ।
ललाटतिलकैश्चित्रैः स्फुरन्मकरकुण्डलैः ॥१२८॥
सम्यैर्विविधैर्माल्यैः कर्पूराद्यैर्विलेपनैः ।
रम्यैरलंकृताश्चैव भावनीयाः सदैव हि ॥१२९॥
पुनरप्यययोगेन प्रागुदङ्मध्यमे दळे ।
सितकृष्णेन वपुषा अनिरुद्धं स्मरेत्प्रभुम् ॥१३०॥
उदक्पश्चिममध्यस्थे प्रद्युम्नं भावयेच्छदे ।
रूपेण कृष्णपीतेन अप्ययावसरे तु वै ॥१३१॥
प्रत्यग्दक्षिणमध्यस्थे पीतरक्तवपुर्धरम् ।
स्मरेत्सङ्कर्षणं देवं प्रतिस्रोतःक्रियाविधौ ॥१३२॥
मध्ये प्राग्दक्षिणस्यां च सितरक्तेन तेजसा ।
वासुदेवो जगन्नाथो भावनीयो महामते ! ॥१३३॥
अथ शुद्धाशयत्वेन स्फटिकोपलवद्विभुः ।
स्थानभेदं समासाद्य सचकान्तिद्वयात्तु वै ॥१३४॥
गृह्णाति शबळं रूपमुपसंहारलक्षणम् ।
अभेदनादिमूर्तौ संस्थितं वटबीजवत् ॥१३५॥
सर्वक्रियाविनिर्मुक्तममूर्तं परमार्थतः ।
चातुरात्म्यं तदाद्यं वै शुद्धसंविन्मयं महत् ॥१३६॥

वह्न्यर्केन्दुसहस्राभमानन्दस्पन्दलक्षणम् ।
बीजं सर्वक्रियाणां यद्विकल्पानां यदास्पदम् ॥१३७॥
चातुरात्म्यं तु तद्विद्धि द्वितीयममलेक्षण! ।
नित्य नित्याकृतिधरं तेजसा सूर्यवर्चसम् ॥१३८॥
भिन्नं सितादिभेदेन ऊर्ध्वाधः संस्थितेन च ।
कैवल्यभोगफलदं भवबीजजयङ्करम् ॥१३९॥
चातुरात्म्यं तृतीयं तु सुधासन्दोहसुन्दरम् ।
स्थित्युत्पत्तिप्रळयकृत्सर्वोपकरणान्वितम् ॥१४०॥
प्रकृतिं स्वामधिष्ठाय समुदेत्यस्तमेति च ।
चतुर्थं विद्धि तद्यस्य विश्वं तिष्ठति शासनात् ॥१४१॥
यत्तत्सितादिकं रूपं चतुर्था यत्कृते युगे ।
रक्ताद्यं सितनिष्ठं च त्रेतायां हि महामते ! ॥१४२॥
पीतं कृष्णं सितं रक्तं सम्प्राप्ते द्वापरे युगे ।
कलौ कृष्णं सितं रक्तं पीतं चानुक्रमेण तु ॥१४३॥
युगसन्ध्याचतुष्के तु बिभर्ति परमेश्वरः ।
विभिन्नमूर्तिसामान्यं रूपं यत्तन्निबोध मे ॥१४४॥
पीतरक्तं कृतान्ते तु रक्तपीतमतःपरम् ।
पीतकृष्णं च तदनु कृष्णशुक्लमनन्तरम् ॥१४५॥
भेदः प्रागुदितैर्ज्ञेय आयुधाम्बरलांछनैः ।
समत्वादन्यथा केन विभागोऽत्रावधार्यते ॥१४६॥
ततस्तु केशवादीनां ध्यानं वक्ष्ये मुनीश्वराः! ।
सर्वगं परमं ज्योतिरमूर्तममलं हि यत् ॥१४७॥
स एव वासुदेवेति मत्वा सम्यग्यजेत्ततः ।
चेतसामृतसङ्काशैः पुष्पाद्यैरखिलैः प्रभुम् ॥१४८॥
पश्चात्तममलंधाम ध्यायेन्मूर्तमनश्वरम् ।

श्रोणीतटार्पितकरं सानुकम्पमनूपमम् ॥१४९॥
दक्षिणेन तु हस्तेन भक्तानामभयप्रदम् ।
पुष्पाभरणवस्त्राढ्यं शङ्खचक्रद्वयान्वितम् ॥१५०॥
ततः तस्मात्तु वै धाम्नो युगपन्निःसृतं स्मरेत् ।
महत् स्फुलिङ्गसङ्काशं समूहं सततोदितम् ॥१५१॥
तेन चाक्रमरवृन्दं समाक्रान्तं च भावयेत् ।
अथ प्रत्येकतेजोंशादुद्भूतं भावयेत्क्रमात् ॥१५२॥
त्रयं त्रयं सिताद्यं च केशवाद्यं चतुर्भुजम् ।
दक्षिणोत्तरपाणिभ्यां पृष्ठतः केशवादिषु ॥१५३॥
युग्मं युग्मं परिज्ञेयं क्रमेणोर्ध्वगतं त्विदम् ।
शङ्खचक्रे कजं विद्या सा च शङ्खो गदाम्बुजम्॥१५४॥
तच्छङ्खः स कजं विद्या चक्रंचक्रं गदागदा ।
शंखश्चक्रं कजं पद्मं चक्रं शंखस्ततो गदा ॥१५५॥
तद्वद्द्वयोग्रसंस्थाभ्यामधरस्थं द्वयं द्वयम् ।
ज्ञेयं दामोदरान्तानां द्वादशानामिदं शृणु ॥१५६॥
पद्मं गदा ध्वनिश्चक्रं तत्पद्मो हेतिराट्ध्वनी ।
गदाचक्रं च तद्विद्या पद्मं शंखश्च सोम्बुजम् ॥१५७॥
गदापद्म गदा शंखः स विद्याम्बुरुहं त्वरि ।
भूयोधामगणात्तस्मात्संस्मरेन्निस्सृतं महत् ॥१५८॥
केशवादिविभागेन श्रियाद्यं च त्रयं त्रयम् ।
कमलादित्रयेणैव त्वन्योन्यत्वेन लांछितम् ॥१५९॥
वद्धपद्मासनस्थं च दिग्विदिक्षु च संमुखम् ।
संवीजयत्तु त्रिनयाचामरेण सितेन च ॥१६०॥
देवीद्वादशकं चैव तासां रूपमथोच्यते ।
पूर्णचन्द्राननाः सर्वाः सर्वर्तुकुसुमान्विताः ॥१६१॥

सर्वलक्षणसम्पूर्णाः सर्वाभरणभूषिताः ।
विद्रुमाभं त्रयं त्वाद्यमपरं चम्पकप्रभम् ॥१६२॥
प्रियङ्गुमञ्जरीश्यामं तृतीयं देवतात्रयम् ।
चतुर्थं त्रितयं ध्यायेज्जातिपुष्पसमप्रभम् ॥१६३॥
आद्यायां कमलं पाणावन्यस्यां हेतिराट्करे ।
शंखं ध्याये तृतीयस्यामेवं ध्यायेत्त्रिषु त्रिषु ॥१६४॥
ततो विभवदेवानां ध्यानं वक्ष्ये द्विजोत्तमाः! ।
वैभवीयो महाबुद्धे ! देवतानिचयो महान् ॥१६५॥
य उक्तस्ते मया पूर्वमेकैकं विद्धि तं त्रिधा ।
चतुर्णां युगसन्धीनां युगानां च तथैव हि ॥१६६॥
विश्वविप्लवदोषाणां विनाशाय समुद्यतम् ।
सितरक्तादिरूपेण ज्वलदस्त्रकराङ्कितम् ॥१६७॥
कार्यारम्भे तथा मध्ये ह्यवसाने तु सर्वदा ।
सन्धत्ते रूपमात्मीयमेक एव त्वनेकधा ॥१६८॥
श्रेयसे सर्वलोकानां स्थूलं तत्कामरूपधृक् ।
अनुद्यतेन वपुषा कुन्देन्दुधवळेन च ॥१६९॥
वीरासनादिना चैव स्थितं मुदितमानसम् ।
लीलाविधृतसर्वास्त्रं सौम्यवक्त्रमनाकुलम् ॥१७०॥
धिया दोषगणं सर्वं ध्वंसयन्तं च मोक्षिणाम् ।
तद्व्यक्तं शान्तसंज्ञं च रूपं रूपवतां वर! ॥१७१॥
प्रकाशयति सन्मार्गं समाधिनिरतात्मनाम् ।
तेजोमयं यत्तद्रूपं वैभवं शान्तसंज्ञकम् ॥१७२॥
उपासकानां भक्तानां सर्वे सर्वफलप्रदाः ।
विशाखयूपो भगवान् ! स्वयं विश्वसिसृक्षया ॥१७३॥

अध्यक्षेण स्वरूपेण समुदेत्येक एव हि ।
महिमानं तु निश्शेषं शुद्धं संवित्पुरस्सरम् ॥१७४॥
आदायाऽऽद्यपदस्थस्य चातुरात्म्यस्य वै विभोः ।
तथा चाधारभूयिष्ठं देवानां चेष्टितं हि यत् ॥१७५॥
सितादयः कान्तयो याः श्रचादिकं च महामते ! ।
सलाञ्छनं वैभवीयं सायुधं बीजमेव तु ॥१७६॥
ज्ञानाद्यं गुणषट्कं च तदुक्ताः शक्तयोऽखिलाः ।
अणिमाद्यष्टकं चैव स्थित्युत्पत्तिलयोदयाः ॥१७७॥
शक्तिः सा चातुरात्मीया स्वैश्वरीत्यभिधीयते ।
यथार्ककिरणव्रातं त्यक्त्वा तेजःकणो महान् ॥१७८॥
स्वकारणं विना सर्वमापूरयति गोचरम् ।
स्वातन्त्र्यात्परिपूर्णत्वाचद्वत्स परमेश्वरः ॥१७९॥
विहाय वासुदेवाद्यं मूर्तिशाखाचतुष्टयम् ।
वैभवीयस्य यूथस्य पतित्वेनावतिष्ठते ॥१८०॥
सम्भूतिस्थितिसंहारभोगकैवल्यलक्षणम् ।
प्रेरयन्वै धिया चक्रं पञ्चारमिदमुत्तमम् ॥१८१॥
स्मर्तव्यस्स्वपदस्थः स स्वबीजेनामलात्मना ।
आमूर्धतोंऽघ्रिपर्यन्तं तदीयं गात्रमण्डलम् ॥१८२॥
रत्नवद्वैभवीयैस्तु बीजैर्भान्त्यमलंकृतम् ।
क्रमादुच्चार्यमाणैस्तैरमृतौघेन पूर्ववत् ॥१८३॥
पूजनात्परमेशत्वमचिरादेव यच्छति ।
इत्येवमादिः सर्वेषां भाविनां परमेश्वरः ॥१८४॥
स्थितोऽन्तर्यामिभावेन रूपमासाद्य निष्कळम् ।
आप्तकामः स भगवान् स्वव्यापारवशेन तु ॥१८५॥
स्वां शक्तिमवलम्ब्यास्ते पद्मनाभात्मना पुनः ।

धराम्बुहुतभुग्वातमूलनाळदळोदरे ॥१८६॥
चतुस्तत्त्वमये पद्मे गगनैकार्णवोदरे।
मानसेऽनन्तशयने दिव्यबोधतनुर्विभुः ॥१८७॥
सहस्रांशुसहस्राभ उत्तानस्थो हि लीलया।
ततो विविधरत्नाभे मायीये नाभिपुष्करे ॥१८८॥
प्रोद्वहंस्तु स्ववीर्येण विद्यां सामर्थ्यविग्रहाम्।
मूर्तैर्ध्वजादिकैः सर्वैरावृतस्तत्परायणैः ॥१८९॥
अनन्तचेष्टस्य विभोरित्येवं त्वीश्वरात्मनः।
भोगापवर्गदं रूपं शान्तं व्यक्तं च वैभवम् ॥१९०॥
प्राग्वत्तुर्यपदावस्थं स्मरेद्धृत्कमलाम्बरे।
दिशो दश द्योतयन्तं नानागात्ररुहैश्श्रितम् ॥१९१॥
सौम्यं द्विरष्टवर्षं च राजीवदळलोचनम्।
भचक्रचक्रधृग्देवं गदादेहं तथैव च ॥१९२॥
शक्तिमाधारसंज्ञां च प्रोद्वहन्तं स्मरेद्ध्रुवम्।
स्थितो यः स्तम्भभूतस्तु अस्मिन्वै विश्वमन्दिरे ॥१९३॥
नभोऽनिलात्मनाचैव भूमिकाभिन्नलक्षणे।
इत्येवं मुख्यपूर्वाणां ध्रुवान्तानां प्रकीर्तितम् ॥१९४॥
शेषादीनां च शेषाणामिदानीमवधारय।
ध्यानं पाताळनिलयपर्यन्तानां यथास्थितम् ॥१९५॥
एक एव जगन्नाथ स्वरूपाद्यैस्तु शक्तिभिः।
नानात्वेनाप्यनन्तो यो भक्तानुग्रहकाम्यया ॥१९६॥
तस्याभिमानिकं रूपं शृणु सर्वेश्वरस्य तु।
तुहिनाचलसङ्काशं पूर्णचन्द्रसमाननम् ॥१९७॥
स्वमणिव्यञ्जितेनैव युक्तं फणगणेन तु।
प्रोद्वहन्तं हलं चक्रमपसव्यद्वयेन तु ॥१९८॥

वामहस्तद्वयेनैव शङ्खं मुसलमेव च ।
नित्यसन्निहितं शेषशक्तिं सर्वज्ञमच्युतम् ॥१९९॥
मनस्यन्तर्मुखानां यत्कर्मिणां पूरयंश्च तत् ।
शक्तीशोऽप्यथ सञ्चिन्त्यः पुण्डरीकनिभेक्षणः ॥२००॥
इच्छारूपधरैश्चैव सौम्यः प्रहसिताननः ।
व्यक्तये च फलादीनां भक्तानामनुकम्पया ॥२०१॥
पिण्डयन् स्वांघ्रियुग्मेन वसुधां च करद्वयम् ।
युगानुसारिकान्तिश्च चतुर्वक्त्रश्चतुर्भुजः ॥२०२॥
मूर्तचक्रगदाहस्तस्त्वमूर्ताचाम्बुजाङ्कितः ।
शमं नयति सन्तापं कमलेनेन्दुकान्तिना ॥२०३॥
नानामन्त्रमयीं विद्यां व्यञ्जयत्यगलात्मनाम् ।
सम्यग्वाक्पतिना चैव कम्बुना शब्दमूर्तिना ॥२०४॥
आज्ञाप्रतीक्षकेनैव गदाचक्रद्वयेन तु ।
प्रेरितेन हिनस्त्याशु साधुसन्तापकारिणम् ॥२०५॥
नारसिंहेन वक्त्रेण भवभीतिविघातकृत् ।
पुष्णाति सर्वभूतानि वाराहेणाऽमृतात्मना ॥२०६॥
कुरुते पश्चिमस्थेन कापिलेनोपसंहृतिम् ।
भक्तिश्रद्धापराणां च स्मृतमात्रे सदैव हि ॥२०७॥
हृन्मध्ये गगने भूमौ वह्निमध्ये जलान्तरे ।
चतुर्णां ब्राह्मणादीनां स्वयमेवाऽनुकम्पया ॥२०८॥
चातुरात्म्येन रूपेण चतुर्धा व्यक्तिमेति च ।
आत्मतुल्येन देहेन शङ्खपद्माङ्कितेन तु ॥२०९॥
मूर्तिमद्भिर्हलाद्यैस्तु युक्तेन वदनैर्विना ।
वर्णानुरूपवर्णेन समेनाप्यसमेन तु ॥२१०॥
अन्योन्यानुगतेनैव पूर्वोद्दिष्टेन नान्यथा ।

प्रळयानलसूर्याभः स्मर्तव्यो मधुसूदनः ॥२११॥
अष्टबाहुर्विशालांसोप्यभिष्टोमकराङ्कितः ।
शंखचक्रधरश्चैव बाणकार्मुकधृक्तथा ॥२१२॥
रजस्तमोभ्यां मूर्ताभ्यां सम्प्रवृत्तिनिवृत्तये ।
कर्णिपीठनिविष्टं च ध्येयं पाणियुगं विभोः ॥२१३॥
विद्याधिदेवं भगवन् ! चतुर्वक्त्रं चतुर्भुजम् ।
लम्बकूर्चं जटादण्डकमण्डल्वक्षसूत्रिणम् ॥२१४॥
फुल्लरक्ताम्बुजाभासं श्वेतपद्मकराङ्कितम् ।
श्रुती ऋगाद्या वक्त्रेभ्यः प्रोद्गिरन्तमतः स्मरेत्॥२१५॥
निर्धूमाङ्गारवर्णाभं शंखपद्माक्षसूत्रिणम् ।
फुल्लरक्तांशुविभवं देवताध्यात्मसूत्रकम् ॥२१६॥
ध्यायेदभयपाणिन्तं कपिलं तेजसां निधिम् ।
ऽ.ऽन्तः सर्वेश्वरो देवः साक्षीभूतो व्यवस्थितः ॥२१७॥
स्फटिकोपलवद्भावान् स्वशक्त्याऽर्थान् बिभर्ति च ।
अविद्याविकृतानां तु भक्तानां सत्पदाप्तये ॥२१८॥
तमनादिं जगन्नाथं बहिःस्थूलतरात्मना ।
द्यावापृथिव्योरन्तस्स्थं विश्वरूपमतः स्मरेत् ॥२१९॥
अनेकवक्त्रांघ्रिनयनमनेकितकराङ्कितम् ।
यद्यप्यनेकवदनमनेकभुजभूषितम् ॥२२०॥
तथापि वै त्रयस्त्रिंशद्वदनैर्विविधैर्युतम् ।
चतुरभ्यधिकैर्दिव्यैश्चत्वारिंशन्महाभुजैः ॥२२१॥
ब्रह्मरुद्रेन्द्रदक्षार्कचन्द्रसिद्धास्तथा श्रुतिः ।
पौरुषस्य तु वक्त्रस्य चोर्ध्ववक्त्रस्थितास्त्वमी ॥२२२॥
पिशाचाग्निमरुच्छैलर्द्धीपगन्धर्वचारिभिः ।
वक्त्रैरु र्वस्थि ...येद्दक्षिणं वदनं विभोः ॥२२३॥

पाताळदिङ्महामेघलोकराशिगृहोत्थितैः ।
वक्त्रैस्तारसमेतैस्तु ध्यायेद्वक्त्रं तु पश्चिमम् ॥२२४॥
रक्षान्तकाग्नुनागाद्यैर्वसुनक्षत्रगोगणैः ।
वक्त्रैर्वाराहवक्त्रोर्ध्वे ध्यायेच्चैवमतश्शुभैः ॥२२५॥
पश्चाद्यं चातुरात्मीयमन्त्राणां दशकं महत् ।
प्रोच्छ्रितं हि सुवर्णाद्यं तल्लाञ्छनचतुष्टयम् ॥२२६॥
लोके शास्त्राष्टकं चैव पुस्तकं चाक्षसूत्रकम् ।
दर्वीकमण्डलुं हैममभयं हि वरान्वितम् ॥२२७॥
दर्भाजिनं ततश्छत्रं सुशुभं चामरं सितम् ।
स्रुवस्रुचौ चापि कलशौ वेदिर्वह्निसमन्विता ॥२२८॥
चन्द्रार्कमण्डले पूर्णे नागेन्द्रो मणिदर्पणः ।
पुष्पमग्र्यजनं दिव्यं विश्वपत्रलता तथा ॥२२९॥
स्मर्तव्यास्तु भुजेष्वस्य विभोः संस्थानकैः समैः ।
यथोदितक्रमेणैव व्यत्ययो न भवेद्यथा ॥२३०॥
भाभिर्नानाप्रकाराभिर्देहोत्थाभिरिदं जगत् ।
भासयन्तं जगन्नाथं स्मरेद्धृत्कमलादिषु ॥२३१॥
हंसमूर्तिमथात्मानं ज्ञानयज्ञभुजं स्मरेत् ।
कुन्देन्दुशिखकान्तिं च हेमतुण्डं महातनुम् ॥२३२॥
रजस्तमोंघ्रिं सत्सत्त्वं विग्रहं परमेश्वरम् ।
धर्माधर्मेक्षणे ध्यायेदग्नीषोमात्मकेन तु ॥२३३॥
दक्षिणोत्तरसंस्थेन पक्षयुग्मेन राजितम् ।
बहिःस्थमेवोदकस्थं काञ्चनाचलसन्निभम् ॥२३४॥
ध्यात्वार्चयेत्तु विधिवद्धंसविग्रहमच्युतम् ।
बहिर्द्रव्यमयस्त्वेकः सामान्यैनैकलक्षणम् ॥२३५॥
सम्यङ्निर्वर्णितः स्वर्गं पूर्वमिच्छति नार्थिनाम् ।

अन्तर्वेद्यां चतुर्थां यस्त्वेक एव महामखम् ॥२३६॥
तपोयागजपध्यानस्वरूपः शश्वदेव हि ।
याजिनामपवर्गं तु विदधाति समापनात् ॥२३७॥
तं यज्ञपुरुषं ब्रह्म वासुदेवमजं हरिम् ।
ध्यायेद्वै सूकरात्मानमञ्जनाद्रिसमप्रभम् ॥२३८॥
यज्ञाङ्गचिह्नितांघ्रिं च महाव्याहृतिदंष्ट्रिणम् ।
भूर्भुवस्स्वश्शरीरं च शब्दब्रह्मैकमानसम् ॥२३९॥
निर्णुदन्तं प्रपन्नानामविद्यापङ्कमञ्जसा ।
वेदेन पोत्रप्रान्तेन त्वक्षयेनाऽमलेन च ॥२४०॥
वासनावासितानां च जीवानां भवशान्तये ।
महाविभूतिर्भगवान् पूर्णषाड्गुण्यविग्रहः ॥२४१॥
स्वकाच्छान्ततराद्ब्रह्मतत्त्वादादाय चाऽञ्जलिम् ।
करोति सेचनं दोषदग्धानां च स्वतेजसा ॥२४२॥
स्थूलरूपेण तमजं वहिराराधनाविधौ ।
आध्मातं वायुना यद्वाग्निर्धूमाङ्गारपर्वतम् ॥२४३॥
ध्यायेत्तद्वन्महादीप्तं वाजिवक्त्रमलाञ्छनम् ।
वद्धब्रह्माञ्जलीकस्थं द्रवत्कनकलोचनम् ॥२४४॥
घोणाग्रेणाहरन्तं च त्रैलोक्योत्थं जलेन्धनम् ।
कृत्वा तद्भस्मसात्सम्यक् फूत्कुर्वन्तं मुखेन तु ॥२४५॥
धर्मं सामान्यममलमनादिनिधनं विभुम् ।
दुर्लभं यत्प्रबुद्धानां तत्प्रसादधिया विना ॥२४६॥
तस्य स्थूलतरं रूपं शृणु तत्प्राप्तये परम् ।
तुहिनाचलसङ्काशं सौम्यवक्त्रं चतुर्भुजम् ॥२४७॥
कामार्थावुद्वहन्तं च शङ्खपद्मच्छलेन तु ।
साधुमार्गे स्थितानां तु संयच्छन्तं धिया च तौ॥२४८॥

सिताक्षमालागर्भं तु वरपाणिमतः स्मरेत् ।
वाङ्मयं निखिलं यस्य वस्तुजातमनश्वरम् ॥२४९॥
शक्तित्वेन स्वभावस्यचिद्रूपस्यामितद्युतेः ।
वरवाजिमुखं ध्यायेदथ वागीश्वरं प्रभुम् ॥२५०॥
सूर्यकान्तादिसङ्काशमनेकभुजभूषितम् ।
कमलं चाक्षसूत्रं च वेदिं त्रेताग्नि भूषितम् ॥२५१॥
साज्यधारौ स्रुक्स्रुवौ तु विष्टरं सोमसंयुतम् ।
दर्भाजिनं मेखलांश्चाप्यपसव्येषु षट्सभी ॥२५२॥
स्मरेद्वामकरेष्वस्य पुस्तकं शंखमेव च ।
दण्डं कमण्डलुं दर्वीमेकस्मिंस्त्रितयं करे ॥२५३॥
पूर्णं ग्राम्यैस्तथाऽऽरण्यैश्चरुबीजैस्तु पञ्चमे ।
सङ्मूलफलपात्रैस्तु यज्ञद्रव्यैः सदक्षिणैः ॥२५४॥
सर्वाश्रमोपकरणैर्युक्तं च समभाजनम् ।
ध्येयमस्य भुजे षष्ठे वृतं मूर्तै ऋगादिभिः ॥२५५॥
वेदाङ्गैरुपवेदैस्तु संस्कारैः सगणैस्तथा ।
विकारवसुधाधारे स्वभावे तु गुणोद्भवौ ॥२५६॥
स्वशक्तिभावितं कृत्वा मनःपूर्वं चतुष्टयम् ।
प्रकृत्यन्तः समास्ते यः सर्वज्ञः पुरुषात्मना ॥२५७॥
निषण्णं भोगिशय्यायां तपनीयरुचिं स्मरेत् ।
देवमर्णवशाय्याख्यं मूर्तैश्चक्रादिभिर्वृतम् ॥२५८॥
लक्ष्म्या संवाह्यमानं च समाक्रान्तं च निद्रया ।
वीज्यमानं हि वै प्रीत्या गीयमानं हि विद्यया ॥२५९॥
कूर्मात्मा कूर्मवद्देवो ध्यातव्यस्त्वथ लाङ्गलिन् ।
द्रवत्कनकवर्णाभस्स्वसामर्थ्यजलाश्रयः ॥२६०॥
शक्त्यादिककलाद्वन्द्वद्वितयांघ्रिः सनातनः ।

क्षान्त्यादिककलाढ्यश्च प्रोद्गिरंस्तु श्रुतित्रयम् ॥२६१॥
अतसीपुष्पसङ्काशः शङ्खचक्रगदाधरः ।
मखोपकरणाङ्गश्च निमग्नोद्धारणक्षमः ॥२६२॥
स्वशक्तिविभवाधारमिच्छाज्ञानक्रियार्चिषम् ।
नानाविशेषविज्ञानस्फुलिङ्गोर्मिसदोदितम् ॥२६३॥
दारयन्तं स्थितं हार्दमनूनं मोहमुल्बणम् ।
नदन्नादमनाख्येयं तमजं परमेश्वरम् ॥२६४॥
सन्तप्तकनकाभं च ध्यायेद्देवं नृकेसरिम् ।
ज्वलदग्निस्फुलिङ्गाभिः स्वदेहोत्थाभिरावृतम् ॥२६५॥
रथाङ्गशङ्खधातारं ब्रह्ममूर्तसुभीषणम् ।
सत्सत्वकरजश्रेणीदीप्तेनोभयपाणिना ॥२६६॥
संयच्छन्तं धिया सम्यग्भविनां साभयम्परम् ।
अमृताध्मातमेवाभममृताहरणं विभुम् ॥२६७॥
पीताम्बरधरं ध्यायेदेकवक्त्रं चतुर्भुजम् ।
श्रोणीतटार्पितकरं शङ्खचक्रविभूषितम् ॥२६८॥
मध्यतो दक्षिणेनैव वहन्तं गिरिरूपधृक् ।
शुद्धज्ञानानुविद्धं च कर्मसम्भवभीतिहम् ॥२६९॥
दिशन्तं स्वधिया सम्यग्भक्तानां भक्तवत्सलम् ।
मायामथितदुग्धाब्धिं क्षोभयित्वा प्रकाशितम् ॥२७०॥
अमृतं क्षुत्तृपादीनां प्रतिपक्षमनामयम् ।
एवं चानश्वरं भाव्यं मायाख्यार्णवमध्यगम् ॥२७१॥
आत्मामृतमनौपम्यमहरध्वंसकर्मणा ।
ध्यायेत्कमलगर्भाभं देवदेवं श्रियःपतिम् ॥२७२॥
कमलालयहेतीशविभूषितकरद्वयम् ।
द्वयं देवीपरिणये लीलयैव समर्पयन् ॥२७३॥

प्रकाशयजनादित्वगात्मना प्रकृतेः सह ।
मत्करैरनुविद्धेयं प्रकृतिः प्रकृतेरहम् ॥२७४॥
यतोहमाश्रयश्चास्य मूर्तेर्मध्ये तदात्मिका ।
यामालम्ब्य सुखेनैव दुस्तरं हि गुणोदधिम् ॥२७५॥
निस्तरन्त्यचिरेणैव व्यक्तध्यानपरायणाः ।
गदविह्वलनेत्रञ्च देवमुद्भिन्नयौवनम् ॥२७६॥
फुल्लरक्ताम्बुजाभास मत्प्रजन्तं निजां स्मृतिम् ।
त्रैलोक्यविस्मयकरं कान्ताकृतिधरं स्मरेत् ॥२७७॥
आनन्दामृतसम्पूर्णवदनेनेन्दुकान्तिना ।
कलशाकृतिरूपेण करस्थेन विराजितम् ॥२७८॥
लील:कटाक्षवाग्बाणैस्सूदयन्तं सुरद्विषम् ।
द्विरेफपटलाक्रान्त सहकारलताकरम् ॥२७९॥
कलामृत्यभिधानात्मा राहुसंज्ञोऽतिभीषणः ।
मूर्तामूर्तेन रूपेण सङ्ग्रसत्यनिशं किल ॥२८०॥
अग्नीषोम मयीं मूर्तिं कर्मिणामुपकारिणीम् ।
यो ऽन्तःप्राणादिरूपेण चन्द्रादित्यात्मना बहिः ॥२८१॥
स्थितस्तद्विजयेऽध्यक्ष स्सत्यध्यानरतात्मनाम् ।
निष्पन्दबोधभावेन तन्तु व्यक्तं स्मरेद्बहिः ॥२८२॥
नीलनीरदवर्णाभं पद्मपत्रनिभेक्षणम् ।
मध्याह्नभास्कराऽऽकारं द्वादशारकरोद्यतम् ॥२८३॥
श्रोणीतटनिविष्टेन वामहस्तेन लीलया ।
ध्रियमाणं गदां गुर्वीं निपण्णां धरणीतले ॥२८४॥
अविद्याख्या च या नेमिः कालचक्रस्य दुर्धरा ।
सामायीयं समाश्रित्य विग्रहं विधुनोति च ॥२८५॥
जपयज्ञ क्रियादीनां तामसेन बलेन च ।

ध्यायेत्सुप्रसन्नं च देवं राजोपलद्युतिम् ॥२८६॥
विज्ञानरश्मिभिर्दीप्तं सत्तत्त्वगरुडासनम् ।
नानाक्षरूपभूतात्मा सद्विद्याभुजगार्पितम् ॥२८७॥
चक्रं खड्गं गदां बाणमङ्कुशं कुन्तमेव च ।
षट्सु दक्षिणहस्तेषु शक्तिं चापं च कार्मुकम् ॥२८८॥
मुसलं मुद्गरं भीमं खेटकं वामबाहुषु ।
देव आम्रदळाभश्च संसारार्थः पारिजातजित् ॥२८९॥
आक्लिष्टकर्मा देवेश स्त्वनेकाद्भुतविक्रमः ।
प्रबन्धप्रतिपन्नानां भक्तानामपि देहिनाम् ॥२९०॥
यो बोधभूमौ संरूढो ह्यनित्यश्चानुरञ्जकः ।
न्यग्रोधविटपाकारोऽप्यविद्याबन्धलक्षणः ॥२९१॥
कर्मवृक्षस्सुवितते मोहमायाफलावृतः ।
तदुत्पाटनसिद्ध्यर्थं मनुमाद्यं जनं सदा ॥२९२॥
आविद्याऽऽक्लेशमात्रेण कृपया स जगत्प्रभुः ।
स विवेकात्मना भूत्वा ज्ञानबाहुवितानभृत् ॥२९३॥
ऐश्वर्यधर्मवैराग्यशमस्य स्थितिशक्तिभृत् ।
आदाय संयमाश्चैवं नियमास्त्रगणं तथा ॥२९४॥
इन्द्रियारिगणं जित्वा कर्मिणां दोषदो हि यः ।
यदस्य सुरजिद्रूपं तद्द्वादशभुजं स्मरेत् ॥२९५॥
दिव्यमाल्याम्बरधरं दिव्याभरणभूषितम् ।
चतुर्वक्त्रं सुनयनं दामोत्सङ्गार्पितप्रियम् ॥२९६॥
खड्गं चक्रगदाबाणं मुसलं च तरूत्तमम् ।
षट्सु दक्षिणहस्तेषु शङ्खमङ्कुशकार्मुकम् ॥२९७॥
छत्रं च फणभृत्पाशं बिभ्रोवामभुजेष्वसौ ।
पद्मनालिङ्गित: देवो सागरेन्द्रेन बाहुना ॥२९८॥

तदंसलग्नकरया देव्या तच्चिन्तयाऽनिशम् ।
संवीज्यमानं विनयाच्चामरेण सितेन तम् ॥२९९॥
लोकनाथं विशालाक्षं सर्वदेवनमस्कृतम् ।
वरसिंहासनारूढं ध्यानोन्मीलितलोचनम् ॥३००॥
पद्मासनेनोपविष्टं पद्मगर्भोपमद्युतिम् ।
करुणाविष्टबुद्धिं च शङ्खपद्मकराङ्कितम् ॥३०१॥
ज्ञानवैराग्यसद्धर्ममार्गत्रयनिदर्शकम् ।
संस्मरेदथ दत्ताख्यं ज्ञानमूर्तिमलेपकम् ॥३०२॥
मनस्यमूनि देवानां समाधिनिरतात्मनाम् ।
ईपलब्धरसानां च ब्रह्ममार्गानुसारिणाम् ॥३०३॥
स्वप्रभानिकरेणैव भासयन्तं च सत्पथम् ।
मनसा सह वायूना मागतिप्रतिषेधकृत् ॥३०४॥
श्रुतीनामागमानां च व्यापाराणां तथैव च ।
वर्णानामाश्रमाणां चाऽप्याचाराणां तथैव च ३०५
वर्णानामाश्रमाणां च परिरक्षक एव हि ।
मानसैकार्णवान्तस्स्थे निष्कम्पे बुद्धिपादपे ॥३०६॥
अभिधानलताश्लिष्टे त्वप्युपरिस्थमनुस्मरेत् ।
प्रावृड्गिरिमिव श्यामं तेजसा ज्वलनोपमम् ॥ ३०७ ॥
ध्वंसकृद्द्विभ्रजालस्य निद्राऽऽलस्यचयस्य यः ।
उत्कृष्टद्विजरूपेण विकसत्पद्मरूपिणा ॥ ३०८ ॥
स एव द्विभुजो ध्येयः दण्डदर्भाक्षसूत्रधृक् ।
दन्तज्योत्स्नाजिताज्ञानं न्यग्रोधशयनं विभुम् ॥ ३०९ ॥
निषण्णमीषदुत्तानं द्विभुजं शिशुरूपिणम् ।
एवमेव निरम्तात्मं शान्तनिद्रारसस्थितम् ॥ ३१० ॥

अनुज्झितस्वभावं च योगमायाबलेन च ।
त्यजन्तमाहरन्तं च श्वासोच्छ्वासद्वयेन तु ॥ ३११ ॥
आब्रह्मभुवनं सर्वं कर्मप्राधानिकं हि यत् ।
अपौरुषेण रूपेण संवृतावयवात्मना ॥ ३१२ ॥
स्वमायाजलमध्यस्थ मध्यक्षमथ संस्मरेत् ।
ज्ञानादिगुणवृन्देन पक्षभूतेन भूषितम् ॥ ३१३ ॥
स्वोत्थसानिस्सृतं ब्रह्म एकशृङ्गविराजितम् ।
कल्पावसानसमये वहन्तं चैव चिन्तयेत् ॥ ३१४ ॥
नौरूपां विततां क्षोणीं प्रजापतिगणान्विताम् ।
मुक्ताफलनिभेनैव वपुषा निर्मलेन च ॥ ३१५ ॥
अनिमीलितनेत्रस्सन्मीनात्मा भगवानथ ।
यो नित्यं भवभीतानां बुधानां कृपया स्वयम् ॥३१६॥
हृत्स्थो नियमदण्डेन मार्ताण्डायुतसन्निभः ।
जित्वा ज्ञानबलं भीममिन्द्रियारिगणान्वितम् ॥३१७॥
संयच्छत्यचिराद्ब्रह्म नन्दनं सत्सुखाय च ।
ध्यायेत्तमेव ह्रस्वाङ्गं श्यामं पद्मदळेक्षणम् ॥३१८॥
अन्तर्निविष्टभुवनं जटावल्कलभूषितम् ।
छत्रं तद्वामहस्तेस्य दण्डमन्यत्र वैणवं ॥३१९॥
आक्रम्य जाग्रदादित्यसूर्येन्दुहुतभुक्प्रभान् ।
तिष्ठत्यनन्तो भगवांस्तुर्याख्यांश्चिद्विभूतिधृक् ॥३२०॥
संप्रेरयन्ननिच्छातस्स्वपदादमृतप्रभाम् ।
आह्लादजननीं शक्तिं कर्मिणां भावितात्मनाम् ॥३२१॥
त्रैलोक्यपूरकं ध्यायेत्तमथ हारितद्युतिम् ।
नानामुद्रास्त्रयुक्तेन भुजवृन्देन भूषितम् ॥३२२॥
खेगतेनाक्षिदण्डेन वहन्तमरिसूदनम् ।

द्युसिन्धुं सद्वैजयन्तीं देवानां च जयार्थिनाम् ॥३२३
खड्गचक्रगदादण्डबाणाङ्कुशसमुद्गराः ।
शक्तिः परशुशैलेन्द्रः दश दक्षभुजेष्वमी ॥३२४॥
शङ्खतोमरशार्ङ्गं च पाशशूलमहीरुहाः ।
कुलिशं क्षुरिका चैव लाङ्गलं मुसलं महत् ॥३२५॥
वामहस्तेष्वमी ध्येया अन्ये मुद्रान्विता दश ।
भयविस्मयहृद्वेणीकर्णग्रहणलक्षणम् ॥३२६॥
ध्येया मुद्रा विभोः पञ्च सर्वे तु करपञ्चके ।
वराख्यां भूतिसंज्ञां च युक्ताभ्यां सभयां तु वै ॥३२७॥
गोपनीं दक्षहस्तेषु तत्संख्येषु च संस्मरेत् ।
जगत्सूत्रं सहाक्षैस्तु येनोतममितात्मना ॥३२८॥
गुणषट्कस्वरूपेण पूर्वोक्ताकृतिभिर्विना ।
स्मर्तव्यस्स चतुर्धा वै लाञ्छनास्त्रविवर्जितः ॥३२९॥
सर्वदा परिरक्षंस्तु जपपूर्वं चतुष्टयम् ।
योगक्रियातपोन्तं च सद्विभूत्यपवर्गदम् ॥३३०॥
नराद्यः कृष्णनिष्ठश्च पृथगेकत्रचेच्छया ।
नरं तत्र प्रवालाभमर्धोन्मीलितलोचनम् ॥३३१॥
अन्तर्निविष्टभावं च शब्दब्रह्मैकमानसम् ।
यदोमलक्षणं मन्त्रं लपमानमलक्षितम् ॥३३२॥
स्फाटिकेनाऽक्षसूत्रेण करस्थेन च शोभितम् ।
गणयन्नक्षसूत्रीयानावर्तान् वामपाणिना ॥३३३॥
अथ नारायणं देवं ध्यायेत्कुमुदपाण्डरम् ।
बद्धब्रह्मांजलिं शान्तं हृत्पद्मार्पितमानसम् ॥३३४॥
युञ्जानं च स्वमात्मानं परस्मिन्नव्यये पदे ।
कमण्डलुकरं ध्यायेत्काञ्चनाभमतो हरिम् ॥३३५॥

विष्टराविष्टपाणिञ्च क्रियाकाण्डप्रदर्शकम् ।
पठन्तमनिशं शास्त्रं पञ्चरात्रपुरस्सरम् ॥३३६॥
कृष्णमिन्दीवरश्याममूर्ध्वबाहुं जटाधरम् ।
पादेनैकेन तिष्ठन्तमाहरन्तञ्च मारुतम् ॥३३७॥
एकत्रिषड्द्विषड्रात्राद्यतिकृच्छ्रपरायणम् ।
पक्षमासोपवासांश्च दिशन्तमनुचिन्तयेत् ॥३३८॥
कृष्णाजिनोत्तरीयाश्च सर्वे काषायधारिणः ।
ब्रह्मलिङ्गधरास्सर्वे सर्वे ब्रह्मपरायणाः ॥३३९॥
मुख्यकर्मपरिक्रान्तास्साधूनां प्रेरणाय च ।
कालानुकूलमाश्रित्य सर्वे सर्वे परायणाः ॥३४०॥
असङ्गशक्त्या भगवान् सकुठाराभिधानया ।
छिनत्ति बन्धमूलान् यः कर्मवृक्षांस्तु कर्मिणाम् ॥३४१॥
तमेव द्विभुजं ध्यायेत् उदयादित्यवर्चसम् ।
कृष्णैणचर्मवसनं सत्कुठारकरांकितम् ॥३४२॥
दशेन्द्रियाननं घोरं यो मनोरजनोचरम् ।
विवेकशरजालेन शमं नयति योगिनाम् ॥३४३॥
ध्येयस्स एव विश्वात्मा सतोयजलदप्रभः ।
रक्तराजीवनयनः धनुश्शरकरांकितः ॥३४४॥
वाग्वेदं मण्डलं यो वै स्वरूपद्युतिलक्षणम् ।
स्वयं स्वोत्थं विभजति त्रिधा पश्यन्ति पूर्वकम् ॥३४५॥
बोधमारुतहृत्पूर्वस्थानेष्वभ्युदितं क्रमात् ।
स्मर्तव्यस्सोपि भगवानतसीकुसुमद्युतिः ॥३४६॥
वहन्वै वामहस्तेन सर्वशास्त्रार्थपुस्तकम् ।
दक्षिणेन तु शास्त्रार्थमादिशंश्च यथास्थितम् ॥३४७॥

युगानुसारिभेदानामखेदजननाय च ।
विभजंस्तु चतुर्धा वै वेदमेकं त्रिकालवित् ॥३४८॥
दानधर्मरतानाञ्च यागयज्ञानुयाजिनाम् ।
तपस्स्वाध्यायसक्तानां मुक्तानामपुनर्भवात् ॥३४९॥
संरक्षणाय योग्यत्वविज्ञानव्यक्तयेपि च ।
समुदेति जगन्नाथस्तेषां हृत्कमलावनेः ॥३५०॥
मनोवाजिनमाक्रम्य त्वादायात्मगुणायुधान् ।
नूनमुत्पाटयत्याशु जन्मान्तरशतोत्थिताम् ॥३५१॥
वैषयं वासनाजालं शुद्धविज्ञानसिद्धये ।
ध्यायेद्वराश्वगं तं वै तनुत्रावृतविग्रहम् ॥३५२॥
सितोष्णीषललाटञ्च नातिदीर्घजटाधरम् ।
द्रवत्कनकवर्णाभमिषुधिद्वयमध्यगम् ॥३५३॥
शरचापकरव्यग्रखड्ग कुन्तकुठारिणम् ।
यज्ञाध्ययनदानादि परिरक्षन्तमेव हि ॥३५४॥
शान्तयन्तमवर्णानामधर्मनिरतात्मनाम् ।
सर्वतत्वाश्रयं तत्वं सर्वशक्तिमयं विभुम् ॥३५५॥
सर्वेन्द्रियगुणाभासं सर्वेन्द्रियविवर्जितम् ।
निश्शेषभुवनानाञ्च ध्यातव्यं तदधः स्थितम् ॥३५६॥
अनन्तशयनारूढं कल्पान्तहुतभुक्प्रभम् ।
ज्वलज्ज्वालावळीयुक्तं ज्वलनांशुविवेष्टितम् ॥३५७॥
चक्राद्यायुध *वृन्देन मूर्तेन परिवारितम् ।
स्थितांघ्रिदेशतोलक्ष्मीश्चिता दक्षिणतो विभोः ॥३५८॥
मूर्धदेशगता निद्रा पुष्टिस्तद्वामतस्स्थिता ।
प्रधानदेवताध्यानमिदमुक्तं समासतः ॥३५९॥

---

* पा॥ बन्धेन

यत् ज्ञात्वा विनिवर्तन्ते जन्ममृत्युजरारुजः ।
नास्त्रैर्वस्त्रैर्ध्वजैर्येषां व्यक्तिर्व्यक्ता जगत्त्रये ॥३६०॥
तेपि लाञ्छनवृन्दन्तु धारयन्त्यंघ्रिगोचरे ।
ललाटे चाङ्कपट्टे तु पृष्ठे पाणितलद्वये ॥३६१॥
तनूरुहद्वये मूर्ध्नि कर्मिणां प्रतिपत्तये ।
अपि संसारिणो जन्तोः स्वभावाद्वैष्णवस्य च ॥३६२॥
नजहात्यच्युतं लिङ्गं किं पुनर्विभवाकृतेः ।
सर्वेषां कामचारित्वं यदुक्तं वै मया पुरा ॥३६३॥
तदंघ्रिभुजवर्णास्यबृहन्मध्यानुलक्षणः ।
एकाद्यनेकसंख्यश्च दृश्यं सर्वत्र सर्वदा ॥३६४॥
न त्वन्यरूपता कार्या करणं कामरूपता ।
यस्मादस्मिन् पृथग्भूतो व्यापारो विश्वमन्दिरे ॥३६५॥
देवानां स्थितिसंहारसृष्टिकाले स्वकं स्वकम् ।
सत्येवं नियमे सिद्धे तथापि भगवद्वशात् ॥३६६॥
चातुरात्म्यसमूहात्तु यत्पद्मदळभूस्थितम् ।
तथा विभवदेवानां मध्यात्पद्मदळेक्षणम् ॥३६७॥
एकस्त्वनुग्रहार्थं तु शक्त्यात्मा भावितात्मनाम् ।
बिभर्ति बहुभेदोत्थं रूपं सद्वाहनस्थितम् ॥३६८॥
यदनुस्मरणाद्ध्यानादर्चनादचिरात्पुमान् ।
प्राप्नोति मनसोऽभीष्टं तन्मे निगदतः शृणु ॥३६९॥
सत्यस्सुपर्णो गरुडस्तार्क्ष्यस्तु विहगेश्वरः ।
पञ्चात्मकस्य प्राणस्य विकारा *स्त्वेकपञ्चधा ॥३७०॥
आचांघ्रिगोचरात्सर्वे यस्य देहस्तु पौरुषः ।
द्विभुजस्तुहिनाभश्च स सत्यः प्राणदैवतः ॥३७१॥

---

* पा॥ एष पञ्चधा ॥

सुपर्णः पद्मरागाभः निर्मल स्स्वर्णलोचनः ।
गरुडः काञ्चनाभस्तु कुटिलभ्ररुणेक्षण ॥३७२॥
केकराक्षस्तु तार्क्ष्यो वै प्रावृड्जलदसन्निभः ।
द्रवत्कनकनेत्रस्तु शबलाभस्तु पञ्चम ॥३७३॥
चतुर्भुजा स्सुपर्णाद्या स्सौम्यरूपा स्त्वनाकुला. ।
पतत्रिचरणा स्सर्वे पक्षमण्डलमण्डिताः ॥३७४॥
लम्बोदरा स्सुपीनाङ्गाः कुण्डलाद्यैस्तु भूषिताः ।
कुटिलभ्रुसुवृत्ताक्षा वक्रतुण्डाःस्मिताननाः ॥३७५॥
अपानादिसमीराणामाधिपत्येन संस्थिताः ।
महाबला महाकाया रक्ततुण्डोऽत्र पञ्चमः ॥३७६॥
आधेयचरणाधस्स्थसव्य आद्यस्य वै करः ।
दक्षिण श्चाक्षसूत्रेण सुसितेन च भासितः ॥३७७॥
एवमेव सुवर्णस्य परिज्ञेयं भुजद्वयम् ।
नाभ्युद्देशे परो वाम उत्तानस्तु सविस्मयः ॥३७८॥
पुष्पस्तबकसम्पूर्ण ऊर्ध्ववक्त्रस्तु दक्षिणः ।
गरुडस्य द्वयं विद्धि हृद्देशेऽञ्जलिरूपिणम् ॥३७९॥
तत्रैव सम्पुटाकार चतुर्थस्य करद्वयम् ।
दक्षिणेऽमृतकुम्भस्तु वामे तु विषमं फणी ॥३८०॥
पञ्चमस्य द्वयं शेषं त्रयाणां च द्वयोस्समम् ।
आधेयचरणाक्रान्तो यदि वै दक्षिणः करः ॥३८१॥
सञ्चारो विहितो वामे त्वक्षसूत्रस्य वै तदा ।
आधेयचरणाधस्स्थं यस्य पाणितलद्वयम् ॥३८२॥
निरस्तसूत्रं तं विद्धि वाहनं भगवन्मयम् ।
अनुग्रहपरस्त्वास्ते पक्षिपक्षाब्जविष्टरे ॥३८३॥
स्वतेजोनिजसामर्थ्यमसूरकवरान्विते ।

पद्मासनादिना चैव केवलं वा श्रियाऽन्वितः ॥३८४॥
सुव्यक्तावयवस्थित्या विद्धि तं गरुडासनम् ।
मेढ्रमूरुस्सोदरस्यैव गोपिताद्वेगगामिना ॥३८५॥
वीर्यपातात्स्वशिरसा गच्छतश्चाण्डजेन तु ।
लोकान्तराणां कार्यार्थे वात्सल्याध्यायिनामपि ॥३८६॥
प्रत्यक्षदर्शनार्थं तु स्मृतो गरुडवाहनः ।
तस्माद्भगवतो विष्णोरेवं रूपधरस्य तु ॥३८७॥
समाहृतस्य सिद्ध्यर्थमासीनं संस्मरेत् स्थितम् ।
उपसंहृतवागाङ्घ्रिः कञ्जस्थो वा खगस्थितः ॥३८८॥
वागभिच्छाफलानां यत् ध्वंसयत्यन्यचिन्तितम् ।
आजानोर्दक्षिणस्यैवमचिक्षिप्ते स्मृतोऽच्युत ॥३८९॥
आमोक्षात्सर्वसिद्धीनां दक्षिणोध्यायिनां भवेत् ।
सर्वमेव ऋजुस्थित्या संस्थितश्चार्थिनां स्मृतम् ॥३९०॥
स्वस्तिकाद्यैर्भवत्येव किं तु ते वाहनं विना ।
विहितापीठकल्हारसिंहासनगतस्य च ॥३९१॥
विहगाधिपतिश्चात्र योगैश्वर्याद्बिभर्ति च ।
सवक्त्रं भुजवृन्दं तु नागेन्द्रास्त्रवरान्वितम् ॥३९२॥
विभोराज्ञावशेनैव तुष्ट्यर्थं वा स्वयं विभोः ।
जगज्जयोदयार्थं तु शान्तये शरणैषिणाम् ॥३९३॥
विभिन्नेन च रूपेण नानालोकान्तरेषु च ।
अनिरुद्धगतिर्वीरो विचरत्येक एव हि ॥३९४॥
तदारूढस्य यद्रूपं शक्त्यंशस्य च साम्प्रतम् ।
अनेकभेदाभिन्नं तु निबोध गदतो मम ॥३९५॥
संयच्छन्तं सदा शान्त भविनां दक्षिणेन तु ।
प्रोद्वहन्तं च वामेन शङ्खं पूर्वोक्तलक्षणम् ॥३९६॥

द्विभुजस्य त्विदं रूपं शक्तीशस्य तु केवलम् ।
रूपेणानेन च पुनष्षोढा समुपयाति च ॥३९७॥
सह कान्तागणेनैव त्वेकाद्येन पृथक् पृथक् ।
प्राग्वल्लक्ष्म्या समेतं यत्तदेकं रूपमैश्वरम् ॥३९८॥
श्रीपुष्ट्योरथ मध्यस्थं द्वितीयं परिकीर्तितम् ।
श्रियादिमायानिष्ठेन चतुष्केणावृतं परम् ॥३९९॥
शुद्ध्यादिकेन षट्केण चतुर्थं विद्धि साम्प्रतम् ।
पुष्ट्यन्तेन श्रियाद्येन त्वष्टकेन तु पञ्चमम् ॥४००॥
लक्ष्म्याद्येन द्विषट्केण षष्ठं विद्धि समन्वितम् ।
श्रियादिविमला कांर्ति जैया लक्ष्मी ईलायुधा ॥४०१॥
चतुर्थी भगवन्माया विश्वस्यास्य निबन्धिनी ।
शुद्धिर्निरञ्जना नित्या ज्ञानशक्त्यपराजिते ॥४०२॥
प्रकृति स्सुन्दरी षट्कमित्युक्त सर्वसिद्धिदम् ।
लक्ष्मीशब्दनिधि स्सर्वकामदा प्रीतिवर्धिनी ॥४०३॥
यशस्करी शान्तिदा च तुष्टिदा पुष्टिदाष्टकम् ।
द्विषट्कवैभवे योगे देवीनां कीर्तितं हि यत् ॥४०४॥
लक्ष्म्याद्यन्त च बोद्धव्यं भेदेऽस्मिन्पारमेश्वरे ।
पुनश्चतुर्भुजस्यैवं विज्ञेयं भेदसप्तकम् ॥४०५॥
किं तु वै शङ्खचक्रे द्वे वामहस्तद्वयेन तु ।
जगत्यस्मिन् हि यच्छन्तं शान्तिमाद्येन शाश्वतीम् ॥४०६॥
प्रोद्वहन्तं द्वितीयेन त्वपसव्येन वै गदाम् ।
भूयः करचतुष्केन पूर्वोक्तेन क्रमेण तु ॥४०७॥
चतुर्णामब्जपूर्वाणामन्योन्यत्वेन धारणात् ।
यत्ते द्वादशधा रूप निश्शक्तीकं च केवलम् ॥४०८॥
पुनर्द्वादशकं तत्र सह शक्तिद्वयेन तु ।

स्थितमेकाधिकेनैव षोढा कमललोचन ॥४०९॥
एवं चतुर्भुजेनैव वपुषा बहुधा स्थितम् ।
सप्तधा षड्भुजाद्येन भुजाधिक्येन वा पुनः ॥४१०॥
स्थितस्त्वनेकधा देवो यथा तदवधारय ।
षड्बाहुरष्टबाहुश्च दश द्वादशबाहुभृत् ॥४११॥
द्विसप्तषोडशकरस्तथाष्टादशभूषितः ।
केवलादिश्च सर्वेषां प्राग्वद्भेदस्तु सप्तधा ॥४१२॥
तन्मे शृणु यथावस्थमस्त्रविन्यासचिह्नितम् ।
षड्भुजो दक्षिणैर्धत्ते निस्त्रिंशं कमलं गदाम् ॥४१३॥
सशरं कार्मुकं शङ्खं वामैरस्त्रोत्तमं त्रिभिः ।
गदामुसलचक्रासीनष्टबाहुस्तु दक्षिणैः ॥४१४॥
शङ्खमङ्कुशपाशश्च वामैस्तु सशरं धनुः ।
खड्गबाणगदापद्मशक्तियुक्तास्तु दक्षिणाः ॥४१५॥
दश बाहोर्धनुश्शङ्खचक्रखेटाश्च साभयाः ।
षण्णां दक्षिणहस्तानां द्विषट्कभुजभूषित ॥४१६॥
सन्धत्ते कमलं खड्गचक्रबाणगदाङ्कुशान् ।
शङ्खपाशाभयं शक्तिं सव्यानां मुसलं धनुः ॥४१७॥
चतुर्दशभुजो धत्ते वामे तु भुजसप्तके ।
शङ्खं गदाङ्कुशं पाशं मुसलं मुद्गरं हलम् ॥४१८॥
दण्डाब्जकुलिशं चक्रं खड्गशक्तिपरश्वधान् ।
बिभृयात्षोडशभुजो मुख्यहस्तस्समुद्गरान् ॥४१९॥
अभयं कमलं खड्ग शक्तिदण्डशराङ्कुशान् ।
शङ्खचक्रगदावज्रमुशलाङ्गलकार्मुकान् ॥४२०॥
वरं कराष्टकेनैव धत्ते सव्येन विश्वजित् ।
पद्मखड्गगदावज्रचक्रबाणपराङ्कुशान् ॥४२१॥

दण्डदक्षिणहस्तैस्तु धत्तेऽष्टादशबाहुभृक्।
शङ्खाभयं हलं शक्तिं मुद्गरं मुसलं धनुः ॥४२२॥
कुठारमतुलं पाशं बिभुर्वामभुजैरमून्।
बिभर्ति दुष्टशान्त्यर्थं साधूनां पालनाय च ॥४२३॥
भूयो विशेषरूपाणि एतान्येव विशेषतः।
सद्वक्त्रद्वयमात्रेण नयत्यमितविक्रमम् ॥४२४॥
संहृतेजोसहिष्णूनां पितृयानरतात्मनाम्।
अञ्जनादिकसंचारभीतानां वै हिताय च ॥४२५॥
अमृते वै गृहे भागे तेजसे नित्यदक्षिणे।
वामदक्षिणवक्त्राभ्यां कुर्याद्वै व्यत्ययं प्रभुः ॥४२६॥
वृद्धयेऽपि च शान्त्यर्थं तेजसः पद्मलोचनः।
हेतुना तेन भगवान् बहिरन्तर्गतेन वै ॥४२७॥
अग्नीषोमौ समीकृत्य त्वास्ते साधारणात्मना।
व्यक्तिं वागीशवक्त्रं तु नीत्वैव शिरसोपरि ॥४२८॥
पञ्चवक्त्रेण वपुषा त्वामूलाद्यात्यनेकधा।
शब्दब्रह्मरतानां च ध्यायिनामात्मसिद्धये ॥४२९॥
आपातालाच्च सर्वेषां लोकानां पूरणाय च।
नानावपुर्धरो भूयस्त्वेकैकेनैष याति च ॥४३०॥
भेदेन रूपमाश्रित्य दशया च सितादिकम्।
विना वक्त्रैर्नृसिंहाद्यैस्सर्वज्ञमहिमान्वितम् ॥४३१॥
बिभर्ति रूपाण्येतानि अनिरुद्धस्तु तार्क्ष्यकः।
एवमाक्रम्य गरुडं प्रद्युम्नो बिभृयात्तनुम् ॥४३२॥
नानात्वमपिचाभ्येति सङ्कर्षणस्सुपर्णगः।
देवस्सत्यो मरुत् स्थित्वा विश्वात्मा यात्यनेकधा ॥४३३॥
सुरसिद्धमनुष्यादिभूतानां दुःखशान्तये।

चतुर्णां ये निजा वर्णास्ते तु मूर्त्यन्तरेषु च ॥४३४॥
चतुर्भुजस्यादिमूर्तेर्विष्णोर्मूर्त्यन्तरस्य च ।
वरलाञ्छनतुल्यत्वे भेदकृत्सध्वजद्वयम् ॥४३५॥
अपसव्यस्थितेनैव तत्तालाख्यध्वजेन तु ।
स्वरूपभेदमाप्नोति स्वमूर्त्या सह सर्वदा ॥४३६॥
यस्मात्कार्यवशेनैव मूर्तीनामपि पाणिगाः ।
चतुःपद्मादयश्शान्तामूर्तामूर्तास्तथोद्यताः ॥४३७॥
इत्येवं भगवद्ध्यानं सर्वमूर्तं मुनीश्वराः ।
दिव्यायुधानांकेषां चिद्ध्यानमुक्तं पुरैव तु ॥४३८॥
शेषाणामायुधानां तु ध्यानं वक्ष्येऽधुना द्विजाः ।
सन्ध्याजलदसङ्काशं लाङ्गलं भीमलोचनम् ॥४३९॥
क्षमाङ्गमुन्नतांसं च वज्रकायं बलोत्कटम् ।
स्वरश्मिखचितं ध्यायेन्नृत्यमानं च नन्दकम् ॥४४०॥
शरदाकाशसङ्काशं दर्शन्तं दशनावलिम् ।
सूर्यमण्डलसङ्काशं खेटकं सौम्यमूर्तिकम् ॥४४१॥
ग्रसन्तमस्त्रपूगानि स्ववक्त्रेणानिशं बलात् ।
बलमुष्टिं स्मरेद्दण्डं रक्ताङ्गं रक्तलोचनम् ॥४४२॥
क्रोधमूर्तिं स्वदशनैर्दंशन्तमधरं स्वकम् ।
शक्रकार्मुकवर्णं च परशुं भीमविग्रहम् ॥४४३॥
द्रवत्कनकनेत्रं च ज्वलज्ज्वालाजटाधरम् ।
मुद्गरं शतधामाभं पीनांसं पृथुविग्रहम् ॥४४४॥
जटाकलापधृक्सौम्यं पुण्डरीकनिभेक्षणम् ।
वज्रं वज्रोपलाभं तु स्थितं दीर्घनखाङ्कितम् ॥४४५॥
दंष्ट्राकरालवदनं ज्वलत्कनकलोचनम् ।
सौदामिनीप्रभां शक्तिं शान्ताग्निवदनेक्षणाम् ॥४४६॥

घनघर्घरनिर्घोषमुद्गिरन्तं मुहुर्मुहुः ।
अन्यत्सर्वं तु पूर्वोक्तं ध्यानमेषां मुनीश्वराः ॥४४७॥
अधिष्ठातृक्रमस्त्वेषामोषध्यो लाङ्गलं द्विजाः ।
नन्दकं सर्वशास्त्राणि खेटकं वसुधा स्मृता ॥४४८॥
ज्ञेयो हि दण्डो नियतिर्वैराग्यं परशुस्स्मृतः ।
मुद्गरस्तु परिज्ञेयो ह्यहङ्कारो मुनीश्वराः ॥४४९॥
विज्ञानमण्डलं वज्रं समाधिश्शक्तिरुच्यते ।
भिन्नरूपस्य च विभोर्य उक्तस्सुन्दरीगणः ॥४५०॥
साधारश्चाप्यसाधारस्तासां ध्यानं क्रमाच्छृणु ।
चिन्ताखण्डलचापाभा लक्ष्मी रक्ताम्बुजप्रभा ॥४५१॥
पुष्टिः कनकगौरा च कीर्तिः कुमुदपाण्डरा ।
जयार्ककान्तिसदृशी मायाञ्जननिभा स्मृता ॥४५२॥
शुद्धिः किंशुकसङ्काशा कुन्दाभा तु निरञ्जना ।
बन्धुजीवोज्वला नित्या ज्ञानशक्तिस्सितारुणा ॥४५३॥
फुल्लेन्दीवरवर्णा च परिज्ञेया पराजिता ।
रक्तोत्पलाभा प्रकृति स्सितपीता सरस्वती ॥४५४॥
सर्वकामप्रदा सिद्धिस्त्विन्द्रनीलसमप्रभा ।
सिन्दूरपुञ्जवर्णाभा विज्ञेया प्रीतिवर्धिनी ॥४५५॥
यशस्करी च दुग्धाभा शान्तिदा विद्रुमोज्वला ।
तुष्टिस्तुहिनसङ्काशा दया वैडूर्यसन्निभा ॥४५६॥
निद्रायस्कान्तसदृशी क्षमा पीतारुणप्रभा ।
कान्तिर्दर्पणसङ्काशा धृतिर्गोरोचनोज्वला ॥४५७॥
मैत्री बन्धूकपुष्पाभा रतिर्गैरिकसन्निभा ।
मतिर्मरतकाभा वै सर्वाः *प्रमुदिता गुणाः ॥४५८॥
दिव्यमाल्याम्बरधरा नानालङ्कारभूषिताः ।

*पा ॥ प्रमुदितानना ।

दिव्यस्रग्वेष्टनोपेता वीक्षमाणास्स्वकं पतिम् ॥४५९॥
चतस्रश्शक्तयो यास्तु विभोश्शयनगस्य तु ।
प्रागुक्तास्तत्र पूर्वाशावस्थिता वीजयन्त्यजम् ॥४६०॥
त्रयं यद्दिक्त्रयस्थं तु तत्संवाहनतत्परम् ।
यत्रैका श्रीर्विभोस्तत्र सन्निवेशः पुरोधितः ॥४६१॥
यत्रैका श्रीर्विभोस्तत्र वामे वा दक्षिणेपि वा ।
श्रीपुष्ट्याख्यद्वयं यत्र तत्र तद्दक्षिणोत्तरे ॥४६२॥
पद्मासनेनोपविष्टं पक्षिपक्षद्वयेन ते ।
नळिनीनाळहस्ताद्याऽमृतकुम्भकरा परा ॥४६३॥
अग्नीषोममयो देह आद्यो यस्सर्वगस्य च ।
तस्य शक्तिद्वयं तादृगमिश्रं भिन्नलक्षणम् ॥४६४॥
भोक्तृशक्तिस्स्मृता लक्ष्मी पुष्टिर्वै कर्तृसंज्ञिता ।
भोगार्थमवतीर्णस्य तस्य लोकानुकम्पया ॥४६५॥
उदितं सह तेनैव शक्तिद्वितयमव्ययम् ।
नानात्वेन हि वै यस्य परिणामः प्रकाशित ॥४६६॥
दिक्पत्रचतुरन्तस्थं यद्वै देवीचतुष्टयम् ।
शक्तिः परशुपाशाख्यमङ्कुशं तत्करे क्रमात् ॥४६७॥
षट्कं केसरजालस्थं तत्र प्राक्पश्चिमे द्वयम् ।
द्वयंद्वयं सौम्ययाम्ये तासां वामकरेषु च ॥४६८॥
शङ्खचक्रगदासीरमिष्वस्त्रं नन्दकं सितम् ।
पत्रमध्यनिविष्टं तु यत्कान्ताष्टकमुत्तमम् ॥४६९॥
तस्य वामकराणां च विज्ञेयं त्वादितोऽष्टकम् ।
श्रीफलं चाक्षसूत्रं स्रग्दर्पणं पुष्पमञ्जरीम् ॥४७०॥
विष्टरं किङ्किणीं शङ्खसञ्चयः कमलेक्षण ।
विज्ञेयश्शक्तिदः पाणिर्द्वादशानां तु साभयः ॥४७१॥

अन्तरान्तरयोगेन सर्वाश्चामरलाञ्छिताः ।
स्वस्तिकेनोपविष्टाश्चाप्यन्तर्मुदितमानसाः ॥४७२॥
द्व्यादिकस्यास्य संघस्य द्वादशान्तस्य लाङ्गलिन् ।
सितादिकेन वर्णेन लाञ्छनव्यत्ययेन तु ॥४७३॥
तुल्यलाञ्छनयोगेन तन्निरासे च वै सति ।
वराभयाभ्यामन्योन्यपाणित्वादथ केवलात् ॥४७४॥
बहुधा भेदवृन्दं तु परिज्ञेयं तु पूर्ववत् ।
शेषं भवोपकरणदेवानां निचयो हि य. ॥४७५॥
सुप्रसिद्धो महाबुद्धे किं स्वब्जाद्यैस्तु पूर्ववत् ।
ध्यातव्या लाञ्छनास्सर्वे पाणिपादतलादिषु ॥४७६॥
भक्तिश्रद्धाव्रतपर स्सर्वेषां यस्सदैव हि ।
ध्यात्वैव मर्चनं कुर्याद्भोगैस्सांस्पर्शपूर्वकैः ॥४७७॥
सोऽचिरान्मोक्षनिष्ठं तु फलमाप्नोत्यभीप्सितम् ।
किरीटाद्यस्त्रनिष्ठेन परिवारेण चावृतम् ॥४७८॥
भक्त्या ह्यभीप्सितं रूपमर्चनीयमथापि वा ।
निर्मुक्तपरिवारं वा स्वेन ध्यानेन लक्षितम् ॥४७९॥
विदधात्यर्चनां नूनं स्वं पदं फलसंयुतम् ।
ज्ञात्वैवं साधकः कुर्याद्यथाभिमतमर्चनम् ॥४८०॥
आत्मशक्तिसमैर्भोगैरखिलैश्शुद्धविग्रहः ।
हृदि वेद्यां बहिर्मूर्तौ प्रासादे स्वगृहे तु वा ॥४८१॥
बहुप्रकारनिर्मुक्ते धूमदाहादिनोज्झिते ।
शरणे रमणीये च निस्सम्पर्के तु भाविते ॥४८२॥

इति श्रीपाञ्चरात्रे ईश्वरसंहितायाम्
मुद्रालक्षणभगवद्ध्यानादिप्रकारो नाम
चतुर्विंशोऽध्यायः ॥

—○—

## अथ पञ्चत्रिंशोऽध्यायः ॥

नारदः ।

अतः परं प्रवक्ष्यामि कुण्डादीनां च लक्षणम् ।
शृणुध्वमवधानेन चेतसा मुनिपुङ्गवाः ॥१॥
( पुरामण्डलसिद्ध्यर्थं यथाक्षेत्रं विभाजितम् ।
तथैव भाजितात् क्षेत्राच्चतुरश्रान्महामते ॥
पूर्वोद्दिष्टानि धिष्ण्यानि यथाकार्याणि तच्छृणु ॥ )
पञ्चमं ब्रह्मकर्माद्यं मर्मप्राग्दिश्यवस्थितम् ।
अंशदीर्घेण तत्स्थेन कुर्यात्सूत्रेण लाञ्छनम् ॥२॥
अर्धचन्द्रसमाकारं भागयुग्मस्य चान्तरे ।
दक्षिणोत्तरभागाभ्यां तदधस्तत्समं तथा ॥३॥
लाञ्छनद्वितयं कुर्यात्तिर्यक्सुस्थानसंस्थितम् ।
भागद्वादशकस्यैक्यं स्यात्पङ्क्तिद्वितयाद्यथा ॥४॥
ब्रह्मकर्मचतुर्थं यत्सह्यामानं च पूर्ववत् ।
मर्म तस्य च पक्षस्थावेकं मर्मान्तरीकृतौ ॥५॥
ताभ्यामवस्थितेनैव सूत्रेणैतत्प्रजायते ।
पुनर्मध्याद्द्वितीयं यत्कर्म चोर्ध्वे प्रवर्तते ॥६॥
तस्माद्द्व्यन्तरीभूतं चतुर्थं पक्षयोर्द्वये ः ।
मर्म तत्स्थेन सूत्रेण वृत्तार्धे *पूर्ववल्लिखेत् ॥७॥
ब्रह्मकर्मणि पञ्चस्य प्रत्यग्दिक्संस्थितस्य च ।
मर्मणोप्यथ वै सूत्रं कृत्वा तत्सम्प्रसार्य च ॥८॥
यावद्वृत्तार्धयुग्मस्थं शृङ्गकोटेस्तु सन्निधिम् ।
एवं सूत्रद्वये दत्ते धिष्ण्यश्शङ्खाकृतिर्भवेत् ॥९॥

---

* पूर्ववल्लिखेत् ॥

तस्य भागसमा कार्या लाञ्छनैर्मेखला बहिः ।
पूर्वोक्तमर्मगैस्सूत्रैर्यथावद्वधारय ॥१०॥
द्व्यंशदीर्घेण सूत्रेण नवचन्द्रकलासमम् ।
चतुर्णामन्तरंशानां प्राग्दिक्कुर्याच्च लाञ्छनम् ॥११॥
ईशवह्निपदाभ्यां तु वृत्ताचतुर्यांशसंस्थिते ।
द्वे लाञ्छने समे कुर्यादेकभागादिके ततः ॥१२॥
तत्समे ह्यपरे द्वे वै यत्तदा लाञ्छचलाञ्छने ।
दक्षिणोत्तरभागाभ्यां पश्चात्सूत्रद्वयं क्षिपेत् ॥१३॥
कृत्वा सप्तकमर्मस्थं पूर्वोद्दिष्टक्रमेण तु ।
जीवसूत्रस्य पाश्चात्ये भागे पार्श्वद्वये स्थितम् ॥१४॥
भागद्वयं द्वयं लाञ्छयं योऽन्यर्थं चार्धवृत्तवत् ।
तच्छृङ्गकोटिके सूत्रे कृत्वा ते सम्प्रसार्य च ॥१५॥
खातभूभागपर्यन्तं तत्पादाद्वटपत्रवत् ।
जायते सर्वकुण्डानां योनिरेवंविधा शुभा ॥१६॥
भागार्धमानसूत्रेण योनेरभ्यन्तरे पुनः ।
अर्धवृत्तद्वयं दद्यात्तद्वत्सूत्रद्वयान्वितम् ॥१७॥
खातस्यान्तर्गतो वर्ज्यश्चतुर्थांशस्तु कोष्ठकात् ।
ओष्ठार्थं निखनेच्छेपं तत्समं वा पुरोदितम् ॥१८॥
दैर्घ्यात्पादादिका कार्या योनिर्वै पृष्ठतोन्नता ।
गजोष्ठसदृशी चाग्रात् स्पृशन्ति दशनच्छदम् ॥१९॥
पुरोभागचतुर्थांशं योनेरग्राद्विसृज्य तु ।
दद्यात्प्राक्सूत्रसम्बन्धं सूत्राणां द्वितयं परम् ॥२०॥
अनुपातेन वै ताभ्यामग्रात्सङ्कोचमाचरेत् ।
भागपङ्क्तित्रयेणैव मेखलात्रितयं बहिः ॥२१॥
सम्पाद्य चतुरश्रं तु शङ्कुं तत्त्रितयोपरि ।

आशङ्कान्मेखलानां तु प्रोन्नतत्वं सविस्तृतेः ॥२२॥
मेखलानां तु शङ्कस्य यन्मध्येऽश्रचतुष्टयम् ।
तच्चक्रचिह्नितं कुर्यात्तल्लक्षणमथोच्यते ॥२३॥
अश्मकर्मनिरुद्धेन चतुर्भागसमेन तु ।
खातार्थं प्राग्भ्रमं दद्यात् क्षेत्रमध्ये महामते ॥२४॥
बहिर्भागसमानाभिस्तद्बहिर्द्व्यंशविस्तृतम् ।
अरक्षेत्रं च तस्यापि नेमिर्भागसमा बहिः ॥२५॥
भागेन तद्बहिस्त्वेका चतुरश्रा च मेखला ।
भ्राम्यमध्यादरक्षेत्रं वृत्तेनैकेन वै पुनः ॥२६॥
तत्र सूत्राष्टकं दद्याद्दिग्विदिक्संस्थितं पुरा ।
तस्य चान्तर्गतं पश्चादष्टकं पातयेत्परम् ॥२७॥
ततस्तेषां समापाद्यमरत्वममलेक्षण ।
अन्तर्वृत्तं निरुद्धेन प्रतिसूत्रस्य पक्षयोः ॥२८॥
सूत्रेण लाञ्छनं कुर्यान्नाभिनेमिभ्रमावधेः ।
एकांशादर्धमानं च नेमिवृत्तस्य चान्तरे ॥२९॥
द्वाभ्यां द्वाभ्यामराभ्यां तु मध्ये कुर्यात्प्रधिंप्रधिम् ।
विस्तारप्रोन्नता नाभिः कूर्मपृष्ठोपमाकर ॥३०॥
नेमिर्दर्पणवत्कार्या त्वीपच्छिन्नावसानतः ।
शिष्टं पुरोदितं सर्वमथ पद्माकृतिं शृणु ॥३१॥
भागार्धं भ्रामयेन्नाभेर्बहिः केसरसिद्धये ।
भ्रामयेदपरं चार्धमरक्षेत्रस्य बाह्यतः ॥३२॥
नीत्वा लोपमनेनैव विधिना नेमिमण्डलम् ।
अरसूत्रभ्रमं कुर्यादतः पद्मदलाष्टकम् ॥३३॥
केसरभ्रमरुद्धेन सूत्रेणार्धेन्दुलक्षणम् ।
तच्छृङ्गकोटिसंस्थेन पारिभेर्चाद्यगेन तु ॥३४॥

सूत्रद्वयेन पत्राग्रं कुर्याद्वाह्यभ्रमावनेः ।
निरन्तराणामामूलात्केसराणां महामते ॥३५॥
कर्णिकोच्छ्रायतुल्यानां विभागं जनयेत् स्फुटम् ।
शङ्खकोणचतुष्के तु शेषं पूर्ववदाचरेत् ॥३६॥
योनिरेकेन भागेन चतुर्भिर्मेखलागणम् ।
खातं पूर्वसमं किं तु वृत्ते वृत्तास्तु मेखलाः ॥३७॥
चतुरश्रे तदाकारा इत्युक्तं कुण्डपञ्चकम् ।
कालमाहुतिसङ्ख्यां च होमद्रव्यप्रभूतताम् ॥३८॥
ज्ञात्वैवमेकहस्तात्तु कुर्यादष्टकरावधि ।
ततस्स्रुक्स्रुवयोरद्य लक्षणं चोच्यते द्विजाः ॥३९॥
स्ववाहुदण्डमानेन मन्त्रज्ञः कल्पयेत्पुरा ।
दैवीस्स्रुक्सिद्ध्यै काष्ठविस्ताराच्च षडङ्गुलम् ॥ ४० ॥
दैर्घ्याद्भागद्वयेनाथ दण्डमष्टाश्रमुच्यते ।
सार्धद्व्यङ्गुलमानं तु कृत्वा शेषं तु शोधयेत् ॥ ४१ ॥
अमलं दण्डमूले तु कुर्यात्पद्मानन्नं शुभम् ।
कर्णिकास्थो यथा दण्डो भवेद्वै मुनिसत्तम ॥४२॥
त्रिवलिं त्वथ वा शङ्खं यथादण्डस्तदास्यगः ।
कृत्वाग्रस्थं द्विधा भागं समांशेन प्रयत्नतः ॥४३॥
द्व्यङ्गुलं चाथ भागस्य वैपुल्यं चाग्रतः क्रमात् ।
दण्डावस्थस्य भागस्य त्र्यङ्गुलं परितस्समम् ॥४४॥
दत्वा भ्रमं ततः कुर्यान्निम्नं खातं सुलक्षणम् ।
तन्मध्ये पङ्कजं कुर्यात्प्रफुल्लं चोर्ध्वपल्लवम् ॥४५॥
आज्यकोशं तु तं विद्धि सप्तपञ्चफलोपमम् ।
पद्ममध्ये निमग्ना च कर्णिका वै सकेसरा ॥४६॥
द्वादशारं बहिश्चक्रं पद्मान्याष्टदळस्य च ।

पश्चाद्धे तु कर्तव्यं शङ्कं कोणचतुष्टये ॥४७॥
ततोऽग्रभागस्य मुने पार्श्वयोरुभयोरपि ।
एकैकमङ्गळं शोध्यं संविभज्य त्रिधा ततः ॥४८॥
कर्णमेकेन भागेन मध्ये त्वास्यौ द्वयेन तु ।
विच्छिन्नं वक्त्रमंसाभ्यां मध्यमेकाङ्गुळेन तु ॥४९॥
विस्तारं कर्णतुल्यं तु वर्जयित्वा ततः पुरा ।
कर्णदेशात्समारभ्य शेषं तु परिशोधयेत् ॥५०॥
क्रमागतेन सूत्रेण स्याद्वाराहाननं यथा ।
ततः पुष्करपर्णात्तु मुखाग्रं यावदेव हि ॥५१॥
कुर्यादाज्यप्रणाळं तु समन्यूनाङ्गुळे मुने ।
ईषद्धै क्रमसूक्ष्मं च नाज्यं याति यथाद्रुतम् ॥५२॥
हस्तमात्रं ततः कुर्यात्स्रुवं विप्र मनोरमम् ।
विस्तारं द्व्यंगुळं काष्ठं वैपुल्याच्च तदर्धतः ॥५३॥
विस्तारमानादग्रे स्याद्वृत्तं कुर्यात् द्विरंगुळम् ।
क्रमात्तं निम्नखातं च गोळकेनैव मुद्रितम् ॥५४॥
मध्ये मृगपदाकारचिह्नेन तु विराजितम् ।
विस्तारस्य त्रिभागेन ग्रीवा साग्रा त्रिरंगुळा ॥५५॥
मूले चोभयतः कुर्यात्स्वस्तिकं द्व्यंगुळायतम् ।
विचित्ररचनायुक्तदण्डं श्लक्ष्णं तु वा भवेत् ॥५६॥
स्रुवमेवंविधं कुर्याद्धोमकर्मणि साधकः ।
ततस्तु प्रापणादीनां साधनं शृणुत द्विजाः ॥५७॥
शालिमुद्गयवा माषा गोधूमाश्च प्रियङ्गवः ।
तिलास्सप्त त्विमे ग्राह्या ग्राम्या वै चरुकर्मणि ॥५८॥
वेणुश्यामाकनीवारा जर्तिलाश्च गवीधुकाः ।
मर्कटाः कनकास्सप्त विज्ञेयास्तु वनोद्भवाः ॥५९॥

शालयस्तेषु मुख्यास्स्युस्तदन्यास्तदभावतः ।
रक्तशाल्यो महाशाल्यः कळमा गन्धशालयः ॥६०॥
श्वेतशाल्यस्सशूकाश्च हेमाभा गर्भशालयः ।
सुकुमाराश्च सूक्ष्माश्च दशैते शालयः स्मृताः ॥६१॥
अन्तर्भेदाश्च बहवस्सप्त मुद्गा उदाहृताः ।
मुद्गाः कृष्णाश्च हैमाश्च श्वेताः पीता महत्तराः ॥६२॥
अञ्जनाभाश्च सप्तैते अन्तर्भेदा उदाहृताः ।
श्वेताः कृष्णाश्च पीताश्च वन्याश्चैव महातिलाः ॥६३॥
तिलानां पञ्च भेदास्तु ग्राह्यास्स्युः परिकीर्तिताः ।
उपाहृतानि केदाराद्दैवीयाच्च कृषीवलैः ॥६४॥
शालिमुद्गादिभेदानि कर्मण्यान्यर्चने हरेः ।
अवपन्नादिभिर्दोषैरष्टाभिर्वर्जितानि च ॥६५॥
आनयेदवघातार्थमवघातगृहे पुरा ।
गोमयेन समालिप्ते सुधाद्यैः परिमण्डिते ॥६६॥
शोधिते शतधारेण पवित्रेण कुशाम्बुभिः ।
स्थले प्रवणमुच्चार्य प्राङ्मुखो वाप्युदङ्मुखः ॥६७॥
दीक्षितैर्नियतैर्विप्रैर्धृतचक्रादिलक्षणैः ।
सुस्नातैर्लोहदार्वश्ममृन्मयानि समन्ततः ॥६८॥
स्थापयित्वोलूखलानि क्षाळितैः खादिरैर्दृढैः ।
मुसलैरवहन्यास्ते द्वादशाक्षरविद्यया ॥६९॥
निस्तुषान्निष्कणान् कृत्वा तण्डुलान् शूर्पकोटरैः ।
तैस्तावदवहन्तव्या यावन्मुक्ताफलप्रभाः ॥७०॥
अखण्डिताश्चानणवः कृष्णबिन्दुविवर्जिताः ।
मुद्गभेदास्तथा कार्यास्सारवन्तश्च निस्तुषाः ॥७१॥
साध्वीभिर्ब्राह्मणीभिर्वा दीक्षितानामभावतः ।
शूद्रैर्वा दीक्षितैर्देवदासीभिर्देवसद्मनि ॥७२॥

हविः पाकादिकर्मार्थं कार्यावहननक्रिया ।
वैष्णवानां गृहे शुद्धे दीक्षितानां गृहेपि वा ॥७३॥
तण्डुलांस्तु प्रगृह्णीयाद्विधिक्षुण्णांस्तु देशिकः ।
अकणानतुपानेव क्रिमिहीनानपि क्रमात् ॥७४॥
केशपाषाणहीनांस्तु प्राण्यङ्गरहितांस्तथा ।
भस्माङ्गारविहीनांस्तु अभग्नानलघूनपि ॥७५॥
कणैस्तु भवति व्याधिस्तुषैर्दारिद्र्यकं भवेत् ।
क्रिमिभिः पुत्रनाशः स्यात्केशैर्दारविनाशनम् ॥७६॥
पाषाणैर्मरणं विद्धि अशन्या वह्निना जलैः ।
प्राण्यङ्गैर्व्याधयः प्रोक्ता भस्मना कलहो ध्रुवः ॥७७॥
अङ्गारैर्वह्निना बाधो भग्नैर्भङ्गस्तु विग्रहे ।
प्रवासो लघुभिश्चैव तस्मात्तान्परिवर्जयेत् ॥७८॥
सम्भारानखिलानेवं प्राक्सङ्कल्पितसम्मतान् ।
सम्भृत्य देशिकस्सार्धं साधकैः पाचकैरपि ॥७९॥
अववातगृहं प्राप्य तत्रस्थं तण्डुलादिकम् ।
"ब्रह्मशुक्र मिवे" त्युक्त्वा नेत्रेणैवावलोकयेत् ॥८०॥
प्राग्वत्संशोधयेत्तानि दहनाप्यायनादिभिः ।
*वैदळादिष्वशुद्धेषु पालेषु विततेष्वपि ॥८१॥
पचनार्थं समुद्धृत्य तत्सर्वं तण्डुलादिकम् ।
तत्तत्पात्रसमुद्धारे निपुणैः परिचारकैः ॥ ८२ ॥
सुस्नातैश्च सुवेषैश्च वस्त्रेणाच्छादिताऽऽननैः ।
आनयेत्पचनागारं शङ्खतूर्यादिमङ्गळैः ॥ ८३ ॥
द्वारस्योत्तरपार्श्वे तु गोमयेनोपलेपिते ।
प्रदेशे निक्षिपेत्तानि भाजनानि यथाक्रमम् ॥ ८४ ॥

---

* वैदळादिषु शुद्धेषु ॥

गुळोपदंशपूर्वाणि लवणादिरसानि च।
विन्यसेत् द्वारदिग्भागे दधिक्षीरघृतानि च ॥८५॥
निदध्यान्नैरृतेते भागे होमोपकरणान्यपि।
चतुर्भिर्व्यापकैर्मन्त्रैर्वस्त्रपूतेन वारिणा ॥८६॥
क्षाळयित्वा चतुर्धा वै यथा स्यात्तण्डुलादिषु।
शिलाशकलनिर्मुक्तं निस्तुषं निष्कणं यथा ॥८७॥
अपक्वव्रीहिविहिततण्डुलैनैव साधितम्।
गव्यदुग्धाज्यसंसिक्तं गुडखण्डफलान्वितम् ॥८८॥
अक्षारलवणोपेतं देवानां हविरुच्यते।
तदेव परमान्नं स्यात् क्षीराज्यगुळपान्वितम् ॥८९॥
घृतसिक्तं तु सिद्धान्नमभावे हविरुच्यते।
अक्षारलवणं सिद्धं गुळक्षीरफलान्वितम् ॥९०॥
शान्तये व्रतयज्ञे च संसाध्यं हविरुत्तमम्।
पायसान्नं गुडान्नं च मुद्गान्नं केवलोदनम् ॥९१॥
दध्यन्नं च तिलान्नं च निशान्नं सर्वमिश्रितम्।
इत्यष्टधा समुद्दिष्टं हविर्देवस्य सम्मतम् ॥९२॥
प्रारभेत हविःपाकं वक्ष्यमाणेन वर्त्मना।
आहृत्योदनपाकाग्निं कुण्डादौपासनानलात् ॥९३॥
चुल्ल्यां निधाय तारेण "सप्ततेऽग्न" इतीरयन्।
इन्धनानि विनिक्षिप्य यज्ञदारुमयानि च ॥९४॥
क्रिमिकीटादिहीनानि "ज्योतीरात्रीति" मन्त्रतः।
प्रज्वाल्य व्यजनेनैव तत स्थालीश्च ताम्रजाः ॥९५॥
प्रक्षाळ्य तिन्त्रिणीतोयैः केवलैर्मृन्मयांस्ततः।
प्रक्षाळ्य द्वादशार्णेन वीर्यमन्त्रेण मन्त्रवित् ॥९६॥
घृतेनालापयेत्तासामन्तरं व्यूहविद्यया।
तण्डुलान्प्रक्षिपेत्तासु गायत्र्या विष्णुपूर्वया ॥९७॥

" अम्भस्यपार " इति च मन्त्रेण सहृदा पुनः ।
जलेन पूरयेदूर्ध्वे तण्डुलान्प्रतिपात्रकान् ॥९८॥
तण्डुलाधिकमानस्य षट्प्रस्थमुदकं भवेत् ।
कर्मारम्भेण तास्स्थालाश्चुल्ल्यामारोपयेत्ततः ॥९९॥
चक्रमन्त्रेणापिधानैस्तास्सञ्छाद्य यथाक्रमम् ।
पाककाले समुद्घाट्य वीर्यमन्त्रेण तद्ध्वनिम् ॥१००॥
निरीक्ष्य नेत्रमन्त्रेण दर्व्यामूलं समुद्धरन् ।
चतुर्भावर्तयेच्चैव चक्रेणाच्छादयेत्पुनः ॥१०१॥
पक्के जलमपि स्राव्य द्वादशार्णं समुच्चरन् ।
विद्रावितेन गव्येन हविषा चाभिघार्य च ॥१०२॥
शुचीं सत्कृत्यतेत्यादिमन्त्रेणाधारपृष्ठतः ।
शोधिते भूतले नाथ व्रीहिभिर्वा प्रसारिते ॥१०३॥
एवं हवींषि सिद्धानि पाणिभ्यामवरोप्य च ।
अस्त्राभिमन्त्रितेनैव बहिः प्रक्षाल्य वारिणा ॥१०४॥
तन्मन्त्रितेन शुद्धेन वस्त्रेणावर्तयेत्ततः ।
भस्मना मथितेनाब्धिर्वासुदेवादिवाचकैः ॥१०५॥
तर्जन्याद्यङ्गुळीभिश्च कुर्याद्दिक्षूर्ध्वपुण्ड्रकम् ।
समाच्छाद्य पिधानैश्च वसनैः क्षाळितैस्ततः ॥१०६॥
इत्युक्तं साधनं सम्यक् शुद्धान्नस्य विशेषतः ।
अन्येषां साधनं वक्ष्ये परमान्नपुरस्सरम् ॥१०७॥
तण्डुलस्य तु तुर्यांशं पायसे मुद्गसारकन् ।
तन्मानं घृतमुद्दिष्टं तच्चतुर्गुणितं पयः ॥१०८॥
नाळिकेरोद्भवं चापि तत्समं कथितं पयः ।
चतुर्गुणं तण्डुलाच्च खण्डचूर्णसमन्वितम् ॥१०९॥
साधयेदुक्तमार्गेण समन्त्रं केवलोदने ।
इंमशशुचिषंदित्यल गोक्षीरस्य निषेचनम् ॥११०॥

तदभावे नियोक्तव्यं नालिकेरोद्भवं पयः ।
अब्जागोजेति तत्क्षेपः स्याद्द्रव्यप्रतियोजने ॥१११॥
गुळान्नपाचने क्षीरमप्यथैक्षवं रसम् ।
क्वथितं गुळखण्डं वा क्षीरमानानुसारतः ॥११२॥
क्षीरप्रक्षेपमन्त्रेण गुळादीनि नियोजयेत् ।
मुद्गान्ने तण्डुलं सम्यङ्मुद्गसारं नियोजयेत् ॥११३॥
शुद्धान्ने तु पुरा प्रोक्तं विशेषेण घृताप्लुतम् ।
दध्योदनं दधिक्षेपं क्षीरार्धपरिसम्मितम् ॥११४॥
कदळीपनसाम्रादिगुळखण्डसमन्वितम् ।
खण्डचूर्णसमोपेतं कृसरान्ने तु मुद्गकम् ॥११५॥
आर्द्रकस्य हरिद्रान्ने निशापिष्टं फलं भवेत् ।
मुद्गसारसमोपेतं शुद्धखण्डादिसंयुतं ॥११६॥
मिश्रान्ने योजयेत्किञ्चित् क्षीराज्ययुतसंप्लुतम् ।
शान्त्यर्थे पयसा नित्यं पुष्ट्यर्थे गुळमिश्रितम् ॥११७॥
वश्यार्थे मुद्गसोरोत्थमाकृष्टौ दधिमिश्रितम् ।
कृसरान्नं तु प्रीत्यर्थे मारणोच्चाटनेऽपि च ॥११८॥
स्तम्भने च हरिद्रान्नं मिश्रान्नं मोहनं भवेत् ।
साधारणं तु शुद्धान्नं यात्रासु मृगयादिके ॥११९॥
विशेषेण तु दध्यन्नं हेमराजतपात्रगम् ।
मरीचिशुण्ठिलिकुचतिन्त्रिणीरसमिश्रितम् ॥१२०॥
जीर्णेन जीरकोत्थेन संस्कुर्याद्द्रववस्तुभिः ।
रसभेदसमुत्थानि पनसद्वितयोद्भवम् ॥१२१॥
चूतदेशसमुत्थानि नातिपक्वानि कालतः ।
बृहत्युर्वारुवार्ताककूश्माण्डप्रभवानि च ॥१२२॥
कारवल्लीलतोत्थानि कार्कोटप्रभवानि च ।
पटोलद्वितयोत्थानि कोशातक्युद्भवानि च ॥१२३॥

अलाबुकर्करीनिम्बभदोत्थं तिन्त्रिणीफलम् ।
क्षुद्रकन्दसमेतं च वल्लीकन्दद्वयं तथा ॥१२४॥
सूरणद्वयकन्दं च तथा पिण्डारकद्वयम् ।
पद्मोत्पलसमुत्थं च हविर्योग्यं विशेषतः ॥१२५॥
उच्छिष्टं क्रिमिदुष्टं च शित्रायैर्दशितं तथा ।
घृतं लालाजलस्पृष्टममेध्यस्थलसम्भवम् ॥१२६॥
पादस्पृष्टमकालोत्थमाहृतं चाशुचिस्थले ।
भुक्तशेष तथाऽस्पृश्य स्पृष्टं दत्तावशेषकम् ॥१२७॥
परीक्ष्य बहुधा मन्त्री वर्जयेत्पाककर्मणि ।
जीवन्तीं वास्तुकं शाकं कारवल्लीदळं तथा ॥१२८॥
तुम्बीदळं च पिण्डीं च चुच्चुमुद्गदळानि च ।
शाकिनीं शतपर्वाणं तथैव श्वासमर्दितम् ॥१२९॥
आगस्त्यं पाचयेच्छाकं विहितं ब्राह्मणस्य च ।
शाकमूलानि चान्यानि गृह्णीयादनिषेधने ॥१३०॥
छेदयित्वा लवित्रेण वीर्यमन्त्रं समुच्चरन् ।
निरीक्ष्य क्रिमिकीटादीन् प्रक्षाळ्य बहुधा जलैः ॥१३१॥
प्राग्वत् स्थालीषु निक्षिप्य प्रत्येकं वाऽथ मिश्रितम् ।
सैन्दवैस्समरीचैश्च सर्षपैर्जीरकैरपि ॥१३२॥
श्रीगर्णिदळसम्मिश्रैः पयोभिर्नारिकेळजैः ।
तत्फलैरपि सङ्घृष्टैर्मधुभिर्घृतमिश्रितैः ॥१३३॥
मसूरमाषनिम्बादिमुद्गभेदसमन्वितम् ।
सयूषान्मुद्गभेदादीनयूषान्लवणादिभिः ॥१३४॥
रसगंदैस्समेतांश्च साधयेत्तदनन्तरम् ।
त्वचो व्यपोह्य मुद्गोत्थैस्सारैः क्षीरेण पाचिते ॥१३५॥
मरीचजीरलवणघृतयुक्तैश्च मर्दितैः ।
दध्यादिभिश्च संस्कुर्याद्गुल्मापं सरसं यथा ॥१३६॥

स्थालीशरावपूर्णेषु पाचितानि पुरैव तु ।
कदलीपनसादीनि नाळिकेरफलानि च ॥१३७॥
कूश्माण्डबृहतीपूगकारवल्लीफलानि च ।
क्षुद्रकन्दसमेतानि वल्लीपिण्डारकानि च ॥१३८॥
अम्बरीषादिपात्रेषु विततेषु समन्ततः ।
घृतलिप्तेषु तप्तेषु समारोप्य प्रसार्य च ॥१३९॥
चूर्णीभूतैर्मरीचैश्च जीरकेण घृतेन च ।
प्रतापितानि स्निग्धानि दर्व्याऽऽलोड्य पुनःपुनः ॥१४०॥
स्थापनीयानि भाण्डेषु छादितान्यम्बरादिभिः ।
आम्रादीनि च शुष्काणि अशुष्काणि फलानि च ॥१४१॥
तिन्त्रिणीगुळमिश्राणि मरीचैर्जीरकैरपि ।
नाळिकेरोत्थपयसा सर्षपैः पोषितैरपि ॥१४२॥
स्थापयेदात्मसारोत्थं लवणेन समन्वितम् ।
शृङ्गिबेरं च लिकुचं दाळितं हरितं च वा ॥१४३॥
वासितं लवणोपेतं लिकुचोत्थरसेन तु ।
कदळीपनसाम्राणां केवलानि फलानि च ॥१४४॥
गोधूमशालिजैः पिष्टैर्गुळपाकेन लोळितैः ।
पाचितैर्मुद्गसारैश्च शकलैर्नारिकेळजैः ॥१४५॥
जीरकैस्समरीचैश्च घृतेऽपूपानि पाचयेत् ।
सुवृत्तान्याम्रतुल्यानि धात्रीफलसमानि च ॥१४६॥
न्यग्रोधफलतुल्यानि लिकुचाद्याकृतीनि च ।
अन्तर्निक्षिप्तमुद्गानि रसवन्ति समन्ततः ॥१४७॥
गुळपिष्टेन बद्धानि नाळिकेराकृतीनि च ।
नानाभेदसमुत्थानि घृतेऽपूपानि साधयेत् ॥१४८॥
शालिव्रीहिसमुत्थांश्च स्थालीषु स्फुटितानि च ।
लघूनि वह्नितप्तानि गुळपाकान्वितानि च ॥१४९॥

चूर्णैश्च मरीचैश्च जीरकैः खण्डितैरपि ।
नाळिकेरफलैश्शुष्कैः पृथुकानि च साधयेत् ॥१५०॥
भर्जितैश्शालिपिष्टैश्च मिश्रितैर्जीरकादिना ।
लोळितैर्गुळपाकेन पिण्डीभूतैः पृथक्पृथक् ॥१५१॥
सक्तु स्यात्साधितं तद्वत्तिलैः पिण्डं सुभर्जितैः ।
तिलपिण्डइति ख्यातस्सदा देवस्य सम्मतः ॥१५२॥
सुशृतं च घनीभूतं खण्डचूर्णसमन्वितम् ।
क्षीरं च मधुसर्पिर्भ्यां संवृतं सुघनं दधि ॥१५३॥
तरुणैश्शकलीभूतैरुर्वारुसहकारयोः ।
रूक्षसर्षपसम्मिश्रं समरीचं तथा दधि ॥१५४॥
पृथक्पात्रगतं शुद्धं गाळितं माक्षिकं मधु ।
द्राक्षापनसरम्भाम्रसमुत्थैर्मर्दितैरसैः ॥१५५॥
लोळितं गुळखण्डेन जीरिकादिसमन्वितम् ।
रसालमेतद्विज्ञेयं दधिमिश्रं तु पानकम् ॥१५६॥
केवलं दधिसम्मिश्रं वारिणा तत्समेन तु ।
मथितं समरीचं च लवणैश्चाधिवासितम् ॥१५७॥
खण्डचूर्णसमोपेतं पानकं श्रमशान्तिकृत् ।
अन्नानामपि संस्कारे पुरा मन्त्राः प्रकीर्तिताः ॥१५८॥
तदन्येषां तु संस्कारो द्वादशार्णेन वा हृदा ।
साङ्गेन मूलमन्त्रेण सर्वं संसाधयीत वा ॥१५९॥
विष्णुगायत्रिया वाथ पञ्चोपनिषदाऽथ वा ।
संसाध्य परमन्नाद्यमुपदंशान्वितं क्रमात् ॥१६०॥
फलतादिषु संस्थाप्य चोर्ध्वपुण्ड्राद्यलङ्कृतम् ।
महानसद्वारभूमेरालयद्वारपश्चिमम् ॥१६१॥
गोमयेनानुलिप्तेन सुधाचूर्णेन शोभिना ।
पथाऽस्त्रमन्त्रसम्प्रोक्षवारिधारापुरस्सरम् ॥१६२॥

शङ्खतूर्यादिघोषेण तथा मङ्गलगीतिभिः ।
प्रदीपच्छत्रयुक्तैश्च हविःपालनतत्परैः ॥१६३॥
वेत्रपाणिभिरन्यैश्च नास्तिकोत्सारणोद्यतैः ।
स्नाताश्शुक्लाम्बरा दक्षाः कृतपादा वने जना ॥१६४॥
स्वाचान्ताः कुशहस्ताश्च मृदा वा चन्दनादिना ।
धृतोर्ध्वपुण्ड्रा नियता मनोवाक्कायकर्मभिः ॥१६५॥
सितकञ्चुकधर्तारस्स्थगिताननासिकाः ।
बलमन्त्रेण भाण्डानि वहेयुः परिचारकाः ॥१६६॥
मूलालयाग्रदेशस्थे मण्टपे विततेऽथ वा ।
प्रथमावरणे धाम्नो दक्षिणे मालिकावनौ ॥१६७॥
सुगुप्ते सुवितानाढ्ये दीपमालाद्यलङ्कृते ।
प्रदेशे वस्त्रसञ्छन्ने स्थाप्यानि फलकादिके ॥१६८॥
हविःप्रमाणतुल्याश्च हेमराजतताम्रजाः ।
स्थालिकाश्च यथालिप्ताः प्रक्षाल्यास्त्रेण वारिणा ॥१६९॥
पाणिना दक्षिणेनैव परामृश्याथ तेन च ।
तारेण तासु निक्षिप्याधाराज्यस्य समन्ततः ॥१७०॥
स्थालीभ्यस्समुपाहृत्य दर्व्या हेमादिक्लृप्तया ।
तदूर्ध्वे निक्षिपेन्मौनी पायसादीन्यनुक्रमात् ॥१७१॥
घृतेनाप्लाव्य मधुरव्यञ्जनानि समन्ततः ।
दधिक्षीरादिपूर्णानि चषकाण्यूर्ध्वतो न्यसेत् ॥१७२॥
सिद्धान्यपूपभेदानि पृथुकादीनि यान्यपि ।
पानकानि विचित्राणि पृथक्पात्रगतानि च ॥१७३॥
कर्पूरचन्दनक्षोदप्रसूनैश्चाधिवासितम् ।
शीतलं वस्त्रसञ्छन्नं पानीयं करकादिषु ॥१७४॥
एलालवङ्गतक्कोलजातीपूगफलान्वितम् ।

कर्पूरतैलसम्मिश्रं खण्डितं च क्षुरादिभिः ॥१७५॥
नागवल्लीदळोपेतं सचूर्णं चेन्द्रसंयुतम् ।
ताम्बूलं च प्रतिष्ठाप्य पात्रेष्वब्जाकृतीषु च ॥१७६॥
चन्दनादीनि गन्धानि तथा नानाविधास्स्रजः ।
स्थापयित्वा यथास्थानमाराधकमुखेन तु ॥१७७॥
विज्ञापयेयुर्देवस्य तत्तत्कर्माधिकारिणः ।
भोज्यासनाधिरूढस्य देवस्याराधकस्स्वयम् ॥१७८॥
अर्घ्याद्यैः प्राग्वदभ्यर्च्य साध्यबीजावसानकैः ।
द्वारस्याभ्यन्तरगते देवस्य पुरतः स्थले ॥१७९॥
शोधिते चास्त्रतोयेन चन्दनाद्यैश्च मण्डिते ।
मण्डलं तु परिस्तीर्य तण्डुलानि यथारुचि ॥१८०॥
क्षाळितं वस्त्रखण्डं तु तदूर्ध्वे सम्प्रसार्य च ।
अन्नाधारं प्रतिष्ठाप्य तदूर्ध्वे लोहनिर्मितम् ॥१८१॥
ऊर्ध्वतो वसनार्थे तत्तदूर्ध्वे स्रोतसंप्लुते ।
विन्यसेत्परमान्नादिपात्राण्येकैकशः क्रमात् ॥१८२॥
तर्पणं तु प्रतिष्ठाप्य हस्तप्रक्षाळनाम्भसा ।
कुर्याद्दक्षकरे दैवे प्रागुपस्तरणार्हणम् ॥१८३॥
ततो देवादिमूर्तीनां हवींषि विनिवेशयेत् ।
प्रथमं पायसं पश्चात् गुळान्नं मुद्गमेदितम् ॥१८४॥
शुद्धान्नं तिलसम्मिश्रं निशान्नं दधिमिश्रितम् ।
मिश्रान्नं च क्रमाद्द्यादपूपानि तदन्तिमे ॥१८५॥
पृथुकानि च सक्तूनि तिलपिण्डान्वितानि च ।
कदळीपनसादीनि फलानि विविधानि च ॥१८६॥
रसभेदसमेतानि पानकानि च तर्पणम् ।
नाळिकेररसं चैव हस्तप्रक्षाळनं ततः ॥१८७॥

